श्रीमद्भगवद्रामानुजविरचित-
वेदान्तसूत्रव्याख्यानम्

# श्रीभाष्यम् ।

## श्रीसुदर्शनाचार्य–श्रीरङ्गरामानुजार्यप्रणीत-
## श्रुतप्रकाशिका–भावप्रकाशिकाटीका-
## द्वयोपेतम्



वृन्दावनवास्तव्य–सर्वतन्त्रस्वतन्त्र–श्रीसुदर्शनाचार्य–
शास्त्रिणामन्तेवासिना पं० धरणीधरशास्त्रिणा
सम्पादितम् प्रकाशितञ्च

तच्च

श्रीधरणीधरशास्त्रिपादान्तेवासि वे० शिरोमणि
वेदान्ततीर्थ पं० श्रीधराचार्यद्वारा संशोध्य.

श्रीवृन्दावनधामनि

श्री "श्रीनिवास" यन्त्रालये मुद्रापितम्



printed by p. Shridharacharya at the
Shri "Shrinibas" Press Brindaban

सन् १९१७ ] [ रामानुजवत्सर ९०१

परविद्यायास्सविशेषविषयत्वव्यवस्थापनम् ॥

१ "अथ परा यया तदक्षरम्" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगुणयोगः परस्य

* श्रुतप्रकाशिका *

अनन्तरोदाहृतायाः परविद्यायाः सविशेषपरत्वमाह (अथ परेत्यादिना) अपाणिपादमित्यन्तानां पदानां विषयमाह (प्राकृतानिति) प्राकृताः— प्रकृतिसम्बन्धिनः, अनेन क्वचित्सिद्धस्य हि क्वचिन्निषेधः इति निषेध्यानां क्वापि सिद्धिर्दर्शिता भवति । प्रकृतिगताः—प्रकृतिसंसर्गप्रयुक्ताः जीवगता दोषाश्च प्राकृताः । अद्रेश्यमग्राह्यम्—प्रत्यक्षागोचरमनुमानाद्यगोचरम् । यद्वा, चक्षुरगोचरमिन्द्रियान्तरागोचरम् । अगोत्रमवर्णम्—प्राकृतनामरूपरहितम् । अचक्षुःश्रोत्रम्—इन्द्रियाधीनज्ञानं न भवति । अपाणिपादम्—इन्द्रियाधीनचेष्टं न भवति "अपाणिपादो जवनो ग्रहीता' पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेः । अनेन पदद्वयेन जीवगतहेयनिषेधः, इन्द्रियाधीनज्ञानत्वं तदधीनप्रवृत्तित्वमपि हि जीवधर्मः । सर्वगतं सुसूक्ष्ममिति पाठक्रमः, तथाऽप्यर्थक्रमेण व्याख्यातम्—सूक्ष्मत्वसर्वगतत्वेति । सूक्ष्मतया हि व्याप्तिः, नित्यत्वेन कालापरिच्छेदः । विभुम्-प्रभुम् . प्रभुत्वं नियन्तृत्वं जगच्छरीरकत्वं फलितम्; अनेन वस्त्वपरिच्छेदसिद्धिः, सर्वगतत्वेन देशापरिच्छेदः, अव्ययत्वं व्ययशब्दोपलक्षितदोषविरोधित्वं नाम गुण इत्यभिप्रायेण कल्याणगुणैः सह तन्निर्देशः । यद्वा अव्ययत्वम्—एकरूपत्वं पूर्णत्वं वा । भूतयोनित्वम्—जगत्कारणत्वम्; एतत्प्रकरणस्थेन "यस्सर्वज्ञस्सर्ववित्" इत्यनेन वाक्येन सार्वज्ञ्यमुक्तम् । सर्वज्ञस्सर्ववित्—सर्वं स्वरूपतो वेत्ति सर्वं प्रकारतश्च वेत्तीत्यर्थः । परस्य ब्रह्मण इत्यस्य पूर्ववदर्थः । अथ शोधकवाक्येषु सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं निरस्यति—

* भावप्रकाशिका *

अव्ययत्वस्य दोषाभावरूपस्य कथं भाष्ये कल्याणगुणत्वेन निर्देश इत्याशङ्क्याह (दोषविरोधित्वं नामगुण इति) (पूर्ववदर्थ इति) सगुणब्रह्मव्याप्तचि-

१—मुण्ड—१—मु-१-ख-५-वा.

ब्रह्मणः प्रतिपादितः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि

* श्रुतप्रकाशिका *

( सत्यं ज्ञानमित्यादिना ) स खल्वेवमुपन्यस्तः प्रतिपत्तिसौकर्यायाचार्यपादैः। तथा हि,--सत्यादिवाक्यं सत्यत्वादिगुणविशिष्टमेव ब्रह्म प्रतिपादयति, नीलमुत्पलमित्यादिषु समानाधिकरणवाक्येषु विशिष्टैकार्थपरत्वव्युत्पत्तेः, सत्यादिवाक्यस्य च समानाधिकरणत्वाच्च, तथा च सामानाधिकरण्यलक्षणं 'भिन्नप्रवृत्तिनिमित्ताना'मित्यादिनोक्तं शाब्दैः। तत्र यदुक्तं सामानाधिकरण्यस्यैकार्थ्यपरत्वव्युत्पत्तेरेकार्थे च पदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादिसमानाधिकरणपदानामास्थेयमिति। तदयुक्तम्; विकल्पासहत्वात्. किं सत्यादिपदानि तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपराणि? उत स्वरूपमात्रपराणि? उत विरोधिव्यावृत्त्यवच्छिन्नस्वरूपपराणि? इति विवेचनीयम्। न तावद्विरोधिव्यावृत्तिमात्रपराणि, व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः, व्यावर्त्यानेकत्वाद्व्यावृत्तयो ह्यनेकाः स्युः। नापि स्वरूपपराणि, तथासति पदानां पर्यायत्वप्रसङ्गात्, प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिप्रसङ्गादेकतरपदवैयर्थ्यप्रसङ्गाच्च। नापि तदवच्छिन्नस्वरूपपराणि, विकल्पासहत्वात्। किं विरोधिव्यावृत्तीनां स्वरूपावच्छेदकत्वमुपलक्षणतया विशेषणतया वा? न तावदाद्यः कल्पः, एकोपलक्षणेन स्वरूपं प्रतिपन्नमिति उपलक्षणान्तरवैयर्थ्यात्. उपलक्ष्याद्बहिर्भूत उपलक्ष्यप्रतीत्यपायो धर्मः

* भावप्रकाशिका *

रित्यर्थः। ( व्यावर्त्यानेकत्वेनेति ) व्यावृत्तिप्रतियोगिनामनृतजडपरिच्छिन्नानामनेकत्वेनेत्यर्थः। ( पदानां पर्यायत्वप्रसङ्गादिति ) प्रवृत्तिनिमित्तभेदाभावेनेत्युत्तरवाक्यस्थमिहापि काकाक्षिन्यायेन सम्बध्यते. ननु कुम्भाद्यनुगतं सत्तापरजातिस्सत्यपदप्रवृत्तिनिमित्तम्, अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दानुगते ज्ञानानन्दत्वे अपरजाती; एवञ्च सत्यज्ञानानन्दादिशब्दानां लक्ष्यार्थाभेदेपि उक्तजातिवाचित्वान्न पर्यायतेति कल्पतरूक्तेर्न पर्यायत्वमिति चेन्न, कुम्भाद्यनुगतसत्तायाः सत्यशब्दवाच्यत्वे सत्यत्वस्यातिप्रसक्तस्य ब्रह्मलक्षणत्वाभावप्रसङ्गात्। अभ्युपगम्यते च त्वया सत्यत्वस्य ब्रह्मलक्षणत्वं सत्यमिथ्यार्थानुगतसत्तासामान्यसम्भवाच्च तस्यानृतसाधारणतयाऽनृतव्यावृत्त्यसिद्धेश्च, कालत्रयाबाध्यत्वरूपं पारमार्थिकसत्त्वं ब्रह्मणि

* श्रुतप्रकाशिका *

उपलक्षणमिति ह्युपलक्षणविदः । तथा च शाखादिषु दृश्यते ; अत एकतरवैयर्थ्यं प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च । कथं तर्हि भवत्पक्षे जन्मादिवद्ध्युपलक्षणत्वमेकस्यैव ब्रह्मणोऽभ्युपगम्यत इति चेत् ; उच्यते ,— तत्र ह्युपलक्ष्यस्य धर्मिणो ब्रह्मण एकत्वेऽपि प्रत्युपलक्षणमुपलक्ष्यधर्मभेदो जन्मस्थित्याद्यनुगुणज्ञानशक्त्यादिरूपोऽस्माभिरभ्युपगम्यते ; अन्यथा तत्राप्यनेकोपलक्षणवैयर्थ्यं प्रसज्यत एव । त्वत्पक्षे अनेकोपलक्षणोपलक्ष्यधर्मभेदानभ्युपगमादुक्तदोषो दुर्वारः , तदभ्युपगमे हि ब्रह्मणः सविशेषत्वप्रसङ्गः । नापि द्वितीयः , विशेषणभूतानां व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः , विशेष्यान्तर्भूतो विशेष्यप्रतीत्युपायो धर्मो विशेषणम् , विशेष्यान्तर्भावोनाम ज्ञाप्यान्तर्भावः , विशेषणभूतार्थभेदेऽपि

* भावप्रकाशिका *

श्रौतमिति तत्सिद्धान्तव्याकोपप्रसङ्गाच्च . धर्मिसमसत्ताकभेदं विना औपाधिकभेदमात्रेणाकाशत्वादेरिव ज्ञानत्वानन्दत्वयोरपि जातित्वायोगाच्च ज्ञानत्वादेः धर्मिसमसत्ताभेदवदुपहितचैतन्यवृत्तित्वे शुद्धलक्षणत्वायोगाच्च ; एतेन सत्यादिविशिष्टशबलब्रह्मवाचिनां सत्यादिशब्दानां शुद्धब्रह्मणि लक्षणेति न पर्यायत्वमिति निरस्तम् । अनृतात्वप्रकाशे परिच्छिन्नरूपे शबले सत्यत्वादेरयोगात् . योगे वा तस्यैवानृतात्वप्रकाशपरिच्छिन्नव्यावृत्तिस्स्यात् , नतु सत्यत्वाचनाश्रयस्य शुद्धस्य ; तस्मात् सत्यत्वादीनां शुद्धादन्यत्रासम्भवात्सत्यादिवाक्यस्य च लक्षणया अखण्डार्थत्वे शुद्धेपि तदसिद्धेस्सत्यत्वादीनामत्यन्तासत्त्वेन तद्भेदमादायापर्यायत्वस्य दुस्समाधानत्वात् पर्यायत्वं सिद्धमित्यर्थः । ( उपलक्षणतया विशेषणतया वेति ) किं व्यावृत्तीनां वाक्यार्थीभूतब्रह्मप्रतीत्युपयुक्तपदार्थप्रतीतिविषयत्वमात्रमेव ? उत वाक्यार्थप्रतीतिविषयत्वमप्यस्तीति विकल्पार्थः । उपलक्ष्याद्बहिर्भूतमित्यस्याप्ययमेवार्थः । न चावच्छेदकत्वं विशेषणत्वोपलक्षणत्वातिरिक्तमेव, कर्णशष्कुल्यवच्छिन्ननभःश्रोत्रमित्यत्र कर्णशष्कुल्याविशेषणत्वे तस्या अपि श्रोत्रत्वप्रसङ्गात् . विशेष्यान्वयिनो विशेषणान्वयित्वनियमात् । नाप्युपलक्षणत्वम् , कदाचित् कर्णशष्कुल्युपलक्षितस्यापि नभसः श्रोत्रत्वेऽतिप्रसङ्गादिति वाच्यम् , तत्राप्युपलक्षणकोटावेव निवेशसम्भवात् , विद्यमानकर्णसंयोगस्य उपलक्षणत्वेन दोषाभावात् ( उपलक्ष्याद्बहिर्भूतमिति ) अयं

* श्रुतप्रकाशिका *

विशेष्यभूतप्रधानार्थैक्यादेकार्थसिद्धिरिति चेत्, तत्सखण्डवाक्यार्थवादिनोऽपि समानम्; कस्तर्हि विशेष आवयोरिति चेत्, अयमेव विशेषः,—यदेकस्य मते पदानां लाक्षणिकत्वम् इतरस्य पक्षे तेषां मुख्यत्वमिति। यच्चोक्तम्—विशेषणान्तरविशिष्टे वस्तुनि विशेषणान्तरान्वयाद्विशेषणानामन्योन्यसमवायप्रसङ्ग इति। तदसत्,—विकल्पासहत्वात् "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्॥" इत्युक्तप्रक्रियया हि वाक्यमर्थमवबोधयति, तत्र किं पदानां पदार्थस्मरणदशायामन्योन्यसमवायप्रसङ्गः ? उत परामर्शदशायाम् ? आहोस्विद्वाक्यार्थाभिधानदशायाम् ?, न तावत्प्रथमः कल्पः,—स्मरणदशायां पृथक्पृथक् पदार्थस्मरणेन मिथो ऽन्वयप्रसङ्गाभावात्। नापि द्वितीयः, एकस्मिन्वस्तुन्यविरुद्धानेकविशेषणसमवायस्य प्रत्यक्षाद्यवगतस्य यथावस्थितवस्तुपरामर्शदशायां परामृश्यमानत्वात्। नापि तृतीयः,—वाक्यार्थाभिधानदशायां सर्वैः पदैर्युगपदनेकविशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकत्वेन क्रमाभिधानप्रयुक्तान्योन्यसमवायप्रसङ्गाभावात्. यथैव हि द्वे चक्षुषी जातिगुणाद्यनेकविशेषणविशिष्टैकवस्तुविषयामेकां धियं युगपज्जनयतः तथैवानेकपदानि युगपदेव तत्तद्विशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकानि भवन्ति, क्रमेणाभिधानेऽपि नान्योन्यसमवायप्रसङ्गः, पदान्तरोपात्ते विशिष्टे विशेष्यांशस्यैव पदान्तरोपात्तविशेषणेन विशेष्यमाणत्वात्, तच्च यथादृष्टविषयत्वात् पदानां व्युत्पत्तेः, अन्यथा भवत्पक्षे व्यावृत्तिरूपविशेषणानामन्योन्यविशेषणविशेष्यभावः क्रमाभिधानप्रयुक्तो दुर्वारः, अतो यथोक्त एव परिहारस्तवापि शरणम्।

* भावप्रकाशिका *

भावः,— किं स्वरूपप्रतिपत्त्यर्थं ज्ञानादिपदम् ? उत ज्ञानत्वादिप्रतीत्यर्थम् ? नाद्यः,— पूर्वप्रतीतत्वात्। न द्वितीयः,— उपलक्षणत्वव्याघातादिति (वाक्यार्थाभिधानदशायां सर्वैः पदैरिति) सर्वैः पदैः वाक्यार्थाभिधानदशायामित्यन्वयः। यद्वा, सर्वैः— एकज्ञानजनकत्वेन एकज्ञानजननेनेत्यर्थः, अतो नान्वयानुपपत्तिरिति द्रष्टव्यम्। ननु युगपदभिधाने श्रुतिवाक्यादिषु बलाबलविभागनिर्णयोऽसङ्गत एव स्यात्. वाक्यापेक्षया पदश्रुतेः प्राबल्यम्, पदश्रुत्यपेक्षया प्रत्ययश्रुतेरिति व्यवस्था दत्तजलाञ्जलिस्स्यादित्यस्वरसादाह (क्रमेणाभिधानेपीति) (क्रमेणाभिधानानभ्युपगम

* श्रुतप्रकाशिका *

क्रमेणाभिधानानभ्युपगमे कथमुद्देश्योपादेयविभागसिद्धिरिति चेत्; उच्यते,—ज्ञाताज्ञातविभागो ह्युद्देश्योपादेयविभागः, स च युगपत्प्रतिपादनेऽपि नापैति. एकेन वाक्येनैकवस्तुनोऽनेकविशेषणान्वये युगपत्प्रतिपाद्ये तत्र एकविशेषणान्वयः प्रागेव ज्ञातः, विशेषणान्तरान्वयस्त्वज्ञात इति ज्ञाताज्ञातविभागपरामर्शः परामर्शदशायां सम्भवत्येव। यदप्युक्तम्-विशिष्टैक्यप्रतिपादने विशेष्यैक्यवद्विशेषणैक्यं प्रसज्यत इति। तदपि न साधीयः,—विशेष्यमात्रैक्यपरत्वात्समानविभक्तेः, तच्च व्युत्पत्तिसिद्धम्, व्युत्पत्तिश्च प्रत्यक्षमूला, प्रत्यक्षञ्च विशेष्यैक्यमवगमयति न तु विशेषणानामैक्यम्; यथा गौरित्याद्येकपदप्रयोगेऽपि प्रातिपदिकावगतविशेषणविशेष्यैक्यं तद्गतमेकवचनं नावगमयति, किन्तु विशेष्यैक्यमेवावगमयति; प्रत्यक्षमूला व्युत्पत्तिरेव हि तत्र

* भावप्रकाशिका *

इति ) क्रमेणाभिधानानभ्युपगमवादिपक्ष इत्यर्थः । (युगपत्प्रतिपादनेपि नापैतीति) उद्देश्योपादेयभावे हि तद्वाक्यज्ञातत्वाज्ञातत्वे अप्रयोजके, अपितु तद्वाक्यप्रवृत्तेः प्राक् मानान्तरावगतमनूद्यते, अप्राप्तं हि विधीयत इत्येव हि विवेक इति भावः । पौर्वापर्यस्य उद्देश्योपादेयलक्षणत्वाभावे कथमुद्देश्योपादेयविभागज्ञानमित्याशङ्क्याह (एकेन वाक्येनेति) ( परामर्शदशायां संभवत्येवेति ) ननु ज्ञातत्वाज्ञातत्वलक्षणोद्देश्योपादेयविभागज्ञानं न वाक्यार्थप्रतीतावुपयुक्तम्, येन वाक्यार्थप्रतीतेः प्राक् परामर्शदशायां तदवगतिस्समर्थनीया स्यादिति चेन्न, 'ग्रहं सम्मार्ष्टी'त्यादौ ग्रहं संमृज्यादेकं संमृज्यात् यत्संमृज्यात् तदेक'मित्यादिवचनव्यक्तिनिरूपणाभावे निर्विचिकित्सवाक्यार्थप्रतीतेरनुदयेन न्यायसम्पादितवचनव्यक्तिपरामर्शानन्तरभावित्वाद्वाक्यार्थप्रतीतेः, अतएवोक्तम्—न्यायसम्पादितव्यक्तिपश्चाद्वाक्यार्थबोधकमिति भावः । ( विशेष्यमात्रैक्यपरत्वात्समानविभक्तेरिति ) अयं भावः,— यदुक्तं विशिष्टैक्यप्रतिपादनमिति तदिष्टमेव, विशिष्टैक्यप्रतिपादनस्यानभ्युपगमात् । नच विशेष्यैक्यमात्रप्रतिपादनं परस्यापीष्टमिति वाच्यम्,—विशेषणान्वयस्यापि प्रातिपदिकावगतस्यात्यागात् । एकस्मिन् विशेष्ये एकस्य द्वयमिति न्यायेन प्राप्तयोर्विशेषणैकत्वयोरपरित्यागादिति ( व्युत्पत्तिश्च प्रत्यक्षमूलेति ) ननु स्वर्गादिशब्दव्युत्पत्तिवच्छ्रुतिमूलेत्यर्थः । ( प्रत्यक्षञ्च विशेष्यैक्यमवगमयतीति ) दण्डी कुण्डलीत्यादौ विशेषणविभक्तेर्भिन्न-

* श्रुतप्रकाशिका *

कारणम्, तथा समानाधिकरणपदसङ्घातस्थसमानविभक्तिरपि विशेष्यैक्यमात्रपरत्वे- नैव नियामिका, अन्यथा भवत्पक्षेप्यसत्यादिप्रतियोगिव्यावृत्तिरूपविशेषणैक्यप्रसङ्गात्। प्रातिपदिकानां तत्तत्प्रतियोगिव्यावृत्तिविशिष्टस्वरूपपरत्वेऽपि समानविभक्तेः प्राति- पदिकार्थैकदेशभूतविशेष्यमात्रैक्यपरत्वव्युत्पत्त्या न विशेषणैक्यं प्रसज्यत इति चेत्; तदस्मत्पक्षेऽपि समानम्, आवयोर्विशेषस्तु प्रागेवोक्तः। यच्चोक्तम्,—विशेषणभेदे विशेष्यभेदप्रसङ्ग इति। तदयुक्तम्,—विशेषणभेदमात्रस्य विशेष्यभेदकत्वाभावात्, तच्च देवदत्तः श्यामो युवेत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यदर्शनात्. विशेषणभेदस्य स्वतःप्राप्तविशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेत्तन्न; धर्मिवाचिपदैक्यात् समानविभक्तिनिर्देशाच्चैक्यप्रतीतेः। खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र धर्मिवाचक- पदैक्ये समानविभक्तिनिर्देशे सत्यपि विशेषणभेदे विशेष्यभेदः प्रतीयत इति चेन्नैवम्; स्वयं प्राप्तं तयोर्विशेष्यैक्यप्रत्यायकत्वं प्रत्यक्षेण तत्रापोदितम्, परोक्षविषये खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादिवाक्ये प्रयुक्ते खण्डत्वादिविशेषणभेदे विशेष्यभेद- प्रतीतिर्दृश्यत इति चेत् परोक्षविषयेऽपि देवदत्तः श्यामो युवेत्यादिवाक्ये प्रयुक्ते विशेषणभेदेऽपि विशेष्यैक्यप्रतीतिर्दृश्यत इति समानश्चर्चः, को निर्णायक इति चेत् यज्जातीयविशेषणानां नियमेन भिन्नाश्रयत्वं दृष्टं प्रत्यक्षेण, तज्जातीय- विशेषणानां परोक्षत्वेऽपि विशेष्यभेदापादकत्वम्, यथा खण्डत्वादीनाम्. यज्जातीयविशेषणानां भिन्नाश्रयत्वनियमो न दृष्टः, तज्जातीयविशेषणानां धर्मिवाचि-

* भावप्रकाशिका *

विशेषणाश्रये एकस्मिन्नेव विशेष्ये पूर्वपूर्ववृद्धव्यवहारं प्रत्यक्षीकृत्य तथैव व्युत्पत्तेर्ग्र- हात्, इतरथा विशेषणविभक्तेरभेदार्थकत्वमपि त्याज्यं स्यात्, नहि विशेषणविभक्ति- रैक्यपरेत्यत्र पूर्वपूर्वसिद्धव्यवहाराधीनव्युत्पत्तिमन्तरेणान्यन्निमित्तमस्तीति भावः। (विशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेदिति) प्रत्यक्षागोचरे ब्रह्मणि विशे- षणभेदप्रयुक्तो विशेष्यभेदो दुर्वार इत्यभिप्रायः (धर्मिवाचिपदैक्यात् समानविभक्ति- निर्देशाच्च ऐक्यप्रतीतेरिति) इदमुपलक्षणम्. विशेषणभेदे विशेष्यभेद इत्युत्सर्गः, देवदत्तश्श्यामो युवेत्यादावदर्शनात्, खण्डो मुण्ड इत्यादौ विरुद्धत्वात्, भेदकत्व- मविरुद्धन्त्वभेदकमेव विशेषणानां भेदकत्ववादस्तु विशेषणानाश्रयापेक्षया, नतु विशे-

* श्रुतप्रकाशिका *

पदैक्ये समानविभक्तिनिर्देशे चैकविशेष्यनिष्कर्षकत्वं युक्तम्, यथा नीलस्वादीनामिति। यच्चोक्तम्—समानविभक्त्यवगतैक्यविरोधाद्विशेषणपरित्याग इति । तदप्ययुक्तम्,— प्रातिपदिकाभिहितविशेषणान्वयविरोधादैक्यपरित्यागापत्तेः। तथा हि; यदि समानविभक्त्यन्वयावगतत्वादैक्यं न ह्यातुं शक्यते तर्हि प्रातिपदिकावसितविशेषणान्वयः कथमिव ह्यातुं शक्यते यथा नीलमुत्पलमित्यादौ । तत्र प्रत्यक्षसिद्धत्वादङ्गीक्रियत इति चेत, तत्रैक्यप्रतीतिरपि तथैवेति किं न स्यात्, समानविभक्तिनिर्देशे परोक्षेऽप्यैक्यप्रतीतिर्दृश्यते इति चेत् तथैव प्रयोगे परोक्षेऽपि प्रातिपदिकावगतविशेषणान्वयप्रतीतिर्दृश्यत एव; तस्मादैक्यप्रतीतिः शाब्दीति चेत्, विशिष्टप्रतीतिरपि शाब्दीति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात्। किञ्च, प्रातिपदिकावगतविशेषणान्वयपरित्यागहेतुभूतसमानविभक्त्यवगतमैक्यं किं स्वरूपम्? उत तदतिरिक्तम्? अतिरिक्तपक्षे सविशेषत्वप्रसङ्गः। अनतिरिक्तपक्षे हेत्वसिद्धिः । प्रातिपदिकावगतस्वरूपातिरेकेण समानविभक्त्या कस्यचिदैक्यस्याप्रतिपादनात्, नहि स्वरूपमात्रे विरोधाद्विशेषणपरित्यागः, व्यधिकरणवाक्येष्वपि तत्त्यागप्रसङ्गात्. प्रातिपदिकावगतं स्वरूपं निर्विशेषमिति प्रतिज्ञाय समानविभक्तेरैक्यावगमादित्युक्ते स्वरूपावगमादित्युक्तम् । ततश्चैक्यावगमविरोधरूपहेत्वसिद्धिः, स्वरूपं तु विशेषणान्वयाविरुद्धं व्यधिकरणवाक्येषु विशेषणान्वयादित्युक्तम् । किञ्च समानविभक्त्यवगतमैक्यं प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रस्येत्युक्तत्वात् तस्य च विशेषणभेदाविरोधित्वान्न तद्विरोधनिबन्धनविशेषणत्यागो युक्तः, अतो न निर्विशेषत्वं वस्तुनः, कार्ष्ण्यव्यावृत्तं शौक्ल्यमित्यादिषु प्रतियोगिभेदस्य तत्तद्व्या-

* भावप्रकाशिका *

पणान्तराश्रयापेक्षयापि, नहि नीलमुत्पलमित्यादौ नैल्यं दीर्घादपि व्यावर्तयतीत्यपि द्रष्टम्। (यच्चोक्तं समानविभक्तीति) नच समानविभक्त्या ऐक्यावगमे परस्याखण्डार्थत्वभङ्गप्रसङ्गात् परस्य कथमियमाशङ्का घटतामिति वाच्यम्, एकप्रातिपदिकार्थमात्रनिष्ठत्वमखण्डार्थत्वमित्यनेन प्रातिपदिकार्थान्तरसम्बन्ध एव व्यावर्त्यते, नतु विभक्तिसम्बन्धोपीति मन्यमानस्य शङ्कासम्भवादिति ध्येयम् (अनतिरिक्तपक्षे हेत्वसिद्धिरिति) समानविभक्त्यवगतैक्यावगमविरोधरूपहेत्वसिद्धिरित्यर्थः ।

* श्रुतप्रकाशिका *

वृत्तस्वरूपस्य च शब्दोपात्तत्वान्न लक्षणाप्रसङ्गः, सत्यादिवाक्येषु न तथेति विशेषः, एवं शौक्ल्यादिदृष्टान्तवाक्यात् सत्यादिदार्ष्टान्तिकवाक्यस्य शब्दद्वारकं वैषम्यमुक्तम्। अर्थद्वारकं च वैषम्यं पूर्वोक्तं द्रष्टव्यम्। कथमिति चेत्; इत्थम्,— शौक्ल्यादेः कस्यचिद् द्रव्यस्य द्रव्यान्तराद्व्यावर्तकधर्मतया धर्मान्तरानपेक्षत्वं युक्तम्, ब्रह्मणस्तु न तथात्वमिति स्वरूपातिरिक्तव्यावर्तकधर्मान्तरापेक्षाऽस्त्येव, न हि परनिर्वाहकत्वानभ्युपगमे स्वनिर्वाहकत्वसम्भवः। किञ्च शौक्ल्यादिस्वरूपस्फुरणे सति न कार्ष्ण्याद्यध्यासप्रसङ्गः, अतस्तत्र स्वरूपमेव व्यावृत्तिरिति युक्तमभ्युपगन्तुम्. ब्रह्मणः स्वरूपस्फुरणे तदितराध्यासाभ्युपगमाद्रजतादिव्यावर्तकाधिष्ठानस्वरूपातिरिक्त शुक्तित्वादिवत् सर्वाध्यासाधिष्ठानब्रह्मस्वरूपातिरिक्तसकलेतरव्यावृत्तिरूपधर्मोऽवश्याभ्युपगमनीयः। यच्चोक्तम्—वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति। तदप्यसत्,—विशेषणद्वारेण विशेष्यपर्यवसायिनः शब्दस्य द्वारानभिधाने द्वार्यभिधानासिद्धेः, अलाक्षणिकत्वेऽपि विशिष्टाभिधानस्वरसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानिरवर्जनीया, सा च न विरोधाभावे युक्ता। यच्च—विषं भुङ्क्ष्वेत्यादिषु सर्वपदलक्षणा दृष्टेति। तच्च विधिप्रत्ययांशस्य मुख्यत्वादयुक्तम्,—तत्र विधिप्रत्ययव्यतिरिक्तशब्दलक्षणा च मुख्यार्थत्वे प्रमाणान्तरविरोधात् स्वीक्रियते, प्रस्तुते विरोधाभावान्न सा युक्ता. विमतं वाक्यमखण्डार्थं समानाधिकरणवाक्यत्वात् सम्प्रतिपन्नवदिति ईदृशनुमानोक्तिरनुपपन्ना, वाक्यमखण्डार्थमिति पदयोरर्थभेदोऽस्ति न वा? अस्ति चेत्प्रतिज्ञावाक्य एव हेतोरनैकान्त्यम्, न चेदखण्डार्थत्वं

* भावप्रकाशिका *

ऐक्यावगमविरोधरूपहेत्वसिद्धिरित्युत्तरत्रोपसंहारादिति द्रष्टव्यम्। अशक्यासदृशान्वयप्रतियोग्युपस्थितिर्वा शक्यसम्बन्धो वा लक्षणाशक्ये न सम्भवतीत्यभिप्रेत्याह (अलाक्षणिकत्वेपीति) (विमतं वाक्यमखण्डार्थमित्यादि) एतेन सत्यादिवाक्यमखण्डार्थनिष्ठं लक्षणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदित्यनुमानं प्रमाणम्, नीलमुत्पलमित्यादिसमानाधिकरणवाक्यानां लक्षणवाक्यत्वाभावात् नातिप्रसङ्ग इति निरस्तम्। असाधारणरूपलक्षणवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तेः कर्मकाण्डस्यापि तन्मात्रप्रश्नोत्तरत्वेनाखण्डार्थत्वप्रसङ्गात्

सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः। इयांस्तु विशेषः,—एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा। न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव। एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च, एकस्मिन् वस्तुनि वर्तमानानां पदा-

---

* श्रुतप्रकाशिका *

प्रतिज्ञातमेव न स्यात्. दृष्टान्तस्य च साध्यवैकल्यमवर्जनीयम्, प्रकृतिप्रत्ययात्मकपदपुञ्जरूपत्वात्सर्ववाक्यानाम्। यदि भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञा तर्हि साध्यधर्मवचनान्तर्गतयोः समानाधिकरणयोर्भावरूपखण्डशब्दयोरनैकान्त्यम्; तस्मात् सत्यादिवाक्यं सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपादयतीति सिद्धम्। तदिदमुच्यते—सत्यं ज्ञानमनन्तमित्यादिना। तत्र निर्विशेषपरत्वाभावं सोपपत्तिकं प्रतिजानीते—सत्यं ज्ञानमिति। सामानाधिकरण्यलक्षणप्रत्यभिज्ञापकैश्शब्दैर्हेत्वंशं विवृणोति (प्रवृत्तीति) ततः किमित्यपेक्षायामन्वयमुखेन व्यावृत्तिमुखेन वा प्रवृत्तिनिमित्तभेदस्यावश्याश्रयणीयत्वमाह (तत्रेति) तत्र को विशेष इत्यत्राह (इयानिति) अवश्याश्रयणीय इत्यत्राभिप्रेतं व्यावृत्तीनां स्वरूपमात्रत्वे दूषणमाह (नचेति) सामानाधिकरण्यासिद्धिमुपपादयति (एकस्मिन्निति) पर्यायत्वं दूषणं स्पष्टमिति न

* भावप्रकाशिका *

प्रकृष्टप्रकाशश्चन्द्र इत्यत्र व्यावर्तकासाधारणप्रश्नोत्तरत्वेन दृष्टान्तासिद्धेश्चेत्यपि द्रष्टव्यम्। (यदि भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञेति) ततश्च प्रतिज्ञावाक्यस्य खण्डार्थत्वाभावरूपाखण्डार्थवैशिष्ट्यप्रतिपादनसामर्थ्येऽपि भावरूपखण्डार्थप्रतिपाद-

नां निमित्तभेदानाश्रयणात्। नच एकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टता प्रतिपादनपरत्वात्सामानाधिकरण्यस्य, [1] "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति हि [2] शाब्दाः। यदुक्तम्—एकमेवाद्वितीयमित्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते;

* श्रुतप्रकाशिका *

कण्ठोक्तम्, विशेषणभेदेनानेकार्थत्वात् सामानाधिकरण्यलक्षणहानिं निरस्यति (न च एकस्येति) विशिष्टताभेदात्—तत्तद्विशेषणान्वयभेदात्। तथाविधमनेकार्थत्वं न विरोधि, प्रत्युतानुकूलमेवेत्यर्थः। कुत इत्यत्राह (भिन्नप्रवृत्तीति) विशेषणतो भिन्नार्थत्वे विशेष्यतश्चैकार्थत्वे सति हि सामानाधिकरण्यलक्षणसाद्गुण्यमित्यर्थः। समानाधिकरणं वाक्यं किं विशेषणविशेष्यसम्बन्धपरम्? उत विशेष्यैक्यपरम्? उत उभयपरम्? प्रथमे विशेष्यैक्ये प्रमाणं न स्यात्। द्वितीये विशेषणान्वयो निष्प्रमाणकः स्यात्। तृतीये सम्बन्धद्वयस्यैकवाक्येन बोधयितुमशक्यत्वात् वाक्यभेदप्रसङ्ग इति केचिच्चोदयन्ति। तन्न; प्रातिपदिकेनैव विशेषणान्वयस्य बोध्यतया समानविभक्तिनिर्देशेन विशेष्यैक्यप्रतिपादने वाक्यभेदप्रसङ्गाभावात्; एवं सामानाधिकरण्यस्यान्यथैवोपपत्त्या सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वं निरस्तम्। अथ कारणवाक्यैकार्थ्यान्निर्विशेषपरत्वं निराकर्तुं तदनुवदति (यदुक्तमित्यादिना) सदेवैकमेवेति विजातीयसजातीयभेदव्यावर्तकावधारणद्वयसमभिव्याहृतमद्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयतां न सहत इत्यर्थः।

* भावप्रकाशिका *

नासामर्थ्यान्न व्यभिचार इति भावः (प्रातिपदिकेनैव विशेषणान्वयस्येति) प्रातिपदिकसारितयोर्विशिष्टयोर्विभक्त्या ऐक्यमात्रप्रतिपादनादित्यर्थः। ननु नीलप्रातिपदिकेन उत्पले नीलत्वान्वय इति मन्तव्यम्, तथाहि,— सति उत्पले नील-

(१) कैयटे पस्पशाह्निके, (२) शाब्दिकाः इति पाठान्तरम्॥

अतस्सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीय-वस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् , कारणतयोप-लक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते 'सत्यं ज्ञानमनन्तं ब्रह्म' इति; अतो लिलक्षयिषितं ब्रह्म निर्गुण-मेव, अन्यथा [1]'निर्गुणम्' [2]'निरञ्जनम्' इत्यादिभिर्विरोध-श्चेति तदनुपपन्नम् , जगदुपादानस्य ब्रह्मणः स्वव्यति-रिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपा-दनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोग-मेवावगमयति [3]"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादि । अविशेषेणाद्वितीयमित्युक्ते

* श्रुतप्रकाशिका *

"यस्सर्वज्ञः सर्ववित्' 'यस्य ज्ञानमयं तपः' 'तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" इत्यादिसगुणविषयकारणवाक्यैकार्थ्यमस्तीत्यत्राह ( अत इति ) सर्व-शाखाप्रत्ययन्यायान्निर्गुणकारणवाक्येषु सगुणत्वं सगुणकारणवाक्येषु निर्गुणत्वञ्चोक्तं स्यात् । तत्रापच्छेदन्यायेन निर्गुणवाक्यप्राबल्यात्सर्वकारणवाक्यानि निर्गुण-पराणीत्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितमित्यत्राह ( कारणतयोपलक्षितस्येति ) जगत्कारणत्वं तटस्थलक्षणम् , नतु स्वरूपलक्षणमित्यभिप्रायेण उपलक्षितस्येत्युक्तम् , कारणत्वशङ्कितदोषव्यावृत्तकत्वादैकार्थ्यमवर्जनीयमित्यर्थः । अथ शोधकवाक्यान्तरै-कार्थ्यान्निर्विशेषपरत्वं निराचिकीर्षुरनुवदति ( अन्यथेति ) अनूदितमर्थं दूषयति ( तदनुपपन्नमित्यादिना ) तत्र प्रथमं कारणवाक्यैकार्थ्ये सविशेषविषयत्वे सतीत्याह ( जगदिति ) ( तथैवेति ) अद्वितीयपदं यथाऽधिष्ठात्रन्तरनिवारणपरमेव भवति तथैवेत्यर्थः ( विचित्रशक्तियोगमेवेति ) उत्तरवाक्यमुपादानभूतस्यैव ब्रह्मणोऽधि-ष्ठातृत्वशक्तियोगमेवावगमयति न तु निर्गुणत्वमित्यर्थः । शङ्कते ( अविशेषेणेति )

१— मन्त्रिकोपनिषत् ॥
२— श्वे. ६- अ १९- वा.
३— छा. ६- प्र. २- ख. ३- वा.

निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत्; सिसृक्षोर्ब्रह्मण उपादानकारणत्वं "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितम्। कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत

* श्रुतप्रकाशिका *

सर्वनिषेधस्य निमित्तान्तरनिषेधस्य च साधारणमाद्वितीयपदम्, निरुपपदत्वात्। किञ्च उपक्रमे सदेवैकमेवेति सजातीयविजातीयभेदयोर्निषिद्धत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सजातीयविजातीयभेदमात्रमिथ्यात्वेऽनुपपन्नत्वाच्च; अद्वितीयपदमुपक्रमानुगुण्येन स्वगतभेदनिषेधपरं स्यात्, न तूत्तरवाक्यानुगुणं स्यात्. उपक्रमप्राबल्यादिति साक्षात्पूर्वपक्षिचोद्यम्, निमित्तत्वोपादानत्वे उभे अप्युत्तरत्र श्रूयेते तत्रोपादानान्तरमाद्वितीयपदेन निषेध्यम्, न तु निमित्तान्तरमिति पार्श्वस्थचोद्यम्। तत्राह (सिसृक्षोरिति) अनेन शङ्काद्वयं परिहृतं भवति 'तदैक्षते'त्यनन्तरोक्तत्वादस्य वाक्यस्य कारणपरत्वं नापलपनीयमित्यभिप्रायेण सिसृक्षोरित्युक्तम्। कारणपरत्वे च सति अग्रशब्देन विजातीयकालसद्भावसिद्धेर्जीवानादित्वश्रुतेरकृताभ्यागमकृतविप्रणाशादिश्रुत्यर्थापत्त्या वैषम्यनैर्घृण्यपरिहाराय जीवानां कर्मसूक्ष्मभेदस्य प्रलयदशायामभ्युपगमादेकत्वावधारणस्य जीवसूक्ष्मभेदसहत्वस्य परैरभ्युपगन्तव्यत्वात् सार्वज्ञ्यसर्वशक्तित्वादीनां सर्गौपयिकत्वाच्च विजातीयसजातीयस्वगतभेदाभावस्य दुर्वचत्वात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्चोक्तार्थाविरोधेन निर्वाह्यत्वात्परतन्त्रभेदस्य विहितत्वात् निषेधस्य च विहितव्यतिरिक्तविषयत्वात् स्वतन्त्ररूपभेदविशेषस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिभिर्निषिद्धत्वात् सामान्यनिषेधस्य च तत्पर्यवसानस्य न्याय्यत्वाच्च अद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्ते सति अविभक्तनामरूपताप्रतिपादकेनैकमितिपदेनोपादानत्वस्य सिद्धत्वात् निमित्तान्तरस्य बुद्धिस्थत्वाच्च निमित्तान्तर-

५ भावप्रकाशिका ५

त्वान्वयस्य नीलप्रातिपदिकेनैव सिद्धेर्विभक्त्या ऐक्यबोधनस्य वैयर्थ्यापातादिति द्रष्टव्यम् (अनेन शङ्काद्वयं परिहृतं भवतीति) कारणपरत्वप्रतिपादकेन सिसृक्षोरिति पदेन साक्षात्पूर्वपक्षिचोद्यनिरासः। उपादानकारणत्वं 'सदेव सोम्येदमग्र आसीदेकमेव'

इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगतासिसाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः। सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः, सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्; अतः कारणवाक्यस्वभावादपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते ॥

निर्गुणसगुणवाक्ययोर्विषयविभागेनाविरोधः ॥

न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषय-

---

* श्रुतप्रकाशिका *

रूपस्वतन्त्रवस्तुनिषेधपरमद्वितीयपदमित्यर्थः। सर्वनिषेधेऽनिष्टमाह (सर्वेति) सर्वशाखाप्रत्ययन्यायस्य निर्विशेषत्ववादविपरीतत्वमाह (सर्वशाखेति) अत्र—निर्गुणवादे. अत्र भवत इत्युपालम्भो वा। सर्वशाखाप्रत्ययन्यायोऽनुक्तगुणस्वीकारफलः, न तूक्तगुणत्यागफल इति स्वपक्षविपरीतफल इत्यर्थः। सविशेषपरत्वे कारणवाक्यैकार्थ्यं निगमयति (अत इति) न केवलं सामानाधिकरण्यान्यथानुपपत्त्या, कारणवाक्यैकार्थ्याच्च सविशेषपरत्वमित्यपिशब्दस्य भावः ॥

अथ शोधकवाक्यान्तरैकार्थ्यं निर्विशेषपरत्वहेतुं निरस्यति (नचेति) परेणापच्छेदन्यायेन हि निर्गुणसगुणवाक्यविरोधः परिहृतः। अत्र भिन्नविषयत्वात् विरोध एव नास्तीत्याह (प्राकृतेति) निर्गुणमिति— गुणसामान्यनिषेधः,

* भावप्रकाशिका *

इति प्रतिपादितमिति भाष्यखण्डेन पार्श्वस्थचोद्यनिरास इति भावः (स्वतन्त्रवस्तुनिषेधपरमद्वितीयपदमित्यर्थ इति) अत एव शाङ्करोपनिषद्भाष्येपि अद्वितीयमिति मृद्व्यतिरेकेण मृदो यथान्यद्घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टम्. तथा सद्व्यतिरेकेण सतस्सहकारिकारणं द्वितीयं प्राप्तं प्रतिषिध्यते। अद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयमिति निमित्तान्तरनिषेधपरतयैव व्याख्यातम्। किञ्च— प्राक् सृष्टेरेकमद्वितीयं सदेवासीदिति सृष्टिप्राक्कालपरतया परैरेव व्याख्यातत्वेन सृष्टिप्राक्काले अद्वितीयत्वमात्रेण कथं मिथ्यात्वप्रसक्तिरित्यपि द्रष्टव्यम्॥

स्वात्तेषां 'निर्गुणं 'निरञ्जनं 'निष्कलं निष्क्रियं शान्तम्" इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति; न तावता निर्विशेषज्ञानमात्र-मेव तत्त्वम्, ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव

* श्रुतप्रकाशिका *

निष्कलमिति—शरीरसामान्यनिषेधः, निष्क्रियमिति—क्रियासामान्यनिषेधः। न गुणनिषेधः सङ्कोचयितव्यः, आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात्। ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात् ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितमिति शङ्कायामार्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते (ज्ञान-मात्रेति) ततः किमित्यत्राह (न तावतेति) कुत इत्यपेक्षायां किं ज्ञानत्वात् ज्ञाना-नाश्रयत्वमुच्यते ? किमेकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे प्रथमं प्रतिवक्ति (ज्ञातुरेव ज्ञानस्वरूपत्वादिति) अयमर्थः,—ज्ञानस्य ज्ञानादि-गुणाश्रयत्वाभावः किं व्याप्त्या कथ्यते ? उत श्रुतिबलात्। व्याप्त्या चेत् ज्ञानानाश्रयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गी-क्रियताम्। यदि श्रुतिबलात् स्वतन्त्रत्वेनाङ्गीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्व-मप्यङ्गीक्रियतामिति। ज्ञानानाश्रयत्वं धर्मभूतज्ञानत्वप्रयुक्तं न तु ज्ञानत्वमात्रप्रयुक्तमिति सोपाधिकत्वम्; अतो व्याप्तिविरोधश्च नास्ति। यद्वा जडस्य घटादेरिव ज्ञातृत्वा-योगात् ज्ञातृत्वेनैव ज्ञानस्वरूपत्वमर्थसिद्धम्। द्वितीयं प्रतिवक्ति (ज्ञानस्वरूपस्येति)

ॐ भावप्रकाशिका ॐ

किं ज्ञानत्वाज्ज्ञानाश्रयत्वमुच्यते ? उत एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावा-नुपपत्तेरिति विकल्पे प्रथमस्य दूषणं ज्ञातुरेव ज्ञानस्वरूपत्वसम्भवादिति भाष्यम्; ज्ञातुरपि ज्ञानस्वरूपत्वसम्भवादिति तस्यार्थः। द्वितीयस्य तु दूषणं ज्ञानस्वरूपस्यैवेत्यादि-भाष्यम्. ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति भाष्यन्तु प्रथमविकल्पदूषणस्यो-पपादकम्। तच्छेषभूतम्—इति प्रथमव्याख्या, अस्यां च व्याख्यायां ज्ञातृत्वमेव हीति भाष्यस्य ज्ञातुरेव ज्ञानस्वरूपत्वादिति व्यवहितभाष्योपपादकत्वमाश्रयणीयम्. एव-कारस्य अप्यर्थत्वञ्च क्लिष्टमित्यस्वरसो द्रष्टव्यः। द्वितीयव्याख्यायान्तु पूर्ववदेव

तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवद्युक्तमेवेत्युक्तम् । ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति ॥ [1]"यः सर्वज्ञः

* श्रुतप्रकाशिका *

एकजातीयद्रव्ययोर्न्नियतधर्मधर्मिभाव उपपद्यत इत्यर्थः । श्रुत्या ज्ञानाश्रयत्वे सिद्धे हि तथाभ्युपगम इत्यत्राह ( ज्ञातृत्वमेव हीति ) यद्वा, ज्ञातुरेव ज्ञानस्वरूपत्वादिति- ज्ञातुर्ज्ञानस्वरूपत्वाविरोधादित्यर्थः । एकजातीयद्रव्ययोर्न्नियतधर्मिधर्मभावानुपपत्त्या विरोधं परिहरति—ज्ञानस्वरूपस्यैवेति । ज्ञानत्वात् ज्ञानानाश्रयत्वं परिहरति— ज्ञातृत्वमेव हीति । पूर्ववदभिप्रायः, ज्ञातृत्वं यथा फलितं भवति तादृशगुणपराश्च ज्ञातृत्वकण्ठोक्तिमत्यश्च श्रुतयः सर्वशब्दविवक्षिताः । बहुवचनेन बहूपनिषद्वाक्यानि विवक्षितानि । एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता । हिशब्दो हेतौ , ज्ञातृत्वस्य श्रुतिसिद्धत्वान्न काचिदप्यनुपपत्तिरित्यर्थः । काः पुनः श्रुतय इत्यपेक्षायाम् आर्थगुणनिषेधपरिहारार्थं निर्गुणश्रुतिसङ्कोचसिद्ध्यर्थं सगुणश्रुतीनामाविष्क-

* भावप्रकाशिका *

विकल्पमुखेन प्रवृत्तत्वं समानम् ; तत्र ज्ञातुरेवेत्यादिभाष्यस्यायमर्थः,—ज्ञातृशब्दो भावप्रधानः पञ्चम्यतः, एवकारश्च यज्ज्ञातृत्वं त्वया ज्ञानत्वविरुद्धतयोपन्यस्तं तदेव ज्ञानत्वसाधकमिति स्फोरणार्थः । ज्ञानत्वाभावव्यापकाभावप्रतियोगितया ज्ञातृत्वस्य न तद्विरुद्धत्वमित्यस्मिन् पक्षे ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति भाष्यं ज्ञातृत्वस्य श्रौतत्वप्रतिपादनद्वारा तद्दृढीकरणार्थम्, अस्याञ्च व्याख्यायां भावप्रधानतया निर्देशाद्याश्रयणं क्लिष्टमित्यस्वरसो द्रष्टव्यः । तृतीयव्याख्यायान्तु ज्ञातुरेवेत्यादिभाष्यस्य ज्ञातुरेव सतो ज्ञानस्वरूपत्वाविरोधादित्यर्थः । इदञ्च भाष्यं न विकल्पकोट्योरन्यतरनिरासकम् , अपि त्वविरोधप्रतिज्ञामात्रपरम्, किं ज्ञातुर्ज्ञानानाश्रयत्वं सजातीययोर्द्धर्मधर्मिभावाभावादुच्यते ? उत ज्ञानत्वात् ज्ञानानाश्रयत्वम् ? इति विकल्प्य प्रथमं प्रतिवक्ति ( ज्ञानस्वरूपस्यैवेति ) द्वितीयं प्रतिवक्ति ( ज्ञातृत्वमेव हीति ) इति विवेको द्रष्टव्यः ( पूर्ववदभिप्राय इति ) किं व्याप्त्या उच्यते ? उत श्रुत्येत्यादीत्यर्थः ( ज्ञातृत्वं यथा फलितं भवतीति ) तमीश्वराणा-

१– मुण्ड- १- मु- १- ख. ९- वा.

सर्ववित्' 'तदैक्षत '[1]' सेयं देवतैक्षत '[2]' स ईक्षत लोकान्नु सृजा इति [3]' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् '[4]' ज्ञाज्ञौ द्वावजावीशनीशौ '[5]' तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्'[6]' न तस्य कार्यं करणं च

* श्रुतप्रकाशिका *

गुणविषयत्वशङ्कापनोदार्थं श्रुतीर्दर्शयंस्ताभिरेतत्प्रयोजनत्रयसिद्धिं च दर्शयति ( यः सर्वज्ञ इत्यादिना ) यः सर्वज्ञस्सर्ववित्—सर्वं स्वरूपतः प्रकारतश्च जानातीत्यर्थः। ज्ञानस्य सर्वविषयत्वं तस्य समष्टिव्यष्टिसृष्ट्युपयोगित्वमात्मसम्बन्धित्वं च दर्शयति (तदैक्षतेत्यादित्रयेण) नित्यो नित्यानामित्यत्र चेतनबहुत्वमुक्तम्, कामप्रदत्वञ्च। ज्ञाज्ञौ द्वावजावित्यत्र ज्ञातृत्वमीश्वरत्वं च, तमीश्वराणामित्यत्र ईश्वरत्वदेवतात्वपतित्वानि; ईश्वरत्वम्—नियन्तृत्वम्, नियाम्यविषयज्ञानवत एव नियन्तृत्वात् नियमनस्य ज्ञानविशेषरूपत्वाच्च नियन्तृत्वेन ज्ञातृत्वासिद्धिः। देवतात्वम् कर्माराध्यत्वम्, पतित्वम्-शेषित्वम्। न तस्येति। कार्यम्—शरीरम्। करणमिन्द्रियादि " कार्यकारणकर्तृत्वे "

* भावप्रकाशिका *

मित्यादिश्रुतावित्यर्थः। फलितत्वप्रकारश्च उत्तरत्र स्पष्टयिष्यते ( ज्ञानस्य सर्वविषयत्वमिति ) यस्सर्वज्ञस्सर्वविदित्यत्र ज्ञानस्य सर्वविषयत्वम्, तदैक्षतेति समष्ट्युपयोगित्वम्, सेयं देवतैक्षतेति व्यष्ट्युपयोगित्वं सृजा इत्युत्तमपुरुषेणात्मसम्बन्धित्वञ्च दर्शितमित्यर्थः ( कामप्रदत्वञ्चेति ) कामितार्थज्ञानाभावे तत्प्रदत्वासम्भवादिति भावः। देवतात्वम्,—कर्माराध्यत्वम्। आराधना—महनीयप्रीतिहेतुभूता क्रिया। ततश्च प्रीतिरूपज्ञानवत्त्वं सिध्यति ( पतित्वं शेषित्वमिति ) शेषिचेतनत्वमित्यर्थः। प्रयाजादिशेषिदर्शपूर्णमासादौ पतित्वव्यवहाराभावात्; अतो ज्ञातृत्वसिद्धिरिति भावः।

१—छा. ६- प्र. ३- ख. २- वा.
२— ऐतरे- १- ख. १- वा.
३— कठ- २- अ. ५- वल्ली. १३- वा.
४— श्वे. १ अ. ९ वा.
५— श्वे. ६- अ. ७- वा.
६— श्वे. ६- अ. ८- वा.

विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [1]"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति; समस्तहेयरहिततां च।

* श्रुतप्रकाशिका *

इति प्रयोगात्, समाभ्यधिकनिषेधश्चात्र श्रूयते, तेनाद्वितीयमिति सामान्यनिषेधस्य "छागो वा मन्त्रवर्णा"दितिन्यायादीश्वररूपाद्वितीयविशेषपर्यवसायित्वं सूचितम्। पराऽस्येति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तम्, क्रिया–नियमनम्। एष आत्मेति विशेषविधानम्, विशेषनिषेधश्च. आर्थगुणनिषेधस्य परिहर्तव्यतामभिप्रेत्य ज्ञानस्वरूपस्यैवेत्युक्तम्। आविधिकत्वनिराकरणाय स्वाभाविकानित्युक्तम्, समस्तहेयरहिततां चेत्यनेन अविधिकत्वशङ्का अर्थात्परिहृता। किञ्च ज्ञातृत्वप्रमुखान् कल्याणगुणान् समस्तहेयरहिततां चेत्यनेन निर्गुणवाक्यस्य सङ्कुचितवृत्तित्वं चोपपादितं भवति। तथा हि;–कल्याणगुणानित्यस्यायमभिप्रायः,—गुणविशेषविधानं गुणसामान्यनिषेधो न बाधितुं प्रभवति, अपि तु तद्व्यतिरिक्तविषय एव भवति; अन्यथा "न हिंस्यात्सर्वाभूतानी"ति सामान्यनिषेधेन "अग्नीषोमीयं पशुमालभेत" इति हिंसाविशेषविधानबाधप्रसङ्गादिति। समस्तहेयरहिततां चेत्यस्यायमर्थः,–यथा "पशुना यजेत" "छागस्य वपायाः" इत्यादिषु "छागो वा मन्त्रवर्णात्" इत्युक्तन्यायात् सामान्यशब्दो विशेषदर्शने सति तत्र पर्यवस्यति, तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्यवस्यतीति। किञ्च सामान्यशब्दानां विशेषपर्यवसायित्वं व्युत्पत्तिसिद्धम्, यथा गामानय गां बधानेत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते,

* भावप्रकाशिका *

( द्वितीयविशेषपर्यवसायित्वं सूचितमिति ) ततश्च 'न तस्य कार्यं करणञ्च' इत्याद्यंशस्यापि प्रकृतोपयोगित्वमस्तीति भावः ( विशेषविधानं विशेषनिषेधश्चेति ) अपहत-

1– छा. ८. प्र. १. ख. ५. वा.

* श्रुतप्रकाशिका *

तत एव हि तत्र प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति, किन्तु विवक्षितव्यक्तिविशेषमेवानयति, तथैव हि तत्र व्युत्पत्तिः, एवं ज्ञातृत्वप्रमुखान् कल्याणगुणान्नित्यनेन समस्तहेयरहिततां चेत्यनेन च उत्सर्गापवादन्यायस्सामान्यविशेषन्यायश्च अभिप्रेतः, उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय सङ्कोच उत्सर्गापवादन्यायः । अविरोधेऽपि वैयर्थ्यपरिहाराय सङ्कोचश्चेद्गोबलीवर्दन्यायः, उपात्तविशेषविषये तस्य सङ्कोचस्सामान्यविशेषन्याय इति भिदा । किञ्च, अध्यात्मशास्त्रेषु गुणशब्दस्सत्त्वरजस्तमस्सु प्रसिद्धः "न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥" "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निर्गुणस्याप्रमेयस्य" "गुणा गुणेषु वर्तन्ते" "कारणं गुणसङ्गोऽस्य" "निर्गुणं गुणभोक्तृ च" "नान्यं गुणेभ्यः कर्तारम्" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "विना हेयैर्गुणादिभिः" "गुणादिदोषांश्च मुने व्यतीतः" "गुणकलुषस्य सदातनस्य नेते"त्यादिषु । एवं केवलगुणशब्दस्य सत्त्वादिपरत्वेन प्रसिद्धिप्राचुर्यान्निर्गुणशब्दास्सत्त्वादिनिषेधपराः । अयं विषयविभागो न केवलं भिन्नोपनिषद्वाक्येषु गुणविशेषविधानगुणविशेषनिषेधदर्शनान्निश्चीयते ।

* भावप्रकाशिका *

पाप्मेत्यादिना विशेषनिषेधः, सत्यकाम इत्यादिना विशेषविधानमित्यर्थः (वैयर्थ्यपरिहाराय सङ्कोचश्चेत् गोबलीवर्दन्याय इति) अत्र उपात्तविशेषव्यतिरिक्तविषय इत्यनुपज्यते (उपात्तविशेषविषये तस्य सङ्कोच इति) न चायं छागपशुन्याय एव, उत्सर्गापवादन्याय एव हि सामान्यविशेषन्यायः । एवमेव हि व्यवहारदर्शनादिति वाच्यम्,—सामान्यशब्दस्य विशेषातिरिक्तविषयत्वमादाय उत्सर्गापवादन्याये सामान्यविशेषन्यायशब्दप्रवृत्तिवत्सामान्यवाचिशब्दस्य विशेषपर्यवसानमादाय छागपशुन्यायेपि सामान्यविशेषन्यायशब्दव्यवहारे दोषाभावात्, अत्र गोबलीवर्दन्यायकथनं शिष्यानुग्रहार्थं प्रसङ्गात्कृतमिति द्रष्टव्यम् । ननु गुणसामान्यविधानं श्रुतिषु न दृश्यत इति कथमुच्यते ? 'यः कालकालो गुणी सर्वविद्य' इत्यादौ तथा दर्शनादित्याशङ्क्याह (दोषसमभिव्याहृतेति) दोषाभावसमभिव्याहृतेत्यर्थः । अत्र हि कालकाल्यत्वलक्षणदोषाभावरूपा कालकाल्यत्वसमभिव्याहृतस्य गुणशब्दस्य गुणविशेषपरत्वेन

निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मे-
त्याद्यपिपास इत्यन्तेन हेयगुणान् प्रतिषिध्य सत्यकामः
सत्यसङ्कल्प इति ब्रह्मणः कल्याणगुणान् विदधतीयं
श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभा-
वादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम् ॥

* श्रुतप्रकाशिका *

एकस्मिन्नेव वाक्ये विषयविभागो दृष्ट इत्याह ( निर्गुणेति ) गुणसामान्यनिषेध-वद्गुणसामान्यमात्रविधानाभ्युपगमेन निर्गुणवाक्यानां सगुणवाक्यानां चेत्युक्तम्, न हि श्रुतिषु गुणसामान्यविधानं क्वचिद्दृश्यते, गुणविशेषा एव हि श्रूयन्ते; दोष-समभिव्याहृतगुणशब्दस्तूपादेयगुणपरः " वर्षायुतैर्यस्य गुणा न शक्याः" " स ते गुणानामयुतैकदेशम्" नान्तं गुणानां गच्छन्ति" इत्यादिस्मृतिवचनाभिप्रायेण सगुण-वाक्यानामित्युक्तम् । तत्र गुणशब्दो दोषप्रतिपक्षवचनः, लोके तथा प्रसिद्धेः, प्रकरणवशाच्छागपशुन्यायेन कल्याणगुणरूपविशेषपर्यवसानस्य न्याय्यत्वाच्च । उक्तन्यायद्वयेन विरोधाभावादपच्छेदन्यायस्याविषयत्वमाह ( इति सगुणनिर्गुण-वाक्ययोरिति ) इतिशब्देन पूर्वोक्तसर्वहेतवो विवक्षिताः, उत्सर्गापवादन्यायात् सामान्यविशेषन्यायादध्यात्मशास्त्रेषु गुणशब्दस्य सत्त्वादिषु प्रसिद्धिप्राचुर्याच्चेत्यर्थः । ( सगुणनिर्गुणवाक्ययोरिति ) अत्र तु विषयविभागान्न विरोध इति नापच्छेदनयः प्रवर्तत इति भावः ( अन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयमिति )

* भावप्रकाशिका *

गुणसामान्यविधानासिद्धेरभ्युपगमवाद एव शरणमितिभावः ( स्मृतिवचनाभिप्रायेण सगुणवाक्यानामित्युक्तमिति ) अत्र च वाशब्दोऽध्याहर्तव्यः, वचनाभिप्रायेण वा सगुणवाक्यानामित्युक्तमित्यर्थः । यद्वा,— कथमत्यन्तानुपलभ्यमानस्य गुण-सामान्यविधानस्याभ्युपगम इत्याशङ्क्याह—वर्षायुतैरित्यादि । स्मृतिवचनाभिप्रायेणेति— एताभिः स्मृतिभिरेतत्तुल्यगुणसामान्यविधायकश्रुत्यनुमानेन सगुणवाक्यानामित्युक्त-मित्यर्थः । ( दोषप्रतिपक्षवचन इति ) गुणदोष इत्यत्रेव दोषप्रतिबन्दिगुणसामान्य-परः उपादेयसामान्यपर इत्यर्थः ( प्रकरणवशाच्छागपशुन्यायेनेति ) ततश्च स्मृति-

* श्रुतप्रकाशिका *

सगुणवाक्यस्येति न ह्युक्तम्, किन्तु अन्यतरस्येत्युक्तम्. सगुणेन निर्गुणवाक्यस्य वा निर्गुणेन सगुणवाक्यस्य वा बाधाश्रयणमनुपपन्नमित्यर्थः । अत्रायमभिप्रायः,—पूर्वं विरोधो नास्तीति परिहृतम् । इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषयः, अपि तु विरोधाधिकरणन्यायविषय एवेति । तथाहि; अपच्छेदन्यायो ह्यनियत-विरोधपौर्वापर्यविषयः, उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति, तत्रापि क्रमेणा-पच्छेदोऽप्यनियतः, तन्नियमे सति हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोध-नियमः, उभयोरप्यपच्छेदे तस्य क्रमभावित्वे उद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरमभावीति वा विपर्ययेणेति वा नियमोऽपि नास्ति; अतोऽपच्छेदन्यायविषयः प्रयोगावधिकविरोधः, सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः, विधिनिषेधरूप-तया नियतपौर्वापर्यश्च; अतो विरोधाभ्युपगमेऽप्यनियतविरोधपौर्वापर्यविषयो-ऽपच्छेदनयो नात्र प्रवर्तते, अपि तु विरोधाधिकरणन्याय एव प्रवर्तते, तद्विषये

ঙ भावप्रकाशिका ঙ

गतानामपि सामान्यवचनानां विशेषपर्यवसानस्यापेक्षितत्वात्, एतत्सङ्ग्रहार्थं भाष्ये सगुणवाक्यानामित्युक्तिरुपपद्यत इति भावः । ( अत्रायमभिप्राय इति ) भाष्ये—सगुण-निर्गुणवाक्ययोर्विरोधाभावादिति वाक्यं समाप्तम् । अन्यतरस्य मिथ्याविषयता-श्रयणमपि नाशङ्कनीयमिति वाक्येन विरोधाभ्युपगम इति शेषः पूरणीयः, अपिशब्दश्च भिन्नक्रमः, अतो विरोधाभ्युपगमेऽपि अन्यतरस्य मिथ्याविषयताश्रयणं न युक्त-मित्यर्थस्सिद्ध्यतीति भावः । अतश्च पूर्वं विरोधो नास्तीति परिहृतमित्युत्तरग्रन्थोऽपि सङ्गतः । इतरथा एकवाक्यत्वे पूर्वमित्युक्तेरसम्भवात् । यद्वा, अत्रायमभिप्राय इत्य-पिशब्दोऽध्याहर्तव्यः, पूर्वमिदानीमिति पदद्वयमप्यविवक्षितं वस्तुस्थितिमनुरुध्य विरोधो नास्तीत्युक्तम्, विरोधसत्त्वेऽपि नास्माकं क्षतिरित्यर्थः । ( उभयोरपच्छेद-नियमो नास्तीति ) अन्यतरमात्रापच्छेदस्यापि सम्भवादिति भावः । ( प्रयोगावधि-कविरोध इति ) अपच्छेदद्वयनिमित्तकनैमित्तकप्रयोगद्वयस्य युगपदनुपसंहरणीयतया शास्त्रयोर्विरोधः , अतश्च स कादाचित्क इति भावः । ( अनियतविरोधपौर्वापर्य-विषय इति ) उक्तं हि— "पौर्वापर्ये विरोधश्च पूर्वाप्रामाण्यमेव च । नियमान्नास्ति-तत्रासावपच्छेदनयो भवेत्"॥ इति । ननु प्रत्यक्षविरुद्धश्रुत्यनुमानं न प्रवर्तत इति

* श्रुतप्रकाशिका *

हि पौर्वापर्यनियमो विरोधनियमश्च विद्यते। तथाहि; "औदुम्बरीं स्पृष्ट्वोद्गायेत्"इति प्रत्यक्षश्रुतिः। "औदुम्बरी सर्वा वेष्टयितव्या"इति स्मृतिः, तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति, निरपेक्षप्रमाणत्वात्; स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः, अतस्तत्र पौर्वापर्यं नियतम्, औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतः, तत्र पूर्वमेव प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टः स्यात्; अतो 'विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीया'निति न्यायात् पूर्वस्याः श्रुतेर्बलीयस्त्वमित्युत्तरशास्त्रानुदय एव। नन्वत्राधीतमेव ह्युत्तरशास्त्रमिति चेत्, ततः किम्? प्रमित्यनुदयो ह्यनुदयः, न तु शब्दानुदयः, आदित्यो यूप इतिवत्। ननु तत्र स्मृतित्वश्रुतित्वे बाध्यबाधकभावप्रयोजके. नैवम्,—स्मृतित्वश्रुतित्वयोः पौर्वापर्यहेतुत्वात्तेन सिद्धं पौर्वापर्यमेव बाध्यबाधकभावहेतुरिति न्यायसाम्यात्सगुणवाक्यबलीयस्त्वमिति। यद्वा माभूद्विरोधाधिकरणन्यायः, अत्र उपक्रमाधिकरणन्याय एव प्रवर्तते,

* भावप्रकाशिका *

विरोधाधिकरणन्यायः, स नात्र प्रवर्तते. यदि प्रत्यक्षानुमानवत् शीघ्रमन्थरगामित्वसामान्यात् सगुणनिर्गुणवाक्ययोस्तद्विषयत्वम्, तर्हि निर्गुणवाक्यस्य स्मृतिवदप्रामाण्यमेव स्यात्। यदि चाप्रामाण्यमिष्टं तर्हि अपच्छेदन्यायो वा किमिति न प्रवर्तते. अपच्छेदन्यायस्य नियतपौर्वापर्यविषयप्रवृत्तौ सर्वात्मना अप्रामाण्यप्रसङ्गभयाद्धि अपच्छेदन्यायस्याप्रवृत्तिरुच्यते; अतः श्रुतिविषयेन विरोधाधिकरणन्याय इत्यस्वरसादाह (यद्वा माभूदिति) (उपक्रमाधिकरणन्याय एवेति) 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् सपर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत्' इत्युपक्रम्य उपसंहारे श्रूयते,— 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपे'दिति। तत्र उपक्रमेऽर्थवादे अश्वदातुः प्रजापतेर्वारुणेष्टिः प्रतीयते। उपसंहारे च प्रतिगृहीतुः, द्वयोर्विरोधे सति 'गुणत्वादनुवादत्वादर्थवादस्य लक्षणा। विध्युद्देशो जघन्योपि स्वार्थहानिं न गच्छति॥ इति पूर्वपक्षे प्राप्ते गुणभूतस्याप्यर्थवादस्यासञ्जातविरोधित्वेन प्रबलत्वाद्विध्युद्देशस्य प्रधानत्वेऽप्यलब्धात्मकत्वात् प्रधानभूतो विध्युद्देशः स्वयमलब्धात्मा लब्धात्मानमर्थवादं प्रक्रमस्थं बाधितुमसमर्थः स्वयमेव तदानुगुण्यं भजत इति प्रतिगृह्णीयादित्यस्य

* श्रुतप्रकाशिका *

विरोधपौर्वापर्यनियमात् ; अतः सगुणवाक्यप्रतिबद्धत्वान्निर्गुणशास्त्रानुदय एवेति । ननु प्रथमप्रवृत्तं विलम्बितस्योत्पत्तिप्रतिबन्धकं चेत्—नेदं रजतमिति ज्ञानोदयमिदं रजतमितिधीः प्रतिबध्नाति चेन्न; सत्तया ज्ञायमानतया च ज्ञापकयोरत्यन्तवैषम्यात्, सत्तया ज्ञापकं हि प्रमाणं पूर्वापरपरामर्शनिरपेक्षं ज्ञानं जनयति; तत्रोत्पन्नं ज्ञानं " पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यती"ति न्यायात् पूर्वं बाधित्वैवोदेति, ज्ञायमानतया ज्ञापकन्तु योग्यतापरामर्शादिसापेक्षं प्रमितिं जनयति, तत्र परामर्शदशायां पूर्वप्रमाणेन विरुद्धप्रमितिश्चेत्सा प्रमितिरुत्तरोत्पत्तिं प्रतिबध्नातीति; एवं तर्हि नेदं रजतमितिज्ञानस्य इदं रजतमिति परामर्शसापेक्षत्वात् पूर्वज्ञानेन प्रतिबद्धस्य नेदं रजतमिति ज्ञानस्यानुदयप्रसङ्ग इति चेन्न इन्द्रियस्य प्रत्यभिज्ञेतरज्ञानजनने पूर्वपरामर्शनिरपेक्षत्वात् . इहापि शुक्तिरियमिति शुक्तित्वविषया ह्युत्तरप्रमितिः ।

* भावप्रकाशिका *

णिजर्थमन्तर्भाव्य प्रतिग्राहयेदित्येवं दातुरेवेष्टिरिति सिद्धान्तितम् । ततश्च सगुणवाक्यस्य भेदग्राहिप्रत्यक्षस्य वा प्राक् प्रवृत्तत्वेन उपक्रमाधिकरणन्याय एव प्रवर्तेत इत्युपक्रमनयः । ( सत्तया ज्ञायमानतया वेति ) ननु रजतमिति ज्ञानस्याप्रामाण्यशङ्कास्कन्दितत्वात्तदनास्कन्दितज्ञानस्यैव विपरीतज्ञानप्रतिबन्धकत्वान्नेदं रजतमिति ज्ञानोत्पत्तौ न विरोधः । नचाप्रामाण्यशङ्काया अपि विषयसंशयपर्यवसन्नतया तस्याप्यनुत्पत्तिश्शङ्कनीया अप्रामाण्यशङ्कासामग्र्या फलबलादुत्तेजकत्वकल्पनादित्येतावतैव परिहारसम्भवात् व्यर्थोयं प्रपञ्च इति चेत्; शिष्यशिक्षार्थतया प्रपञ्चनोपपत्तेः; नच सगुणत्वज्ञाने तद्विरुद्धनिर्गुणत्वज्ञानस्य उपक्रमाधिकरणन्यायेनानुत्पादे षोडशिग्रहणप्रतीतौ तद्विरुद्धाग्रहणप्रतीतेरनुदयप्रसङ्गः , तथा अपच्छेदस्थलेपि पूर्वविरुद्धप्रतीत्यनुत्पादप्रसङ्ग इति वाच्यम् ; उपक्रमाधिकरणन्यायस्य एकवाक्यतास्थल एव प्रवृत्तेः , ग्रहणाग्रहणादिस्थले तु तदभावात् । नच सगुणनिर्गुणवाक्ययोरप्येकवाक्यता नास्तीति वाच्यम् , 'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च " इत्यादावेकवाक्यत्वप्रतीतेस्तत्तुल्यत्वाच्च निर्गुणवाक्यान्तरस्यापि न तद्विरुद्धार्थप्रतीतिजनकत्वमिति भावः । ( इदं रजतमिति परामर्शसापेक्षत्वादिति ) इदं रजतमिति ज्ञानस्य नेदं

* श्रुतप्रकाशिका *

शुक्तित्वप्रतीतेश्च न रजतप्रतिपत्तिसापेक्षत्वम्, शुक्तित्वे गृहीते सति तद्ग्रहणफलभूतो नेदं रजतमिति व्यवहारो नञुल्लिखितत्वात्प्रतियोगिसापेक्षः प्रवर्त्तते, तत्सापेक्षत्वं च शब्दस्वभावाधीनम्, अतः शुक्तिज्ञानं रजतज्ञाननिरपेक्षमुदयमानं पूर्वं बाधित्वै-वोदेति, अतो नियतविरोधपौर्वापर्यविषयविरोधाधिकरणन्याय एवात्र प्रवर्त्तते न त्वपच्छेदनयः, स चेदृशस्थले यदि प्रवर्त्तेत पश्वालम्भनमकर्तव्यं स्यात्, चरम-भाविनो न हिंस्यादिति निषेधस्य प्रबलत्वात्; ततश्चानुष्ठानविरोधः, सगुणनिर्गुण-वाक्ययोर्विरोधपौर्वापर्यनियमः परैरेवोक्तः, अतोपि विरोधाधिकरणन्यायविषयत्वेनात्र अपच्छेदन्यायानवकाशात्सगुणवाक्यानां बलीयस्त्वं सिद्धमिति; एतदभिप्रायेणान्यतर-स्येत्युक्तम्। उपाध्यनुक्तिपूर्वकश्रुत्युक्तानां गुणानां निरुपाधिकत्वस्य स्वतःप्राप्तत्वात् स्वाभाविकत्वश्रुतेः 'नान्यो हेतुर्विद्यत ईशनाये'ति ईशनस्य हेत्वश्रवणेन तदौपधिक-गुणानामपि निरुपाधिकत्वसिद्धेर्ज्ञानशक्त्यादितारतम्योपाधिभूतकर्मसम्बन्धानपधपूर्व-कसत्यकामत्वाद्युक्तेः- "त इमे सत्याः कामाः" इति स्वरूपवत्सत्यत्वश्रुतेः "परास्य शक्तिः' 'ते ये शत'मित्यादिभिर्गुणानामपरिच्छिन्नत्वप्रतिपादनेन कर्मसम्बन्धव्यापक-परिच्छेदनिवृत्त्या व्याप्यकर्मसम्बन्धनिवृत्तेरर्थसिद्धत्वात् स्वाभाविकत्वकण्ठोक्तिरहित-गुणपरवाक्येष्वपि सर्वशाखाप्रत्ययन्यायेन गुणानां स्वाभाविकत्वसिद्धेः 'आनन्दं ब्रह्मण'इत्यादितात्पर्यलिङ्गप्राचुर्यादुत्सर्गापवादन्यायसामान्यविशेषन्यायाभ्यां विषय-विभागादेकस्यां श्रुतावेव विषयविभागस्य दृष्टतया च विरोधाभावादपच्छेदन्याया-विषयत्वाद्विरोधे सत्यपि विरोधाधिकरणन्यायेन सगुणवाक्यप्राबल्यात् 'यस्सर्वज्ञ'

* भावप्रकाशिका *

रजतमिति ज्ञानोपजीव्यत्वात्, उपजीव्यविरोधेन कथं तद्विरुद्धोत्पत्तिरितिशङ्कार्थः। (शुक्तित्वविषया ह्युत्तरप्रमितिरिति)इदमुपलक्षणम्, रजतत्वाभावविषयत्वेपि इदं रजत-मितिज्ञानस्य प्रतियोगिज्ञानत्वेन प्रतियोगिविषयत्वमात्रांशे उपजीव्यत्वेपि पुरोवर्तिनि रजतविषयत्वांशेऽनुपजीव्यत्वेन तदभावावगाहने दोषाभावात्, उदीर्यमाननिति पाठे 'इण् गतौ' इतिधातोरूपमिति द्रष्टव्यम् ( आनन्दं ब्रह्मण इत्यादितात्पर्यलिङ्ग-प्राचुर्यादिति) ब्रह्मापेक्षयापि तद्गुणभूतानन्दवेदनस्यैव फलवत्त्वावेदनेन श्रुतेः ब्रह्मा-नन्दे तात्पर्यावगतेरिति भावः ॥

आनन्दवल्ल्याः सगुणविषयत्वम् ॥

[1] "भीषाऽस्माद्वातः पवते" इत्यादिना ब्रह्मगुणानारभ्य [2] "ते ये शतम्" इत्यनुक्रमेण क्षेत्रज्ञानन्दाति-

* श्रुतप्रकाशिका *

इत्यादिषूपासनविधिरहितेषु वाक्येषु स्वरूपवत्प्रतिपन्नत्वात् मानान्तरागोचरतयानुवाद-विषयत्वासम्भवेन निषेद्धुमशक्यत्वात् "आत्मा वा अरे द्रष्टव्यः' 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद' 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति क्वचिदुपास्यत्वश्रवणस्य स्वरूपेऽपि तुल्यत्वादध्यात्मशास्त्रेषु सत्त्वादौ गुणशब्दस्य प्रसिद्धिप्राचुर्याच्च निर्गुणवाक्यविषयत्वाभावाद्ब्राह्मतर्काणां कालात्ययापदिष्टत्वादवधारणद्वयसहिताद्वितीयश्रुतिज्ञानानन्दस्वरूपत्ववाङ्मनसनिवृत्तिज्ञेयत्वनिषेधरूपार्थगुणनिषेधानां परिहृतत्वाच्च निरुपाधिका ब्रह्मगुणा इत्युक्तवक्ष्यमाणार्थसङ्ग्रहः प्रवृत्तिसौकर्याय दर्शितः। सत्यं ज्ञानमिति ज्ञानपदेन सिध्यन्नार्थगुणनिषेधः पूर्वं परिहृतः॥

अथैतदनुवाकोपसंहारे "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति वाङ्मनसनिवृत्त्यभिधानान्निर्गुणत्वं फलितम्, अतस्तदैकार्थ्याच्च सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वमिति शङ्कायामार्थगुणनिषेधपरतया परोक्तस्यास्य वाक्यस्योक्तार्थानुगुण्यमुपपादयति (भीषाऽस्मादित्यादिना) भीषास्मादित्यनेन आज्ञापयितृत्वमुच्यते। (क्षेत्रज्ञानन्दातिशयमुक्त्वेति) अत्र निर्विशेषत्वं प्रतिपिपादयिषितं चेत् गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसितं[तुं] युक्तम्, अत्र तु क्रमेण गुणानामाधिक्यमुक्त्वा वाङ्मनसानिवृत्त्यभिधानमानन्त्यादेवेत्यभिप्रायः, यथा "संख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणि। आनन्त्यात्प्रथमो राशिरभावादेव पश्चिमः॥" इति। प्रथमं मनुष्यानन्दमारभ्य क्रमेणातिशयो दर्शितः, साधु युवाऽध्यायकः, साधु—यथा

* भावप्रकाशिका *

पर्यवसितं युक्तमिति पाठः— पर्यवसानं युक्तमित्यर्थः। पर्यवसितुं युक्तमिति क्वचित्पाठो दृश्यते, तत्र 'असु क्षेपणे' इत्यस्मात् अवपूर्वात् 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयो'रिति अवशब्दान्तलोपे तुमन्प्रत्यये सति कथञ्चिन्निर्वाहो द्रष्टव्यः। 'षो अन्त कर्मणि' इत्यस्मात्तुमन्प्रत्यये तस्य कित्त्वाभावात् 'द्यतिस्यतिमास्था'मिति कित्व-

१-२- तै. आन. ८. अनु. १- वा.

शयमुक्त्वा [1] "यतो वाचो निवर्तन्ते अप्राप्य मनसा

* श्रुतप्रकाशिका *

विधि, सम्यक्सम्प्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं वा, युवशब्देन प्रत्यग्रत्वं विवक्षितम्, अविस्मरणान्नित्यनवं यथा भवति तथा अध्ययनवानित्यर्थः । यद्वा स्वसमवयस्कानां सर्वेषामध्यापकः, तदधिकज्ञान इत्यर्थः । आशिष्ठः—आशुतरक्रियः । यद्वा अशनक्षमः, अरोग इत्यर्थः । यद्वा आशीर्वादविषयभूतः, सर्वानुरञ्जक इत्यर्थः । 'सर्वान् देवान् नमस्यन्ती'तिवत् । बलिष्ठः— मनोबलवान् । द्रढिष्ठ इति शरीरबलस्योक्तत्वात् । यद्वा द्रढिष्ठः— द्रढतरः, न त्वव्यवस्थितस्वभाव इत्यर्थः । बलिष्ठः—शारीरमानससर्वविधबलवान् । वित्तस्य पूर्णा—वित्तेन पूर्णा। "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने'तिषष्ठ्यनुज्ञानात् । स एको मानुष आनन्दः, एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा स एको मानुष आनन्द इतिश्रुत्या स्वरसतः तस्यैवानन्दत्वमुक्तम् । अनुकूलत्वं ह्यानन्दत्वम् । निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम्, उक्तलक्षणयोगात् गुणविभूत्योरानन्दत्वमुपपद्यते, तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम् । एवञ्च सति श्रुतिस्वारस्यञ्च सिध्यति, गुणविभूतिप्रकर्षमुक्त्वास आनन्द इतिह्युक्तम्, न तु तद्विषय-

* भावप्रकाशिका *

प्राप्ते रभावात्, अत एवानन्दमयाधिकरणे वक्ष्यत्याचार्यः, पर्यवस्यन्तः पर्यवसितुं प्रवृत्ता इति । ( नित्यनवं यथा भवति तथेति ) युवा चासावध्यायकश्चेति समासः, अध्यायकस्य च युवत्वमध्ययनद्वारा पर्यवस्यतीति भावः । ( आशुतरक्रिय इति ) आशुतरक्रियावति वर्तमानात् आशुशब्दादिष्ठप्रत्यये टिलोपे रूपम्, आशुमच्छब्दात् विमतोर्लुगिति लुकि वा रूपं द्रष्टव्यम् ( अशनक्षम इति ) अशनम्—आशः, ततो मत्वन्तादिष्ठन्प्रत्ययः, आशीर्वादविषये वर्तमानादाशीश्शब्दान्मत्वन्ताद्वा इष्ठनि आशिष्ठ इति रूपम्, सर्वत्र विमतोर्लुगिति इष्ठन्प्रत्ययः, मतोश्च लुक् 'पूरणगुणसुहितार्थे'ति सुहितशब्दस्य तृप्त्यर्थत्वात्पूरणस्यापि तृप्तिरूपत्वादिति भावः । ननु पूरणगुणेत्यत्र पूरणशब्द इति मन्तव्यः, तस्य पूरणप्रत्ययपरत्वात् . ( षष्ठ्यनुज्ञानादिति ) षष्ठीसमासनिषेधपरेणानेन सूत्रेण षष्ठ्यनुज्ञानादित्यर्थः। ( निवर्त्यानिष्टत्वेति) अनिष्ट-

1— तै. आन. ९- अनु. १ वा.

* श्रुतप्रकाशिका *

ज्ञानमिति। युवत्वाद्यनेकगुणान् विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात् सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति; अनुकूलज्ञानत्वमेवानन्दत्वमिति गुणविभूतिविषयज्ञानस्यानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति, तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति। आरभ्येति— उपक्रमानुगुणमुपसंहृतवाक्यं नेयमिति भावः। श्रोत्रियस्य चाकामहतस्येति-वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति। बद्धदशायां निरतिशयानन्दासम्भवात्। श्रोत्रियः—ब्रह्मनिष्ठः। अकामहतः—निवृत्ताविद्यत्वात्समस्तसांसारिकभोगानुपहतः 'स एकः प्रजापतेरानन्दः, इत्यन्तेन तत्रज्ञानन्दातिशय उक्तः, 'स एको ब्रह्मण आनन्दः'इति भगवदानन्द उच्यते; चतुर्मुखानन्दपरत्वे ब्रह्मशब्दास्वारस्यात् "परं जैमिनिर्मुख्यत्वात्' 'स्याच्चैकस्य ब्रह्मशब्दवत्" इति ब्रह्मशब्दस्य तत्रैव मुख्यवृत्तत्वस्य सूत्रितत्वात, भाष्ये प्रथमसूत्रस्थब्रह्मशब्दव्याख्यानावसरे प्रपञ्चितत्वाच्च 'ब्रह्मविदाप्नोति' 'ब्रह्मणा विपश्चिता' 'आनन्दं ब्रह्म' 'असद्ब्रह्मेति वेद चेत्' 'अस्ति ब्रह्मेति चेद्वेद "इति प्रकरणस्थब्रह्मशब्दानां ब्रह्मपरत्वात् प्रकरणविरोधश्च। आनन्दं ब्रह्मणो विद्वानिति पूर्वत्रोत्तरत्र च आनन्दप्रतियोगिपठ्यन्तब्रह्मशब्दस्वारस्यविरोधश्च 'सैषानन्दस्ये 'तिप्रक्रान्तब्रह्मानन्दस्य चतुर्मुखानन्देनोपसंहारानुपपत्तिश्च " तदप्येष श्लोको भवति "इतिब्रह्मानन्दं प्रकृत्य वक्ष्यमाणस्य श्लोकस्य उक्तविषयत्वविरोधश्च "स एकः प्रजापतेः "इति निरुपपदैकवचनान्तप्रजापतिशब्दस्वारस्यभङ्गश्च। नच तज्जात्येकवचनम्, बहुत्वैकत्वविवक्षायां बहुवचनैकवचनप्रकरणत्वात्। देवानां देवगन्धर्वाणां मनुष्यगन्धर्वाणामिन्द्रस्य बृहस्पतेः प्रजापतेरिति हि निर्दिश्यते, अतः प्रजापतिशब्दश्चतुर्मुखपरः, स एको ब्रह्मण इत्यत्र ब्रह्मशब्दो भगवत्परः; 'ते ये शतम्' 'स एक'इति भगवदानन्दस्य कथं परिच्छिन्नत्वमिति चेत्, न; परिच्छिन्नत्वमेकक्षणार्द्धे बहूनि योजनानि गच्छतो रवेः त्रिंसपुरिव सर्पतीत्यादिषु साम्यकथनं यथा गतिमान्द्यनिवृत्तिपरम्, न तु परिच्छिन्नत्वपरम्, तद्वत्ते ये शतं स एक इति निर्देशोऽपि चतुर्मुखानन्दाधिक्याभिप्रायः, नतु परिच्छेदपर इति। यद्वा ते ये शतमिति स एक इत्यस्य निर्देशस्य संख्याविशेषपरत्वेऽप्यानन्दस्यापरिच्छिन्नत्वं फलितम्। 'अण्डानां

सह । आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याण-गुणानन्त्यमत्यादरेण वदतीयं श्रुतिः । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मवेदन-

* श्रुतप्रकाशिका *

तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥ रोम-कूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते" इत्यादिवचनैरण्डानामनन्तत्वेन तत्र तत्र चतुर्मुखानामप्यानन्त्यात् कालत्रयवर्तिसमस्तब्रह्माण्डगतचतुर्मुखानन्दापेक्षया शत-गुणत्वात् ' मेरोरिवाणुर्यस्यैतद्ब्रह्माण्डमखिलं मुने" इत्युक्तत्रिपाद्विभूतिमत्तया च भगवदानन्दस्यात्यन्तमानन्त्यसिद्धेरिति ( कल्याणगुणानन्त्यमिति ) न हि क्रमेण गुणापकर्ष उक्तः, किन्तु गुणानां प्रकर्ष एवोक्तः, अतो गुणप्रकर्षस्य निरति-शयत्वाद्वाङ्मनसनिवृत्तिरिति भावः । ( अत्यादरेणेति ) ब्रह्मस्वरूपादपि तद्गुणे-ष्वादरातिशय उक्तः, 'आनन्दं ब्रह्मणो विद्वान्' इति हि श्रुतिः, न त्वानन्दान्वितं ब्रह्म विद्वानिति भावः । (इदं श्रुतिरिति) निर्गुणपरत्वेन त्वयोक्तैतत्प्रकरणस्था श्रुतिरप्य-स्मदुक्तार्थानुगुणैवेति भावः । एवमार्थगुणनिषेधनिरासद्वारा प्रकरणगतवाक्यान्तरेण गुणानन्त्यपरेणैकार्थ्यात्सत्यज्ञानादिवाक्यस्य सविशेषविषयत्वमुक्तम् । अथ स्ववा-क्यैकदेशेनापि सविशेषपरत्वमुपपादयति ( सोऽश्नुत इत्यादिना ) ( फलमवगम-

* भावप्रकाशिका *

निवर्तकत्वेत्यर्थः ( चतुर्मुखानन्दाधिक्याभिप्राय इति ) ते ये शतमित्यत्र शतशब्दो-ऽधिकसङ्ख्यापरः, अतो न परिच्छिन्नत्वमिति भावः । प्राकरणिकवाक्यानां सङ्ख्या-विशेषपरत्वात् ते ये शतं प्रजापतेरित्यत्रापि सङ्ख्याविशेषपरत्वमेवोचितमित्यन्यथा निर्वाहमाह ( यद्वा ते ये शतं स एक इत्यस्येति ) कालत्रयवर्तिप्राजापत्या-नन्दत्वे कथिते अपरिच्छिन्नत्वं सिद्ध्यतीति भावः । ( त्रिपाद्विभूतिमत्तया चेति ) ननु भगवदानन्दस्यापरिच्छिन्नत्वं निश्चित्य ते ये शतमितिवाक्येन प्रतिपाद्यमानं परिच्छिन्नत्वं कथं सङ्गतमिति वदन्तं प्रति त्रिपाद्विभूतिमत्तयानन्दानन्त्यकथनं कथमुपयुज्यतामिति चेत् ; अत्र केचित्,—कथं परिच्छिन्नत्वमिति चेदित्येव पाठः,

१५७९—तैत्त-आन-प्रकुआ—मु....

फलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणा-

* श्रुतप्रकाशिका *

यद्वाक्यमिति ) ब्रह्मविदाप्नोति परमिति ब्राह्मणे ब्रह्म तद्वेदनं प्राप्तिः प्राप्यं चेति चतुष्टयमुक्तम्; एतद्विवरणं सत्यं ज्ञानमित्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह 'तदेषाभ्युक्ते'ति तदेव ब्रह्माभिमुखीकृत्य ऋगेषाऽध्येतृभिरुक्तेत्यर्थः। मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनात् उपक्रमाधिकरणविषयवाक्ययोरिव आपातविरोध-प्रतीत्यभावान्मन्त्रब्राह्मणयोर्नित्यनिर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मणप्राबल्य-वादोऽनुपपन्नः। स्फुटप्रतिपत्तिहेतुत्वतदभावावेव प्राबल्यदौर्बल्यशब्दविवक्षितौ चेन्न विरोधः, "सत्यं ज्ञानमनन्तं ब्रह्मे"ति ब्रह्मशब्दो विवृतः, "यो वेद निहितं गुहाया"मिति विच्छब्दः "परमे व्योमन् सोऽश्नुते"इति प्राप्तिः, "सर्वान् कामान्" इत्यादिना प्राप्यम्; तत्र परशब्दार्थविवरणमेतदिति दर्शयितुं परस्य विपश्चितो

* भावप्रकाशिका *

तस्य चायमर्थः, ते ये शतमितिवाक्येन कथमपरिच्छिन्नत्वं प्रतीयताम्? प्रत्युत परिच्छिन्नत्वमेव प्रतीयते, अतोऽपरिच्छिन्नत्वं न सिध्येदित्येतावत्पर्यन्तमाक्षेपं वर्णयन्ति, अतस्तत्परिहर्त्राचानेन श्रुतिवाक्येन परिच्छिन्नत्वासिद्धिरप्युपपादनीया, आनन्दस्यापरिच्छिन्नत्वक्रमोपि प्रदर्शनीय इत्यभिप्रेत्यानेन वाक्येन परिच्छिन्नत्वा-सिद्धिमुपपाद्य प्रमाणान्तरेणापरिच्छिन्नत्वमप्युपपाद्यत इति वदन्ति। अपरेतु,—'शतं प्रजापतेरानन्द'इति श्रुतिस्वारस्यविरोधेन कालत्रयवर्तिप्राजापत्यानन्दमात्रपरतया वा शतशब्दस्याधिकसङ्ख्यामात्रपरतया वा किमिति व्याख्यायते; यथाश्रुतार्थ एव ग्राह्य इति तटस्थशङ्कामपाकरोति मेरोरिवाणुरितीति वदन्ति। ननु 'ब्रह्मविदाप्नोति पर'मिति ब्राह्मणे ब्रह्मण एव प्राप्यत्वप्रतिपादनादेषोऽस्य परमानन्द इति ब्रह्मण एव विदुषामानन्दत्वश्रवणेन कामानाञ्च तदभेदप्रतीतेः ब्राह्मणस्य मन्त्रविवरणरूप-त्वेन प्रबलत्वात् ब्राह्मणानुसारेणैव सहब्रह्मणेतिमन्त्रार्थो वर्णनीयः, यथा पैङ्गी-रहस्ये ब्राह्मणानुसारेण द्वासुपर्णेतिमन्त्रार्थवर्णनमित्याशङ्क्याह ( मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनादिति) मन्त्राणामपि ब्राह्मणविवरणरूपत्वदर्शनाद्विवरण-रूपत्वरूपः प्राबल्यहेतुर्द्वयोरप्यविशिष्ट इति भावः। ( स्फुटप्रतीतिहेतुत्वेति ) प्रायेण ब्राह्मणानां स्फुटप्रतिपत्तिहेतुत्वमस्ति, मन्त्रास्तु गहना भवन्तीत्येतावता

नन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते । काम्यन्त इति कामाः-कल्याणगुणाः । ब्रह्मणा

* श्रुतप्रकाशिका *

ब्रह्मणा इत्युक्तम्, विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तम् । वाक्यस्यार्थं वक्तुं पदानामन्वयं दर्शयति ( विपश्चितेति ) किमत्र गुणवाचिपदमिति शङ्कायां " यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः " इति त्याज्यतयोक्तकामव्यावृत्त्यर्थमवयवशक्त्या व्याचष्टे ( काम्यन्त इति ) ब्रह्मवेदनफलतया मुक्तानुभाव्यत्वादिह त्याज्यकामपरत्वानुपपत्तेः काम्यत्वस्य ब्रह्मस्वरूपेऽपि सम्भवे सत्यपि व्यतिरेकनिर्देशाद्बहुवचनान्तत्वादवयवशक्तेः तदुक्तभोग्यत्वस्य च गुणेषु सम्भवात् " स वा एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके ' ' य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् ' ' त इमे सत्याः कामाः " इत्यादिश्रुत्यन्तरैकार्थ्याच्च कामशब्दवाच्याः कल्याणगुणा इत्यर्थः । कस्येमे गुणास्सहभावश्च ब्रह्मणः पुत्रेण सहौदनं भुङ्क्त इत्यत्र पुत्रस्येव किं भोक्तृतया ? उत क्षीरेण सहौदनं भुङ्क्त इत्यत्र क्षीरस्येव भोग्यतया ? इतिशङ्कां च परिहरन्वाक्यार्थमाह ( ब्रह्मणेति ) अस्य वाक्यस्य प्राप्यवाचिपरशब्दब्रह्मविवरणरूपत्वात् सर्वान् कामान् सह ब्रह्मणेति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सहशब्दो भोग्यसाहित्यपरः, सन्निहितं ब्रह्मैव च गुणानामाश्रयः, अतोऽनन्तगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः । " सह युक्तेऽप्रधाने " इति शब्दानुशासनवशात्सहशब्देनाप्राधान्यं ब्रह्मण

७ भावप्रकाशिका ७

ब्राह्मणप्राबल्योक्तिश्चेदिष्टमेवेत्यर्थः । नन्वानन्दमयाधिकरणे मन्त्राणां प्राबल्यं केचिद्वदन्तीति मन्त्रप्राबल्यस्यैव परोक्तस्योपन्यासाच्चद्विरोध इति चेन्न, तस्यापि मतान्तरत्वेनाविरोधादिति द्रष्टव्यम् । ननु विपश्चित्त्वश्रवणात्तस्य च भोक्तृत्वानुगुणत्वाद्ब्रह्मणो भोक्तृसाहित्यशङ्कां व्युदस्यति ( विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तमिति ) न च तस्यापि कामशब्दनिर्दिष्टत्वात् पृथङ्निर्देशवैयर्थ्यमिति शङ्कनीयम् - गोबलीवर्दन्यायेन प्राधान्यविवक्षया पृथङ्निर्देशोपपत्तेरिति भावः ( व्यतिरेकनिर्देशादिति ) कामान् सह ब्रह्मणेतिभिन्नतया निर्देशादित्यर्थः । ( अव्यवहितप्रयोग-

सह तद्गुणान् सर्वानश्नुत इत्यर्थः । दहरविद्यायां [1]"तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इतिवद्गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारैक्यं [2] "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुत्यैव सिद्धम् ॥

* श्रुतप्रकाशिका *

आशङ्क्य तत्परिहाराय सहशब्दप्रयोजनमाह (दहरेति) यो वेदेति विहिते वेदने गुणानां प्राधान्यसूचकः सहशब्दः, दहरविद्यायामुपासने हि गुणप्राधान्यमुक्तम्, तथा अत्राप्युपासने गुणप्राधान्यं वक्तुं सहशब्द इत्यर्थः । फलदशायां गुणप्राधान्यश्रवणादुपासने गुणप्राधान्यं कथं सिध्यतीत्यत्राह (फलोपासनयोरिति) फलोपासनयोरुभयोरपि सगुणत्वं गुणप्राधान्यं च तुल्यप्रकारमित्यर्थः । गुणप्राधान्यं वक्तुमित्यनेनापि सहशब्दस्य भोग्यसाहित्यपरत्वं सिद्धम्, अन्यथा भोक्तृप्राधान्यं हि सिध्येत्, न तु भोग्यगुणप्राधान्यमिति । श्रुत्यैवेत्येवकारेण उक्तन्यायस्य पुरुषबुध्युत्प्रेक्षा

ᪧ भावप्रकाशिका ᪧ

स्वारस्याच्चेति) ब्रह्मणा सह सोऽश्नुते सर्वान् कामानिति यदि स्यात् तदा स्यादपि भोक्तुः तच्छब्दनिर्दिष्टस्य साहित्याश्रयत्वशङ्केति भावः (तत्परिहारायेति) इष्टापत्त्या तत्परिहारायेत्यर्थः (तस्मिन् यदन्तस्तदन्वेष्टव्यमितिवदिति) इदञ्च तस्मिन्नित्यस्य दहराकाशपरत्वमित्यभ्युपेत्य गुणस्यैवान्वेष्टव्यत्वमुच्यत इत्यभिप्रेत्योक्तम्, वस्तुतस्तु तस्मिन् यदन्तरित्यत्र तच्छब्दस्य पुण्डरीकाकाशरूपवस्तुद्वयपरामर्शित्वस्य वक्ष्यमाणत्वात् तेन ब्रह्मतद्गुणयोर्द्वयोरुपास्यत्वमितिसमप्राधान्यमेव सिध्येत्, न गुणानां प्राधान्यमिति द्रष्टव्यम् । यद्वा सहशब्दस्याप्राधान्यद्योतकत्वे ब्रह्मणोऽप्राधान्यस्य वक्तुमयोग्यत्वात् दहरविद्यावाक्यानुरोधाच्च समत्व एव तात्पर्यमिति भावः । (गुणप्राधान्यं वक्तुम्) इत्यनया उक्त्या श्रुतिगतसहशब्दस्य भोग्यसाहित्यमेव भाष्यकाराभिप्रेतमिति सिद्ध्यतीत्यर्थः । (अन्यथा भोक्तृप्राधान्यं हीति) भोक्तृसाहित्यपरत्वे भोक्तृब्रह्मापेक्षया भोक्तुर्जीवस्यैव प्राधान्यं सिद्ध्येदिति भावः ।

1\. छा-८-प्र-१-ख-१-वा.  2. छा-३ प्र-१४ ख-१-वा.

ज्ञेयत्वज्ञातृत्वानिषेधनिरासः ॥

[1] "यस्यामतं तस्य मतम्, अविज्ञातं विजानताम्" इति ब्रह्मणो ज्ञानाविषयत्वमुक्तश्चेत्; [2] "ब्रह्मविदाप्नोति परम्" [3] "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानान्मोक्षोपदेशो न स्यात् । [4] "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः" इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्या-

* श्रुतप्रकाशिका *

निरपेक्षं श्रुत्या कण्ठोक्तत्वमाभिप्रेतम् .... .... .... .... .... .... ॥

अथ सगुणानामेव ज्ञेयत्वं दृष्टमिति ज्ञेयत्वनिषेधेन निर्गुणत्वं फलितमिति ज्ञेयत्वनिषेधपरत्वेन परोक्तं वाक्यमुपादत्ते (यस्येति) किं ज्ञानमात्राविषयत्वम्? उत उपासनात्मकज्ञानाविषयत्वम्? उत सगुणोपासनात्मकज्ञानाविषयत्वं विवक्षितम्? इति विकल्पत्रयमभिप्रेत्य प्रथमं ज्ञानमात्राविषयत्वं दूषयति (ब्रह्मविदिति) ब्रह्मणो वेद्यत्वश्रुतेरादरातिशयं दर्शयति (असन्नेवेति) न ब्रह्मवेदनमपवर्गोपायः, अपि तु प्रपञ्चमिथ्यात्वज्ञानमेव तदुपाय इति परैरुच्यते " विद्ययाऽमृतमश्नुते " तदा विद्वान्नामरूपाद्विमुक्तः' ' ततो ज्ञानं प्रवर्तते" " ज्ञानाग्निस्सर्वकर्माणि " त्यादिष्व-

* भावप्रकाशिका *

( सगुणानामेव ज्ञेयत्वं दृष्टमिति ) अत्र एवकारो भिन्नक्रमः, सगुणानां ज्ञेयत्वमेव दृष्टम्, अज्ञेयत्वं न दृष्टमित्यर्थः पर्यवस्यति; ततश्च तद्व्यतिरेकात् सगुणत्वव्यतिरेकापादनं सम्भवतीति द्रष्टव्यम् .... .... .... .... ॥

भाष्ये—ज्ञानासद्भावसद्भावाभ्यामिति, नन्वसन्नेव स भवतीति असत्त्वप्रकारकज्ञानस्यैवात्मनाशहेतुत्वमुच्यते, नतु तदज्ञानस्येति चेत्, असद्ब्रह्मेति वेद चेदित्यस्य ब्रह्म वेदेत्येतत् असच्चेदित्यन्वयः, ब्रह्म न जानाति चेदित्यर्थः । 'अस्ति ब्रह्मेति चे'दित्यत्रापि ब्रह्म वेदेत्येतदस्ति चेत्, ब्रह्म जानाति चेदित्यर्थ इति भगवद्भाष्यकाराभिप्रायात् ।

1 केनोप. २–ख. ३–वा.
2 तैत्त. आनन्द. १–अनु–१–वा.
3 मुण्ड– ३–मु–२–ख. ९–वा.
4 तै–आन–६–अनु–१–वा.

मात्मनाशमात्मसत्ताञ्च वदति; अतो ब्रह्मविषयवेदनमेवापवर्गाय सर्वाः श्रुतयो विदधति । ज्ञानञ्चोपासनात्मकम् । उपास्यञ्च ब्रह्म सगुणमित्युक्तम् । [1] "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्या-

* श्रुतप्रकाशिका. *

निर्दिष्टविशेषविषयेषु वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वप्रपञ्चमिथ्यात्वविषयतासाधारण्यात्तदाशङ्क्याह (अत इति) अतः—केषुचिद्वाक्येष्वपवर्गोपायज्ञानस्य ब्रह्मविषयत्वदर्शनात् । सर्वाः श्रुतयः—अनिर्दिष्टविषयविशेषाः विद्ययाऽमृतमश्नुते इत्यादिकाः श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनमपवर्गोपायतया विदधतीत्यर्थः । यद्वा केषुचिद्ब्रह्मविषयत्वे श्रुते ज्ञानमात्रोपायपराः श्रुतयश्च सामान्यविशेषन्यायात् तत्रैव पर्यवस्यन्तीत्यभिप्रायः । अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति (ज्ञानं चेति) "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतिरुपासनात्मकज्ञानाविषयत्वशङ्काबीजम्. वाक्यार्थज्ञानस्योपायत्वानुपपत्त्युपपादनात्परिहृतमित्यर्थः । नेदं यदिदमुपासत इत्यस्यायमर्थः,—यदिदं प्रतीकमुपासते तन्न, तदेव परं ब्रह्म त्वमुपास्स्वेति । अथ सगुणोपासनाविषयत्वपक्षं प्रतिक्षिपति (उपास्यञ्चेति) निर्गुणपरत्वेन परोक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादनादिति भावः । यद्वा ज्ञानं चोपासनात्मकमिति ज्ञानविशेषविषयत्वकण्ठोक्त्या ज्ञेयत्वमात्रनिषेधो दूरनिरस्त इति भावः । उपास्यं चेति— ज्ञेयत्व-

* भावप्रकाशिका *

यद्वा श्रुत्यनुसारेण भाष्यार्थो वर्णनीयः, अतः केषुचिद्वाक्येष्वित्यत्र अत इति व्याख्येयं पदम्. सर्वाः श्रुतय इति च । ननु सर्वशाखाप्रत्ययन्यायः प्रधानस्वरूपानन्तर्गतानुक्तांशस्वीकारफलः । अत्र च न वाक्यान्तरविहितं मोक्षसाधनं ज्ञानमनूद्य ब्रह्मविषयत्वं क्वचिद्गुणतया विहितम्, अपितु ब्रह्मज्ञानमेव विहितम्, येन तन्न्यायप्रवृत्तिरित्यस्वरसादाह (यद्वा केषुचिद्ब्रह्मविषयत्व इति) ज्ञानमात्राविषयत्वस्यैव निर्गुणत्वाक्षेपकतया परैरुक्तत्वादुपासनाविषयत्वादिविकल्पनिरासपरत्वमस्य ग्रन्थस्यानुचितमित्यपरितोषादाह

[1] तै-आन-९-अनु-१-वा.

परिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्म एतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अपरिच्छिन्नत्वाद्ब्रह्मणः ।

* श्रुतप्रकाशिका *

निवृत्त्या सिषाधयिषिता गुणनिवृत्तिर्गुणविधानबाधिता, ततश्चाज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति भावः । तर्ह्यविज्ञातत्वामतत्वश्रुत्योः कोऽर्थ ? इत्यत्राह ( यतो वाच इति ) अनन्तशब्देन सत्यं ज्ञानमित्यादिवाक्यं स्मारितम् । अनन्तस्येति स्वरूपानन्त्यमुक्तम्, अपरिच्छिन्नगुणस्येति गुणानन्त्यम् । अस्मिन्नर्थे " न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥" " नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते" "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः" " वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः ' ' महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ' ' चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः । स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद" " यथा रत्नानि जलधेरसंख्येयानि पुत्रक । तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः । इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् " इत्यादि द्रष्टव्यम् । परिच्छिन्नत्वज्ञाने कथं धर्मिणो ब्रह्मणो ऽज्ञातत्वमित्यत्राह ( अपरिच्छिन्नत्वात् ब्रह्मण इति ) ब्रह्मशब्दवाच्यस्य स्वरूपतो गुणतश्चापरिच्छि-

७ भावप्रकाशिका ७

(यद्वा ज्ञानञ्चोपासनात्मकमिति ) ( गुणविधानबाधितेति ) बाधितापीत्यर्थः , ततश्च ज्ञेयत्वाभावरूपहेत्वसिद्धिमात्रं नेत्यर्थः । ( अज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति ) माभूज्ज्ञेयत्वे प्रमाणान्तरगवेषणा , इदमेव सगुणत्वं ज्ञेयत्वसाधने पर्याप्तमित्यर्थः । ननु सगुणत्वस्य सर्वप्रकारेण समर्थनीयस्य सिद्धौ सगुणत्वेन ज्ञेयत्वसाधनं मुधा, उत्तरसिद्धौ किं पूर्वेणेतिन्यायादितिचेत्; अत्र केचित्,— यद्यपि सगुणत्वमेव परमसाध्यं तत्रैव भाष्यतात्पर्यञ्च ; तथापि तत्रैवं शङ्का समुन्मिषति . कथं सगुणत्वं श्रुतिसहस्रमपि प्रतिपादयेत्, तद्व्यापकज्ञेयत्वाभावादिति । तस्याः परिहारोऽभिधीयते— ( अज्ञेयत्वं बाधित्वेत्यादिना ) यथा यागस्य क्षणभङ्गुरस्य फलपर्यन्तं व्यापारशून्यस्य

अन्यथा 'यस्यामतं तस्य मतम्' 'विज्ञातमविजानताम्' इति मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते। यत्तु [1]"न दृष्टेर्द्रष्टारं न मतेर्मन्तारम्' इतिश्रुतिर्दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति; तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथाऽऽत्मानं पश्येः, न मन्वीथाः, अपि तु

* श्रुतप्रकाशिका *

त्यादित्यर्थः,, न केवलं श्रुत्यन्तराविरोधार्थमेवमर्थ उक्तः, इतरथा स्ववाक्यव्याहतिप्रसङ्गाच्चेत्याह (अन्यथेति) तत्रैव—स्ववाक्य एव। ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति (यत्त्वित्यादिना) दृष्टेर्मतेरिति पञ्चम्यन्तत्वाभिप्रायेण व्यतिरिक्तपदाध्याहारेण किं योजना? उत षष्ठ्यन्ततया व्यतिरिक्तपदानध्याहारेण योजना त्वया क्रियते? इति विकल्पमभिप्रेत्य प्रथममध्याहारपक्षमनुवदति (न दृष्टेरिति) परिहरति (तदिति) प्रसक्तस्य हि प्रतिषेध इति शङ्कायां प्रसङ्गं दर्शयति (कुतर्कसिद्धामिति) कुतर्कः कथमुपन्यस्तः? इत्यपेक्षायां स्वरूपजडत्वे परोक्तं हेतुद्वयं सङ्क्षेपेणोपपादयति (आगन्तुकचैतन्यगुणयोगितयेति) आगन्तुकत्वाद्गुणत्वाच्चेति हेतुद्वयम्। आगन्तुकत्वात्—अनित्यत्वात्; ज्ञानं नित्य-

* भावप्रकाशिका *

कथं स्वर्गसाधनत्वमित्याक्षेपे यथा स्वर्गसाधनत्वप्रतिपादनबलादेव तत्पर्यन्तस्थायिव्यापारत्वमपि कल्प्यत इत्युच्यते एवमिति वदन्ति। तत्रैवेति व्याख्येयं पदम्। (आगन्तुकत्वाद्गुणत्वाच्चेति) आगन्तुकचैतन्यगुणयोगितया चेति भाष्ये आगन्तुकगुणशब्दौ भावप्रधानौ, चैतन्यपदं धर्म्युपस्थापकम्. ततश्च चैतन्यस्यागन्तुकत्वगुणयोगितयेत्यर्थः पर्यवस्यतीति भावः। आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतामिति भाष्ये ज्ञातुरात्मनः पक्षत्वम्, अज्ञानस्वरूपत्वलक्षणजडत्वस्य साध्यत्वं 'ज्ञोत एव' इतिसूत्रे काणादाभिमतजडत्वसाधकत्वेन उपन्यसिष्यमाणस्य आगन्तुकचैतन्यस्य साधनत्वञ्च स्वरसतः प्रतीयते, तद्विहाय ज्ञानपक्षकानात्मत्वसाधका-

[1] बृ-५-अ ४ ब्रा. २-वा.

द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येरित्य-भिदधातीति परिहृतम् । अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिद्ध्य सर्वभूतान्तरात्मानं परमात्मान-

* श्रुतप्रकाशिका *

स्यात्मनो न स्वरूपं भवितुमर्हति, गुणत्वाच्च न स्वरूपमिति । यद्वा चैतन्यं नाम विषयप्रकाशः, तन्नित्यं स्वरूपं चेत्सर्वदा विषयप्रकाशप्रसङ्ग इति भावः । दृष्टिश्रुति-मतिनिदिध्यासनानां ज्ञानविशेषाणां कर्तुरात्मनः स्वरूपस्य दृष्ट्यादिरूपत्वे विधीय-माने आत्मनः स्वरूपस्य न ज्ञानावान्तरभेदः शङ्कनीयः, तेषां ज्ञानविशेषरूपाणां स्वयम्प्रकाशत्वलक्षणं ज्ञानत्वमविशिष्टमिति तावन्मात्रमेव स्वरूपपस्य विवक्षितं भवति ; अयं परिहारः परपक्षेऽपि समानः । साक्षाद्योजनामाह ( अथवेति ) दृष्टिश्रुतिमतिनिदिध्यासनानां कर्तारं जीवात्मानं प्रतिषिध्य परमात्मानमेवोपास्स्वे त्ययमर्थ उक्त इत्यर्थः । यद्वा अभिदधातीत्यनुषङ्गः, जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्यभिदधाति श्रुतिरिति वाक्यार्थ इति वाक्यान्तरम् । यद्वा प्रति-षिध्य—परित्यज्येत्यर्थः । अतः समानकर्तृकत्वोपपत्तिः, "यः प्राणेन प्राणिति योऽपा-नेनापानिति एष त आत्मा सर्वान्तर"इति प्रस्तुतत्वात्प्राणेन प्राणितृत्वादि जीवा-

* भावप्रकाशिका *

गन्तुकत्वगुणत्वरूपहेतुद्वयपरत्वं वाक्यशैलीविरुद्धमिति अपरितोषादाह ( यद्वा चैतन्यं नाम विषयप्रकाश इति ) स्वतश्चैतन्यस्वभावस्यागन्तुकचैतन्यत्वं न सम्भवतीति भावः । जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमुपास्स्वेति भाष्ये, जीवा-त्मानं प्रतिषिध्येति प्रतिषेधक्रियायाः श्रुतिकर्तृकत्वादुपासनस्य च जीवकर्तृकत्वात् समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्तिमाशङ्क्य श्रुतिकर्तृकोक्तिक्रियावाचिपदाध्या-हारेण व्याचष्टे ( दृष्टिश्रुतिमतिनिदिध्यासनानामिति ) अस्मिन् पक्षे उपास्स्वेत्यर्थ उक्तो भवतीत्येव युक्तं वाक्यपदमयुक्तमित्यस्वरसादाह (यद्वा अभिदधातीत्यनुषङ्ग इति) ( इति वाक्यार्थ इति वाक्यान्तरमिति ) उपास्स्वेत्यभिदधातीति वाक्यार्थ इत्यत्र इतिशब्दस्सन्निहितं नाभिदधातीत्यर्थं परामृशति , अपितूपास्स्वेत्येतदंशमिति भावः ॥

इतिशब्दस्य विप्रकृष्टपरत्वमदृष्टमित्यपरितोषादाह ( यद्वाप्रतिषिध्य परित्यज्येति)

मेवोपास्स्वेति वाक्यार्थः, अन्यथा [1]"विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च ॥

आनन्दत्वानन्दित्वयोरविरोधः, भदेतन्निषेधश्रुतीनामविरोधसमर्थनम् ॥

[2]'आनन्दो ब्रह्म' इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम्; तज्ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम्। ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते। [3]"विज्ञानमानन्दं ब्रह्म" इत्यानन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः। अत एव भवतामेकरसता। अस्य ज्ञानस्वरूपस्यैव

* श्रुतप्रकाशिका *

त्मनः सम्भवतीति तदुपास्यत्वशङ्काव्यावृत्त्यर्थं न दृष्टेर्द्रष्टारं पश्येरित्याद्युच्यत इत्ययमेवार्थः। अन्यथा श्रुत्यन्तरविरोधमाह (अन्यथेति) गुणत्वमसिद्धम्, ज्ञानस्य स्वरूपत्वेन श्रुतिप्रतिपन्नत्वात्। ज्ञानं चेदागन्तुकमिति न वाच्यम्; ईश्वरज्ञाने व्यभिचारात्. अस्मदादिज्ञानस्याप्यागन्तुकत्वं कालात्ययापदिष्टम् 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः। इति हेतुद्वयपरिहारः। विषयप्रवणत्वं धर्मभूतज्ञानस्यैव, सर्वसाधारणं ज्ञानत्वं स्वप्रकाशत्वम्; अतो न सर्वदा विषयप्रकाशप्रसङ्गश्च. ज्ञेयत्वनिषेधपरिहारानन्तरं बुद्धिस्थत्वात् ज्ञातृत्वनिषेधः परिहृतः ॥

अथार्थगुणनिषेधान्तरं परिह्रियते (आनन्द इत्यादिना) पूर्वोक्तं परिहारमत्रातिदिशति (तज्ज्ञानाश्रयस्येति) कथं तेनेदं परिहृतमित्यत्राह (ज्ञानमेव हीति) तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः समभिव्याहारो नोपपद्यत इत्यत्राह (विज्ञानमिति) स्वप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः। तथैव भवद्भिरभ्युपगतमित्याह (अत एवेति) अत एव—ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः।

७ भावप्रकाशिका ७

(भाष्ये ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यत इति) अत्र एवकारेण प्रतिकूलज्ञानस्यानन्दत्वं व्यवच्छिद्यते; नतु विषयस्यापि, अतो विभूत्यानन्दत्ववादस्य न विरोध

१ बृ. ४- अ. ४ ब्रा. १४- वा.
२ तै. भृगु. ६- अनु. १- वा.
३ बृ. ५- अ. ९ ब्रा. २८ वा.

ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव [1]"स एको ब्रह्मण आनन्दः" [2]'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म, अपि त्वानन्दि; ज्ञातृत्वमेव ह्यानन्दित्वम् । यदिदमुक्तम् [3]'यत्र हि द्वैतमिव भवति' [4]'नेह नानास्ति किञ्चन । मृत्योः स

* श्रुतप्रकाशिका *

आनन्दस्य आनन्दाश्रयत्वाभावः किं श्रुत्या ? उत व्याप्त्या ? व्याप्त्या चेत्कस्यचिद्धर्मः स्यात्. श्रुतिबलात्स्वतन्त्रत्व इति चेत् तत एवानन्दाश्रयत्वमभ्युपगम्यताम्, धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः, अतो व्याप्तिविरोधश्च नास्ति; अतः स्वतन्त्रवत् गुणाश्रयत्वमपि श्रुतिसिद्धत्वात् स्वीकार्यमिति भावः । उभयत्र प्रमाणे सति हि न्यायसञ्चार इत्याशङ्कायां दृष्टान्तभूमौ प्रमाणस्य दर्शितत्वमाह ( अस्येति ) दार्ष्टान्तिकेऽपि कण्ठोक्तिं दर्शयति ( तद्वदिति ) ज्ञातृत्ववदानन्दित्वमपि कण्ठोक्तमित्यर्थः । ज्ञातृत्वश्रुतिरप्यानन्दित्वे प्रमाणमित्यभिप्रेत्याह ( ज्ञातृत्वमेव ह्यानन्दित्वमिति ) ज्ञातृत्वातिरिक्तानन्दित्वव्युदासपर एवकारः, हिशब्दस्तदुपपत्तिसूचकः, अनुकूलज्ञानाश्रयत्वमेव ह्यानन्दित्वमित्यर्थः । ज्ञातृत्वश्रुतिर्ज्ञानाश्रयत्वनिषेधस्य आनन्दाश्रयत्वनिषेधस्य च विरोधिनीति भावः । अथ भेदनिषेधपरत्वेन परोक्ताः श्रुतीर्योजयितुमनुवदति ( यदिदमिति ) यत्र हीत्यादिना भेदनिषेधः कृतः । भेदप्रतिपत्त्यावनर्थं दर्शयति ( मृत्योरिति ) "तमसो वा एष तमः

* भावप्रकाशिका *

इति द्रष्टव्यम् ( धर्मभूतानन्दमात्रस्य हीति ) न स्वानन्दमात्रस्येत्यर्थः । ननु यदिदमुक्तमिति भाष्ये यत्र हीत्यादिवाक्यखण्डः प्रथममुदाहृतः, पूर्वपक्षोपन्यासवेलायान्तु कृत्स्नं वाक्यम्, मृत्योस्स मृत्युमाप्नोतीतिवाक्यस्य पश्चादुदाहृतं पूर्वपक्षोदाहृतप्रकारं विहाय प्रकारान्तरेण उपादाने को हेतुरित्याशङ्क्य परिहरति ( यत्र हीत्यादिनेति ) पूर्वं भेदनिवृत्तिप्रतिपादनपरतया पश्चादुदाहृतम्, इदानीन्तु

१ तै. आन. ८- अनु. ४- वा .
२ तै. आन. ९- अनु. १- वा.
३ बृ. ४- अ. ४- ब्रा. १४. वा.
४ बृ. ६- अ. ४ ब्रा. १९- वा.

मृत्युमाप्नोति य इह नानेव पश्यति' [1] 'यत्र त्वस्य सर्व-मात्मैवाभूत्तत्केन कं पश्येत्" इति भेदनिषेधो बहुधा

* श्रुतप्रकाशिका *

प्रविशति "इतिवत् । नित्यानुवृत्तस्य भेदस्य कथं भ्रान्तिसिद्धत्वमित्यत्राह (यत्र त्विति) उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेण बहुधेयुक्तम्, बहुश इति पाठे निषेधक्रियाऽऽवृत्तिरर्थः । परिहरति (तदिति) तच्छब्दस्य परिहृत-मित्यत्रान्वयः । समस्तहेयप्रत्यनीकत्वेन समस्तकल्याणगुणात्मकत्वेन च श्रुत्यन्तर-प्रसिद्धस्य ब्रह्मणो विकारास्पदक्लेशकर्मादिहेयपरवशजगदैक्यं व्याहतत्वाच्छ्रुतिर्न प्रतिपादयति, नव्याहतिः, हेयानामपारमार्थिकत्वादिति चेत्; अपारमार्थिकत्वे तन्नि-रसनीयं न वा? न चेत्तन्निवृत्त्यर्थं शास्त्रमनर्थकं स्यात्, निरसनीयं चेन्निरसनीयसम्बन्ध-एव हेयसम्बन्ध इति तत्प्रत्यनीकस्य तत्सम्बन्धित्वं व्याहतम् । किञ्च बहु स्यामिति सङ्कल्पपूर्वकं बहुभवनं श्रूयते, सर्वज्ञस्य स्वेच्छया स्वस्मिन् हेयोपादानमनन्वितमिति तत्प्रतिपादनमशक्यम् । असर्वज्ञत्वे 'पश्यत्यचक्षुः स शृणोत्यकर्णः' "स्वाभाविकी ज्ञान-बलक्रिया च" यः सर्वज्ञः' इत्यादि श्रुतिविरोधः हेयस्यापारमार्थ्येऽपि स्वसङ्कल्पेन स्वस्यानन्तापुरुषार्थभ्रमापादनं सर्वज्ञस्य नोपपद्यते, सार्वज्ञ्यस्याविद्याकल्पितत्वाभ्युप-गमात् अविद्यापूर्वकमेव बहुभवनभ्रमरूपं सार्वज्ञ्यमिति न वाच्यम्; स्वाभाविकीति श्रुतेः "त इमे सत्याः कामाः" इतिसत्यत्वश्रुतेश्च, स्वसार्वज्ञ्यमाविद्यिकत्वेन मिथ्येति न जानातीति चेत् सार्वज्ञ्यं न स्यात् जानातीति चेत्तेनैव ज्ञानेन बाधितत्वात् सार्वज्ञ्यं न स्यात् । ततश्च पूर्वजगदाकारपर्यालोचनेन स्वसङ्कल्पपूर्वकं जीवकर्मानुगुणसृष्टिर्नोपपद्यते

❀ भावप्रकाशिका ❀

इवशब्दयुक्ततया भेदनिषेधप्रदर्शनपरतया नेह नानास्तीति भेदनिषेधकवाक्य-खण्डेन सहोपादानमिति द्रष्टव्यम् (निषेधक्रियावृत्तिरर्थ इति) बहुशः—बहुषु स्थलेष्वित्यर्थः । 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति कारके शसो विधानाद-धिकरणस्यापि कारकत्वात्, ततश्चावृत्तिः फलितेति फलितार्थकथनं न प्रत्ययार्थ-तयेति द्रष्टव्यम् (बहुभवनभ्रमरूपमिति) सार्वज्ञ्यस्य पूर्वसिद्धत्वे हि पाश्चात्या

१ बृ. ४. अ. ४. ब्रा. १४. वा.

* श्रुतप्रकाशिका *

अतः सार्वज्ञ्यस्याविद्यिकत्वमनुपपन्नमिति सर्वज्ञस्य तस्य स्वगतहेयोपादानं न घटते । किञ्च हेयं स्वगतत्वेन जानतः सर्वशक्तेस्तस्य सत्यसङ्कल्पस्य सहसैव स्वगतहेयानिरासकत्वमपि नोपपद्यते, अशक्तत्वे "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी"इत्यादिश्रुतिविरोधः, ईदृशविरोधो नास्ति, श्रुतिबलादविरुद्धत्वस्याभ्युपगन्तव्यत्वादिति चेत् तर्हि "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ' 'न जायते म्रियते वा विपश्चित् ' ' वायुश्चान्तरिक्षं चैतदमृतम्' 'आत्मनः आकाशस्सम्भूतः' "न नभो न भूमिर्नेमे द्यावापृथिवी" 'अन्तवदेवास्य तद्भवति' 'नास्येष्टापूर्ते क्षीयेते "इत्यादिश्रुत्युक्तस्यात्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया विरोधाभावादुभयमप्युपगन्तव्यम् । ततश्च सर्वत्र यथाप्रतिपन्नस्वीकारे हि मीमांसारम्भवैयर्थ्यं स्यात्, प्रस्तुतभेदाभेदश्रुत्योरपि पारमार्थिकापारमार्थिकविषयत्वेन सोपाधिकनिरुपाधिकविषयत्वेन वा विभागकल्पनमनुपपन्नम्, तस्य विरोधपरिहारार्थत्वाद्विरोधस्य चाभावात्, ततश्च भेदपारमार्थ्यसिद्धिः, अतो विरोधोऽभ्युपगन्तव्यः । इह च विरोधोऽवगम्यते "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति भेदप्रतिपत्तेः संसारहेतुत्वं श्रूयते "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ' जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"इति भेदज्ञानस्य मोक्षोपायत्वं श्रूयते "द्वैतिनोऽतथ्यदर्शिनः"इत्यादिस्मृतिविरुद्धम् 'द्वाविमौ पुरुषौ' 'आविश्य बिभर्त्यव्यय ईश्वरः' 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः'इत्यारभ्य "यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्"इति भेदज्ञानवतो-

* भावप्रकाशिका *

भ्रान्तिर्नोपपद्यते, नहि ब्रह्मणि बहुभवनभ्रमात् प्राक् सार्वज्ञ्यमस्ति । बहुभवनभ्रमस्यैव सार्वज्ञ्यरूपत्वात्, तस्य चाविद्याधीनत्वात् नाविद्याविरोधित्वमितिभावः ( अतो विरोधोऽभ्युपगन्तव्य इति ) ततश्च न्यायानुगृहीतश्रुत्यन्तरसिद्धार्थविरुद्धं भेदनिषेधं नेह नानास्तीत्यादिकं कथं प्रतिपादयेदित्यर्थः । ननु भेदनिषेधश्रुतीनां न्यायानुगृहीतविरुद्धश्रुत्यन्तरसद्भावेपि ' मृत्योस्मृत्युमाप्नोती'ति भेदज्ञानानर्थत्वप्रतिपादकोदाहृतश्रुतौ 'द्वैतिनोऽतथ्यदर्शिन' इति स्मृत्युपबृंहितायां तादृशविरोधाभावान्न दोष इत्याशङ्क्याह (इह च विरोधोऽवगम्यत इति ) संसारहेतुत्वं श्रूयते, तत्रापि विरोधो

* श्रुतप्रकाशिका *

ऽसम्मूढत्वं स्मर्यते; एवमादिवचनप्रतिपन्नस्य भेदस्य लोकसिद्धत्वाभावान्निषेधार्थं भेदोऽनूद्यत इति वादोऽनुपपन्नः। किञ्च यदि भेदमात्रस्य लोकसिद्धत्वादप्राप्ते हि शास्त्रमर्थवदिति न्यायादभेद एव शास्त्रवेद्य इत्युच्यते, तर्हि सोऽयं देवदत्त इत्यादावभेदमात्रस्य च लोकसिद्धत्वादप्राप्ते शास्त्रस्यार्थवत्त्वाच्च शास्त्रेणाभेदप्रतिपादनमयुक्तम्, देवदत्ताद्यैक्यं हि लोकसिद्धम्, न जीवपरयोः, अतस्तयोरभेदः शास्त्रवेद्य इति चेत्तर्हि घटपटादिभेद एव लोकसिद्धः, न तु जीवपरयोर्नियाम्यत्वनियन्तृत्वधार्यत्वधारकत्वशेषत्वशेषित्वव्याप्यत्वव्यापकत्वादिलक्षणभेदो न लोकसिद्ध इति स भेदः शास्त्रप्रतिपाद्य एव। यथोक्तमाचार्यपादैः—" न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत् किन्त्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम्। अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थप्रयासो यतः प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत्"॥ इति। अयञ्चार्थोऽनन्तरमेव भाष्ये वक्ष्यते, अतोऽनुवाद इति निर्वाहो नोपपद्यते, भेदश्रुतिरुपासनार्था न तु तत्त्वपरा. " पृथगात्मानं प्रेरितारं च मत्वा, जुष्टं यदा पश्यत्यन्यमीशम्"इत्युपासनवाचिपदश्रवणादिति चेत्, तथापि तात्त्विक एव भेदः, तज्ज्ञानस्य मोक्षोपायत्वोक्तेः, तत्त्वज्ञानेन हि मोक्षः, न च फलविशेषायोपासनार्थत्वात् भेदश्रुतीनां भेदस्यातात्त्विकत्वं वाच्यम्; ऐक्यस्य चोपासनार्थत्वादसत्यत्वप्रसङ्गात्। श्रूयते ह्यभेदस्योपासनार्थत्वम्—"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद' 'आत्मेत्येवोपासीत "इत्यैक्यस्योपासनार्थत्वम्. भेदस्य च तात्त्विकत्वं युक्तम्, वैनतेयध्यानेन ह्यैक्यमारोपितं दृष्टम्, भेद एव हि नरेन्द्रवैनतेययोस्तात्त्विकः, विधिशेषभूतव्यतिरिक्तेष्वपि वाक्येष्वभेदः प्रतीयत इति तस्य तात्त्विकत्वमिति चेत् तर्हि "क्षरं प्रधानममृताक्षरं हरः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'ज्ञाज्ञौ द्वौ' 'ऋतं पिबन्तौ' 'द्वा सुपर्णा' 'नित्यो नित्यानाम्"इत्याद्यविधिशेषभूत-

॥ भावप्रकाशिका ॥

ऽवगम्यत इति योजना, ततश्च परस्परविरुद्धार्थप्रतिपादनस्य सर्वत्र साम्यात् न्यायानुगृहीत एवार्थः स्वीकर्तव्यः। भेदश्रुतिश्च न्यायानुगृहीता अभेदश्रुतिस्तद्विरुद्धेति न्यायानुगृहीतभेदश्रुतिविरुद्धार्थकथनमभेदश्रुतेर्न सम्भवतीतिभावः, एतेन केवलं वाक्ययोः परस्परविरोधमात्रप्रतिपादनं प्रकृतासङ्गतमिति शङ्का पराकृता। उक्तरीत्या

दृश्यत इति; तत्कृत्स्नस्य जगतो ब्रह्मकार्यतया तद-न्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीक-

* श्रुतप्रकाशिका *

वाक्यावगतत्वाद्भेदस्यापि तात्त्विकत्वमवर्जनीयम्, उपास्तिफलभूतमुक्तिदशायामभेदा-दभेदपारमार्थ्यं चेत् मुक्तिदशायां भेदश्रवणाद्भेदतात्त्विकत्वसिद्धिः, अत उपासनार्थ-त्वादपरमार्थविषयत्वेन भेदश्रुतिनिर्वाहो नोपपद्यते, भेदाभेदयोर्नियतपौर्वापर्यविरोध-वत्त्वादपच्छेदन्यायविषयत्वं सगुणत्वनिर्गुणत्वयोरिव न सम्भवतीति विरोधनयादुप-क्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यात्, इदं च पूर्वमेव प्रपञ्चितम् । एवं न्यायानुगृहीतश्रुत्यन्तरविरोधस्यावर्जनीयत्वमेषां निर्वाहाणामनुपपन्नत्वं च प्रदेशान्तरोक्तमिहाभिप्रेत्य समीचीननिर्वाहं दर्शयति ( तदिति ) जगत इतिपदं ब्रह्मपर्यन्तम्, तस्य ब्रह्मकार्यतयेतिपदेनैक्यादिति पदेन चान्वयः । तदन्तर्यामिकतये-त्यत्र सामर्थ्याज्जगत इत्यध्याहारः, तेन सकृत्प्रयुक्तस्य च जगच्छब्दस्य निष्कर्षकत्वानि-ष्कर्षत्वविरोधपरिहारः । 'सर्वं खल्विदं ब्रह्म तज्जला 'नित्युक्तं जगतस्तज्जत्वं तल्लत्वं चोपजीव्याह ( ब्रह्मकार्यतयेति ) ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः । तदनत्वमुपजीव्याह ( तदन्तर्यामिकतयेति ) तच्छब्दो विशेष्यपरामर्शी, विशिष्टे प्रकृते विशेष्यांशस्यापि प्रकृतत्वात् । यथा "सन्मूलास्सदायतनाः" इत्यत्र सच्छब्दस्य विशिष्टपरत्वं विशेष्यपरत्वञ्च, तद्वत्, तत् ब्रह्म अन्तर्यामि यस्य तत् तदन्तर्यामिकम्, तद्भावेनेत्यर्थः । कथं तदनत्वेन तदन्तर्यामिकत्वसिद्धिः ? उच्यते,— अननं स्थितः, ब्रह्मणो जगत्स्थितिहेतुत्वञ्चाऽन्तःप्रविश्य प्रशासनेन धारकत्वम्. " सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः"इत्यत्र सन्मूलाः सत्प्रतिष्ठाः इति पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयपरम् । प्रतिष्ठा— निष्ठा पर्यवसानम्—

* भावप्रकाशिका *

प्रकृतसङ्गतत्वात् ( उपास्तिफलभूतमुक्तिदशायामिति ) अत्रोपास्तिफलभूतत्वं परम्परया द्रष्टव्यम् ( अत्र सामर्थ्याज्जगत इत्यध्याहार इति ) ततश्चाध्याहृतजग-च्छब्दस्य न विशेष्यपर्यन्तत्वमितिभावः । ( कथं तदनत्वेन तदन्तर्यामित्वसिद्धि-रिति ) ननु तदनमित्यनेनासिद्धावपि 'अन्तः प्रविष्टश्शास्ता जनाना'मित्यादि-

* श्रुतप्रकाशिका *

लयः, न तु सदाधारत्वम् , सदायतना इति पुनरुक्तिप्रसङ्गात्; एवं ब्रह्मण उत्पत्तिलय-हेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इतिपदेन धारकत्वसिद्धेः " एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यत्र तिष्ठति-धातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमात् . ' अन्तःप्रविष्टः शास्ता जनानाम् " इति धारणहेतुभूतप्रशासनस्यान्तःप्रविश्य क्रियमाणत्वश्रवणात् "तद्यथा अरेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्प्पिताः" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रुतिस्मृतिभ्यामर-नाभिमणिगणसूत्रदृष्टान्ताभ्यामन्तस्स्थितस्य धारकत्वावगमात् " तत्सृष्ट्वा तदेवानु-प्राविशत्" इत्युक्तानुप्रवेशस्य सृष्ट्यनन्तरभावित्वादुदाहृतश्रुत्यैकार्थ्याच्च स्थित्यर्थत्वात् 'सप्त प्राणाः प्रभवन्ति' इत्यादिवाक्योक्तप्रक्रियया सृष्टस्य च जगतः'तेनेदं पूर्णं पुरुषेण सर्वम्" इति वाक्येन स्थितिवेलायां व्यापकेन परनपुरुषेण पूर्णत्वावगमात्, सर्वशाखा-प्रत्ययन्यायेन व्यापननियमनधारणेष्वन्यतमोक्तावन्यतमस्य सिद्धित्वाच्चानुप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति ह्यवगम्यते ; एवं तज्जलानितिवाक्यमुपजी-व्योक्तं जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया चेति तदन्तर्यामिकत्वमुभयलिङ्गस्य ब्रह्मणः परमार्थजगदुपादानत्वान्यथानुपपत्तिसिद्धं घटकश्रुतिसिद्धञ्च . चशब्दस्यो-त्तरत्रान्वयः । तदन्तर्यामिकतया तदात्मकत्वेन चेति स आत्मा यस्य तत्तदात्मकम् , तदन्तर्यामिकत्वरूपेण तदात्मकत्वेनेत्यर्थः । अन्तःप्रविश्य नियन्ता ह्यात्मा, ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेन चेत्युक्ते हेतुत्रयशङ्का स्यादिति तद्व्युदासार्थश्चशब्दस्य प्राक्प्रयोगः , एवमुभयविधैक्यस्य विहितत्वादित्यर्थः । ननु . ऐक्यस्य कार्यकारणभावनिबन्धनत्वे कार्यावस्थजगद्विशिष्टस्य कारणावस्थचिद-चिद्विशिष्टब्रह्मणा स्वरूपैक्यं युक्तम् । तदन्तर्यामिकत्वनिबन्धनत्वे तु न ब्रह्मणा

* भावप्रकाशिका *

वाक्यान्तरेण तत्सिद्ध्यतीतिचेन्न , अस्यैव वाक्यस्य तदर्थप्रतिपादनसामर्थ्यमस्तीति शिष्यशिक्षार्थतया तद्वाक्यार्थविचारोपपत्तेः ( हेतुत्रयशङ्का स्यादिति ) तत्कार्यत्वञ्च तदन्तर्यामिकत्वोपपाद्यम् , तदात्मकत्वञ्च ऐक्योपपादकम्, नतु न तदन्तर्यामिकत्वमपि साक्षादैक्योपपादकमिति भावः । यद्यपि जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया

* श्रुतप्रकाशिका *

जगत ऐक्यम्, किन्तु प्रकारिणो ब्रह्मण एकत्वसंख्यान्वय एवेत्यैक्यशब्दस्यार्थभेदः स्यात्, ततश्च जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तम्, प्रकारप्रकारिणो-भिन्नत्वात्। नैवम्,—जगद्ब्रह्मणोर्भिन्नत्वेऽप्यत्र जगच्छब्दो जगद्विशिष्टब्रह्मपर इत्युक्तत्वादैक्यशब्दस्य च नार्थभेदः, उभयथाऽपि विशिष्टैक्यपरत्वात्। तथाहि; कार्यकारणभावनिबन्धनमैक्यं नामावस्थाद्वयापन्नाचिदचिद्विशिष्टवस्त्वेकत्वम्, यथा रूपस्पर्शादिविशिष्टघटस्य तादृशमृद्द्रव्येणैक्यम्। चिदचिदात्मकजगद्विशिष्टस्य स्वरूपेण गुणैश्च निरतिशयबृहत्त्वविशिष्टस्य चैक्यं प्रकार्यैक्यम्, यथा नैल्यविशिष्टस्य उत्पलत्व-

* भावप्रकाशिका *

च तदात्मकत्वेनैक्यादित्युक्ते ब्रह्मकार्यत्वतदन्तर्यामिकत्वयोस्तदात्मकत्वोपपादकत्व-शङ्काप्रसङ्गेन विरुद्धमिति कार्यत्वं पक्षद्वयसाधारणम्, तथापि विद्यमानस्य निर्वाह-मात्रप्रदर्शनपरत्वात् तद्योजनाया अपि वक्ष्यमाणत्वेनेष्टत्वाच्च न दोष इति द्रष्टव्यम्। (ऐक्यशब्दस्यार्थभेदस्यादिति) सकृत्प्रयुक्तपदस्यार्थद्वयपरत्वं विना वृत्त्या न लभ्यत इति भावः (ततश्च जगतस्तदात्मकत्वेनेति) सकृत्प्रयुक्तस्य एकस्मिन्नेवार्थे समाश्रयणीये अमुख्यस्य प्रकार्यैक्यस्य स्वीकर्तुमयुक्ततया अभेदरूपस्य समाश्रयणीयत्वे सति जगत-स्तदात्मकत्वेनैक्यादितिवक्तुमयुक्तमेव, जगद्ब्रह्मणोरभेदस्य बाधितत्वादिति भावः। ततश्च जगतस्तदात्मकत्वेन ऐक्यादितिवक्तुमयुक्तमिति कथमुच्यते? तत्कार्यत्वेनैक्या-दितिवक्तुमयुक्तमिति कुतो नोच्यते? विनिगमकाभावादितिशङ्का पराकृता (जग-द्विशिष्टब्रह्मपर इत्युक्तत्वादिति) अध्याहृतनिष्कर्षकजगच्छब्दार्थैनैक्यस्यान्वयानभ्यु-पगमादिति भावः (ऐक्यशब्दस्य च नार्थभेद इति) यद्यपि जगद्विशिष्टब्रह्मपर इत्यनेनैव इयमपि शङ्का पराकृतेति ऐक्यप्रपञ्चनं वृथा। तथापि शिष्यशिक्षार्थमैक्य-स्वरूपं विविच्य दर्शयतीति द्रष्टव्यम् (अवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वेकत्व-मिति) स्थूलत्वसूक्ष्मत्वरूपावस्थाद्वयापन्नयोश्चिदचिद्विशिष्टवस्तुनोरैक्यमित्यर्थः। (यथा रूपस्पर्शादीति) यथा रूपस्पर्शविशिष्टस्य पिण्डत्वावस्थापन्नस्य रूपस्पर्श-विशिष्टेन घटत्वावस्थापन्नेन ऐक्यम्. अत्र घटगतरूपस्पर्शादिस्थाने चिदचितौ, पिण्डत्वघटत्वादिस्थानेऽवस्थाद्वयापन्नेत्युक्तम्, इयांस्तु विशेषः, ब्रह्मणि चिद-चिद्द्वारा अवस्थायोगित्वम्, घटादिस्थले तु रूपस्पर्शादिद्वारिकावस्थेति द्रष्टव्यम्,

* श्रुतप्रकाशिका *

विशिष्टस्य चैक्यम्। न च विशेषणांशैक्याभावाद्वस्त्वैक्यहानिः, मृद्घटादावपि स्वरूपस्य रूपस्पर्शादीनां कार्यत्वकारणत्वावस्थयोश्चैकत्वाभावात्। इयान्विशेषः, कार्यकारणभावे भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम्, यथा स एवायं तरुणोऽभूदिति। अन्यत्र समकालसम्बन्ध्यद्वारकानेकविशेषणाश्रयधर्म्यैक्यम्, यथाऽयं वेदविद्ब्राह्मण इति। बाल्ययौवने भिन्नकालीनसद्वारकावस्थे, वेदनं ब्राह्मणशरीरं च समकालवर्त्यद्वारकविशेषणम्, एवमुभयविधविशेषणविशिष्टधर्म्यैकत्वमैक्यशब्दार्थः, अतो जगच्छब्दवाच्यधर्म्यैक्याज्जगत ऐक्यादिति निर्देश उपपन्नः। यद्वा कृत्स्नस्य जगत इति निष्कर्षकशब्दः, ब्रह्मशब्दोऽपि विशेष्यमात्रपरः, कार्यावस्थां प्रत्याधा-

* भावप्रकाशिका *

अत्र च बालत्वयुवत्वावस्थाद्वयापन्नशरीरविशिष्टवस्त्वैक्यमनुरूपो दृष्टान्तः, अतएव वक्ष्यति,– स एवायं तरुणोऽभूदिति। यद्वा, अवस्थाद्वयापन्नत्वं चिदचितोर्विशेषणम्, भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्मैक्यमिति वक्ष्यमाणग्रन्थस्वारस्यादिति द्रष्टव्यम् ( वस्त्वैक्यहानिरिति ) विशिष्टवस्त्वैक्यहानिरित्यर्थः। नन्वस्यां योजनायां निष्कृष्टजगद्वाचिजगच्छब्दोऽध्याहर्तव्यः, ब्रह्मशब्दस्य च तज्जत्वतल्लत्वहेतुके तदभेदे साध्ये सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वं वक्तव्यम्, सर्वमिदं स्थूलशरीरकं तज्जत्वतल्लत्वाभ्यां सूक्ष्मशरीरकं ब्रह्म इत्यर्थस्याश्रयणीयत्वात्, तदनत्वे तु हेतौ ब्रह्मशब्दो ब्रह्मत्वविशिष्टपरः, नतु सूक्ष्मचिदचिद्विशिष्टपरः, विशिष्टस्यानन्तर्यामित्वात्, अतो ब्रह्मशब्दवैरूप्यं तज्जलानित्यत्र एकस्यैव तच्छब्दस्य जन्मलययोस्सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वम्, अनेन तु ब्रह्मत्वविशिष्टविशेष्यमात्रपरामर्शित्वं 'सर्वं खल्विदं ब्रह्मे'ति जगद्विशिष्टब्रह्माभेदं प्रतिज्ञाय विशेषणभूते जगति तदनत्वलक्षणतदन्तर्यामित्वरूपहेतूपन्यासे हेतोर्वैयधिकरण्यं ब्रह्मकार्यतया तदन्तर्यामिकतया चेतिशब्देन ब्रह्मकार्यत्वतदन्तर्यामिकत्वयोस्तदात्मकत्वोपपादकत्वञ्च स्वरसतः प्रतीयत इत्येतत्सर्वं हृदि निधायाह ( यद्वा कृत्स्नस्य जगत इति निष्कर्षकशब्द इति ) नन्वस्मिन् पक्षे भाष्ये तत्कार्यतयेत्यत्र तत्कार्यत्वमात्रं विवक्षितम्? उत तदुपादेयत्वम्? नाद्यः,– कार्यत्वमात्रस्यापृथक्सिद्धरूपतदात्मकत्वाप्रयोजकत्वात्, इतरथा घटस्य दण्डापृथक्सिद्धत्वरूपतदात्मकत्वप्रसङ्गात्. ब्रह्मोपादेयत्वन्तु

नानात्वं प्रतिषिध्यते । न पुनः बहु स्यां प्रजायेयेति

* श्रुतप्रकाशिका *

रत्वात्. आधारत्वं च साक्षाद्वा परम्परया वा मुख्यमेव; अतो ब्रह्मकार्यं जगत्। तदन्तर्यामिकशब्दो व्याख्यातः, एवं ब्रह्मकार्यतया तदन्तर्यामिकतया च जगत्तदात्मकम्। तदात्मकत्वं नाम जगतस्तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वम्, तेन प्रकारेणैक्यम्, न तु स्वरूपैक्यम्; विशिष्टान्तर्भाव एवैक्यमित्यर्थः। (तत्प्रत्यनीकनानात्वमिति) विहितोभयविधैक्यप्रत्यनीकनानात्वं निषिध्यत इत्यर्थः। कार्यकारणभेदः

* भावप्रकाशिका *

जगतो नास्त्येव, तद्भिन्नत्वात् उपादानोपादेययोरभेदावश्यम्भावात्। किञ्च, तदुपादेयत्वं मुख्यैक्यसाधकं लोके दृष्टम्, तदन्तर्यामिकत्वममुख्यैक्यसाधकम्, अतः कथं द्वयोरेकस्मिन्नैक्ये समुच्चयेन साधकत्वमिति चेत्; उच्यते,— उपादेयत्वमेव अपृथक्सिद्धत्वरूपतदात्मकत्वसाधकम्, नच उपादानोपादेययोरभेदादुपादेयत्वं कथमपृथक्सिद्धत्वसाधकं स्यादिति वाच्यम्, मृद्घटयोरभेदेऽप्यपृथक्सिद्धिसम्भवात् पृथक्सिद्ध्यभावमात्रस्य भेदेऽप्यविरुद्धत्वात्. नच जगतो ब्रह्मभिन्नस्य कथमुपादेयत्वमिति वाच्यम्, भाव्यवस्थायोगि ह्युपादेयम्, पूर्वावस्थायोगि ह्युपादानमित्यभ्युपगम्यते। भाव्यवस्थावत्त्वञ्च जगतोऽप्यस्ति, तद्द्वारा ब्रह्मणोऽपि; अतो द्वयोरपि पूर्वावस्थासूक्ष्मजगद्विशिष्टब्रह्मापेक्षयोपादेयत्वम्। ननु जगतोऽप्युक्तरीत्या पूर्वावस्थावत्त्वात् उत्तरावस्थायोगिब्रह्मप्रत्युपादानत्वप्रसङ्ग इति चेत्, तस्योपादानत्वे प्रमाणाभावात्। नच पूर्वावस्थायोगित्वादनयस्योपादानत्वस्याभावात् कथं नातिप्रसङ्ग इति वाच्यम्, तदतिरिक्तधर्मविशेषस्य तल्लक्षणत्वात्, उपादानमित्यभियुक्तव्यवहारविषयत्वमेवोपादानत्वमित्येवंरूपस्य लक्षणस्य सम्भवात्। नन्वस्मिन् पक्षे 'सर्वं खल्विदं ब्रह्मे'तिवाक्ये ब्रह्मशब्दस्य ब्रह्मापृथक्सिद्धे लक्षणाप्रसङ्गः, सर्वस्यापि जगतो ब्रह्मोपादेयत्वाद्ब्रह्मान्तर्यामिकत्वाच्च ब्रह्मापृथक्सिद्धमित्यर्थस्याश्रयणीयत्वादिति चेत्, इष्टापत्तेरिति भावः (विशिष्टान्तर्भाव एवैक्यमित्यर्थ इति) ततश्च तदात्मकत्वेनैक्यात् इति भाष्ये तृतीयार्थो न विवक्षितः, तदात्मकत्वप्रयोज्यस्यैक्यान्तरस्याभावात् तदात्मकमैक्यमित्यर्थ इति भाष्याभिप्राय इति भावः। अत्र केचित्,— यथा ज्ञानाकारस्वरूपतया सर्वजीवानामैक्यम्, एवं चिदचिद्वस्तूनां ब्रह्मप्रकारत्वंवेषेण

वहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रति·

* श्रुतप्रकाशिका *

कुतर्कमूलभ्रान्तिविषयः, स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः, अतो भ्रान्तिमूलत्वाविशेषाद्विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदं नानाशब्देन परामृश्य निषिध्यत इति न वाक्यभेदः । तत्प्रत्यनीकेति, ऐक्यविधिशेषभूतो भेदनिषेधः, अन्वयमुखेनोक्तार्थस्थिरीकरणार्थत्वाद्व्यतिरेकोक्तेः, ऐक्यविधिश्च नेह नानास्तीतिप्रकरणे श्रूयते 'एकधैवानुद्रष्टव्य'मिति । एकधा—एकतया परमात्मशरीरतयैकप्रकारेणेत्यर्थः । तथा "अहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्" तथा "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते' 'अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् । तदच्युतो नास्ति परं ततोऽन्यत्"इत्यादिषु चैक्यविधिशेषतया भेदनिषेधो दृश्यते, शेषत्वं च विहितैकत्वस्थिरीकरणलक्षणकिञ्चित्कारेण भवति । यादृशमैक्यं विहितं निषेधस्य तादृशैक्यविरोधिभेदविषयत्वे सति तत्स्थिरीकरणार्थत्वं सिध्येत्, न त्वविरोध्यर्थान्तरनिषेधस्तदुपयुक्तः । न हि मृदेव घट इत्युक्ते घटद्वित्वनिषेधो मृद्घटैकत्वोपकारकः, घटद्वित्वस्य मृद्घटैकत्वाविरोधित्वात् । नाप्येको घट इत्युक्ते घटगतरूपपरिमाणादिभेदनिषेधो घटाख्यधर्म्यैक्यविधिरुपकारकः, रूपपरिमाणादिभेदस्य घटव्यक्त्यैक्याविरोधित्वात् । विधेयविरोध्यर्थनिषेध एव हि विध्युपकारकः । किञ्च न केवलमुपकाराभावः, ऐक्यविधिविरुद्धं च कृत्स्नभेदनिषेधपरत्वम्, समानाधिकरणवाक्येनैक्यविधानात्; भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्तित्वं हि सामानाधिकरण्यम् । न च प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते, अतो भेदनिषेधस्यैक्यविधिशेषत्वात् कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इत्यभिप्रायः । किञ्च "न चास्य कश्चिज्जनिता न चाधिपः' 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'तेनार्हति ब्रह्मणा स्पर्द्धितुं कः' 'न त्वत्समो-

* भावप्रकाशिका *

वैक्यमित्यर्थः । ननु चिदाचिद्वस्तूनां ब्रह्मणश्चैक्यमेकाविशिष्टान्तर्गतत्वामित्यर्थः । एकधैवानुद्रष्टव्यमित्युरत्र तथार्थविवरणात्—इत्येव भाष्यार्थं वर्णयन्ति ( नेह नानास्तीति प्रकरणे श्रूयत इति ) कठवल्ल्यामपि 'यदेवेह तदमुत्र यदमुत्र तदन्विह'

षिध्यत इति परिहृतम् । नानात्वनिषेधादियमपरमार्थ-

* श्रुतप्रकाशिका *

ऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव" इत्यादिभिः स्वतन्त्ररूपवस्तु-विशेषविषयनिषेधदर्शनात्सामान्येनावगतो भेदनिषेधः तत्र छागपशुन्यायेन पर्य-वस्यतीत्यर्थसिद्धम्, तत्प्रत्यनीकनानात्वमित्युक्तत्वात् केषुचिद्वाक्येषु तस्य कण्ठोक्त-त्वाच्च। अथ उत्सर्गापवादन्यायमभिप्रयन्नाह (न पुनरिति) ब्रह्मणः कार्यरूपेण नानात्वविषयश्रुतिवाक्योदाहरणं प्रकारनानात्वविषयवाक्यानामपि प्रदर्शनार्थम् "एकः सन् बहुधा विचारः' 'एको देवो बहुधा निविष्टः' 'त्वमेकोऽसि बहूननुप्रविष्टः" "योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरम्' 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्' 'यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः"इति प्रकारनानात्वं प्रकार्येकत्वं च हि स्पष्टं श्रूयते। यद्वा छान्दोग्ये तैत्तिरीये च 'बहु स्या'मिति प्रकरणे "अनेन जीवेनात्मना ऽनुप्र-विश्य' 'तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानञ्च" इति चिदचिदनुप्रवेशपूर्वकनामरूपभाक्त्वश्रवणादुभयलिङ्गस्या-प्यव्यवधानेन जगदुपादानत्वानुपपत्तेश्च बहु स्यामित्यत्रापि ब्रह्मणो बहुनामरूपभाक्त्वस्य सद्वारकत्वसिद्धेः शरीरतया प्रकारभूतचिदचिन्नानात्वमर्थसिद्धमित्यभिप्रायेण बहु स्यामिति वाक्यमुदाहृतम्, एवं कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात् सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वाच्च कुतर्कसिद्धकार्यकारणभेदविषयाः लौकिकप्रतीतिसिद्धस्वनिष्ठभेदविषयाश्च भेदनिषेधश्रुतय इत्यर्थः। नानात्वनिषेधाद-परमार्थविषयत्वं शङ्कते (नानात्वेति) इयम्—श्रुतिः। भेदस्तु निषेधार्थमनूद्यत इति

* भावप्रकाशिका *

इत्यैक्यविधिशेषत्वमेव नेहनानास्तीति वाक्यस्येति द्रष्टव्यम् (केषु चिद्वाक्येषु तस्य कण्ठोक्तत्वादिति) भाष्ये केषुचिद्वाक्येषु छागपशुन्यायस्य कण्ठोक्तत्वादित्यर्थः। अत्र भेदनिषेधकतयोदाहृतवाक्यानां प्रकारिभेदनिषेधकत्वस्यैव प्रतिपिपादयिषि-तत्वात् तदुपपादकतया प्रकारभेदविधायकवाक्यमुदाहृत्य तेन कार्यभेदप्रतिपादक-वाक्यस्य प्रदर्शनं कर्तुमुचितम्, नतु कार्यभेदविधायकवाक्यमुदाहृत्य तेन प्रकार-भेदविधायकवाक्यप्रदर्शनमुचितमित्यपरितोषादुदाहृतवाक्यस्यैवोभयविधभेदविधिपरत्वं दर्शयति (यद्वा छान्दोग्य इत्यादिना) इयं श्रुतिरित्यत्र इयमिति व्याख्येयं

विषयेति चेत्; न, प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्यु-

---

* श्रुतप्रकाशिका *

भावः। परिहरति (नेति) अप्राप्तस्यानुवादायोगात्. अतो विषयविभागादविरोध एव न्याय्यः, एतदुक्तमाचार्यपादैः "यद् ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः। अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः॥"इति। समस्तहेयरहितस्य हेयाकारवस्त्वैक्यासम्भवात्, हेयस्यापारमार्थ्येऽपि तस्य निरसनीयतया हेयत्वस्यावर्ज्जनीयत्वात्, तत्प्रतिभटतयोक्तस्य तत्सम्बन्धार्हवस्त्वैक्यबाधात् सर्वज्ञस्य ब्रह्मणः स्वसङ्कल्पेन स्वगतहेयतद्विषयभ्रमापादनायोगादसर्वज्ञत्वे सार्वज्ञ्यश्रुतिविरोधात्, सर्वशक्तेः स्वगतहेयानिवारकत्वायोगादशक्तत्वे सर्वशक्तिश्रुतिविरोधात्, श्रुतिबलादीदृशविरोधाभावे "तान्येवानुविनश्यति' 'न जायते म्रियते वा' इत्यादिवाक्यप्रतिपन्ननित्यत्वानित्यत्वनिर्गुणत्वसगुणत्वादेः श्रुतिबलाद्विरोधाभावेन क्वचिदपि न्यायसञ्चारानपेक्षतया मीमांसानैरर्थक्यात् भिन्नत्वाभिन्नत्वयोश्च विरोधाभावेन पारमार्थिकापारमार्थिकत्वेन विभागस्यानभ्युपगन्तव्यत्वात् "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "जुष्टं यदा पश्यत्यन्यमीश"मिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रवणात् "यस्मात् क्षरमतीतोऽह"मित्यादिना भेदज्ञानवतो ऽसम्मूढत्वस्मरणात्, जीवपरयोर्नियन्तृत्वनियाम्यत्वादिलक्षणभेदस्य घटपटभेदवत्प्रमाणान्तरागोचरत्वेनानुवादासम्भवाद्विहितस्य निषेधायोगादुपासनार्थत्वाश्रयणस्य "अथ योऽन्यां देवता"मित्यादिवाक्यप्रतिपन्नैक्येऽपि प्रसङ्गादैक्यस्याविधिशेषवाक्यप्रतिपन्नत्वे भेदस्य च तुल्यत्वान्नियतपौर्वापर्यविरोधतया अपच्छेदन्यायाविषयत्वाद्विरोधाधिकरणन्यायेन भेदश्रुतेः परभूतनिषेधोत्पत्तिप्रतिबन्धकत्वादैक्यविधिशेषस्य भेदनिषेधस्य विहितैक्यविरोधिभेदनिषेधकत्वोपपत्तेरन्यथा समानाधिकरणवाक्यप्रतिपन्नस्वशेषिभूतैक्यविरोधित्वप्रसङ्गादुत्सर्गापवादन्यायेन निषेधस्य विहितभेदव्यतिरिक्तविषयत्वाच्छागपशुन्यायेन सामान्येन भेदनिषेधस्य स्वतन्त्रभेदविशेषनिषेधपर्यवसायित्वाच्च भेदनिषेधश्रुतयो ऽब्रह्मात्मकनानात्वनिषेधपराः, नतु भेदमात्रनिषेधपरा इति सङ्ग्रहः। यत्र हीत्यादिवाक्यानामयमर्थः,— यत्र—

पहास्यमिदम् । [1]"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो

* श्रुतप्रकाशिका *

यदा । द्वैतमिव भवति—स्वनिष्ठभेद इव भवति । इवशब्दः स्वनिष्ठभेदस्याताात्त्विकत्वद्योतकः । कथमिवेतिवद्वाक्यभङ्गिरित्यविवक्षितार्थो वा । तत्—तदा । इतर इतरमितरेण पश्यति, केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः, इतरः—स्वनिष्ठो द्रष्टा । इतरम्—स्वनिष्ठं द्रष्टव्यम्. स्वनिष्ठदर्शनसाधनेन पश्यति । यत्र तु—यदा । अस्य—उपासकस्य । सर्वमात्मैवाभूत्—परमात्मसामानाधिकरण्येन सर्वं साक्षात्कृतम्, नहि पूर्वमनात्मभूतमिदानीं सर्वमात्मा भवति; अतः साक्षात्काराभिप्रायोऽभूदिति निर्देशः, अस्येत्युक्तेः । क इत्यध्याहारः, इतर इत्युक्तत्वात् । तत्—तदा । स्वनिष्ठः को द्रष्टा स्वनिष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कं द्रष्टव्यमर्थं पश्येत् . ज्ञातृज्ञेयज्ञानसाधनेषु स्वनिष्ठं किञ्चिदपि नास्तीत्यर्थः । प्रमितनिषेधायोगादापातप्रतीतिसिद्धस्यैव निषेध्यत्वाल्लौकिकप्रतीतेश्च स्वनिष्ठताविषयत्वात् तेन रूपेणैव निषेधविषयत्वोपपत्तेः । यदि द्रष्टृदृश्यादिमात्रं निषिध्यते, तदानीं ' तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च "इति परमात्मसाक्षात्कारदशायामहमिति द्रष्टुरात्मनो मनुसूर्यादिदृश्यपदार्थानां च साक्षात्कारश्रवणं विरुध्यते; तस्माल्लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारीभूतपरमात्मप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति. योगदशायां तु प्रकारिणः परमात्मनः प्रतीयमानत्वादहंशब्दवाच्यपरमात्मसामानाधिकरण्येन प्रकाशत इति वैषम्यम्, न तु

* भावप्रकाशिका *

पदम् ( स्वनिष्ठो द्रष्टेति ) स्वनिष्ठत्वेन मन्यमानो द्रष्टा स्वनिष्ठत्वेन मन्यमानेन करणेन स्वनिष्ठत्वेन मन्यमानं कर्म पश्यतीत्यर्थः । कर्तृकरणकर्मसु स्वनिष्ठत्वभ्रमो भवतीति पर्यवसितोर्थः । हेत्वन्तरमाह ( अस्येत्युक्तेरिति ) पुरुषविशेषं प्रति आत्मत्वमिति वक्तुमशक्यत्वात्साक्षात्काराभिप्राय एवाभूदितिशब्द इति भावः । ( स्वनिष्ठं किञ्चिदपि नास्तीत्यर्थ इति ) कुत्रापि स्वनिष्ठत्वभ्रमो नास्तीत्यर्थः ।

[1] तै- आन. ६- अनु. २ वा.

भयप्राप्तिरिति यदुक्तम्, तदसत्; "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात् । तथाहि; सर्वस्य जगतः तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते, अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भय-

* श्रुतप्रकाशिका *

द्रष्टृदृश्यादीनि प्रतिषिध्यन्त इत्यभ्युपगन्तव्यम्; अन्यथा वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गात्। नेह नानेति; इह—प्रपञ्चे. लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किञ्चिदपि नास्तीत्यर्थः । स्वनिष्ठदर्शनेन प्रत्यवायमाह—मृत्योरिति। 'तमसो वा एष तमः प्रविशती'तिवन्निर्देशः। नानेव—स्वनिष्ठमिव, अज्ञानादज्ञानमाप्नोतीत्यर्थः। देहातिरिक्तविषयाज्ञानं प्रागेव सिद्धम्. ततोऽप्यतिशयितमज्ञानं स्वनिष्ठतया तद्वस्तुदर्शनमित्यभिप्रायः । यदा ह्येवैष इत्यादिश्रुतिमुपादाय तत्र ब्रह्मणीत्यादिना पूर्वपक्षिणोक्तमर्थमनूद्य दूषयति ( तदसदिति ) तदसत्—भयप्राप्तिहेतुत्वं नेत्यर्थः । कुत इत्यत्राह ( सर्वमिति ) ब्रह्मणः कार्यजगद्रूपेण नानात्वानुसन्धानं मुक्तिहेतुरिति सिद्धान्तार्थः । इदानीं परोक्तं शान्तिहेतुत्वमभ्युपगम्योक्तम्, कथं तत्र नानात्वानुसन्धानप्रतीतिः ? कथं वा तस्य भयप्राप्तिहेतुताविरोधित्वम् ? इतिशङ्कायामेतद्विवृणोति ( तथाहीति ) अत्र नानात्वानुसन्धानप्रतीतिं दर्शयति ( सर्वस्येति ) नहि केवलं ब्रह्मेत्युक्तम्, अपितु इदं सर्वं ब्रह्मेत्युक्तम्, सर्वशब्दश्च विविधभेदप्रपञ्चपरः, अतो नानात्वविशिष्टब्रह्मानुसन्धानं प्रतीतमित्यर्थः । ततः किमित्यत्राह ( अत इति ) नानात्वानुसन्धानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिस्तद्विरुद्धेत्यर्थः । ननु मणिकृपाणदर्पणादिगतप्रतिबिम्बेष्विव देहेषु रागद्वेषादिनिवृत्त्यर्थं सर्वस्य ब्रह्मण्यध्यस्ततानुसन्धानविधिः किं न स्यात्? नैवम्; प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं सामानाधिकरण्यमित्युपपादितत्वाद्बाधार्थत्वस्य वक्ष्य-

१ छा. ३-प्र. १४- ख. १- वा.

हेतुत्वप्रसङ्गः । एवं तर्हि 'अथ तस्य भयं भवति' इति किमुच्यते ? इदमुच्यते; [1] "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयङ्गतो भवति" इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठा अभिहिता ; तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः—

[2] "यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया" ॥

इत्यादि॰ ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशो विच्छेद एव ।

* श्रुतप्रकाशिका *

माणदूषणोपहतत्वाच्च । अथ चोद्यपूर्वकमेतच्छ्रुत्यर्थमाह ( इदमुच्यत इति ) अदृश्य इत्यचिद्व्यावृत्तिः, अनात्म्य इति बद्धव्यावृत्तिः, स हि परमात्मना व्याप्यः । यद्वा आत्म्यम्—व्याप्यं कर्मकृतशरीरम्, तद्रहितोऽनात्म्यः । अनिरुक्त इति मुक्तव्यावृत्तिः, सहि बद्धावस्थायां देवादिशब्दैरुक्तः, अनिलयन इति नित्यमुक्तव्यावृत्तिः, तेषामपि हि भगवानाधारः । श्रोक्तार्थविषयमुपबृंहणं दर्शयति ( यथोक्तमिति ) हानिः—इष्टहानिः । छिद्रम्—अनिष्टप्राप्तिरन्ध्रम् । भ्रान्तिः—तत्कृतचित्तस्खलनम् । विक्रिया—तेनाज्ञानामवशादयथायथव्यापारः । "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥" "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥" इत्यादिवचनान्यादिशब्दविवक्षितानि । भेदवाचिनोऽन्तरशब्दस्य विच्छेदार्थकत्वं कथमित्यत्राह ( ब्रह्मणीति ) अविच्छिन्नं हि ध्यानं निरन्तरमित्युच्यते, अतोऽन्तरं विच्छेद एव । स कस्येत्यपेक्षायां प्रतिष्ठायाः प्रकृतत्वात् तस्या विच्छेदः, प्रकृतब्रह्मविषये तदप्येष इत्युदाहृते भीषाऽस्मादित्यनन्तरश्लोके वायुसूर्यादिसर्वचेतनप्रशासितृत्वकथनादन्तरशब्दस्योपासनविच्छेदपरत्वमेव युक्तम्, न तु भेदपरत्वम्;

1 तै॰ आन॰ ७॰ अनु॰ २ वा.    2 गारुड॰ पु॰ पूर्वखं॰ २२२॰ २२.

* श्रुतप्रकाशिका *

अतोऽयमर्थः पूर्वापरवाक्यश्रुत्यन्तरानुगुण उपबृंहणानुगुणश्च; परोक्तस्तु तदुभयविरुद्ध इति भावः। ननु यदा ह्येवैष इत्यत्र प्रतिष्ठाविच्छेदोऽर्थश्चेदेतस्यामिति स्त्रीलिङ्गता स्यात्. अदितिः पाशानितिन्यायात् विभक्त्यवगतनपुंसकत्वाविवक्षेति चेत् तथाप्यस्वारस्यमवर्जनीयम्; तच्च स्वरसार्थे सम्भवतिनोपपद्यते, सप्तमी चास्वरसा, तस्या विच्छेद इति षष्ठी स्वरसा, न तु तस्यां विच्छेद इति। प्रातिपदिकास्वारस्यं च प्रतिष्ठापरत्वे स्यात्, पूर्ववाक्ये यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्य इति ब्रह्मपरतया प्रयुक्तस्य एतस्मिन्निति पदस्यानन्तरवाक्येऽपि बुद्धौ विपरिवृत्तेः। उच्यते,— न तावल्लिङ्गसप्तम्योः प्रातिपदिकस्य चास्वारस्यम्, ब्रह्मपरामर्शित्वादेतच्छब्दस्य. अन्तरशब्दश्चावकाशपरः, निरन्तरं सान्तरमिति प्रयोगात्; अन्तरञ्च देशतः कालतश्च भवति. कालकृतं चान्तरं विच्छेद एव। नन्वेवंसति कस्य विच्छेद इत्यपेक्षायां प्रतिष्ठाया अन्तरमित्यध्याहारः स्यात्। तच्चायुक्तम्,— अनध्याहारेण निर्वाहसम्भवादिति चेन्न, सन्निधिलब्धस्यार्थस्याध्याहारनिरपेक्षत्वात्; अथाप्यस्वारस्यमिति चेत्तद्दूरम्। पक्षान्तरे बहुस्वारस्यसम्भवात्. तथाहि; भयहेतोरभयहेतुप्रतियोगित्वादभयहेतुपरप्रतिष्ठापदस्यैक्यवाचित्वाभावाद्वाक्यवृत्तेरसामञ्जस्यम्। तत्सामञ्जस्याय प्रतिष्ठाशब्दस्यैक्यपरत्वे मुख्यार्थहानिः, दृढसम्बन्धो हि प्रतिष्ठा, यथा राज्ये प्रतिष्ठित इति। प्रथमप्रतिपन्नप्रतिष्ठापदस्यार्थभङ्गश्चानुपपन्नः, पूर्वसिद्धैक्यावगतिपरत्वाद्भिन्दतिधात्वर्थ-

* भावप्रकाशिका *

(अदितिः पाशानितिन्यायादिति) 'अदितिः पाशान् प्रमुमोक्त्वि'त्यत्र बहुवचनप्रतिपादितमपि बहुत्वं न विवक्षितम्. एवमेतस्मिन्निति विभक्तिविकारसूचितं पुंनपुंसकान्यतरत्वमपि न विवक्षितमित्यर्थः। (तथाप्यस्वारस्यमवर्जनीयमिति) अत एव हि दशमे 'बार्हस्पत्यं ग्रहं गृह्णाती'त्यत्र प्राकृतग्रहानुवादेन देवताविधाने तेषां बहुत्वादेकवचनमयुक्तमित्युद्देश्यगतत्वेनाविवक्षायामपि अभिधानबाधोऽवर्जनीय इत्युक्तम्। किञ्च 'प्रासा अग्निं भरते'तिमन्त्रस्य सारस्वत्यामेव इष्ट्यां प्रातिपदिकार्थीभूतलिङ्गविरोधादप्रवृत्तिरिति नवमे स्थापितत्वाच्चेति भावः। (अथाप्यस्वारस्यमिति चेदिति). समभिव्याहृतपदाप्रतिपन्नत्वादितिभावः। . अभयहेतुप्रतियोगित्वादिति पूर्ववाक्ये अभयहेतुतया यदुपन्यस्तं तद्विरुद्धस्यैव भयहेतुत्वेन प्रद-

यदुक्तम्[1] "न स्थानतोऽपि"इति सर्वविशेषरहितं ब्रह्मेति च वक्ष्यतीति; तन्न, सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति । [2] "मायामात्रं तु" इति च स्वाप्नानामर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत[×] इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति ॥

* श्रुतप्रकाशिका *

स्यास्वारस्यञ्च। सप्तमी चास्वारसा, भेदप्रतियोगित्वावधित्वसम्बन्धविवक्षायां तृतीयापञ्चमीषष्ठीनामेव स्वारस्यात्, करोतेः प्रतिपत्त्यर्थत्वादस्वारस्यञ्च. मनसि कुरुत इति योजनायामध्याहारः, एष ह्येवानन्दयातीति पूर्ववाक्यप्रतिपन्नभेदविरोधश्च, अनन्तरं च भीषास्मादिति प्रशासितृत्वेन भेद उच्यते; अतो मध्ये भेदनिषेधश्चानुपपन्नः, "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन 'कदाचने"ति पूर्वापरवाक्ये गुणविशिष्टवेदनस्याभयहेतुत्वोक्तेर्ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं च विरुद्धम्। ब्रह्मविदाप्नोतीति विद्युपक्रमत्वाच्च ब्रह्मणि प्रतिष्ठाया वेदनरूपत्वमेव युक्तम्, न त्वैक्यरूपत्वम्, न ह्यैक्यतद्बुध्योरुभयस्य च प्रतिष्ठाशब्दवाच्यत्वम्, दृढसम्बन्धवाचिनः प्रतिष्ठाशब्दस्य तूपास्यं ब्रह्म प्रत्युपासकतया सम्बन्धे पर्यवसानं युक्तम् । ब्रह्मणो निर्विशेषत्वे व्यतिरिक्तमिथ्यात्वे च परोक्तं सूत्रद्वयं परिहरति ( यदुक्तमिति ) ॥

❀ भावप्रकाशिका ❀

र्थेनौचित्यादितिभावः ( पूर्वसिद्धैक्य इति ) 'विदिर्लाभे' इति धातोरेव शविकरणपठितादस्य रूपस्य सम्भवात् 'विद् ज्ञाने' इत्यस्य वित्त्यर्थस्य लुग्विकरणपठिततया परस्मैपदि तया चास्य रूपस्याभावात्. नच लाभार्थत्वेप्यैक्यमिदानीं लभत इति वक्तुं शक्यमिति शङ्क्यम्, ऐक्यस्य पूर्वसिद्धत्वादिति भावः ( प्रतियोगित्वावधित्वेति ) घटेन सह भेद इति साहित्यप्रतियोगित्वविवक्षायां घटाद्भेद इति पञ्चमी, सम्बन्धविवक्षायां घटस्य भेद इति षष्ठीति भावः । इतिश्रुतिप्रक्रिया ॥

१ शारी- ३- अ- ३- पा. ११ सू.
२ शारी- ३-अ- २- पा. ३- सू.

× इति पारमार्थिकत्व इति पाठान्तरम् ॥

—( पुराणघट्टः, सविशेषपरस्मृतिपुराणवचनानि )—

स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थो: ऽन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितम्; तदसत्;—

[1]'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।

* श्रुतप्रकाशिका *

अथ स्मृतिपुराणयोः सविशेषपरत्वमुपपादयति ( स्मृतिपुराणयोरिति ) स्मृतीत्यादिना सामान्येन प्रमाणस्य तदवान्तररूपस्य शब्दस्य च सविशेषवस्तुपरत्वोपपादनाच्छास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादनासामर्थ्योपपादनाद्विशेषेण वेदान्तवाक्यानां सविशेषपरत्वोपपादनेन स्मृतिपुराणयोः श्रुतिविरुद्धार्थे प्रामाण्यासम्भवाच्च तयोः सविशेषपरत्वं सिद्धम् । इदानीं स्मृतिपुराणयोरपि परोदाहृतवचनानां पूर्वापरपर्यालोचनया सविशेषपरत्वमुपपाद्यते, यथा लौकिकप्रमाणश्रुतिविरुद्धानर्थान्नेदं शास्त्रं प्रतिपादयति, एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः । परेण सर्वस्याविधिकत्वाविशेषेण स्वाभाविकवक्तृवैपम्यानभ्युपगमादद्वैतस्पष्टताभ्रमाच्च पूर्वं पुराणवचनान्युपन्यस्य पश्चाद्भगवद्गीतावचनान्युदाहृतानि । अत्र तु स्वाभाविकवक्तृवैपम्याभ्युपगमादनन्तगुणविभूतिमत्त्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात्पुराणवचनानि प्रदर्श्यन्ते, अतः स्मृतिपुराणयोरित्युक्तम् । परेण स्वोदाहृतवचनप्रतिपाद्यतया योऽर्थोऽभिहितः, तद्विपरीतार्थपरत्वेन स्पष्टतमानि वचनानि प्रथमं प्रदर्श्यन्ते पश्चात्तदविरोधेन परोक्तवचनानामर्थप्रतिपादनार्थम् । यो मामिति । अत्राजमितिपदेन अचित्संसृष्टचेतनव्यावृत्तिः, अनादिमिति मुक्तव्यावृत्तिः, तस्याजत्वं हि आदिमत् । लोकमहेश्वरमिति नित्यमुक्तव्यावृत्तिः, लोक्यत इति लोकः,

ꕥ भावप्रकाशिका ꕥ

( अर्थप्रतिपादनार्थमिति ) पूर्वेणान्वयः । 'यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् । असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते' इत्ययं श्लोको दशमेऽध्याये ।

---

1 गी-१० अ-३-श्लो .

[1] "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥"
[2] "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! ॥

* श्रुतप्रकाशिका *

प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः, अत्रोत्तरार्द्धोऽप्यनुसन्धेयतया अभिप्रेतः "असम्मूढः स मर्त्येषु" इति । चेतनाचेतनविलक्षणत्वेन जानन्नसम्मूढ इति कथनात् सर्ववैलक्षण्यं तात्त्विकमित्युक्तं भवतीत्यभिप्रायः । धारकत्वादिभिर्वैलक्षण्यं वैशद्यार्थमुपादत्त—मत्स्थानीति । अत्र शरीरलक्षणं सूचितं भवति, सर्वभूतानि मदायत्तस्थितीनि, नाहं तदायत्तस्थितिरित्यर्थः । लोकदृष्टप्रकारेण नाहमाधारः, अपि तु सङ्कल्पमात्रादित्याह—नचेति । निषेधस्य विहितव्यतिरिक्तविषयत्वादयमेवार्थः । योगमैश्वरम्—ईश्वरासाधारणं सर्वशक्तियोगमित्यर्थः । न च मत्स्थानीति धारकत्वपारमार्थ्यनिषेधश्चेद्योगमैश्वरं पश्येति विरुद्धम्, मम भ्रान्तिं पश्येति हि तदा वक्तव्यम् । योगमैश्वरमित्येतद्विवृण्वन्निममेवार्थमाह—भूतभृदिति । ममात्मा—मम सङ्कल्प इत्यर्थः । आत्मशब्दो हि मतिवाची, "यत्नेऽर्केऽग्नौ मतावात्मा" इति । अतोऽत्र आत्मशब्दः सङ्कल्परूपज्ञानवाची, ममात्मा भूतभावन इत्यनेन 'नच मत्स्थानि भूतानी'त्यस्यार्थः स्पष्टीकृतः । भूतभावनः—भूतानां सत्तानुवर्त्तकः । अर्वाचीनस्येश्वरस्य हि सगुणत्वमितिं शङ्कायां कारणातिरिक्तवस्तुनिषेधप्रदर्शनार्थं लक्षणप्रदर्शनार्थं च जगत्कारणत्वमाह—अहमिति । प्रभवः प्रलयश्चोक्तः, स्थितिस्तु धारकत्वकथनेन सिध्यतीति धारकत्वं

* भावप्रकाशिका *

'मत्स्थानि सर्वभूतानि' इत्यारभ्य सार्धश्लोको नवमेऽध्याये । 'अहं कृत्स्नस्य जगतः' इति सार्धश्लोको सप्तमाध्याये । 'अथवा बहुनोक्तेन किं ज्ञानेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इतिश्लोको दशमे । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः

1 गी. ९. अ. ४. ५. श्लो. 2 गी. ७. अ. ६–७. श्लो.

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव " ।
[3] "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ।
[4] "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " ॥

* श्रुतप्रकाशिका *

विशिनष्टि–मयीति । विष्टभ्याहमित्यनेन नियन्तृत्वमुक्तम् । विष्टभ्य–अधिष्ठाय । एकांशेन–सङ्कल्पैकदेशेन, तच्छरीरत्वलक्षणम् । यो मामजमित्यादिनाऽभिप्रेतचिदचिद्वैलक्षण्यकण्ठोक्तिं दर्शयति–उत्तम इति । पूर्वस्मिन् वचने क्षराक्षरशब्दोक्तौ बद्धमुक्तौ । कूटस्थः--निर्विकारः, ज्ञानसङ्कोचरूपविकाराभावान्मुक्तस्य. कूटस्थशब्दस्साधारणवाची वा. सर्वेषु लोकेषु कामचारो भवतीति मुक्तात्मन उभयविभूतिसाधारणत्वात् कूटस्थत्वम् । परमात्मेत्युदाहृत इत्यनेन 'परमात्मा व्यवस्थित' इत्येतद्वाक्यान्वितो नारायणानुवाकः स्मारितः, अक्षरादपि चोत्तम इत्यनेन च । तत्रैव हि 'सोऽक्षरः परमः स्वराट्' इत्युक्तम् । ज्ञानसङ्कोचरूपक्षरणाभावादक्षरो मुक्तः, स्वराट्–स्वतन्त्रः, अकर्मवश्यः । परमः–जीवगतावस्थास्वतःपरमुत्कृष्टावस्थान्तराभावात्पारम्यम्, सर्वाणीति पदं ब्रह्मशिवाद्यभिप्रायम्, तस्मिन्ननुवाके हि "स

ꣻ भावप्रकाशिका ꣻ

पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥' इति पञ्चदशेऽध्याये । ( अकर्मवश्य इति ) अकर्मवश्यत्वं परमत्वञ्चाक्षरशब्दनिर्दिष्टे मुक्तशरीरके भगवति मुक्तद्वारा अन्वेति ; महानुदार इत्यादौ महत्त्वस्यौदार्यद्वाराऽन्वयदर्शनात् । नच पारम्यस्वाराज्ययोस्साक्षाद्भगवत्यन्वयसम्भवे सद्वार-

३ गी- १०- अ- ४२- श्लो.    ४ गी- १६. अ- १७-१८- श्लो.

* श्रुतप्रकाशिका *

ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट्”इति बद्धमुक्तजीववाचिपदैः समानाधिकृतैर्भगवानुक्तः । तत्र ‘ विश्वमेवेदं पुरुष’इति च सामानाधिकरण्यवाक्यं श्रूयते, सामानाधिकरण्यहेतुश्च तस्मिन्ननुवाके स्पष्टः । ‘तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरम्’ ‘ व्याप्य नारायणः स्थितः ” इति च वाक्यजाते धार्यत्वधारकत्वनियन्तृत्वनियाम्यत्वशेषित्वशेषत्वव्याप्यत्वव्यापकत्वादिकमेव सामानाधिकरण्यनिबन्धनम्, न तु तदैक्यमिति स्पष्टम् । तदत्राप्युच्यते; आविश्येति ‘व्याप्य नारायणः स्थित’ इत्यस्यार्थ उक्तः । ‘ पतिं विश्वस्ये’त्यस्यार्थ ईश्वरशब्देनोक्तः, ईश्वरशब्दो हि शेषिवाचकः, अत एव हि ‘ पतिं विश्वस्यात्मेश्वरम्’ इत्यत्र पत्यन्तरराहित्यविवक्षायामात्मेश्वर इत्युक्तम्। ‘तद्विश्वमुपजीवती’त्यस्यार्थो बिभर्तीत्युक्तः । तथा “ व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः”इति ‘यो मामेवमसम्मूढ ’इति कृत्स्नवैलक्षण्यज्ञानवतोऽसम्मूढत्वमुक्तम् । ‘इति गुह्यतमं शास्त्र’मिति तस्यार्थस्य गुह्यतमत्वमुक्तम्, अतोऽस्मिन्नर्थे तात्पर्यमिति स्पष्टम्। पुरुषोत्तमशब्दस्य समासासाधुत्वमशङ्कनीयम् ‘ नागोत्तमादि च सिद्धं भवति’इतिमहाभाष्यवचनात्पाणिनिवत्पुरुषोत्तमशब्दनिर्वाहकृतामृषीणामाप्ततमत्वाच्च, पुरुषोत्तम इति पञ्चमीसमासो वा, अक्षरादपि चोत्तम

७ भावप्रकाशिका ७

कान्वयो न युक्त इति वाच्यम्,— ब्रह्मत्वादीनां सद्वारकान्वयवत् पारम्यस्वाराज्ययोरपि प्रायःपाठात् सद्वारकान्वयस्यैव वक्तव्यतया सन्निहिताक्षरशब्दनिर्दिष्टमुक्तस्यैव द्वारत्वौचित्यादिति भावः । यद्वा, अस्मिन् प्रकरणे ब्रह्मादिशब्दा न परमात्मपर्यन्ताः, अपितु भगवद्वाचितच्छब्द एव लक्षणया तच्छरीरपरः, ततः परमस्वराडक्षरो मुक्तः, स एव तच्छरीरभूत एवेत्यर्थः । ( पत्यन्तरराहित्यविवक्षायामिति ) भगवतो विश्वपतित्वे कथिते तस्यापि पत्यन्तरमाशङ्क्यात्मेश्वरमित्यनेन पत्यन्तरं निषिध्यते , अतः पतीश्वरशब्दयोस्तुल्यार्थत्वमिति भावः (समासासाधुत्वमशङ्कनीयमिति ) उत्तमश्चासौ पुरुषश्चेति सामानाधिकरण्यविवक्षायां ‘ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः’ इति समासे उत्तमपुरुष इति रूपप्रसङ्गात् ‘ यतश्च निर्धारणम्’ ‘पञ्चमी विभक्ते’ इति षष्ठीपञ्चमीसप्तमीपक्षेषु ‘ पञ्चमी भयेन’इत्यादौ उत्तमशब्दाभावात् पञ्चमीसमासाप्रसङ्गात्, षष्ठीसमासस्य न निर्धारणे इति निषेधात्

[1] "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषाँश्चमुने ! व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भु-

* श्रुतप्रकाशिका *

इति ह्युक्तम् , पूर्वनिपातस्तु सामानाधिकरण्यविवक्षायामेव न तु तदविवक्षायामपीति नानुशासनविरोधशङ्काप्रसङ्गः, एवमेभिर्वचनैश्चिदचिद्वैलक्षण्यस्य प्रतिपादितत्वात् ' क्षेत्रज्ञं चापि मां विद्धि ' इत्यादेस्तदविरोधेनार्थो वर्णनीयः। ' यो लोकत्रयमाविश्य बिभर्ती'त्यादिना कृत्स्नस्य भगवच्छेषत्वधार्यत्वनियाम्यत्वव्याप्यत्वशरीरत्वादेर्विहितत्वात्तस्य च निषेद्धुमयुक्तत्वात् ' न तदस्ति विना यत्स्यात् ' इत्यादिना अतदात्मकस्य नास्तित्वमुच्यते। अविनाभावशब्दस्य मिथ्यात्वपरत्वेन प्रसिद्ध्यभावाच्च तथाभ्युपेत्यमित्यभिप्रायः, विनाशब्दो हि सम्बन्धविरहपरः, अविनाभावशब्दस्य सम्बन्धनियमवाचित्वात् । अथ पुराणवचनान्युपन्यस्यन्ते; तत्र प्रत्यस्तमितभेदमित्यस्य वचनस्यार्थं व्याचिख्यासुस्तदुपयोगित्वेन तदुपक्रमोपसंहारयोस्सविशेषपरत्वं दर्शयिष्यन्नुपक्रमवचनान्युपादत्ते—स सर्वेति । तत्र प्रथमग्रन्थो हेयप्रत्यनीकत्वपरः सर्वभूतप्रकृतिम्—प्रधानम्। विकारान्—महदादीन्। गुणादिदोषान्—सत्त्वरजस्तमोहेतुकान् , ते दोषाः क्लेशादयः । व्यतीतः—विशेषेणातीतः, नियमेन अतत्परवशतया सम्बन्धानर्ह इत्यर्थः । अतीतसर्वावरणः—आवरणम्, प्रकृतिसम्बन्धकर्म-

* भावप्रकाशिका *

सप्तमीसमासस्य च लक्षणाभावात्साधुत्वसंशय इति भावः । ( आसतमत्वाचेति ) सप्तमीतियोगविभागात् समासो भविष्यतीति भावः। (सामानाधिकरण्यविवक्षायामेवेति) 'सन्महत्परमोत्तमे'ति सूत्रेण समासे हि उत्तमशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वात् 'प्रथमानिर्दिष्टं समास उपसर्जन'मित्युपसर्जनसंज्ञायामुपसर्जनं पूर्वमित्युत्तमशब्दस्य पूर्वनिपातस्स्यात् . पञ्चमीति वा सप्तमीति वा योगाविभागे नवेति योगविभागेन समाश्रयणे पञ्चम्यन्तस्य सप्तम्यन्तस्य वा पुरुषपदस्यैव प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात्पूर्वनिपातावश्यम्भावादिति भावः । स सर्वभूतप्रकृतिमित्यारभ्य पञ्चश्लोकी षष्ठांशपञ्चमाध्यायसमाप्तौ पठिता। शुद्धे महाविभूत्याख्य इत्यारभ्य सप्त-

1 विष्णु- पु. ६- अं. ५- अ ८३-८४-८५-८६-८७.

वनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्ति-

* श्रुतप्रकाशिका *

वासनादिकम्, तत्सर्वमतीतं येन स इत्यर्थः। यद्वा सर्वविषयज्ञानावरणं सर्वविषयज्ञानसङ्कोचातीत इत्यर्थः, ज्ञानशक्त्यादिसर्वगुणसङ्कोचकातीत इति वार्थः। अखिलात्मत्वं विवृणोति—नेति। न तु मृदात्मको घट इतिवदित्यर्थः। भुवनान्तराले—उभयविभूत्यन्तराले। अथ दिव्यात्मस्वरूपस्य मङ्गलैकतानत्वमाह—(समस्तेति) समस्तकल्याणगुणात्मक इति कल्याणगुणवत्त्वमुच्यते चेत्, आत्मशब्दः स्वभाववाची स्यात्, एवं संक्षिप्तार्थस्य तेजोबलैश्वर्येत्यादिना विस्तरः क्रियत इति निर्वाहः, अस्मादपि निर्वाहात् दिव्यात्मस्वरूपपरत्वं युक्तम्। अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायात्, तदा कल्याणशब्दो भावप्रधानः, समस्तकल्याणत्वं गुणः स्वभावो यस्य स समस्तकल्याणगुणः, यथा "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रस्थद्व्येकयोरितिपदं द्वित्वैकत्वपरं व्याख्यातम्। अन्यथा द्व्येकेष्विति वाच्यम्, न तु द्व्येकयोरिति; तच्च भावप्रधाननिर्देशस्य साधुत्वज्ञापनाय कृतम्; तत एव हि "गुणाः सत्यज्ञानप्रभृतयः" इत्यभियुक्तैरुक्तम्; समस्तकल्याणगुण आत्मा धर्मिस्वरूपं यस्य स समस्तकल्याणगुणात्मकः, बहुव्रीहिरौपचारिकः शिलापुत्रकस्य शरीरमितिनिर्देशवत्। दिव्यात्मस्वरूपमेव (स्तौति—स्वशक्तीति)

* भावप्रकाशिका *

श्लोकी तस्मिन्नेवाध्याये सर्वभूतप्रकृतीमित्यतः प्राक् पठिता। समस्ताश्शक्तय इत्यारभ्य त्रिश्लोकी षष्ठांशे सप्तमाध्याये केशिध्वजं प्रति खाण्डिक्यवचनम्। एवम्प्रकारमिति श्लोकः प्रथमांशसमाप्तौ। परः पराणामित्यारभ्य पञ्चश्लोकी पुराणादौ पठ्यते। प्रकृतिर्या मया ख्यातेति श्लोकद्वयं षष्ठांशे चतुर्थाध्याये प्रकृतिसञ्चरणप्रकरणे। द्वे रूप इत्यारभ्य सार्धश्लोकद्वयं प्रथमांशसमाप्तौ। विष्णुशक्तिः परा प्रोक्तेत्यारभ्य श्लोकत्रयं षष्ठांशे सप्तमाध्याये खाण्डिक्यवाक्यम्। प्रधानञ्च पुमांश्चैवेत्यारभ्य पुरुषात्मन इत्यन्तं द्वितीयांशे सप्तमाध्याये। तदेतदक्षयं नित्यमित्येतत्प्रथमांशसमाप्तौ। सर्वावरणपदे कर्मधारयमभिप्रेत्य व्याचष्टे। (तत्सर्वमतीतं येनेति) आवरणशब्दस्य विषयसापेक्षत्वात् षष्ठीसमासतया व्याचष्टे (यद्वा सर्वविषयज्ञानावरणमिति) ज्ञानमात्रे सङ्कोचो न युक्त इति व्याचष्टे (ज्ञानशक्त्यादीति) (समस्तकल्याणत्वं

लेशाद्धृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहाव-

* श्रुतप्रकाशिका *

स्वांशलेशात् धृतभूतसर्गः । यद्वा शक्तिः—सामर्थ्यम्, स्वगुणलवधृतभूतजात इत्यर्थः । भूतसर्गः—भूतसमूहः । यद्वा, सृज्यत इति सर्गः, कार्यवस्तुजातमित्यर्थः । अभिप्रायविशेषेण षाड्गुण्यं पश्चाद्वक्ष्यन् प्रथमं दिव्यविग्रहमाह (इच्छेति) अभिमतत्वम्—अभिमत्यर्हत्वम्, स्वानुरूपत्वमिति यावत् । अर्हार्थे निष्ठा, यथा 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इति. तत्र ह्यर्हार्थीयः क्तः, अद्रेश्यमग्राह्यमित्याद्यैकार्थ्यात् . अभिमतस्याननुरूपत्वमनुरूपस्यानभिमतत्वं च लोके दृश्यते, तद्व्यावृत्त्यर्थमिच्छागृहीताभिमतशब्दौ. निरुपपदेच्छाशब्दो नित्येच्छाया अवतारसमयजन्येच्छायाश्च साधारणः, असङ्कोचात् । अथावतारद्वारेण साध्यं विग्रहप्रयोजनमाह—संसाधितेति । अथ षाड्गुण्यवत्तामाह—तेज इति । नात्र क्रमविवक्षा । महाशब्दसुशब्दौ सर्वगुणसाधारणौ, महत्त्वमपरिच्छिन्नत्वम् ; यथा 'महोत्साहो महाबलः महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः" इति; यथा 'प्रकृष्टं विज्ञानं बलमतुलम्'

❀ भावप्रकाशिका ❀

गुणः स्वभावो यस्येति ) अत्र बहुव्रीहिगर्भबहुव्रीहिमनाश्रित्य कल्याणत्वरूपो गुणः कल्याणगुणः स आत्मा स्वभावो यस्येत्याश्रयणेपि अयमर्थस्सिध्यत्येवेति वदन्ति । (अभिप्रायविशेषेणेति) गुणेभ्योपि दिव्यविग्रहस्यात्यन्ताभिमतत्वाभिप्रायेणेत्यर्थः । (अभिमत्यर्हत्वमिति) अनुरूपत्वमित्यर्थः । (अर्हार्थे निष्ठेति) 'कृत्यल्युटो बहुल'मितिबहुलग्रहणादितिभावः । (अभिमतस्याननुरूपत्वमिति) अत्राभिमतशब्द इच्छागृहीतार्थकः, अनुरूपत्वमभिमतशब्दार्थः इति प्रागेवोक्तत्वात् । केचित्तु,—इच्छागृहीतपदस्यानुरूपत्वमर्थः, तथात्व एव ग्रन्थस्वारस्यमिति वर्णयन्ति । तत्तु न सम्यगिव;— इच्छागृहीतपदस्यानुरूपत्वार्थकत्वाश्रयणापेक्षया अभिमत्यर्हशब्दस्यानुरूपत्वार्थाश्रयणस्य युक्तत्वात् (नित्येच्छाया इति) ततश्च नित्यविग्रहस्यापि नित्येच्छागृहीतत्वं सिद्धमितिभावः । ननु ज्ञानबलैश्वर्येति निर्देष्टव्ये तेजोबलैश्वर्येति निर्देशः कथमित्यत आह (नात्र क्रमविवक्षेति) (सर्वगुणसाधारणाविति) ननु "महा-

बोधसुखवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ स ज्ञायते

* श्रुतप्रकाशिका *

इत्यादि । सुशब्देन तेषां मङ्गलत्वमुच्यते । एवं स्वरूपतो विग्रहतो गुणतश्च पर इत्याह ( पर इति ) गुणादिदोषानित्यत्र दोषशब्दार्थं विवृणोति ( न यत्रेति ) क्लेशादयः—क्लेशकर्मविपाकाशयाः, अविद्यास्मितरागद्वेषाभिनिवेशाः क्लेशाः, कर्म—पुण्यापुण्यात्मकम्, जात्यायुर्भोगा विपाकाः, आशयः—वासना, संस्कारः । " क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर "इतियोगसूत्रं स्मारयति ( स ईश्वर इति ) योगशास्त्रादपि वेदान्तार्थवैषम्यमाह ( व्यष्टीति ) पूर्वं भेदश्रुत्यर्थ उक्तः, अथैक्यश्रुतिनिर्वाहार्थं घटकश्रुत्यर्थ उच्यते—व्यष्टीति । व्यष्टिसमष्टिशब्दाभ्यां कार्यकारणभावावस्थश्चेतनवर्ग उच्यते । रूपम्—शरीरम् । स्वरूपम्—स्वासाधारणं शरीरम् । शरीरिलक्षणं सूचयति—सर्वेश्वर इति । ईश्वरः—नियन्ता; अनेन नियाम्यत्वं शरीरत्वं सिद्धम्; नियाम्यविशेषो हि शरीरम् । सर्वदृक् सर्ववेत्ता— स्वरूपतः प्रकारतश्च सर्वं जानातीत्यर्थः । यद्वा ' विश्वतश्चक्षु'रित्यादिश्रुतिप्रक्रियया सर्वतो दृग्भवन् सर्वं वेत्तीत्यर्थः । यद्वा सर्वेषां दृक् सर्ववेत्ता च "चक्षुर्देवानामुत मर्त्यानाम्"इति श्रुतेः । चक्षुः—ज्ञानप्रदः, सर्वं विन्दतीति वा सर्ववेत्ता, अवाप्तसमस्तकाम इत्यर्थः । समस्तशक्तिः, शक्तिः—कार्योन्मयोग्यपृथक्सिद्धविशेषणम्; उक्तप्रकारेण सर्वशरीर-

* भावप्रकाशिका *

बुद्धिर्महावीर्य" इत्यादौ प्रत्येकं महत्त्वेन विशेषणादस्तु सर्वत्र महत्त्वम्, तथापि नानेन वाक्येन सर्वगुणसाधारण्यं सिध्यति, महच्छब्दास्मार्द्धिर्दिष्टेषु तेजोबलैश्वर्येषु महत्त्वान्वयोपायासम्भवादिति चेन्न, न्यायसाम्येन सिद्धिरस्तीत्यत्र तात्पर्यात् । (अविद्यासितेति) अस्मिता—अस्मित्वम्, अहन्त्वम्; अनात्मन्यहम्बुद्धिरिति यावत् । श्लोकोपात्तयोः रूपस्वरूपशब्दयोरर्थमाह ( रूपं शरीरं स्वरूपं स्वासाधारणमिति ) ( सर्वं विन्दतीति वा सर्ववेत्तेति ) अत्र 'विदिर्लाभे' इत्यस्य सेट्त्वेपि इडभाव-

येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् । संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥"

* श्रुतप्रकाशिका *

कत्वादस्य सर्वमपृथक्सिद्धविशेषणमित्यर्थः । परमेश्वराख्य इति परमशब्देन अस्येश्वरत्वं सिद्धम्, परो मा अस्येति हि परमः । एवम्विधेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह ( स ज्ञायत इति ) संज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मविशेषणम् ; येन शास्त्रजन्यज्ञानेन विज्ञायते, येनोपासनात्मकेन संदृश्यते, येन परभक्तिरूपेणानुभवरूपेण च प्राप्यते, अनुभूयत इत्यर्थः । "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति वचनात् । सं ज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मज्ञानविशेषणम् । "अर्थेनैव विशेषो हि निराकारतया धियाम्" इतिवचनात् ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा. अस्तदोषमिति दोषास्पदाचिद्विषयज्ञानाद् व्यावृत्तिः । शुद्धमिति ' अशुद्धास्ते समस्तास्त्वि'त्याद्युक्तकर्मवश्याशुद्धबद्धजीवविषयज्ञानाद्व्यावृत्तिः । परं निर्मलम्—अत्यन्तनिर्मलम् ; अनेन कदाचित्कर्मसम्बन्धार्हतारूपमलान्वितमुक्तविषयज्ञानाद्व्यावृत्तिः । एकरूपमिति नित्यमुक्तविषयानेकरूपज्ञानाद्व्यावृत्तिः । अनया दिशा ब्रह्मविशेषणत्वेऽपि व्यावृत्तिर्द्रष्टव्या । ब्रह्मविशेषणत्वे एकरूपमित्याश्रयणीयत्वोपयोगिविशेषणं च भवति ; स्थिरस्वभावम् ; आश्रितसंरक्षणादिप्रतिज्ञायां दृढतरमित्यर्थः । अज्ञानम्—मोक्षोपायज्ञानादन्यत्तद्विरोधि वा "सा विद्या या विमुक्तये" इति वचनात् । यद्वा अज्ञानम्— ज्ञानाभावः, ब्रह्मपर्यन्तत्वाभावेन अयथावस्थितवस्तुविषयत्वात् , ब्रह्मविशेषणत्वे एकवाक्यम् , ज्ञानविशेषणत्वे वाक्यद्वयम् । 'प्रत्यस्तमितभेद'मित्यादिश्लोके प्रत्यस्तमितभेदपदं हृदि निधाय सविशेषत्वे वचनानि दर्शितानि ॥

❁ भावप्रकाशिका ❁

श्छान्दस इति द्रष्टव्यम् ( नित्यमुक्तविषयानेकरूपज्ञानाद्व्यावृत्तिरिति ) अनेकनित्यमुक्तविषयकज्ञानाद्व्यावृत्तिरित्यर्थः । ( यद्वा अज्ञानं ज्ञानाभाव इति ) नचेतरज्ज्ञानं कथं ज्ञानाभावस्स्यादितिवाच्यम् , सिद्धान्ते भावस्याभावरूपत्वे विरोधाभावात् ( ज्ञानविशेषणत्वे वाक्यद्वयमिति ) ब्रह्मविशेषणत्वपक्षे . येन ज्ञानेनास्तदोषत्वादि-

[1] "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे ॥

* श्रुतप्रकाशिका *

अथागोचरं वचसामित्येतद्व्याचिख्यासया शब्दगोचरत्वे वचनानि दर्शयति (शुद्ध इत्यादिना) तत्र 'अशब्दगोचरस्ये'त्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तम् ; तत्कथमित्यपेक्षायां मुक्तात्मव्यावर्तकं भगवच्छब्द-प्रवृत्तिनिमित्तमाह—शुद्ध इति। यत्र प्रवृत्तिनिमित्तपौष्कल्यं तत्रैव हि मुख्यत्वम्, नान्यत्रेति भावः । शुद्धे 'सिद्धे शब्दार्थसम्बन्ध 'इत्यत्र सिद्धशब्दवच्छुद्धशब्दोऽवधारणगर्भः, शुद्ध एव—नित्यशुद्ध इत्यर्थः । 'अब्भक्षो वायुभक्ष' इतिवत् सिद्धशब्दस्यावधारणगर्भत्वात् सिद्धशब्दो नित्यपरत्वेन हि व्याख्यातः तद्वत्, अनेन नित्यशुद्धत्वेन सकलचेतनव्यावृत्तिः, नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वात् । महाविभूत्याख्ये—विभूतिभूतस्य महाविभूतित्वायोगात् उभयविभूतिशेषित्वं समस्तचेतनव्यावर्तकम् । परे ब्रह्मणीत्यनेन चेतनव्यावृत्तिः सिद्धा, अपरात्मा केवलब्रह्मशब्देनोक्तः, 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज'इति । उत्तरत्र तु 'परमब्रह्मभूतस्य'इति हि परमात्मा वक्ष्यते, प्रदेशान्तरेऽपि परब्रह्मशब्दः परमात्मपर एव दृश्यते; अतोऽपरमात्मव्यावृत्त्यर्थं महाविभूत्याख्ये परे ब्रह्मणीत्युक्तम् । सर्वकारणकारणत्वञ्च भगवत एव, जगद्व्यापाररहितो हि

* भावप्रकाशिका *

विशिष्टवस्तु संज्ञायते संदृश्यते गम्यते वा तदेव ज्ञानम् , अन्यत्त्वज्ञानमित्येकवाक्यत्वमेव । ज्ञानविशेषणत्वपक्षे तु येन ज्ञानेन परमात्मा ज्ञायते गम्यते वा तज्ज्ञानमस्तदोषत्वादिविशिष्टं तदेव ज्ञानमिति वाक्यद्वयं स्यात् , इतरथा तच्छब्दद्वयवैयर्थ्यप्रसङ्गात् । नच 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इतिवत् स्यादिति वाच्यम्, तत्राप्यगत्या वाक्यभेदस्याभ्युपगन्तव्यत्वादिति भावः । (पूर्वश्लोक इति) 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥ इतिश्लोक इत्यर्थः । (औपचारिक इत्युक्तमिति) "श्रुतिवाक्योदितं ब्रह्म तद्-

---

१ विष्णु- पु. ६- अं. ५- अ- ७२-७३-७४-७५-श्लो.

## सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।

* श्रुतप्रकाशिका *

मुक्तात्मा । एवमुक्तप्रवृत्तिनिमित्तपौष्कल्यात् सर्वेश्वर एव भगवच्छब्दो मुख्यवृत्तः, नान्यत्रेत्यर्थः । इममर्थं विवृण्वन्नक्षरशः समुदायशश्च भगवच्छब्दार्थमाह– (सम्भर्तेत्यादिना) शुद्धत्वं 'विना हेयै'रिति विवृतम्, भोग्यसम्पद्वाचकेनैश्वर्यस्येति- श्लोकस्थश्रीशब्देन भोगविभूतेः सम्भरणाद्युक्तया लीलाविभूतेश्च दर्शितत्वान्महा- विभूतित्वं विवृतम्, सर्वकारणकारणत्वं चोपरि स्पष्टम् ; अत एव ज्ञानशक्त्यादि- भिश्च निरतिशयबृहत्त्वात्परब्रह्मत्वं स्फुटम् ; अत उत्तरग्रन्थानां शुद्ध इत्यादिश्लोक- विवरणरूपत्वं युक्तम् । भश्च गश्च वश्चेति विभज्यार्थ उच्यते, एतेषां पदानां तत्त- द्धातुषु 'अन्येष्वपि दृश्यते' इति डप्रत्यये टिलोपे च कृते एवं रूपं भवतीति । भार्थमाह–समित्यर्द्धेन । सम्भर्ता–सम्भरणम्, उपकरणसंविधानम् ; प्रकृतिपुरुषका- लान् कार्योत्पत्तियोग्यान् करोतीत्यर्थः । महदादिसृष्टिरण्डरूपकार्योत्पत्त्युपयुक्ता सम्भरणमिति वा विवक्षा । भर्ता–स्वामी; धारणस्य वकारवाच्यत्वात्पोषकत्वस्य गकारवाच्यनेतृत्वान्तर्भावादपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च स्वामित्वमिह विवक्षितम् । यद्यपि प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वम्, तथापि पूर्वोक्त- युक्तिसचिवार्षवचनबलाद्धातुमात्रस्य स्वामिवाचित्वं निर्श्चीयते, इतिकरणेन सम्भ-

* भावप्रकाशिका *

विष्णोः परमं पदम् । तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥ वाचको भगव- च्छब्दस्तस्याद्यस्याक्षयात्मनः" इति तत्पूर्वश्लोके परमात्मन एव प्रस्तुततया अशब्द- गोचरस्यापीत्यत्र श्लोके तच्छब्दः कथमुक्तमात्मानं परामृशेदिति चेत्, सत्यम् ;– 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोयं नोपचारेण अन्यत्र ह्युप- चारतः ॥" इति परमात्मनि भगवच्छब्दस्यौपचारिकत्वासम्भवात्पूर्वोक्तवाक्ययोः परमात्मनो भगवच्छब्दस्य मुख्यार्थत्वप्रतिपादनविरोधाच्च तच्छब्दस्याप्रस्तुतमुक्त- परामर्शित्वं वक्तव्यमितिभावः । ( प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वमिति) तृच्प्रत्ययविशेषयुक्तस्येत्यर्थः । भरतेस्स्वामिनि रूढत्वमित्यत्र भरतेरित्येतदुपलक्षणम् । विभर्तेर्येत्यपि द्रष्टव्यम् ( धातुमात्रस्येति ) यद्यपि डप्रत्यययुक्तस्य भ इत्यस्यैव स्वामि- वाचित्वम्, नतु प्रत्ययविनिर्मुक्तस्य, तथापि तृच्प्रत्ययरहितस्यापीत्यत्र तात्पर्यम् ।

नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥

* श्रुतप्रकाशिका *

र्तृत्वभर्तृत्वे प्रवृत्तिनिमित्ते निष्कृष्योच्येते ; अत एवार्थद्वयान्वित इत्युक्तम् । उत्तरत्र तु प्रवृत्तिनिमित्तत्रये सत्यपि इतिकरणेन तेषामनिष्कृष्टत्वात्प्रवृत्तिनिमित्तत्रयविशिष्टोऽयमेक एवार्थ उक्तः । गकारार्थमाह ( नेतेति ) उपसर्गस्फुटीकृतानामर्थानां धातुलीनत्वादुद्गमयिता गमयिता सङ्गमयितेत्येवंरूपपदानामर्थमाह, नेतेति । स्रष्टेत्यनेन उद्गमयितृशब्दार्थ उक्तः। नेतेति गमयितृशब्दार्थउक्तः, स्थितिकर्त्तेत्यर्थः। गमयितृशब्देन सङ्गमयितृशब्दार्थ उक्तः, स च संहारः, यथा "यस्मिन्निदं सञ्चविचैति सर्वम् "इत्यत्र व्येति समेतीति सर्गसंहारावुच्येते तद्वत्। यद्वा कारण:

* भावप्रकाशिका *

अथवा डप्रत्ययस्य साधुत्वमात्रार्थत्वमेव, अतएव भकारोऽर्थद्वयान्वितः, गकारार्थ इत्येकचनोक्तिरिति द्रष्टव्यम् । ( प्रवृत्तिनिमित्ते निष्कृष्योच्येते इति ) अयमर्थः,— भशब्दस्य सम्भर्तृत्वभर्तृत्वे द्वे अपि प्रवृत्तिनिमित्ततापर्याप्त्यधिकरणे, अतोऽर्थद्वयान्वित इत्युक्तम् । गकारे तु नेतृत्वादीनां न प्रत्येकं पर्याप्त्यधिकरणत्वम्, अपितु मिलितानामेव, यथा कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाजनकत्वानां मिलितानां विध्यर्थत्वम्, अतएव गकारार्थ इत्येकवचनोक्तिरिति । केचित्तु,—सम्भर्तृत्वभर्तृत्वरूपप्रवृत्तिनिमित्ते आश्रयान्निष्कृष्य इतिकरणेनोच्येते, ते च द्वे इति कृत्वा अर्थद्वयान्वित इत्युक्तम्, गकारस्थले इतिकरणाभावेन प्रवृत्तिनिमित्तस्याश्रयान्निष्कर्षाभावात्प्रवृत्तिनिमित्ताश्रयस्यैव ग्रहणे तस्यैकत्वात् गकारार्थ इत्युक्तिरिति भाव इत्याहुः (धातुलीनत्वादिति ) यदि सोपसर्गाणामेव क्रियावाचित्वं तर्हि सोपसर्गाणां भूवादिषु पाठाभावात् धातुसंज्ञाभावप्रसङ्गात्, धात्वधिकारविहितकार्याभावप्रसङ्गात् क्वचिदुपसर्गमन्तरेणापि तदर्थावगमाच्च धातुरेवानेकार्थाभिधायी , प्रादयस्तु प्रकरणादिवद्विशेषस्मृतिहेतवो द्योतकाः, द्योतकापेक्षा च शब्दशक्तिस्वाभाव्यात् क्वचिदेव, यथा हरिशब्दो भेकादावेव प्रकरणादिसापेक्ष इति भावः ( उद्गमयिता गमयिता सङ्गमयितेति ) इदञ्च सृष्टिस्थितिलयक्रमेणोपात्तम्, नतु नेतेत्यादिश्लोकक्रमेणेति द्रष्टव्यम् । ( नेतेति गमयितृशब्दार्थ उक्त इति ) रक्षकत्वमुक्तमित्यर्थः । 'अधिभूर्नायको नेते'त्यादौ रक्षकत्वस्यैव प्रतीतेरिति भावः । गम-

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥"
[1] "ज्ञानशक्तिबलैश्वर्य-वीर्यतेजांस्यशेषतः।

---

* श्रुतप्रकाशिका *

भूतं स्वात्मानं गमयिता, स्वस्मिन् कार्यवर्गस्य लयकर्तेत्यर्थः। उपसर्गाप्रयोगेऽपि अर्थानां धातुलीनत्वादेवं व्याख्यातं भगवता पराशरेण। अथ वकारव्याख्यानात्पूर्वमेव भकारगकारसमुदायस्यार्थमाह (ऐश्वर्यस्येति) समग्रशब्दः सर्वत्रान्वेति, परिच्छिन्नचतुर्मुखाद्यैश्वर्यव्यावृत्त्यर्थः समग्रशब्दः। यशः—गुणवत्ताप्रथा। श्रीः-भोग्यसंपत्। वैराग्यम्—विरक्तिः, परिपूर्णत्वादनादरतेत्यर्थः, यथा 'अवाक्यनादर' इति। मतुप्प्रत्ययस्य प्रसिद्धार्थत्वाद् न तद् व्याख्यातम्। अथ वकारार्थमाह (वसन्तीति) "अन्येष्वपि दृश्यते" इति डप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिः, भूतात्मनि—भूतानामात्मनि। अखिलात्मनि—अखिलशरीरके। यद्वा भूतशब्देन कार्यमुच्यते, तस्यात्मनि. अखिलात्मनि—कार्यानन्तर्भूतानां नित्यमुक्तानामात्मनीत्यर्थः। अथ समुदायशक्तिविषयमर्थमाह (ज्ञानशक्तीति) पाठक्रमे तु 'एवमेष' इत्यादि-श्लोकद्वयानन्तरं 'ज्ञानशक्तिबलैश्वर्ये' त्यादिश्लोकः पठ्यते, तथापि प्रवृत्तिनिमित्तवाचित्वसङ्गतिवशात् 'एवमेष' इत्यादिश्लोकद्वयात्पूर्वं 'ज्ञानशक्ती'त्यादिश्लोक इहोपात्तः। 'उत्पत्तिं प्रलयं चैव'इत्यादिश्लोकस्य प्रस्तुतानुपयुक्तत्वाच्च एवमुपादानं

* भावप्रकाशिका *

यितेत्यस्य समित्युपसर्गमन्तरेणैव संहारार्थप्रकाशकत्वप्रकारं दर्शयति (यद्वा कारणभूतमिति) केचित्तु स्रष्टेत्यस्य स्रष्टृत्वमर्थः, गमयितेत्यस्य गमयितृत्वरूपं रक्षकत्वमर्थः, न तयोर्विवादः, नेतेत्यस्य तु द्विकर्मकत्वात्कारणभूतं स्वात्मानं कार्यवर्गं नेतेति संहर्तृत्वमुच्यते। यद्वा एतस्यापि नेतृशब्दार्थप्रदर्शकत्वमेवेति वदन्ति। (उत्पत्तिं प्रलयं चैवेत्यादिश्लोकस्येति) 'उत्पत्तिं प्रलयं चैव भूतानामागतिं

---

१ विष्णु-पु-६-अं. ५-अ-७९-श्लो.

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

[1] "एवमेष महाशब्दो मैत्रेय! भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

[2] "समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः ।

---

* श्रुतप्रकाशिका *

कृतम् । भगवच्छब्दवाच्यानि—प्रवृत्तिनिमित्तत्वेन वाच्यानीत्यर्थः । अशेषतः—न प्रत्येकम्, अपितु समुच्चित्येत्यर्थः । अशेषशब्देन षाड्गुण्यावान्तरभिदा रूपं शीलादिगुणजातं च क्रोडीकृतम् । यद्यप्यैश्वर्यवीर्यज्ञानानि पूर्वं कण्ठोक्तानि, तथापि कतिपयसमुदाय्यावापोद्वापप्रयुक्तसमुदायभेदादपुनरुक्तिः, नचात्र समुदायशक्तिः कल्प्यते, येनानुक्तगुणमात्रगोचरता स्यात् वचनबलादेव शक्तिस्वीकारः, पूर्वमक्षरार्थकथनेन भकारगकारवकारा व्याख्याताः । अथ अन् इत्यस्यार्थमाह (विनेति) कश्यपः पश्यको भवतीतिन्यायात् अन्नित्यनेन नेत्युक्तं भवति, निषेध्यं च हेयमित्यर्थः । एवं प्रवृत्तिनिमित्तपौष्कल्याद्भगवत्येव मुख्यवृत्तत्वमाह (एवमिति) महार्थगर्भत्वान्महाशब्दत्वम्, मुक्तात्मव्यावृत्त्यर्थं परमब्रह्मेत्युक्तम् । कथं तत्रैव मुख्यवृत्तत्वम्? अन्यत्रापि तत्प्रयोगो दृश्यत इत्यत्राह (तत्रेति) पूज्यपदार्थोक्तिः—पूज्यानामवयवार्थानामुक्तिः, परिभाषा—रूढिः, ताभ्यां विशिष्टः, अत एव नोपचारेण, मुख्यवृत्त इत्यर्थः । अन्यत्रामुख्यत्वमित्याह (अन्यत्र हीति) मुक्तात्मन्यौपचारिकत्वोक्त्या अर्थान्तरप्रयोगेषु औपचारिकत्वमर्थाद्दर्शितमिति हिशब्दाभिप्रायः, भगवच्छब्दप्रयोगविषयेषु सर्वेषु प्रयोगेऽन्यथासिद्धेऽपि नहि शक्तिभेदकल्पनं युक्तम्, यत्र ज्ञानादयो निरङ्कुशाः स एव मुख्यार्थः, गुणलेशयोगादपि प्रयोगसम्भावादन्यत्र वृत्तिरौपचारिकीत्यर्थः । अथ तस्मिन्नेव योगप्रकरणे उपसंहारेऽपि सविशेषपरवाक्यानि दर्शयन् दिव्यविग्रहत्वं चाह (समस्ता इति) बद्धो मुक्तः कर्मरूपाऽविद्या च शक्तयः,

---

[1] विष्णु-पु. ६-अं. ५-अ. ७६-७७-श्लो ॥ [2] विष्णु-पु. ६-अं. ७-अ. ७०-७१-७२ श्लो.

तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ! ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥ ”

* श्रुतप्रकाशिका *

तत्तदभिमानिदेवताद्वारेण तत्र तासां प्रतिष्ठितत्वम् , यत्रेत्यनुवादस्य पुरोवादसापेक्षत्वात् अस्त्रभूषणाध्याये यथोक्तप्रकारेण पुरोवादाच्च, तद्विश्वरूपवैरूप्यमिति सन्निवेशवैलक्षण्यमुक्तम् , अन्यदिति द्रव्यान्तरत्वमुक्तम्, महदित्यपरिच्छेद्यत्वम् , विलक्षणसन्निवेशस्य सकलेतरविजातीयस्य कथं चिन्तयितुं शक्यत्वमित्यत्राह (समस्तेति ) केन हेतुनेत्यत्राह ( स्वलीलयेति ) लीलायाः प्रयोजनत्वात्तदभिसन्धिर्हेतुः, न तु कर्मणेत्यर्थः। किं प्रयोजनमित्यत्राह ( जगतामिति ) न तु स्वकर्मफलभोगायेत्यर्थः। एतद्विवृणोति ( न सेति ) व्यापिनी—देशनियमरहिता; यथा वैदिकपुत्रानयनादिषु । व्यापनशक्तत्वेऽपि प्रतिबन्धः सम्भवतीत्यत्राह—अव्याहतात्मिका; न तस्याः प्रतिहतिरस्तीत्यर्थः। यद्वा व्यापिनी—सर्वावतारानुगुणा । अव्या-

* भावप्रकाशिका *

गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥ ” इति श्लोकस्येत्यर्थः ( कथं चिन्तयितुं शक्यत्वमित्यत्राहेति ) नन्वस्याः शङ्कायाः ‘ समस्तशक्तिरूपाणि ’ इतिश्लोकेन कथं परिहार इति चेत् ; अत्र केचित्,— देवादिसजातीयरामकृष्णादिविग्रहसजातीयतया सर्वशक्त्याश्रयपरविग्रहस्य चिन्त्यत्वं सम्भवतीति श्लोकाभिप्राय इति । केचित्तु रामकृष्णाद्यवतारस्यैव योगयुक्चिन्त्यत्वं योगयुक्तस्य परविग्रहश्चिन्त्योऽस्त्विति मन्यन्ते । केचित्तु परविग्रहस्य समस्तशक्तिरूपसर्वविग्रहकारणत्वप्रतिपादनप्रवृत्तत्वेन एतच्छङ्कानिवर्तकत्वाभावादियमवतारिका चिन्तनीयेति मन्यन्ते। लीलायाः पश्चाद्भाविस्वेन प्रयोजकत्वेन कथं हेतुत्वमित्याशङ्कयाह ( तदभिसन्धिर्हेतुरिति ) लीलाशब्दस्तदभिसन्धिलक्षक इति भावः । ( किं प्रयोजनमित्यत्रेति ) लीलामात्रस्य प्रयोजनत्वे असमञ्जसन्यायप्रसङ्गात् लीलामात्रं न प्रयोजनं

[1] "एवम्प्रकारममलं नित्यं व्यापकमक्षयम्।

* श्रुतप्रकाशिका *

हता--देशकालवस्तुकृतप्रतिबन्धरहिता ; एवं प्रत्यस्तमितेतिश्लोकस्य परमात्मपरत्वाभ्युपगमेऽपि निर्विशेषपरत्वनिराचिकीर्षया उपक्रमोपसंहारयोस्तस्मिन्नेव प्रकरणे सविशेषपरत्वं दर्शितम्। अथास्य श्लोकस्य परिशुद्धजीवात्मस्वरूपविषयत्वं प्रत्यस्तमितभेदादिपदानां कतिपयविषयत्वं च विवक्षुस्तदर्थं परमात्मविषयभेदनिषेधादीनां कतिपयविषयत्वाभिधायीनि वाक्यानि दर्शयिष्यन् परमात्मविषयकतिपयभेदनिषेधपरवचनोदाहरणेन मुक्तात्मविषये किमायातमिति शङ्कायां मुक्तस्य परमात्मसाम्यप्रतिपत्तये मुक्तगुणान् परमात्मन्यतिदिशन्तं श्लोकं दर्शयति (एवम्प्रकारमिति) एतच्छ्लोकोदाहरणेन 'प्रत्यस्तमिते'त्यादिश्लोकानन्तरं पूर्वपक्षे पठितस्य

* भावप्रकाशिका *

भवितुमर्हतीतिभावः। (परमात्मन्यतिदिशन्तं श्लोकमिति) ननु देवदत्तो गुणशून्यस्तद्वदेव यज्ञदत्तोपीत्युक्ते यज्ञदत्ते मानान्तरावगतस्यान्नदातृत्वादिगुणविशेषस्यापि देवदत्ते सिद्ध्यदर्शनात् परमात्मनि मानान्तरसिद्धस्य धर्मान्तरस्य मुक्तात्मन्यापादने किं प्रमाणम्? तथाहि सति वैकृतवैशेषिकधर्माणामपि प्रकृतौ प्राप्तिप्रसङ्गात्। किञ्च तद्भावभावमापन्न इत्यादीनां मुक्तात्मनि कण्ठरवेण परमात्मसाधर्म्यप्रतिपादकानां प्राकरणिकानामेव वचनानामुपन्याससम्भवे परमात्मसाम्यापेक्षकस्य परमात्मनि मुक्तधर्मातिदेशकवचनस्य उपन्यासश्शिरोवेष्टनेन नासिकाग्रहणन्यायमनुसरतीति चेन्न, असति बाधके अस्यापि न्याय्यत्वात्. देवदत्त इव यज्ञदत्तः पुत्रवानित्युक्ते यज्ञदत्तस्य चत्वारः पुत्रा इत्युक्ते देवदत्तस्यापि तावन्तः पुत्रा इति प्रतीतेरनुभवसिद्धत्वादितिभावः। केचित्तु भाष्ये एवम्प्रकारमितिश्लोकोपन्यासस्समस्तहेयरहित्यप्रमाणविवक्षयैव कृतः। तथोदाहृतवचनार्थानुक्रमणभाष्ये परं ब्रह्म स्वभावतो निरस्तनिखिलदोषगन्धमित्यादि वक्ष्यति। ननु 'प्रत्यस्तमितभेद'मित्यस्यार्थान्तरकथनार्थम्। 'यो मामजमनादिञ्च' इत्यारभ्य पारमार्थिकमेवेति ज्ञायत इत्यन्तस्य भाष्यसन्दर्भस्य सामान्यतः स्मृतिपुराणप्रतिपाद्यार्थविशेषनिर्णयमात्रार्थप्रवृत्तत्वेन प्रत्यस्तमितभेदमिति श्लोकविशेषार्थनिर्णयमात्रप्रवृत्तत्वाभावात्, विशिष्य तेषां वचनानामन्यथाकरणस्य

---

१ विष्णु-पु-१-अं-२२-अ. ५३-श्लो.

* श्रुतप्रकाशिका *

'ज्ञानस्वरूप'मित्यादेः प्रथमांशोपक्रमश्लोकस्य चतुःश्लोक्याश्च सविशेषपरत्वप्रतिपादनाय प्रथमांशोपसंहारेऽपि सविशेषपरत्वं दर्शितं भवति । उपसंहारवचनोपादानमुपसंहारस्य बुद्धिस्थत्वात् क्रियते; एवम्प्रकारम्—मुक्तात्मानं प्रति 'निर्व्यापारमनाख्येयम्'इत्यादिना यः प्रकार उक्तस्तदुपेतमित्यर्थः, एवं भगवति मुक्तात्मगुणातिदेशः कृतः । भेदराहित्यस्य सत्तामात्रत्वस्य वचसामगोचरत्वस्य च मुक्तगुणस्य निर्व्यापारमित्यादिनोक्तस्य भगवत्यतिदिष्टत्वाद्भगवति च तेषां निषेधानां

* भावप्रकाशिका *

पूर्वोत्तरपर्यालोचनया उत्तरत्र करिष्यमाणत्वादिति वदन्ति। ( सविशेषपरत्वं दर्शितं भवतीति ) नित्यत्वव्यापकत्वादीनां प्रतिपादकस्य श्लोकस्य सविशेषपरत्वमितिभावः । ( उपसंहारस्य बुद्धिस्थत्वादिति ) समस्ताश्शक्तयश्चैता' इत्यादीनां योगोपसंहारगतत्वेन उपसंहारसाम्येन तस्यैव बुद्धिस्थत्वादित्यर्थः । ( निर्व्यापारमनाख्येयमित्यादीति) " निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् । आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् । प्रशान्तमनसं शुद्धं दुर्विभाव्यमसंस्थितम् । विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् । तत्र ज्ञाननिरोधेन योगिनो यान्ति ये लयम् । संसारकर्षणादेते यान्ति निर्बीजतां द्विजः । एवंप्रकारममलं नित्यं व्यापकमक्षयम् । समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्। " इति श्लोकक्रमः । ( एवं भगवति मुक्तात्मगुणातिदेशः कृत इति ) ननु निर्व्यापारमित्यादिकमपि परमात्मस्वरूपपरमेवास्तु, एवंप्रकारमित्यपि नातिदेशकम्, अपितूक्तोपसंहाररूपमेवास्तु । नच पूर्वत्र विष्णोः परमं पदमिति व्यतिरेकप्रतीतेरेवंप्रकारमितिश्लोके 'विष्ण्वाख्यं परमं पदम्' इति प्रतिपादनात् भेदोऽवश्यं वक्तव्य इति वाच्यम्; विष्णोः परमं पदमित्यत्र परशब्दस्य स्वरूपपरत्वेन घटस्य स्वरूपमितिवदुपपत्तेः, अन्यथा "श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्। तदेव भगवद्वाच्यं स्वरूपं परमात्मनः' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्यादावगतेः । नच पूर्वश्लोकस्यापि ब्रह्मविषयत्वे "एवम्प्रकारममलं नित्यं व्यापकमक्षयम्"इति व्यापकत्वादिकीर्तनवैयर्थ्यम् । व्यापकत्वादीनां व्याप्तिमात्रमनूपममित्यादिनोक्तेरिति वाच्यम्; तस्योभाभ्यां समाधेयत्वात्, अत एव प्रत्यस्तमितभेदमित्यस्यापि न मुक्तपरत्वम्, तत्र हि

समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥"

[1] "परः पराणां परमः परमात्माऽऽत्मसंस्थितः ।

* श्रुतप्रकाशिका *

कतिपयविषयत्वस्य प्रामाणिकत्वाच्च ते निषेधा मुक्तात्मन्यपि तथाविधा इति कतिपयविषयत्वं सिद्धमिति भावः । अथ परमात्मनोऽधिकान् गुणानाह ; अमलम्—मलप्रतिभटम्, सोपाधिकहेयविरोधिनमित्यर्थः । नित्यम्—उक्ताकारेण नित्यम्, मलप्रतिभटत्वम् नित्यमित्यर्थः । व्यापकम्—स्वरूपेण व्यापकम् । अक्षयम्—स्वत एव धर्मतोऽपि विकाररहितम्, मुक्तस्य पूर्वावस्थायां ज्ञानसङ्कोचविकासरूपविकारो विद्यते, नित्यसिद्धानामपि तथात्वं परायत्तमिति तद्व्यवच्छेदः । समस्तहेयरहितम्—पूर्वं हेयप्रत्यनीकत्वमुक्तम्, अत्र हेयराहित्यमुक्तम् ; स्वतो हेयाभावोऽपि मुक्तस्य नास्ति, परमात्मप्रसादाधीनत्वात्तस्य । पद्यत इति पदम्, दिव्यात्मस्वरूपं परमपदशब्दस्य दिव्यलोके मुक्तात्मनि च प्रयोगात्तद्व्यावृत्त्यर्थं विष्ण्वाख्यमित्युक्तम् । अथ प्रथमांशोपक्रमेऽपि सविशेषपरत्वं दर्शयति (परः पराणामिति) अनेन शास्त्रोपक्रमस्यापि सविशेषपरत्वमुक्तं भवति, अनेन प्रत्यस्तमितभेदमित्यादिपदानां कतिपयभेदनिषेधपरत्वं च सिद्धमिति त्रिविधं प्रयोजनम् । अनेन 'परः पराणा'मित्यादिग्रन्थजातस्य 'अविकाराये'त्यादिसङ्ग्रहश्लोकविवरणरूपत्वात् 'ज्ञानस्वरूप'मित्यादिश्लोकं प्रत्युपक्रमत्वमर्थक्रमेण सिद्धमिति तस्यापि सविशेषपरत्वसिद्धिः । यद्वा प्रथमांशोपक्रमोपसंहारयोः

* भावप्रकाशिका *

प्रकरणे वेदान्तवेद्यस्यादित्यवर्णस्य मूर्तस्य शुभाश्रयत्वमुच्यते, तत्र च मूर्तस्यैव शुभाश्रयत्वं वदता दिव्यात्मस्वरूपस्यालम्बनत्वं हि प्रथमतः प्रतिक्षेप्तव्यम्, ननु जीवस्वरूपस्य परमात्मनो ध्येयत्वे सिद्धे परमात्मनः परिशुद्धस्वरूपे ध्येयत्वचिन्ताऽवतरति, ततश्च तन्निराकरणमन्तरेण शुद्धजीवस्वरूपध्येयत्वनिराकरणे अपेक्षितपरित्यागोऽनपेक्षितस्वीकारश्च स्यादिति चेन्न, अस्याक्षेपस्य द्वैतपर्यवसितत्वेन पार्थक्येन निरसनीयाभावात्, अद्वैतविषये च पूर्वाचार्यैरेव पराकृतत्वेनेदानीं निरसनीयांशाभावादुपरम्यते । पाठक्रमाधीनोपक्रमत्वं हि मुख्यम्, न त्वर्थक्रमाधीनमित्य-

[1] विष्णु- पु- १- अं- २- अ- १०. ११. श्लो.

* श्रुतप्रकाशिका *

सविशेषपरत्वादुपक्रमोपक्रमभूतस्यापि 'ज्ञानस्वरूप'मितिश्लोकस्य महावाक्यस्वारस्य-विरोधो न न्याय्य इति तस्यापि सविशेषपरत्वं सिध्यति। यद्वा नमस्कारश्लोकस्य शास्त्रोपक्रमशेषभूतत्वात् तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति सिध्यति, उपक्रमोपक्रमभूतनमस्कारश्लोकार्थानुगुणं 'परः पराणा'मित्यादेरर्थो वर्णनीय इति चेत्, न, तस्याप्युपक्रमभूतप्रश्नोत्तरवरलाभकथनश्लोकानुगुणं तदर्थस्य वाच्यत्वादित्यभिप्रायः। अत्र ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्ध्यर्थं वेदान्तेषु 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्यैरानन्त्यमुक्तम्; तच्च त्रिविधपरिच्छेदराहित्यम्, नहि देशकालादिभिः परिच्छिन्नानां घटादीनां कृत्स्नस्य सर्वविधकारणत्वं दृष्टम्, कालत्रयवर्तिकार्यजातकारणत्वे सर्वदेशगतकार्यकारणत्वे च देशतः कालतोऽप्यपरिच्छेदावपेक्षितौ, उपादानत्वसिद्ध्यै वस्त्वपरिच्छेदोऽपेक्षितः, नहि वस्तुतः परिच्छिन्नः कुलाल उपादानं भवति, मृत्पिण्डकुलालयोः सामानाधिकरण्यासम्भवात्; अतः कृत्स्नकारणत्वसिद्ध्यर्थं त्रिविधपरिच्छेदराहित्यं विस्तरेण विवक्षुः 'परः पराणा'मि'त्यर्धेन तत् सङ्ग्रहेण प्रतिजानीते—परः पराणां परम इति। अनेन कालानवच्छेदः सिद्धः, अधिक-

⁂ भावप्रकाशिका ⁂

परितोषादाह (यद्वा प्रथमांशोपक्रम इति=महावाक्यस्वारस्य विरोध इति) "प्राणस्तथानुगमात्" इत्यत्र महावाक्यविरुद्धप्रक्रमस्य दुर्बलत्वप्रतिपादनादिति भावः। (तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति) मुख्याया अपि दीक्षणीयायाः प्रधानसोमयागविरोधात् न पूर्वकालानुग्रह इति 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यत्र निर्णीतत्वादिति भावः। (उपक्रमोपक्रमभूतेति) विधिशेषभूतस्याप्यर्थवादस्य प्रक्रमस्थत्वेन प्राबल्यमिति उपक्रमाधिकरणनिर्णीतत्वादितिभावः। (प्रश्नोत्तरवरलाभेति) 'सोऽहमिच्छामि धर्मज्ञ! श्रोतुं त्वत्तो यथा जगत्। बभूव भूयश्च यथा महाभाग! भविष्यति। प्रवृत्ते च निवृत्ते च कर्मण्यस्त्वमला गतिः। देवतापारमार्थ्यञ्च यथावद्वेत्स्यते भवान्।' इत्यादिना जगत्स्थितिक्रमतत्प्रकारादिप्रश्नतदुत्तरग्रन्थनिर्माणानुगुणवरदानाद्यसङ्गतिप्रसङ्गात्, निर्विशेषविषयत्वे किमधिष्ठानमितिप्रश्नस्य निर्विशेषमधिष्ठानमित्येव उत्तरं स्यादिति भावः। तृतीयातत्पुरुषाश्रयणे आत्मशब्दस्य भावप्रधानत्वाश्रयणं क्लिष्टम्. संस्थितशब्दस्य विशिष्टत्वार्थाश्रयणञ्च क्लिष्टम्।

रूपवर्णादिनिर्देश–विशेषणविवर्जितः ॥

* श्रुतप्रकाशिका *

कालवर्तित्वस्य परशब्दवाच्यत्वात् । परमात्मेति देशापरिच्छेद उक्तः । आप्नोतीति ह्यात्मशब्दव्युत्पत्तिः । आत्मसंस्थितः–सर्वेषामात्मत्वेन सर्ववस्तुभिर्विशिष्टः । यद्वा आत्मत्वेन संस्थिततया सर्वशरीरकत्वात्स्वस्मिन् पर्यवस्थितः । स्वनिष्ठः अन्यत्सर्वं तन्निष्ठम् , शरीरतया विशेषणत्वात् , अतः सर्वपर्यवसानभूमिस्स्वनिष्ठ इति वस्त्वपरिच्छेद उक्तः । सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः, इदमिदं न भवतीति हि वस्तुपरिच्छेदः । यद्वा नित्यत्वविभुत्वव्यतिरिक्तगुणैस्समाभ्यधिकरहितत्वं वस्त्वपरिच्छेदः, स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठानामन्येषां समत्वाभ्यधिकत्वासम्भवादात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः । एवं संक्षिप्तमर्थमुपपादयति ( रूपेत्यादिना ) तत्र कालापरिच्छेदं प्रथमं विवक्षुः कालपरिच्छिन्नेषु वर्तमानं पञ्चकल्पनान्वितत्वं ब्रह्मणि नास्तीत्याह–रूपेति । रूपशब्देन जातिरुच्यते, जातिगुणौ च रूपिणां रूपे इति हि नीतिविदः, वर्णशब्दो रूपाख्यगुणविशेषपरः । आदिशब्देन गन्धरसादिः, आसनशयनादिक्रिया , विपाण्यावयववत्त्वं च विवक्षितम् । रूपवर्गादीति पाठे रूपशब्दो नीलपीतत्वादिगुणपरः, वर्गशब्दो देवमनुष्यादिवर्गपरः, जातिपर इत्यर्थः । तन्निबन्धनस्तद्विषयो निर्देशशब्दः, शब्दवाच्यास्त

* भावप्रकाशिका *

सर्ववस्तुरूपविशेषणप्रतिपत्तिगौरवञ्चेत्यस्वरसादाह ( यद्वा आत्मत्वेन संस्थिततयेति ) अत्रात्मसंस्थित इत्यस्य आत्मनि संस्थित इति सप्तमीतत्पुरुषस्तदर्थोपपादकः, आत्मत्वेन संस्थिततया सर्वशरीरकत्वादित्यंश इति द्रष्टव्यम् . सर्वपर्यवसानभूमिः स्वनिष्ठ इति छेदः, इतिवस्त्वपरिच्छेद उक्त इति ग्रन्थ उक्तपक्षद्वयशेषः । द्विविधो हि वस्त्वपरिच्छेदः, सर्ववस्तुसामानाधिकरण्यार्हत्वं गुणैस्समाभ्यधिकराहित्यञ्चेत्यभिप्रेत्याह ( सर्ववस्तुसामानाधिकरण्यार्हत्वमित्यादिना=समत्वाभ्यधिकत्वासम्भवादित्यन्तेन ) देशकालापरिच्छेदयोः परः पराणाम् , परमात्मेत्येताभ्यां सिद्धत्वात् नित्यत्वविभुत्वव्यतिरिक्तगुणैरित्युक्तम् ( पञ्चकल्पनान्वितत्वमिति ) संज्ञाजातिगुणक्रियावयवलक्षणपञ्चकल्पनान्वितत्वमित्यर्थः । ( शब्दवाच्यास्त एव विशेषणानीति ) रूपवर्णादेर्निर्देशो रूपवर्णादिनिर्देशः , षष्ठीतत्पुरुषः , ततो निर्देशविषयो विशेषणं

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥
सर्वत्राऽसौ समस्तं च वसत्यत्रेति वै यतः ।

* श्रुतप्रकाशिका *

एव विशेषणम्, तैर्विवर्जितः । यद्वा रूपवर्णादितद्वाचिशब्दरूपैर्विशेषणैर्विवर्जितः, एवमनित्यत्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति कर्मकृतरूपादिनिवृत्त्या तद्व्याप्यकालपरिच्छेदनिवृत्तिरित्यर्थः । यद्वा अनित्यत्वव्याप्यकर्मकृतरूपाद्यभावान्नानित्यत्वं ब्रह्मण्यनुमातुं शक्यमित्यर्थः, । अनेन 'प्रत्यस्तमितभेद'मित्यस्य पदस्य विषयो दर्शितः । अथानित्यत्वव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्तये तद्व्यापकविकाररााहित्यमाह ( अपक्षयेति ) जायते अस्तीत्यवस्थाद्वयं जन्मशब्देन विवक्षितम्, उत्पत्तिस्थितिनाशानामेकैकत्र विधाद्वयेन विकारषट्कसिद्धिः, तद्विवर्जितत्वात् सदाऽस्तीति वक्तुं शक्यते । सदाशब्देन कादाचित्कास्थिरत्वव्यावृत्तिः । नतूत्पद्यत इत्यादिशब्दैरिति केवलशब्दाभिप्रायः, अनेन सत्तामात्रमित्यस्य विषयो दर्शितः । अगोचरं वचसामित्यस्य च विषयो दर्शितो भवति, रूपवर्णादिप्रवृत्तिनिमित्ताभावादुत्पत्त्यादिप्रवृत्तिनिमित्ताभावाच्च कल्पनाविकारवाचिशब्दैर्न वक्तुं शक्य इति तस्य पदस्यार्थ इत्यभिप्रायः । अगोचरं वचसामिति सर्वशब्दागोचरत्वमुच्यते चेत्, वचसामगोचरं सत्तामात्रमित्यपि वक्तुं न शक्यते । अथ देशापरिच्छेदं नामनिर्वचनमुखेनाह ( सर्वत्रेति ) ब्रह्मण ईश्वरातिरिक्तत्वनिषेधार्थं देवतान्तरव्युदासार्थं च

७ भावप्रकाशिका ७

निर्देशविशेषणमिति मध्यमपदलोपिसमास इति भावः । अस्मिन् पक्षे निर्देशविशेषणपदं व्यर्थम्, तेन विनैव तदर्थप्रतीतेरित्यस्वरसाद्वन्द्वमभिप्रेत्याह ( यद्वा रूपवर्णादितद्वाचिशब्दरूपैरिति ) अनित्येषु रूपादिषु रूपादिमत्त्वाभावात् नानित्यत्वव्यापकं रूपादिमत्त्वमित्यस्वरसादाह ( यद्वा अनित्यत्वव्याप्येति ) ( जायते अस्तीत्यवस्थाद्वयमिति ) अत्र केचित्,— इतराणि हि वस्तूनि अस्ति जायत इत्यादिभिष्षड्भिश्शब्दैर्व्यवह्रियन्ते, ब्रह्म तु अस्तीतिशब्देनैव सर्वदा व्यवह्रियते, नतु तद्व्यतिरिक्तैः पञ्चभिरित्युक्तेरुचितत्वादवस्थाद्वयापरिग्रहेपि न दोष इति वदन्ति ।

ततः स वासुदेवेति विद्वद्भिः परिपठ्यते"॥
[1] "तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥"

* श्रुतप्रकाशिका *

नामनिर्वचनमुखेन तदुक्तिः, औणादिकप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिर्वासुदेवशब्दस्योच्यते सर्वत्रेति । वेदान्तेषु परब्रह्मणो हि निर्विकारत्वादिकमुक्तम्, तत्कथं वासुदेवस्योच्यत इत्यत्राह (तद्ब्रह्मेति) "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इतिवत् तदितिनिर्देशः, निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति हि शाब्दाः । नित्यमिति कार्यमात्रव्यावृत्तिः, अजमक्षरमव्ययम् एकस्वरूपमिति सविकारनित्यप्राधनव्यावृत्तिः, एकस्वरूपशब्देन वृद्धिपरिणामराहित्यं विवक्षितम्, हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः, सदेति मुक्तव्यावृत्तिः, परममिति नित्यसिद्धव्यावृत्तिः । यद्वा एकरूपमिति बद्धव्यावृत्तिः, सदेत्यादिना मुक्तव्यावृत्तिरिति; एवं स्वव्यतिरिक्तसमस्तवस्तुविलक्षणत्वेनोपनिषत्सूक्तं ब्रह्म वासुदेव एवेत्यर्थः । त्रिविधापरिच्छेदवाचिनी श्रुतिरपि देवताविशेषं निरचिनोदनन्तमिति । अनन्तशब्दो योगरूढः, अतो नारायणादिशब्दपर्यायस्त्रिविधानन्त्ययोगिनि भगवति मुख्ये वर्तते । 'सत्यज्ञाना'दिवाक्ये ऽनन्तमिति पदं पुंल्लिङ्गं द्वितीयान्तम्। यो वेदेति वेदनशब्देनान्वयात्, प्रथमान्तत्वे तद्यो वेदेति तत्पदाध्याहारः स्यात् वाक्यभेदश्च स्यात्; अतस्तत्र यथोक्त एवार्थः, तस्मात्तदनुसारेणात्रापि अपरिच्छेदकथनसमये देवताविशेषो निर्णीतः । वस्त्वपरिच्छेदमाह (तदेवेति) सर्वमेवैतदिति व्यक्ताव्यक्तपुरुषकालसमुदाय उच्यते, व्यक्ताव्यक्त-

* भावप्रकाशिका *

(औणादिकप्रत्ययस्येति) 'उणादयो बहुलम्' इति बहुलग्रहणादिति भावः ।
(निरचिनोदनन्तमिति) 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्रानन्तमिति श्रुतिरित्यर्थः ।

1 विष्णु- पु. १- अं. २- अ. १३-१४- श्लो.

[1] "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते॥"

* श्रुतप्रकाशिका *

स्वरूपमेतत् सर्वं तद् ब्रह्मेत्यर्थः, अनेन वस्त्वपरिच्छेद उक्तः । सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः, सर्ववस्तुसामानाधिकरण्यार्हत्वेनैव चिदचिच्छरीरकत्वहेतुभूतव्यापनभरणादिगुणतः समाभ्यधिकराहित्यसिद्धेश्च वस्त्वपरिच्छेदसिद्धिः, नहि ब्रह्मव्यतिरिक्तस्य कस्यचित् समस्तचिदचिच्छरीरकत्वसम्भवः, एवं शास्त्रोपक्रमे वासुदेवाख्यमुभयलिङ्गं वस्तु प्रतिपाद्यमुक्तम् । शास्त्रोपसंहारे च तथोक्तमिदं दर्शयति ( प्रकृतिर्येति ) परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात्तद्व्यावृत्त्यर्थं साक्षात्परमात्मलक्षणं जगत्कारणत्वमुक्तं— लीयेते परमात्मनीति । स चेश्वरानतिरिक्त इति ज्ञापनार्थः परमेश्वरशब्दः । ईश्वरश्च न देवतान्तरमितिज्ञापनाय विष्णुनामेत्युक्तम् । अत्र परमात्मा आधारः परमेश्वर इति पदैः शरीरिलक्षणं स्पष्टम्; एवं शास्त्रोपक्रमोपसंहारयोरवान्तरप्रकरणोपक्रमोपसंहारयोश्च हेयप्रत्यनीककल्याणगुणास्पदं नारायण एव परं ब्रह्मेति प्रतिपाद्यत इति दर्शितम्। अथाविद्यासम्बन्धादयश्च ब्रह्मण एव हि प्रतिपाद्यन्ते, तत्कथं यथोक्त-

ॐ भावप्रकाशिका ॐ

( परमात्मशब्दस्य क्वचिज्जीवेपि प्रयोगदर्शनादिति ) ' अभेदव्यापिनो वायोस्तथासौ परमात्मनः " इत्यादौ परमात्मशब्दस्य क्वचिज्जीवेपि प्रयोगदर्शनात् । ' प्रकृतिर्या मयाख्याते'तिश्लोकानुपन्यासेनैव ' परमात्मा च सर्वेषामाधारः परमेश्वरः ' इति श्लोकोक्तौ जीवस्यापि परिग्रहप्रसङ्गात् लयाधारस्य साक्षात्परमात्मन एव परमेश्वरत्वविष्णुनामत्वादिकं प्रतिपादनीयमित्यभिप्रेत्य लयाधारत्वं प्रकृतिर्या मयाख्यातेति पूर्वश्लोके वर्णितम् । ततश्च प्रकृतिपुरुषौ यस्मिन् परमात्मनि लीयेते स परमात्मा सर्वाधारः परमेश्वरो विष्णुनामा वेदान्तप्रतिपाद्य इति श्लोकद्वयैकवाक्यतयेति

१ विष्णु- पु- ६- अं. ४- अ. ३९-४०- श्लो.

[1] "द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्त्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥
अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥

* श्रुतप्रकाशिका *

स्वरूपस्य ब्रह्मण उपपद्यत इति शङ्कायां 'काठिन्यवान् यो बिभर्ती'तिवत् द्वारद्वारिभावेनोपपद्यत इति वक्तुं परमात्मनो जीवानाञ्च आत्मशरीरभावेन सम्बन्धं तेषामविद्यासम्बन्धादिकं च वक्ष्यन् प्रथमं जीवब्रह्मणोः शरीरशरीरिभावरूपसम्बन्धं दर्शयति (द्वे रूपे इत्यादिना) मूर्तं चामूर्त्तमेव चेति बद्धश्च मुक्तश्चेत्यर्थः । एतद्विवृणोति (क्षराक्षरस्वरूप इति) ज्ञानसङ्कोचात्मकक्षरणवदसङ्कुचितज्ञानं चेत्यर्थः । सर्वभूतेषु च स्थिते– 'अर्हार्थे क्तः' सर्वभूतस्थित्यर्हे, सूक्ष्मतरतया व्यापनक्षमे इत्यर्थः । यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः, मुक्तस्य तु धर्मभूतविशुज्ञानद्वारेणेति । अक्षरं तत्परं ब्रह्मेति तन्मुक्तस्वरूपमक्षरम्, क्षरं सर्वमिदं जगत् इदं बद्धस्य रूपं क्षरमित्यर्थः । रूपत्वं विशिनष्टि (एकदेशेति) शक्तिः– अपृथग्भूतं कार्योपयोगिविशेषणम्, एकदेशस्थितस्य विस्तारिणीति विशेषणद्वयेन असङ्कीर्णस्वभावत्वमुक्तम्, अस्मिन् श्लोके अखिलं जगदिति चिदचिदात्मकं जगदुच्यते तुल्यन्यायत्वादक्षरस्यापि शक्तित्वसिद्धिः । यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः,

* भावप्रकाशिका *

भावः । एतेन लीयेते इत्यनेन कथं जीवव्यावृत्तिरितिशङ्का निरस्ता । (काठिन्यवान्यो बिभर्तीतिवदिति) 'काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः' इत्यत्र परमात्मस्वरूपे भूमिद्वारा काठिन्यवदित्यर्थः । (अर्हार्थे क्त इति) बहुलग्रहणादिति भावः । एतदस्वरसादेवाह (यद्वा बद्धस्य स्वरूपेणेति) बद्धजातीयस्येत्यर्थः । (असङ्कीर्णस्वभावत्वमुक्तमिति) परस्परासङ्कीर्णस्वभावाग्निज्योत्स्नादृष्टान्तबलेन दार्ष्टान्तिकेपि तथासिद्ध्यतीति भावः । (चिदचिदात्मकं जगदुच्यत इति) गच्छति नश्यतीतिव्युत्पत्त्या जगच्छब्दस्य विनाशिमात्रपरत्वेन मुक्तपरत्वासम्भवेपि तुल्य-

[1] विष्णु-पु- १-अं. २२- अ. ५५-५६-५७ श्लो.

* श्रुतप्रकाशिका *

त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात्तत्समानार्थत्वाज्जगच्छब्दस्य अखिलशब्दस्य सङ्कोचकाभावाच्च । क्षरं सर्वमित्यत्र क्षरसामानाधिकरण्यमपवादः, इह तदभावादक्षरस्याप्यभिधानमुपपद्यते, इदंशब्दस्य प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते । ननु, अक्षरक्षरशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ, परब्रह्मशब्दमुख्यार्थसिद्धेः; अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात् जगतो ज्योत्स्नास्थानीयत्वञ्चोपपद्यते, प्रभाया शीर्णावयवत्वेन अग्निकार्यत्वोपपत्तेः। नैवम्,--ब्रह्मणो रूपे इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात्, स च कार्यकारणयोर्ब्रह्माव्यतिरिक्तत्वाभावात्, यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते तदा मूर्तामूर्तशब्दस्वारस्यभङ्गः । भावप्रधानत्वाविवक्षायां रूपशब्दसामानाधिकरण्यायोगः। यद्युच्येत ब्रह्मणो द्वे रूपे ब्रह्म हि मूर्तममूर्तं चेति तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषः स्यात्, षष्ठ्यन्तब्रह्मशब्दस्य मूर्तामूर्तशब्दसामानाधिकरण्यायोगात् । किञ्च सर्वभूतेषु च स्थिते इति चानुपपन्नम्; सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यस्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात् कारणस्यापि कार्यादनन्यतया स्ववृत्ति-

ॐ भावप्रकाशिका ॐ

न्यायतया मुक्तस्यापि ग्रहणं सिध्यतीतिभावः । ( ब्रह्मशब्दानामेकप्रकरणस्थानामिति ) "द्वे रूपे ब्रह्मणस्तस्य' 'परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत्" इत्यादीनां ब्रह्मपरत्वात् 'अक्षरं तत् परं ब्रह्म' इतिपरशब्दसमानाधिकृतब्रह्मशब्दस्य जीवेऽत्यन्तास्वारस्याच्चेति भावः । ननु क्षराक्षरशब्दाभ्यां कार्यकारणावस्थब्रह्मपरामर्शे कार्यकारणभावानापन्नपरस्परभिन्नाग्निज्योत्स्नादृष्टान्तासम्प्रतिपत्तिरित्याशङ्क्याह ( जगतो ज्योत्स्नास्थानीयत्वञ्चेति ) ( सचेति ) व्यतिरेकनिर्देशस्वारस्यभङ्ग इत्यर्थः । ननु रूपशब्दस्स्वरूपपरोऽस्तु, ब्रह्मणो द्वे स्वरूपे मूर्तामूर्ते इत्येवं किं न स्यात् ? ततश्च न भावप्रधानत्वं विवक्षणीयम्, नापि षष्ठ्यस्वारस्यमित्याशङ्क्याह ( भावप्रधानत्वाविवक्षायामिति ) स्वरूपरूपगुणविभूत्यादिषु स्वरूपरूपशब्दयोर्भेदेनोपात्ततया स्वरूपशब्दास्वारस्यप्रसङ्गेन रूपशब्देन स्वरूपपरिग्रहासम्भवात् भावप्रधानत्वमवश्यं विवक्षणीयम्, अतो मूर्तामूर्तशब्दास्वारस्यमिति भावः । ( यद्युच्येत ब्रह्मणो द्वे रूप इति) प्रतिज्ञाय ब्रह्म मूर्तामूर्तञ्चेति कथिते मूर्तामूर्त-

परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ "

* श्रुतप्रकाशिका *

प्रसङ्गाच्च । अवस्थाद्वयस्य सर्वभूतस्थितिरिति च न वाच्यम् , धर्मिपर्यन्तक्षराक्षर-शब्दसामानाधिकरण्यायोगात् तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात् अवस्थावद्वाचि-जगच्छब्दब्रह्मशब्दसामानाधिकरण्यायोगाच्च , तस्मिन् सोढेऽपि कारणावस्थायाः कार्ये विद्यमानत्वायोगाच्च शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः । उपचारतोऽपि कार्योपयोगिविशेषणं च शक्तिशब्देन व्यपदेशमर्हति कार्योपयोगि-विशेषणत्वस्य सामान्यात् . शक्तिर्हि शक्तं प्रत्यपृथग्भूतं कार्योपयोगिविशेषणम् , कार्यं तु न कारणस्यापृथग्भूतं विशेषणं कार्योपयोगि च भवति , कार्यकारणयोरनन्य-त्वात्स्वस्य स्वयमेव विशेषणत्वायोगात् । कार्यत्वं विशेषणमिति चेत् , सत्यम् ; तथापि धर्मिवाचिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधि-करण्यमुपचारतो ऽपि नोपपद्यते, कार्योपयोग्यपृथग्भूतविशेषणं शक्तिरिति मुख्यत्व-मस्मन्मते सम्भवेत् । क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैघट्यञ्च स्यात् ; तच्च ज्योत्स्नाया विशीर्णावयवत्वाभावेनाग्निकार्यत्वाभावात् । न च " क्षरं प्रधानममृताक्षरं हरः " इति प्रयोगानुसारेण चेतनाचेतनपरत्वं युक्तम् । अचिदंशस्य स्वस्मिन् स्वप्रवृत्तिप्रस-ङ्गेन सर्वभूतस्थित्यनुपपत्तेः चिदचित्सङ्घातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्न-

* भावप्रकाशिका *

त्व एव रूपे कल्प्यत इति भावः । ( धर्मिपर्यन्तक्षराक्षरेति ) क्षराक्षरस्वरूपे मूर्ता-मूर्ते इति सामानाधिकरण्यं न स्यादित्यर्थः । ( अवस्थावद्वाचिजगच्छब्देति ) ' अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ' इत्यत्रावस्थावद्वाचिब्रह्मजगच्छब्दयोः क्षराक्षरशब्दसामानाधिकरण्यायोगाच्चेत्यर्थः । ( शक्तिशब्दस्य कार्यवाचित्वायोगा-च्चेति ) कार्यावस्थब्रह्मवाचित्वायोगाच्चेत्यर्थः । शक्तिशब्दस्य कार्यवाचित्वाभावेपि उपचारेण कार्यपरत्वमस्त्वित्यत आह ( उपचारतोऽपीति ) अपृथक्सिद्धकार्योप-योग्यद्रव्यविशेषणशक्तिशब्दस्य मुख्यार्थः । औपचारिकप्रयोगे तु कार्योपयोगि-विशेषणत्वमात्रं निमित्तमित्यर्थः । केचित्तु अत्र विशेषणपदमपृथक्सिद्धविशेषणपरम् , वाशब्दश्चाध्याहर्तव्यः, ततश्च कार्योपयोगि वा अपृथक्सिद्धविशेषणं वा शक्तिशब्देन व्यपदेशमर्हतीति व्याचक्षते ( मुख्यत्वमस्मन्मत इति ) मुख्यकल्पत्वमित्यर्थः,

[1] "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥

* श्रुतप्रकाशिका *

मिति चेन्न ; समुदायिनोः समुदायनिष्ठत्वानुपपत्तेः । समुदायो हि समुदायिनिष्ठः । उपरितनग्रन्थवैरूप्यं च स्यात्, उत्तरत्र हि "भूप मूर्त्तममूर्तञ्च" इति मूर्त्तामूर्त्तशब्दाभ्यां रूपद्वयं प्रस्तुत्य हिरण्यगर्भादीन् निर्दिश्य "मूर्त्तमेतद्धरेरूपं भावनात्रितयान्वितम्" इति मूर्तशब्दवाच्यरूपस्य भावनात्रयान्वयकथनात् । नह्यचेतनस्य कर्मब्रह्मभावनान्वयः, "सोऽक्षरः परमः स्वराट्" इत्यत्र हीन्द्रादिवद्बिलक्षणवाचित्वात्, 'स स्वराड् भवती'तिवन्मुक्तवाचिस्वराट्छब्दसामानाधिकरण्याच्च अक्षरशब्दो मुक्तात्मपरः, अतस्तदनुरोधेनाक्षरशब्दोऽत्रापि मुक्तात्मपरः । ब्रह्मशब्दार्थवैरूप्यन्तु "तपसा चीयते ब्रह्म' 'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इति श्रुतावपि नानेकोपपत्तिबलाधुज्यते ; अतो यथोक्त एवार्थः । ब्रह्मणोऽविद्यासम्बन्धद्वारभूते जीवात्मन्यविद्यान्वयं दर्शयति ( विष्णुशक्तिरित्यादिना ) सर्वगा—चतुर्मुखादि-

* भावप्रकाशिका *

अत एवोक्तं वेदान्ताचार्यैर्न्यायसिद्धाञ्जने शक्तिनिरूपणे क्षेत्रज्ञाविद्यानां जगतश्च परब्रह्मशक्तित्वव्यपदशोपि गौण्या लक्षणया वेत्युक्तम्. ( भावनात्रयान्वयकथनादिति ) "ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका । सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः । कर्मभावनया चान्ये देवाद्याः स्थावरावराः । हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ॥" इत्युक्तप्रकारेण कर्मभावना ब्रह्मभावनोभयभावनावासनासंस्कार इतियावदिति द्रष्टव्यम् । 'तपसा चीयते ब्रह्मे'ति मुण्डके 'यस्सर्वज्ञस्सर्ववित्' 'यस्य ज्ञानमयं तपः' तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" इत्यत्र ब्रह्मशब्दः प्रधाने प्रयुक्तः, तत्रैव प्रकरणे 'तपसा चीयते ब्रह्म' इत्यत्र ब्रह्मशब्दः परमात्मनि प्रयुक्तः, इदञ्च 'अदृश्यत्वादिगुणको धर्मोक्तेः, स्याच्चैकस्य

[1] विष्णु. पु. ६. अं. ७. अ. ६१-६२-६३. श्लो.

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल! तारतम्येन वर्त्तते ॥"
[1] "प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे! वृतौ संश्रयधर्मिणौ ।

---

* श्रुतप्रकाशिका *

पिपीलिकान्तसर्वशरीरस्था, जातावेकवचनम् । यद्वा धर्मभूतज्ञानेन स्वतः सर्वं व्याप्तुं क्षमा । कर्मणा वेष्टिता—कर्मणा सङ्कुचितज्ञानेत्यर्थः । तर्हि सर्वे अज्ञाः स्युरित्यत्राह ( तयेति ) कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः । सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्वविषयकत्वस्य च प्रामाणिकत्वाद्बद्धावस्थायां सङ्कोचविकासौ सिद्धौ . तत्तारतम्यञ्च "पुंसः शक्त्युपलक्षितः' 'तच्छक्त्या पशवोऽधिकाः" इति स्पष्टीकृतम् । जातीनामप्यपृथक्सिद्धधर्मत्वेन रूपशब्दवाच्यत्वाच्च तद्व्यावृत्त्यर्थं प्रस्तुतं रूपत्वं नियाम्यत्वलक्षणमित्याह ( प्रधानञ्चेति ) चिदचितोः परमात्मनियाम्यत्वधार्यत्वव्याप्यत्वनित्यत्वादेः प्रमाणान्तरागोचरतया विहितत्वान्निषेध्यत्वमयुक्तमिति नियाम्यत्वादिधर्माणां पारमार्थ्येन तदाश्रयभूतयोश्चिदचितोश्च पारमार्थ्यान्नित्यत्वोक्त्या च तयोर्भ्रमविषयत्वासम्भवश्च दर्शितो भवति । नहि धर्मिसत्यत्वेन विना धर्मसत्यत्वं युक्तम्, नापि बाध्यस्य नित्यत्वं युक्तम्, सर्वभूतात्म-

* भावप्रकाशिका *

त्मशब्दव'दित्यादौ स्पष्टम् । सर्वशरीरस्थत्वस्य एकस्मिन् जीवेऽसम्भवाज्जीवमात्रपरत्वे जीवानां बहुत्वात् बहुवचनं प्राप्नोतीत्याशङ्क्याह ( जातावेकवचनमिति ) यथा मनुष्यस्सर्वदेश इत्यादाविति द्रष्टव्यम् । ( तत्तारतम्यञ्चेति ) "अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका । सरीसृपेषु तेभ्योऽन्याप्यधिका च पतत्रिषु । पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः । पशुभ्यो मनुजाश्चापि शक्त्या पुंसः प्रभाविताः । तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ! । शक्रस्समस्तदेवेभ्यस्तश्चापि प्रजापतिः । हिरण्यगर्भश्च ततः पुंसश्शक्त्युपलक्षितः" इत्यादिनेत्यर्थः । ( तद्व्यावृत्त्यर्थमिति ) जातित्वनिबन्धनरूपत्वव्यावृत्त्यर्थमित्यर्थः । ननु विष्णु-

---

१ विष्णु-पु- २- अं. ७- अ- २९-३०-३१- श्लो.

तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥
यथा सक्तं जले वातो बिभर्त्ति कणिकांशतम् ।
शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः ॥
[1] "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥

* श्रुतप्रकाशिका *

भूतया–सर्वभूतव्यापिकयेत्यर्थः । विष्णुशक्त्या–विष्णोर्नियमनशक्त्या । अन्यथा "शक्तिः सापि तथा विष्णो"रित्यनन्तरोक्तिविरोधात् । तया वृतौ–व्याप्तौ, नियमनेन च धारणं श्रुतिसिद्धम् । "एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः"इति हि श्रूयते . अतो बिभर्तीत्युत्तरश्लोकसामञ्जस्यम् । संश्रयधर्मिणौ– भगवदपृथक्स्थितिधर्मकौ । पृथग्भावः–उपकरणोपकरणित्वलक्षणसम्बन्धविशेषराहित्यं संहारः, तत्र हि करणकलेबरं नास्ति, संश्रयः– करणकरणित्वेन सम्बन्धः, सृष्टिरित्यर्थः । यद्वा संश्रयः-तयोः सम्बन्धः, संसारः । पृथग्भावो मोक्षः, तत्सर्वं भगवन्नियमनाधीनमित्यर्थः । अत्र दृष्टान्तमाह (यथेति) कारणात्कार्यस्य विभागे दृष्टान्तः, जलस्य कणिकाः तस्माद्भेदेन बिभर्ति वायुः, संयोजकत्ववियोजकत्वयोर्वा दृष्टान्तः, परस्परं सङ्कलिता असङ्कलिताश्च बिभर्त्ति वायुः । यद्वा प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः, वायुर्हि कणिकाशतं तत्स्वभावास्पृष्टो बिभर्ति । प्रधानपुरुषात्मनः–प्रधानपुरुषयोरात्मनः । समस्तचिदचिद्वस्तुजातमिति कर्माध्याहर्तव्यम् । यद्वा प्रधानशब्दानन्तरपुरुषशब्दो बद्धपरः, आत्मशब्दः प्रकृतिसंसर्गरहितमुक्तात्मपरः, तान् बिभर्तीति । एवंविधस्य जगतः परमार्थत्वमाह ( तदेतदिति ) मिथ्या हि बाध्यत्वे;

* भावप्रकाशिका *

शक्त्येत्यत्र विष्णुरूपशक्त्येत्यर्थः किं न स्यादित्याशङ्क्याह (अन्यथा शक्तिस्सापीति) अत्र शब्दार्थमाह ( कारणादिति ) ( जलस्य कणिका इति ) जलस्य कारणत्वं कणिकानां कार्यत्वमिति भावः । प्रथमव्याख्यानुसारेण दृष्टान्तं व्याख्याय द्वितीयव्याख्यानुसारेण व्याचष्टे ( संयोजकत्ववियोजकत्वयोर्वेति ) अस्मिन् पक्षे

1 विष्णु- पु- १- अं. २२- अ- ६०- श्लो.

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनस्सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वम्, शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैस्तच्छब्दसामानाधिकरण्येन चाभिधाय तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा, क्षेत्रज्ञा-

* श्रुतप्रकाशिका *

नानित्यम्. पारमार्थ्ये सति हि नित्यत्वसम्भवः। उदाहृतवचनार्थान् सङ्क्षेपेणाह (इत्यादिनेति) निरस्तनिखिलदोषत्वं कल्याणगुणात्मकत्वञ्च 'स सर्वभूतप्रकृतिम्' 'समस्तकल्याणे'त्यादिश्लोकार्थः। जगदुत्पत्त्यादिलीलत्वं भगवच्छब्दनिर्वचनसिद्धम्, अन्तःप्रवेशनियमनादीत्यादिशब्देन अध्यक्षत्वानुगन्तृत्वे उच्येते। इत्यादिनेत्यादिशब्देन 'क्रीडतो बालकस्ये'त्यादिवचनं विवक्षितम्। तदर्थो लीलाशब्देन विवक्षितः, सर्वावस्थावस्थितस्य—कार्यकारणावस्थितस्य बद्धमुक्तावस्थितस्य चेत्यर्थः। प्रमाणान्तरगोचरस्यार्थस्य हि निषेधार्थं भ्रान्तिसिद्धत्वेनानुवादसम्भवः, परमात्मनियाम्यत्वादिकन्तु प्रमाणान्तरागोचरत्वाद्विधित्सितमेवेति विहितस्य निषेधोऽनुपपन्न इत्यभिप्रायेण पारमार्थिकस्यैवेत्युक्तम्। नियन्तृत्वनियाम्यत्वादिप्रतिपादनसिद्धोऽर्थः शरीरतया रूपत्वम् "तदेव सर्वमेवैत'दित्यत्र तच्छब्दसामानाधिकरण्यम्। 'द्वे रूपे ब्रह्मणस्तस्ये'त्यादिनोक्तमर्थमाह (शरीररूपतन्वंशेति) (प्रतिपादितमि-

७ भावप्रकाशिका ७

सक्तमसक्तञ्च बिभर्त्ति—संयोज्य च वियोज्य च बिभर्तीत्यर्थः। (प्रधानपुरुषयोरात्मन इति) प्रधानपुरुषात्मन इति षष्ठ्यन्तमेतद्विष्णोरित्यस्य विशेषणं द्रष्टव्यम्। अध्याहारदोषादाह (यद्वा प्रधानशब्दादनन्तर इति) (तदेव सर्वमेवैतदित्यत्र तच्छब्दसामानाधिकरण्यमिति) यद्यपि व्याख्येयभाष्यक्रमानुरोधेन शरीररूपतन्वंशेत्यादि

वस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानमचिद्रूपार्थाकारतयाऽनुसन्धानञ्च प्रतिपादितमिति परं ब्रह्म सविशेषम्; तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥

—( परोक्तस्मृतिपुराणवचनानां समीचीनार्थकथनम् )—

'प्रत्यस्तमितभेदम्' इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहित-

---

* श्रुतप्रकाशिका *

तीति ) एवं शास्त्रोपक्रमोपसंहारेष्ववान्तरप्रकरणोपक्रमोपसंहारेषु च प्रतिपादितत्वादित्यर्थः । ज्ञायत इत्यन्तेनोक्तवचनार्थसङ्ग्रहः कृतः, उदाहृतवचनैर्वस्तुनः सविशेषत्वं जगतः सत्यत्वञ्च स्थितम् ॥ .... .... .... .... .... ....

अथ परोदाहृतवचनानि पूर्वोदाहृतवचनार्थानुगुण्येन व्याचिख्यासुः प्रथमं प्रत्यस्तमितभेदमित्यादिश्लोकं व्याचष्टे ( प्रत्यस्तमितेति ) "दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः" इति । "पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः" ॥ इत्यादिषु प्रकृतिर्देवादिशरीरं चोपाधित्वेन प्रतीयत इत्युभयविधवचनार्थं सङ्घटयितुं देवमनुष्यादिप्रकृतिपरिणामविशेषेत्युक्तम् । प्रकृतेरित्यत्र प्रकृतिशब्दनिर्देशः शरीरस्य प्रकृतिपरिणामरूपत्वादित्यभिप्रायः । देवमनुष्यादिशब्देन प्रतिषेध्यभेदस्य शरीरे विद्यमानता दर्शिता । ननु मुक्तानामुपास्यत्वाभावादुपासकस्वरूपस्य अचित्संसृष्टतया प्रत्यस्तमितभेदत्वायोगाच्च तादृक्त्वोपदेशायोगादस्य श्लोकस्य परिशुद्धात्मविषयत्वानुपपत्तेः

* भावप्रकाशिका *

भाष्यं व्याख्यायैव तच्छब्दसामानाधिकरण्येनेत्येतद्भाष्यं व्याख्यातुमुचितम्, तथापि उदाहृतपुराणवचनक्रमानुसारेण तच्छब्दसामानाधिकरण्यं व्याख्यातम् . भाष्यकारेण तु शरीरतन्वादिशब्दानां शरीरत्वसाधकस्फुटप्रमाणत्वादुदाहृतपुराणवचनक्रममतिलङ्घ्य व्याख्यातमिति द्रष्टव्यम् ॥ .... .... .... .... ....

( देवादिशरीरञ्चोपाधित्वेन प्रतीयत इति ) जपाकुसुमादिवदात्मनिष्ठभेदादि-

त्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इति । अनेन न प्रपञ्चापलापः। कथमिदमवगम्यत इति चेत् ?

* श्रुतप्रकाशिका *

परमात्मविषयत्वं स्यादिति शङ्कापरिहाराय चोक्तं (देवमनुष्यादिप्रकृतिपरिणाम-विशेषसंसृष्टस्यापीति ) । इदानीं संसरतोऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वादाविर्भविष्यतस्तस्य तथानुसन्धानाय उपदेश इति भावः । 'तस्यात्मपर-देहेषु सतोऽपी'त्येतत्स्मारयितुं संसृष्टस्यापीत्युक्तम् । अपिर्विरोधे । पात-किसंसर्गात्पातकित्वं भवति, रुमासंसर्गात्पदार्थानां लवणत्वं भवति ; अतो विरोधः । तद्गतभेदरहितत्वेन—भेदो रूपवर्णादिः, अनेन प्रत्यस्तमितभेदशब्दो व्याख्यातः । प्रत्यस्तमितभेदशब्देन भेदस्यापुनरुदयविनाशोऽभिप्रेतः, ततश्च प्रलयकालव्यावृत्तिः, तद्भेदवाचिदेवादिशब्दागोचरमित्यनेन अगोचरं वचसामितिपदं व्याख्यातम् । ज्ञानसत्तैकलक्षणमिति ज्ञानपदं सत्तामात्रमिति च पदं व्याख्यातम् । सत्तैक-लक्षणमित्यत्र एकशब्देन सत्तामात्रमिति पदगतमात्रजर्थं विवृणवता जायतेऽ-स्तीत्यादिविकारा व्यावृत्ताः, सत्तामात्रमित्युक्ते केनाकारेण सत्तेत्यपेक्षायां ज्ञानसत्तैक-लक्षणमित्युक्तम् , ज्ञानत्वाकारेण सत्तेत्यर्थः । वचसामगोचरत्वे सत्ताव्या-घातपरिहारार्थं न्यायवैशेषिकोक्तजडस्वरूपताव्युदासार्थं चात्मसंवेद्यमिति पदस्यार्थ-माह ( स्वसम्वेद्यमिति ) यद्वा अगोचरं वचसामित्यन्तैः पदैः कल्पनाविकाररा-हित्ये तद्वाचिशब्दागोचरत्वे चोक्ते भेदकधर्माभावात्कथं स्वव्यावृत्तिग्रहणमिति शङ्कायामाह आत्मसंवेद्यमिति । प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्तकम्, अन्ये

* भावप्रकाशिका *

धर्मासञ्जकत्वेनोपाधित्वम् । ( ननु मुक्तानामुपास्यत्वाभावादिति ) मुक्तात्मान्तरस्य स्वप्राप्यत्वाभावेन तस्य शुभाश्रयत्वस्य वा योगयुक्चित्तालम्बनत्वस्य वा अप्रति-षेध्यत्वात् उपाधिस्वरूपस्य च कर्तृत्वादिबन्धाश्रयत्वस्याप्राप्यत्वेन शुभाश्रयत्वप्रसक्ते-रेवाभावेन तत्प्रतिषेधेऽप्रसक्तप्रतिषेधे त्वापातादयं श्लोकः परमात्मस्वरूपस्यैव योग-युञ्जन आलम्बनत्वप्रतिषेधकः किं न स्यादित्याशङ्क्य मुक्तावाविर्भविष्यतः स्वरूपस्य

तदुच्यते,— अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्त्तामूर्तविभागेन प्रतिपाद्य

* श्रुतप्रकाशिका *

हीदन्तया भासन्त इत्यर्थः। ज्ञानपदं धर्मधर्मिणोरविशेषेणाजडत्वगाह. धर्मभूतज्ञानस्य बृहत्तया परिशुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वम् 'ब्रह्मणो हि प्रतिष्ठाह' मित्यादिष्विवोपपद्यते। योगयुक्—प्रक्रान्तयोगः। 'एवं प्रकारममल'मिति वचनेन परमात्मनि मुक्तस्वभावस्यातिदिष्टत्वेन मुक्तस्य परमात्मसाम्यप्रतिपत्तेः परमात्मनश्च "अपक्षयविनाशाभ्याम्" 'रूपवर्णादिनिर्देशे' त्यादिवचनैः कतिपयभेदराहित्यस्य षड्भावविकारराहित्यस्य च स्पष्टत्वात्तदानुगुण्येनानतिविस्तरं श्लोको व्याख्यातः। अस्य श्लोकस्य मुक्तात्मविषयत्वं तस्य च प्रक्रान्तयोगस्यागोचरत्वं च कथं ज्ञायत इत्यभिप्रायेणाह (कथमिदमिति) प्रकरणादेवावगम्यत इति परिहरति (तदुच्यत इत्यादिना) अस्मिन् प्रकरणे नह्ययं मुक्तकश्लोकः, अपि तु प्रबन्धस्थः। अतः 'पूर्वापरपरामृष्टः शब्दोऽन्यां कुरुते मति'मिति तत्परिहाराय पूर्वापरपरामर्शेनैवार्थो वर्णनीय इति भावः (संसारैकभेषजतया योगमभिधायेति) एकशब्देन 'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते' इत्यस्यार्थोऽभिप्रेतः। वाक्यार्थज्ञानमात्रस्यापवर्गोपायत्वनिरासश्च स्फोरितः (योगावयवान् प्रत्याहारपर्यन्तानिति) 'प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये। वशीकृते ततः कुर्यात्स्थितं चेतश्शुभाश्रय' इत्यादिवचनार्थः संक्षिप्तः। (परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयमिति) 'विष्णुशक्तिः परा प्रोक्ते'त्यत्र विष्णुरेव शक्तिर्ब्रह्मण इति केचिद्वदन्ति, तद्व्यावृत्तये विष्णोरिति व्यासः कृतः। 'परस्य ब्रह्मणः शक्तिः'

* भावप्रकाशिका *

प्राप्यत्वेनोपास्यत्वप्रसक्तिसद्भावात्तस्योपासनानिवृत्तये अयमुपदेश इत्याहेत्यर्थः। अनुसन्धानायोपदेश इति निर्देशो मशकेभ्यो धूम इतिवद्द्रष्टव्यः। तथानुसन्धानायेति पाठः। केचित्तु तथानुसन्धानायानुपास्यत्वेनानुसन्धानायेत्यर्थ इति वदन्ति। अस्मिन्

तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितम्  अचिद्विशिष्टं

* श्रुतप्रकाशिका *

"परमब्रह्मभूतस्य वासुदेवस्य' 'ततस्स वासुदेवेति ' ' तद्ब्रह्म परमं नित्यम्' 'परमात्मा च सर्वेषाम्' ' विष्णुनामा स वेदेषु वेदान्तेषु च' 'परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ' ' शक्तिः सापि तथा विष्णोः " इत्यादिभिर्विष्णोरेव परब्रह्मत्वं जगतस्तच्छक्तित्वं तच्छक्तिनियाम्यत्वं चोक्तमिति तत्प्रतिपादकतत्तद्वचनविरोधात्तदयुक्तमित्यभिप्रायः । शक्तिशब्दाभिधेयम्— अपृथक्सिद्धविशेषणं हि शक्तिः, ब्रह्म च न कस्यचिद्विशेषणम्; अतो विष्णोरेव शक्तिः, स हि ब्रह्मशब्दवाच्य इत्यभिप्रायः । अत्र " नारायणः परं ब्रह्म ' ' विष्णुस्तदाऽऽसीद्धरिरेव निष्कलः ' ' पतिं विश्वस्यात्मेश्वरम् ' ' न तस्येशे कश्चन ' ' न तत्समश्चाभ्यधिकश्च दृश्यते', ' यस्मात्परं नापरमस्ति किञ्चित् ' ' न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रये " इत्यादिश्रुतिस्मृतयोऽनुसन्धेयाः । शक्तित्रयाश्रयो दिव्यविग्रह उपास्यत्वेनोच्यते, विष्णुरेव शक्तिश्चेत् कथं विष्णोर्विग्रहैकदेशो विष्णोरेवाश्रयः । तदाश्रयभूतो विग्रहो न हि ब्रह्मणोऽस्तीतीदं च दूषणं फलितम् ( शक्तिशब्दाभिधेयं रूपद्वयमिति ) परापरसंज्ञस्यास्य रूपद्वयस्योत्तरत्र परापरशब्दसमानाधिकरणशक्तिशब्देन परामर्शात्परसंज्ञरूपगोचरः शक्तिशब्दो न परमात्मविषय इत्यभिप्रायः । " तच्च विष्णोः परं रूपम् ' ' विष्णुशक्तिः परा प्रोक्ते'ति ह्युच्यते ' भूप मूर्तममूर्तञ्च' इत्यादिवचनार्थमभिप्रेत्याह ( मूर्तामूर्तविभागेनेति ) 'अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यत' इत्यस्यार्थमाह ( तृतीयेति ) मूर्तामूर्तविभागे-

* भावप्रकाशिका *

प्रकरण इति व्याख्येयं पदम् ( कथं विष्णोर्विग्रहैकदेश इति ) विष्णोश्शरीरतया विष्णुधार्यस्य तद्धारकत्वायोगादित्यर्थः । शक्तित्रयसमावेशे एकैकस्या एव शक्तेः कृत्स्नविग्रहाश्रयत्वासम्भवमभिप्रेत्य विग्रहैकदेशाश्रयत्वोक्तिः । यद्वा विग्रहरूपोऽयमेकदेशः परिच्छिन्नस्तदाश्रित इत्यर्थः । ननु विष्णोश्शक्तित्वयाश्रयभूतविग्रहासम्भवेपि ब्रह्मणस्तादृशो विग्रहस्सम्भवेदिति शङ्कामपाकरोति ( तादृशाश्रयभूतो विग्रह इति ) (परसंज्ञरूपगोचर इति ) तच्च विष्णोः परं रूपमित्यादौ व्यतिरेकनिर्देशेन पररूपस्य विष्णुभिन्नत्वावगमात् परशक्तिशब्देन पररूपस्यैव निर्देशाद्विष्णुशक्तिरित्यत्र षष्ठी-

क्षेत्रज्ञं मूर्त्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्त्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया स्वतश्शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्त्तमपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्त्तञ्च परशक्तिरूपस्यात्मनः क्षेत्र-

* श्रुतप्रकाशिका *

नेत्युक्तत्वात् मूर्त्ताख्यविभागमिति विभज्य निर्देशः कृतः। (निष्पन्नयोगिध्येयतयेति) न विध्यर्थे कृत्यप्रत्ययः, अपितु शक्यत्वाभिप्रायः, योगिध्येयं परं पदमित्यत्रापि स एवार्थः, निष्पन्नयोगिध्येयतया प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम्। (स्वतश्शुद्धिविरहादिति) अत्र न शुद्धेरस्वाभाविकत्वमुच्यते, अपि त्वौपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादसापेक्षत्वं विवक्षितम् (शुभाश्रयत्वं प्रतिषिध्येति) स्वतःशुद्धिविरहादित्यनेन शुभत्वं प्रतिषिद्धम्, अनालम्बनतयेत्यनेनाश्रयत्वं प्रतिषिद्धमिति शुभाश्रयत्वप्रतिषेधः। शुभत्वम्-हेयविरोधित्वम्, न तु हेयराहित्यमात्रम्। "चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशन"मित्युक्तत्वात्। शक्तित्रयाश्रयत्वकथनाय शक्तित्रयमनुवदति (परेति) अत्र "समस्ताः शक्तयश्चैता" इति वचनार्थो विवक्षितः। एताः शक्तय इति बहुवचने सत्यपि समस्तपदं बहुव्यक्तिक्रोडीकारार्थम्।

* भावप्रकाशिका *

समास एव युक्त इति भावः। (विभज्य निर्देशः कृत इति) विभज्यस्य निर्देशो विभज्यनिर्देशः, विभक्तव्यनिर्देश इत्यर्थः। द्वितीयान्तो विभागशब्दः कर्मणि घञन्त इत्यर्थः। अयम्भावः,- यद्यपि पूर्ववाक्ये मूर्तामूर्तविभागेनेत्यत्र विभागशब्दो न कर्मार्थकः, तथापि पूर्ववाक्ये विभागशब्देन विभजनस्य प्रस्तुतत्वात् तत्कर्मण इह द्वितीयान्तविभागशब्देन परामर्शे नानुपपत्तिरिति। केचित्तु,- ननु विभज्य निर्देशः मूर्तामूर्तशब्देनैव क्रियताम् किं विभागशब्देनेत्याशङ्क्याह मूर्तामूर्तविभागेनेत्युक्तत्वादिति वदन्ति (अपितु शक्यत्वाभिप्राय इति) कृत्याश्च शकि लिङ् चेति शक्यार्थे कृत्यप्रत्ययविधानात्त तद्योगयुजा शक्यमिति च प्रतिपादनादिति भावः।

ज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येत-च्छक्तित्रयाश्रयो भगवदसाधारणम् 'आदित्यवर्णम्' इत्यादिवेदान्तसिद्धं मूर्त्तरूपं शुभाश्रय इत्युक्तम् । अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं 'प्रत्यस्त-मितभेदं यत्' इत्युच्यते । तथाहि—

[1]"न तद्योगयुजा शक्यं नृप! चिन्तयितुं यतः ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ॥

* श्रुतप्रकाशिका *

परशक्तिरेव परमात्मनो रूपमिति परशक्तिरूपम्, परशक्त्यात्मकं वा ; एवमुत्तरत्रापि । भगवदसाधारणमिति चतुर्मुखादिशरीरव्यावृत्तिः, भगवदधिष्ठितत्वेऽपि तत्तज्जीव-विशेषाभिमानविषयत्वात्तेषां शरीराणाम् । श्रुतिमूलतां दर्शयति ( आदित्येति ) मूर्तरूपमित्यनेन "मूर्ते भगवतो रूपे" इतिवचनार्थ उक्तः । उक्तेष्वर्थेष्वयं श्लोकः किंविषय इत्यत्राह ( अत्रेति ) शुभाश्रयतानर्हत्वकथनार्थमुच्यते चेद-न्यत्रास्यानर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं च द्रष्टव्यमित्यत्राह ( तथाहीति ) अस्मिन्नर्थद्वये वचनद्वयमुपादत्ते ( न तदिति ) योगयुजा—प्रक्रान्तयोगेन । अना-लम्बनत्वमनेन ग्रन्थेनोक्तम्, स्वतः शुद्धिविरहश्च प्रकरणसिद्ध इत्यभिप्रेतः "अन्ये तु पुरुषव्याघ्र! चेतसो ये व्यपाश्रयाः । अशुद्धास्ते समस्तास्तु देवाद्याः कर्म-योनयः" ॥ इत्यादिना भगवद्विग्रहव्यतिरिक्तानां हि शुद्धिविरह उक्तः, अन्यस्य

* भावप्रकाशिका *

( बहुव्यक्तिक्रोडीकारार्थमिति ) सकलव्यक्तिक्रोडीकारार्थमित्यर्थः । परशक्तिरूप-मित्यत्र रूपप्रतिसम्बन्धितया परमात्मप्रतीतौ विलम्बादाह ( परशक्त्यात्मकं वेति ) ( मूर्ते भगवतो रूपे इति ) मूर्ते भगवतो रूपे सर्वापाश्रयनिस्स्पृहा । एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते" इति वचनार्थ इत्यर्थः । ( अन्यत्रास्यान-र्हत्वकथनमिति ) श्लोकान्तरेऽस्यानर्हत्वकथनमित्यर्थः । प्रकरणसिद्धमेवोपपा-दयति ( अन्ये तु पुरुषव्याघ्रेत्यादिना ) बद्धानामेव शुद्धिविरहः प्रतिपाद्यते ,

1 विष्णु- पु- ६- अं. ७. अ. ६९-७०श्लो.

समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥"

इति च वदति । तथा चतुर्मुखसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा, बद्धानामेव पश्चाद्योगेन उद्भूतबोधानां स्वस्वरूपापन्नानाञ्च स्वतःशुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा —

[1] "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनित—संसारवशवर्त्तिनः ॥

---

* श्रुतप्रकाशिका *

रूपस्यार्हताकथनं चास्य रूपस्यानर्हत्वविवक्षासूचकमिति चशब्दार्थः । 'अन्ये त्वि'तिग्रन्थेन कर्मसम्बन्धलक्षणाशुद्धिकथनात्कर्मसम्बन्धविनिर्मुक्तानामपि स्वतः शुद्धिविरहः सूचितः । तेषामपि शुभाश्रयपदस्थशुभशब्देन व्यवच्छेद्यत्वं स्पष्टयितुमाह (तथेति) पश्चादुद्भूतबोधाश्चेत्येतद्व्याख्यातं स्वस्वरूपापन्नानामितिपदेन, आब्रह्मस्तम्बपर्यन्ता इत्यत्राऽभिविधौ, स्तम्बसमभिव्याहारात् । स्तम्बो हि कर्मवश्यः, "पुमान्न देव" इत्यारभ्य "भूपैते कर्मयोनय" इत्युक्तेः । "तेषामप्यन्यतो यतः"

* भावप्रकाशिका *

न मुक्तानामित्याशङ्क्य सिंहावलोकितकेनाह (अन्ये त्विति ग्रन्थेनेति) (स्तम्बसमभिव्याहारादिति) स्तम्बपर्यन्तादिति वा स्तम्बपर्यन्तमिति वा रूपप्रसङ्गेन स्तम्बपर्यन्ता इति रूपासिद्धेश्च आङित्यस्य वाक्यस्मरणार्थकत्वस्यैव युक्ततया आऽभिविधावित्यस्यायुक्तत्वात्तत्सिद्धवत्कारेण स्तम्बसमभिव्याहारादित्युक्तिरयुक्तेति चेत्; उच्यते,— आङित्यस्य अभिविध्यर्थकत्वसम्भवे गत्यभावकल्प्यस्य वाक्यस्मरणार्थकत्वस्यायुक्तत्वात् आङित्यस्य ब्रह्मशब्देन समासः । स्तम्बपर्यन्ता इति पृथक्पदम् । ततश्च समभिव्याहृतस्तम्बपर्यन्तपदे स्तम्बस्याभिविधित्वदर्शनादाब्रह्म-

---

१ भविष्यपुराणान्तर्गत श्रीविष्णुधर्म- १०४- अ. २३- श्लो.

[1] "यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ।
तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् ॥"

इत्यादिना परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम्; अतोऽत्र न भेदापलापः प्रतीयते, 'ज्ञानस्वरूपम्' इत्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते, ज्ञानस्वरूपस्याऽऽत्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात् । नहि शुक्तिकाया रजततयावभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति । जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः,

* श्रुतप्रकाशिका *

इत्येवमन्तस्य ग्रन्थस्यार्थः पूर्वमुक्तः । अथ तस्मात्तदमलं ब्रह्मेत्यादेरर्थमाह ( परस्येति ) स्वासाधारणमित्यस्य पूर्ववदर्थः । प्रत्यस्तमितेत्यादिश्लोकस्य भेदनिषेधपरत्वाभावं निगमयति ( अत इति ) अथ ज्ञानस्वरूपमित्यादिश्लोकस्य भेदमिथ्यात्वपरत्वाभावमाह ( ज्ञानस्वरूपमितीति ) अपिस्समुच्चये । कृत्स्नमिथ्यात्वप्रतिपादनाभावमुपपादयति ( ज्ञानेति ) ज्ञानस्वरूपस्यार्थाकारतयाऽवभासे भ्रमे सति अर्थाकारस्य तथात्वेनावभासो न भ्रमो भवतीत्यर्थः । तमेव दृष्टान्तेनोपपादयति ( नहीति ) दृष्टान्ताद्वैषम्यमुखेन चोद्यं शङ्कते ( जगद्ब्रह्मणोरिति ) तत्र हि

* भावप्रकाशिका *

शब्देपि आङभिविधाविति भावः । भाष्ये—जगद्ब्रह्मणोस्सामानाधिकरण्येनैक्यप्रतीतेरिति 'ज्योतींषि विष्णु'रित्यादिना सर्वस्य जगतस्सामानाधिकरण्येनैक्योपदेशा-

[1] भविष्यत्पुराणान्तर्गतविष्णुधर्मे १०४ अ. २४-२५-२६- श्लोकाः .

ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्, तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासम्भवात् ।

---

* श्रुतप्रकाशिका *

सर्वं रजतजातं न शुक्तिकाशकलेन समानाधिकरणं दृष्टम्, अपि तु व्यधिकरणत्वेन प्रमाणप्रतिपन्नम्; अतो न कृत्स्नस्य रजतजातस्य शुक्तित्वेन विरोधः, अपि तु समानाधिकरणरजतस्यैव विरोधः । तत्र विरोधात् समानाधिकृतरजतस्य मिथ्यात्वम्, अविरुद्धस्यासमानाधिकृतरजतस्य अमिथ्यात्वञ्च । अत्र तु ब्रह्मव्यतिरिक्तं कृत्स्नं ब्रह्मसमानाधिकरणं प्रतीयते; अतो ज्ञानाकारस्य अर्थाकारस्य च विरोधे कृत्स्नस्यार्थजातस्य मिथ्यात्वं फलितमिति । एतत्परिहरति (तदसदिति) तत्र प्रथमं परोक्तार्थस्य प्रबन्धवाक्यार्थविरोधमाह (अस्मिन्निति) ब्रह्मणोऽविद्यान्वयो जगतो मिथ्यात्वं चात्र विरुद्धम् "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' 'ततः स वासुदेवेति' 'तद् ब्रह्म परमं नित्यम्' 'हेयाभावाच्च निर्मलम्' 'तानि सर्वाणि तद्वपुः' 'विभूतयो हरेरेताः" इत्यादिवचनादित्यर्थः । 'भ्रान्तिदर्शनतः स्थितम्' 'विष्णुं ग्रसिष्णुम्"इति विष्णोस्सगुणस्य भ्रमाश्रयत्वमुच्यते, अतस्तद्युक्तम् । परब्रह्म हि निर्दोषमिति शङ्काव्यावृत्त्यर्थं परस्य ब्रह्मणो विष्णोरित्युक्तम् । निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्येत्याभ्यां पदाभ्यामविद्यान्वयानुपपत्तिरुक्ता । अविद्यासम्बन्धे सति निरस्तसमस्तहेयत्वं समस्तकल्याणगुणात्मकत्वमपि ह्यनुपपन्नं स्यात् । महाविभूतेरिति जगन्मिथ्यात्वानुपपत्तिरुक्ता, जगतो भगवद्विभूतित्वं हि न प्रमाणान्तरसिद्धम्, येन निषेधार्थमनुवादः स्यात्, अतो विधीयत एव । विधिस्तु न भ्रमं जनयति, तथा सति निषेधवचनस्यापि सतो

* भावप्रकाशिका *

दित्यर्थः । (न शुक्तिशकलेन सामानाधिकरण्यं दृष्टमिति) सर्वं जगद्भ्रान्तिवत्सर्वं रजतं शुक्तिरित्युपदेशादर्शनादित्यर्थः । (तथासति निषेधवचनस्यापीति) यदि

सामानाधिकरण्येनैक्यप्रतिपादनञ्च बाधासहमविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते, अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः ॥

—( उपबृंहणविधिनिरूपणम् )—

तथा हि— [1]"यतो वा इमानि भूतानि जायन्ते । येन

* श्रुतप्रकाशिका *

भेदस्यासत्त्वविषयबुद्धिरूपभ्रमपरत्वस्यानिवार्यत्वात्, प्रामाण्यं हि वाक्यद्वयस्य समानम्; तस्माद्विहितोऽर्थः परमार्थ एवेति न जगन्मिथ्यात्वमित्यर्थः । सामानाधिकरण्येनैक्यप्रतीतौ सत्यां ज्ञानाकारार्थाकारयोर्विरोधादन्यतरमिथ्यात्वं स्यात्, यथा शुक्तिरेव रजतमित्यत्रेति शङ्कायामाह ( सामानाधिकरण्येनेति ) बाधासहम्— न केवलमाकारद्वये अन्यतरबाधनिरपेक्षमपि सामानाधिकरण्यं सम्भवति, किन्तु बाधं न सहते, आकारद्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेरित्यर्थः । तर्ह्येकस्मिन्वस्तुन्याकारद्वयविरोधः कथं परिह्रियत इत्यत्राह ( अविरुद्धञ्चेतीति ) आकारद्वयाङ्गीकारेऽप्यैक्यप्रतिपादनमविरुद्धम्, सद्वारकत्वादिति भावः । अनन्तरमेव— न त्वधिकरणान्तर इत्यर्थः । प्रथमश्चशब्दः शङ्कानिवृत्तिपरः, द्वितीयः समुच्चयपरः । मिथ्यात्वपरत्वाभावं निगमयति ( अतोऽयमिति ) एवं ज्ञानस्वरूपमिति श्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्धाटनेन निरस्तम् ॥ .... .... ....

अथ श्लोकं स्वपक्षे व्याख्यातुमुपक्रमते ( तथा हीति ) अत्र किमर्थं प्रश्न-

* भावप्रकाशिका *

विधिवाक्यमपारमार्थिकत्वेन बोधयेत् तर्हि निषेधवाक्यमपि वस्तुनः पारमार्थिकमेव भेदमपारमार्थिकत्वेन किमिति न प्रतिपादयेदित्यर्थः । ( न केवलमाकारद्वये इति ) त्वया हि सामानाधिकरण्यं बाधसापेक्षमित्युच्यते, मया तु सामानाधिकरण्यस्य बाधसापेक्षत्वप्रतिषेधमात्रं न क्रियते, प्रत्युत बाधविरोधित्वमपीत्युच्यते, अन्यतरविरोधे सामानाधिकरण्यभङ्गप्रसङ्गादिति भावः ॥

भाष्ये— जगज्जन्मादिकारणं ब्रह्मेत्यवसितमतीति । इतिहासपुराणाभ्यामुपबृंहणं

[1] तैत्तरीयउ. भृगुवल्ल्याम् १-अ०.

जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म" इति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति; —

---

## * श्रुतप्रकाशिका *

श्लोकव्याख्यानम्? उच्यते,— ज्ञानस्वरूपमितिश्लोके द्वितीयान्तपदानां विशेष्यो विष्णुरिति न प्रतीयते, तेषां प्रणम्येतिपदेनान्वयश्च न ज्ञायते, श्लोकस्य विशिष्टार्थपरत्वं च प्रकरणस्य विशिष्टपरत्वेन विना नावगम्यते; अतो नमस्कारश्लोकाः व्याख्यातव्याः। तेषु व्याख्यातव्येषु द्वितीयाध्यायारम्भे नमस्कारकरणं किं निबन्धनम्, प्रथमत एव हि कर्त्तव्यमिति शङ्का जायते. शास्त्रस्य प्रश्नप्रतिवचनरूपेणावतीर्णत्वात् प्रथमं प्रश्नानां सङ्क्षेपेण प्रतिवचनं कृत्वा विस्तारविवक्षायां द्वितीयाध्यायारम्भे नमस्कारः कृतः, अन्यथा प्रश्नानन्तरमेव नमस्यायां क्रियमाणायाम् अस्मत्प्रश्नस्य किमुच्यत इति शिष्यबुद्धेर्व्याकुलता स्यादिति पूर्वोक्तशङ्कानिरसनमुखेन नमस्कारश्लोकसङ्गतिप्रदर्शनार्थं प्रश्नश्लोका व्याख्याताः, 'ज्ञानस्वरूपम्' इत्यस्मिन्नुपक्रमग्रन्थे निर्विशेषवस्तुव्यतिरिक्तस्य भ्रान्तिसिद्धत्वदर्शनात्तदनुगुण एवार्थ उत्तरत्र वर्णनीय इति शङ्कापरिहारायोपक्रमोपक्रमभूतैः प्रश्नोत्तरवरलाभश्लोकैः शास्त्रप्रतिपाद्यस्सविभूतिकदेवताविशेषः, न तु ज्ञप्तिमात्रमिति शास्त्रतात्पर्यज्ञापनार्थं च प्रश्नश्लोकव्याख्यानम्। व्याचिख्यासितश्लोकोक्तभ्रान्त्यन्वयस्य सद्द्वारकत्वसिद्धये सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति यन्मयमिति मयट्प्रत्ययेन ज्ञापनार्थञ्च प्रश्नश्लोका व्याख्यायन्ते; तत्र किमयं श्रुतवेदान्तप्रश्नः? उताश्रुतवेदान्तप्रश्नः? इति विकल्पे अश्रुतवेदान्तस्य विशेषप्रश्नानुपपत्तिः, श्रुतवेदान्तस्य श्रोतव्याभावात् प्रश्नानुपपत्तिरितिशङ्कायां श्रुतवेदान्तप्रश्न इत्याह (यतो वा इमानीत्यादिना) अवसिते सतीत्यनेन ब्रह्ममीमांसाश्रवणं कृतमित्युक्तम्॥

## ७ भावप्रकाशिका ७

कार्यमित्ययमर्थ इति "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इतिवाक्येन ज्ञायत इति योजना। श्रुत्वा उपबृंहणं कर्तव्यमिति। इतिहासपुराणाभ्यामिति श्लोकात् प्रतीयत इत्यर्थः। नचोपबृंहणस्य श्रवणानन्तर्यं नास्माद्वचनात्प्रतीयते,

[1]"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥"

इति शास्त्रेणार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते। उपबृंहणं नाम विदितसकलवेद-तदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः

* श्रुतप्रकाशिका *

श्रुतवेदान्तस्य कथं प्रश्नोपपत्तिरिति शङ्कायां श्रुतवेदान्तस्येतिहासपुराणश्रवण-विधिं दर्शयति ( इतिहासेति ) इतिहासेत्यादिश्लोके वेदशब्दो वेदान्तपरः, वेदो-पबृंहणमूलेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि, इतिहास-पुराणान्युपरितनभागोपबृंहणपराणीति विभागः । स च स्मृत्यधिकरणे व्यक्ती-भविष्यति; तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम् । इति-हासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम् । इतिहासस्य पुराणे-भ्योऽभ्यर्हितत्वं विशेषः, 'अल्पाच्तर' मिति पुराणशब्दस्य पूर्वनिपाते प्राप्ते'अभ्यर्हितं पूर्वं प्रयोक्तव्य' मिति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः । अस्य श्लोकस्य प्रथमार्द्धं व्याचष्टे (उपबृंहणं नामेति) षष्ठ्यन्तविशेषणद्वयेनागमोत्थं विवेकजं च ज्ञानम-स्तीत्युक्तम् । तत्त्वार्थानामितिबहुवचनं कपिलमतादपीतिहासादीनां प्राबल्यद्योतनार्थम् । व्यक्तीकरणम्— अज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः, यथा वेदेन कर्तव्यतया विहि-तस्य संध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैः सह निष्कर्षः, एवमु-पनिषद्भागेऽप्यर्थनिष्कर्षः सम्पाद्यः । उपनिषदर्थनिष्कर्षो ब्रह्मविचारसिद्ध इति नोप-

* भावप्रकाशिका *

श्रुत्वोपबृंहयेदित्यश्रवणात् । उपबृंहयेदित्येतावत एव श्रवणादिति वाच्यम्, उप-बृंहणस्य श्रुतार्थविशदीकरणस्वरूपत्वेन उपबृंहणे श्रवणानन्तर्यलाभात्तश्चावसिते सति अस्माद्वाक्यादुपबृंहणं कार्यमिति ज्ञायत इति कथमुच्यते ? श्रवणात्प्रागपि अस्माद्वाक्यात्तदर्थावगतिसम्भावदितिशङ्का पराकृता । केचित्तु पूर्वस्माद्वाक्यादर्था-वगतिसम्भवेपि अश्रुतवेदान्तस्य प्रवृत्त्यौपयिकोपबृंहणकर्तव्यताज्ञानस्यानुत्पत्तेः

१ भारत- आदिप. १-अ-२७३ .

स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । सकलशाखागतस्य

* श्रुतप्रकाशिका *

बृंहणापेक्षेति शङ्कायामुत्तरार्द्धं व्याचष्टे (सकलेति) पूर्वार्द्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्द्धम्। उपबृंहणं नामानधीतशाखान्तरार्थैः सहाधीतशाखार्थनिष्कर्षः, अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः । ननु यथा आपातप्रतीत्या फलवदर्थावगमात्कर्मविचारे तदनन्तरं ब्रह्मविचारे च रागतः प्रवृत्तिः, तथा अधीयमानशाखान्तर्गतेन "अनन्ता वै वेदाः" इति वाक्येन वेदानामानन्त्यावगमादधीतशाखानवगतानां तदविरुद्धानां विरुद्धानां चार्थानां सम्भवात् "स्मृतेश्च" "अपि स्मर्यते" इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणश्रवणे रागतः प्रवृत्तिरुपपद्यते; तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेपूपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम्, अप्राप्ते हि शास्त्रस्यार्थवत्त्वम् । नच गुरोरेव श्रोतव्यमिति नियमविधिः, अस्मिन्वचने तद्वाचिशब्दाभावात् । इतिहासपुराणयोः श्रवणप्रवृत्तस्य एतद्वचनार्थज्ञानम्; तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च; अत उपबृंहयेदिति विधिरनुपपन्न इति । सत्यम्; भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन वचनेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वमनूद्यते । उपबृंहणं कार्यमिति विज्ञायत इत्यस्यायमर्थः,— न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेन वचनेनापि ज्ञायत इति । उपबृंहणं-नागेत्यादिग्रन्थेन न्यायप्राप्तिरेव प्रदर्श्यते । यद्वा समन्वयविरोधपरिहारलक्षणाभ्यामेव तत्त्वस्यैनिर्णीतत्वाद्वस्तुनि विरुद्धाकारासम्भवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसम्भवे वेदस्य भ्रान्तिजल्पितायमानत्वप्रसङ्गाच्च निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्रसङ्गासम्भवात् ब्रह्मण्यनवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणसहस्रैरपि तदियत्ताप्रतिपादनायोगादवगतकतिपयगुणविशेषोपासनेष्वन्यत-

* भावप्रकाशिका *

श्रवणानन्तरमेव प्रवृत्त्यौपयिकोपबृंहणकार्यताप्रतीतिरुत्पद्यत इत्यर्थ इति मन्यन्ते । (भारतादिप्रबन्धविशेषश्रवणायेति) ननु न्यायसिद्धानुवादित्वे कथमस्य वाक्यस्य भारतादिप्रबन्धविशेषश्रवणप्रवर्तकत्वमितिचेत्, न; अनुवादकस्याप्यस्य वाक्यस्य अक्षैर्मादीव्य इतिवाक्यवत् स्वाभाविकप्रवृत्तिविषयविमुखीकरणद्वारेण प्रवृत्त्युपयोगा-

वाक्यार्थस्याल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्च-
यायोगादुपबृंहणं हि कार्यमेव ॥

* श्रुतप्रकाशिका *

मेनैव पुरुषार्थसिद्ध्युपपत्तेश्चोपबृंहणश्रवणनिरपेक्षं प्रत्युपबृंहयेदिति विधानं युज्यते । नन्वेवं तर्हि न्यायानुगृहीतवाक्यावगतेऽप्यर्थेऽप्युपबृंहणनिष्कृष्टव्याभावान्निष्कृष्टव्यांशस्य सूत्रोदाहृतवचनैरेव निष्कृष्टत्वाच्चोपबृंहणविधिरदृष्टार्थः स्यात् । न च दृष्टे सम्भवत्यदृष्टकल्पनं न्याय्यम्. दृष्टार्थत्वञ्च वचनं दर्शयति ( मामयं प्रतरिष्यतीति ) वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव, अतस्तन्निवृत्तिरूपं दृष्टफलं वाचनिकम्, तस्मिन् सत्यदृष्टकल्पनमयुक्तम्, तर्हि तदेव दृष्टं फलमिति चेत्तदप्ययुक्तम्, तत्त्वविपर्यासप्रतिपादनासम्भवस्य त्वयैवोक्तत्वात् साकल्येन ब्रह्मविभूत्यनवगमस्य समस्ततदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वाभावेन तन्निवृत्तेः फलत्वायोगाच्च । उच्यते ; यद्यपि 'परतत्त्व तदुपासनप्रतिपादनेषु विपर्यासासम्भवः, तथापि किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति

* भावप्रकाशिका *

ददोषात् । ( नन्वेवं तर्हीति ) मामयं प्रतरिष्यतीति दृष्टार्थत्वप्रतिपादनमनुपपन्नमिति शङ्कार्थः । ततश्च दृष्टादृष्टरूपोभयविधप्रतिक्षेपकत्वं विरुद्धमिति न मन्तव्यम् । किं ते कृण्वन्ति कीकटेषु गाव इत्यादेरयमर्थः,– हे मघवन्! कीकटदेशेषु ते गावः किं कुर्वन्ति ? न किञ्चिदप्युपकारं कुर्वन्तीत्यर्थः । तदेवोपपादयति–आशीरम् प्रवर्ग्यार्थम्, पयः । न दुह्रन्ति घर्मम्–प्रवर्ग्यार्थं घृतं न दापयन्ति, घर्मोपयुक्तं क्षीरं न प्रयच्छन्ति ; तद्देशस्थानां नास्तिकत्वात् । प्रमगन्धस्य कीकटाधिपतेराज्ञः वेदः धनं नैचाशाखम्–नीचाशाखीनगरस्थम्, आहर रन्धय वशयेत्ययमर्थः द्राक् प्रतीयते । अत्र प्रमगन्धनामकराजवृत्तान्तप्रतिपादने नित्यायाश्श्रुतेरनित्यार्थप्रतिपादकत्वेन अप्रामाण्यप्रसङ्गात् । प्रमगन्धशब्देन प्रकृष्टं धनं मामागमिष्यतीति प्रमगन्ध इति व्युत्पत्त्या वार्द्धुषिकः प्रतिपाद्यते, नैचाशाखशब्देन षडङ्गसम्बन्धि धनं प्रतिपाद्यते, एवञ्च सति वार्द्धुषिकादीनां प्रवाहतो नित्यत्वात् नानित्यार्थसंयोगविरोधः, तथैव 'अहल्यायै जार' इत्यत्रापि अहि लीयत इत्यहल्या रात्रिः, तस्या जारा जरणहेतुः

* श्रुतप्रकाशिका *

धर्मम् । आनोभर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयान इत्यादिवाक्यप्रतिपन्नप्रमगन्दादिवृत्तान्तस्येव परमात्मसृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तिस्तद्वृत्तविशेषाणां श्रुतिसामान्यप्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानोऽहल्याजारादिवाक्यानां पण्डितमानिभिरितरैरुक्तमर्थमिव वेदपूर्वभागोपनिषद्भागगतानां मन्त्रार्थवादानामन्यथार्थत्वं मन्यते चेदश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारायोपबृंहणविधिरुपपद्यत इति । न चान्योन्याश्रयः, स्वाध्यायविधिवाक्यस्य स्वाध्यायान्तर्भावेऽप्यध्ययनाद्विध्यवगमः विध्यवगमादध्ययनमिति यथा नान्योन्याश्रयः तद्वत् । तत्र हि विध्यभिज्ञपुरुषप्रेरणात्तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः, एवमुपबृंहणविध्यभिज्ञविशिष्टजनवादप्रसिद्ध्या वा ? तदभिज्ञस्वगुरुवचनेन वा ? तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा ? उपबृंहणज्ञानस्य सम्पाद्यताज्ञानाच्छिष्यस्य प्रश्नः उपपद्यते, अत उपबृंहणविधिरुपपन्नः । तत्र स्वगुरोः पराशरस्य सार्वज्ञ्यप्रसिद्धेः, तेनैव सर्वविद्यास्थलेषु स्वस्य कृतशिक्षत्वाच्च मैत्रेयस्य तत्प्रणीतपुराणश्रवणप्रवृत्त्युपपत्तिः ॥ .... .... .... .... .... ....

* भावप्रकाशिका *

सूर्य इत्यादिरेवार्थः, अतो नानित्यार्थसंयोगविरोधः । एवञ्च सति शब्दसाम्यात् प्रमगन्दाहल्यादिवृत्तान्तस्फुरतीति चेत् सोऽविवक्षित एवेति मीमांसकानां स्थितिः, तद्वदेव वेदान्तभागेष्वपि नारायणपरब्रह्मादिशब्दप्रतिपन्नार्थेषु देवताविशेषादिष्वविवक्षितार्थशङ्काव्युदासार्थमुपबृंहणं कार्यमिति प्रघट्टार्थः । " पम् इ परासरसं दं सो विपुवासरसक्कं वदुं ळ ळि ओ । अंहो काळं स गई अंहे विणिकंप इं गमि आ ॥ इति पठ्यते । इदञ्चासत्काव्यालापप्रवणस्योपपत्तेः, कालविशेषे विष्णुपुराणपाठवद्धादरतामात्मनश्च स्वैरविहारनिवृत्तिञ्च स्मृत्वा विस्मितायाः कस्याश्चिद्वचनम्, अतोऽन्यार्थप्रवृत्तत्वमस्येति द्रष्टव्यम् । ननु पराशरपुराणमपि पराशरशब्दो भवत्येव, तत्र चामूलाग्रं शिवपारम्यमेव प्रदश्यत इति चेन्न, तस्मिन् विष्णुपुराण इव पराशरशब्दप्रसिद्ध्यभावेन श्लोकस्थपराशरशब्देन विष्णुपुराणस्यैव विवक्षितत्वादिति भावः ॥ .... .... .... .... .... .... .... ....

—( विष्णुपुराणप्राशस्त्यम् )—

तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्य-

* श्रुतप्रकाशिका *

पुराणान्तरेभ्योऽस्य पुराणस्य वैषम्यं वदन् प्रश्नानवतारयति ( तत्रेति )अस्य सर्वपुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात् धर्मशास्त्रेषु मानवस्येव व्याकरणेषु पाणिनीयस्येव च सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्यते , तत एव प्रसिद्धिप्राचुर्यात् कौर्म्मादेरिव नष्टकोशत्व-शङ्का दूरोत्सारिता, अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति, । अन्यपरोक्तिप्रसिद्ध-परिग्रहातिशयं चेदं "पठय पराशरेदम्" इति । "अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेष्वथ कल्पेषु

* भावप्रकाशिका *

( अग्नेःशिवस्येति ) "सङ्कीर्णास्सात्त्विकाश्चैव राजसास्तामसास्तथा । कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ते ॥" इति कल्पानामेव सात्त्विकादिविभागकथनात् 'सात्त्विकेष्वथ कल्पेषु' इति च दर्शनात्तामसेषु राजसेष्वित्येतत्सर्वं कल्पविशेषणम्, ततश्च तामसेषु कल्पेषु प्रकीर्तितं ब्रह्मणाऽग्निशिवमाहात्म्यं राजसेषु कल्पेषु ब्रह्मणो माहात्म्यं प्रोक्तं विदुरित्यर्थः। यस्मिन् कल्पेष्वित्यस्यायमर्थः,—उत्तरार्धे तस्य तस्येति श्रवणात् यस्य यस्याग्न्यादेः पुराणं माहात्म्यप्रतिपादकं यत् प्रोक्तं तस्य तस्य माहात्म्यं माहात्म्यप्रतिपादकम्, तदितिपदमध्याहर्तव्यम्। पूर्वत्र यत्प्रोक्तमिति श्रवणात्तस्य तस्य माहात्म्यप्रतिपादकं तत्पुराणं तत्तत्स्वरूपेण तस्य कल्पस्य स्वरूपमेव स्वरूपं यस्य, सात्त्विकत्वादिकं हि कल्पस्य स्वरूपम्, सात्त्विकादिगुणप्रचुरेण ब्रह्मणा वर्ण्यत इति फलितार्थः। ततश्च तमःप्रचुरेण ब्रह्मणा अग्निशिवमाहात्म्यं वर्ण्यते, रजःप्रचुरेण ब्रह्म-माहात्म्यम्, सत्त्वप्रचुरेण विष्णुमाहात्म्यमिति फलितार्थ इति द्रष्टव्यम्। केचित्तु 'यस्मिन् कल्पे तु यत्प्रोक्तम्' इत्यत्र यद्दैवतमधिकृत्य पुराणं प्रवृत्तं तस्य माहात्म्यं तत्स्वरूपेण वर्ण्यत इत्यर्थ इति वदन्ति । अन्येतु,—तत्स्वरूपेणेत्यत्र तदिति पृथक्पदम्, यस्मिन् कल्पे यत्पुराणं प्रोक्तं तस्य तन्माहात्म्यं तस्य स्वरूपेण वर्ण्यत इति योजना ; एवं हि तस्य तस्येतिपष्ठ्यन्तद्वयसाफल्यम्, तस्य च स्वरूपम-साधारणाकारस्सत्त्वरजस्तमांस्येव ततश्च, सत्त्वरजस्तमोभिर्वर्ण्यत इत्यर्थ इति वदन्ति।

* श्रुतप्रकाशिका *

माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति पराङ्गतिम् । यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' इति सम्यज्ज्ञाननिष्पादकसत्त्वमूलत्वात्. अदन्यथाज्ञानविपरीतज्ञानहेतुभूतरजस्तमोमूलत्वाभावाद्दुष्टकारणपुराणान्तरसाम्यं न सम्भावनीयम् । सत्त्वस्य यथार्थज्ञानहेतुत्वं रजस्तमसोश्चान्यथाज्ञानविपरीतज्ञानहेतुत्वं "सत्त्वात् सञ्जायते ज्ञानम्' 'अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी' इति च वचनात्प्रसिद्धम् । "सत्त्वं लघु प्रकाशकमिष्टम् । उपष्टम्भकं चलं च रजः । गुरुवरणकमेव तमः" इति, "सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इति च प्रसिद्धम् । ननु चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्वपरवचनस्य रजस्तमोमूलत्वेन प्रामाण्याभावात्सात्त्विक-

* भावप्रकाशिका *

ननु "त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात् । ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः । तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तु पितरं परमेश्वरम् । कल्पान्तरेऽसृजद्ब्रह्मा विष्णुरुद्रौ जगन्मयः । कल्पान्तरे तथा विष्णुः ब्रह्मरुद्रौ तथा हरः । नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।" इति पुराणवचनानुसारेण तत्तत्कल्पवर्तिपारमार्थिकवृत्तान्तप्रतिपादनमुखेन सकलपुराणप्रामाण्यप्रतिपादनपरमिदं वचनं किं न स्यात्? तस्य तस्य तु माहात्म्यमित्यत्र यस्मिन् कल्प इति पूर्वनिर्दिष्टकल्पपरामर्शस्योचिततया कल्पसम्बन्धिमाहात्म्यमेव तत्स्वरूपेण तत्कल्पप्रवृत्तपुराणस्वरूपेण वर्ण्यत इति वक्तुं शक्यत्वादितिचेन्न, त्रयस्ते कारणात्मान इति श्लोकस्य पूर्वैरनुदाहृतत्वेन प्रामाण्यस्य निश्चेतुमशक्यत्वात्. यस्मिन् कल्पे यत्पुराणं प्रोक्तं तस्य कल्पस्य माहात्म्यं तेन पुराणेन वर्ण्यत इत्यस्य विवक्षितत्वे तत्स्वरूपेण वर्ण्यत इत्यस्यायुक्तत्वाच्च यथोक्त एवार्थः । (अन्यथाज्ञानविपरीतज्ञानेति) अन्यथाज्ञानम्—धर्मान्यथाभावज्ञानम्, विपरीतज्ञानम्— धर्म्यन्तरज्ञानम् । केचित्तु, इमे संसर्गारोपतादात्म्यारोपरूपे धर्म्यंशे भ्रान्तेरभावादिति वदन्ति। (सत्त्वं लघुप्रकाशकमिति) गुरुवरणकमेव

* श्रुतप्रकाशिका *

पुराणप्राबल्यासिद्धिः , अस्य वचनस्य सत्त्वमूलत्वे प्रमाणं नास्ति; अत एव तद्वचनमात्रस्याप्रामाण्यं वक्तुं युक्तम्, न बहूनां पुराणानाम्, भूयसां बलीयस्त्वात्। उच्यते; न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या, बाधकादर्शनात् स्वतस्सिद्धः प्रामाण्यस्यानपोदितत्वात् "यो ह खलु वा अस्य राजसोंऽशस्सोऽसौ ब्रह्मचारिणो, योऽयं ब्रह्मा । यो ह खलु वा अस्य सात्त्विकोंशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः । यो ह खलु वा अस्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं रुद्रः". इति, "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति च श्रुत्यानुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्त्वस्य तत्तत्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरस्य वचनस्योपपन्नार्थत्वाच्च सकलशास्त्रार्थव्यवस्थापके महाभारते च मोक्षधर्मे "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थनिश्चयः" इत्यादिना भगवत्कटाक्षेण सत्त्वगुणमूलसम्यग्ज्ञाननिश्चयमुक्त्वा "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम् ॥ इति चतुर्मुखशिवयोः कटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च चतुर्मुखशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते । अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि नाप्रामाण्यं शङ्कनीयम्, ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षोक्त्यावाग्रहासम्भवेनास्य वचनस्य तत्त्वपरत्वोपपत्तेः,

* भावप्रकाशिका *

तम इत्यत्र एवकारस्सर्वत्र सम्बध्यते । सत्त्वं लघुप्रकाशकमिष्टं साङ्ख्याचार्यैः । उद्गमनहेतुर्गौरवप्रतिद्वंद्वी हि धर्मो लाघवम्, यतोऽग्नेरूर्ध्वज्वलनम्, यतो वायोस्तिर्यग्गमनञ्च तच्च लाघवम्, करणानां चक्षुरादीनां स्वस्वविषयप्रवृत्तौ हेतुः, अतः प्रकाशकं भवति, तद्धि सत्त्वं स्वयमक्रियत्वात् स्वकार्यं प्रत्यवसीदति, तच्च रजसा उपष्टभ्यते–प्रवर्त्यते, अतः प्रवर्तकत्वाद्रज उपष्टम्भकम्, तत्र च हेतुश्चलत्वम्। यतः स्वयञ्चलस्वभावं भवति अतश्चलयद्रजःप्रवर्तकम्, तादृशञ्च रजो गुरुणा आवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति गुरुवरणकमेव तम इत्युच्यते, वरणकम्– नियमनहेतुरित्यर्थः । सत्त्वरजस्तमसां प्रकाशप्रवृत्तिनियमार्थत्वात् सत्त्वस्य प्रकाशकत्वम्, तमसश्च गुरुत्वेन करणमान्द्यहेतुत्वञ्च सिद्धमिति

* श्रुतप्रकाशिका *

स्वप्रतिपाद्यदेवतायामेव हि वक्तुराग्रहासम्भवः न त्वन्यत्र; तस्मान्नास्य वचनस्य कारणदोषसम्भवः । यदुक्तमनेकपुराणाप्रामाण्यादेतद्वचनमात्राप्रामाण्यं युक्तं भूयसां बलीयस्त्वादिति । तदयुक्तम्; साक्षादर्थविरोधाभावात् । न हि विधिशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वं नेति तेषु पुराणेष्ववगम्यते, तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वं च विरुद्धमिति परम्परया विरोधः फलितः । तत्र भूयसां बलीयस्त्वमिति चेत्, यदि केवलमेतद्वचनमात्रविरोधेन तेषामप्रामाण्यम् तदा स्यादयं दोषः, पुराणानां परस्परविरोधेन सर्वेषामविशेषेण प्रामाण्येऽनुपपन्ने सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिद्ध्यनुगुणनिर्वाहे न्याय्ये सति कस्याप्रामाण्यं कस्य च प्रामाण्यमित्यपेक्षायां विषयव्यवस्थामात्रपरत्वादस्य वचनस्य, अतोऽनेन सत्त्वादिमूलत्वे ज्ञापिते सत्यदुष्टमूलैः प्रबन्धैर्दुष्टमूलप्रबन्धबाधः, अतो न भूयसां बलीयस्त्वनयेन तद्वचनबाधः, भगवत्प्रतिपादकपुराणेभ्यो विधिशिवप्रतिपादकपुराणबाहुल्यात्तत्प्रामाण्यमिति चेत्,— इदं तावद्वचनमबाधितम्, इह भूयसां बलीयस्त्वनयानवतारात्; एवं बाधकरहितेनानेन वचनेन सत्त्वादिमूलत्वे पुराणानामवगते सति दुष्टमूलपुराणबाहुल्यमदुष्टमूलैकमपि पुराणं न बाधितुं प्रभवति । नहि भ्रान्तपुरुषसहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते, अतो भगवत्प्रतिपादकत्वेन सत्त्वमूलत्वान्न कारणदोषः, तथा पुराणान्तराणामिवास्य बाधकप्रत्ययो न दृश्यते, नारायणस्यैव परमकारणत्वप्रतिपादनात् । प्रत्यक्षश्रुतिषु हि नारायणस्यैव सामान्यशब्दविशेषशब्दाभ्यां कारणत्वमुक्त्वा "न चास्य कश्चिज्जनिता न चाधिपः' 'न तत्समश्चाभ्यधिकश्च दृश्यते"

* भावप्रकाशिका *

भावः । ( तस्मान्नास्य वचनस्येति ) वस्तुतस्तु सात्त्विके गारुडपुराणेऽस्य वचनस्योपालम्भादेतस्य तामसमात्स्यपुराणवचनस्य प्रामाण्यसिद्धावपि न क्षतिरिति द्रष्टव्यम् । ( अनेन [वचनेन] सत्त्वादिमूलत्व इति ) नन्वेवं द्वैताद्वैतग्राहिप्रमाणाविरोधेपि जैनैः स्वकर्मस्थिमितात्मनिश्चयैः 'ततो हि शैलाब्धिधरादिभेदान्' इत्यादिप्रमाणानुसारात्, द्वैतज्ञानस्य सर्वस्यापि दोषमूलत्वनिश्चयसम्भवात् द्वैतग्राहिप्रत्यक्षस्याद्वैतश्रुतिपरिपन्थित्वं न स्यादितिचेन्न, तेषां वचनानां भेदप्रत्यक्षादेः दोष-

* श्रुतप्रकाशिका *

"न ह्येतस्मादिति नेत्यन्यत्परमस्ति' 'यस्मात्परं नापरमस्ति किञ्चित्"इति कारणभूतात्तस्मादन्यस्य परत्वं च निषिध्यते । 'न ब्रह्मा नेशानः' 'तत्र ब्रह्मा चतुर्मुखोऽजायत' त्र्यक्षः शूलपाणिः पुरुषोऽजायत 'ततो जज्ञ उग्रस्त्वेष नृम्णः' 'विरूपाक्षाय ब्रह्मणः पुत्राय' अजस्य नाभावध्येकमर्पितम्" 'स प्रजापतिरेकः पुष्करपर्णे समभवत्' 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिः"इति ब्रह्मशिवयोश्च नारायणादुत्पत्तिः श्रूयते । लैङ्गे तु ब्रह्मविष्णू प्रति "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ" इति रुद्रोक्त्या रुद्राद्धरिचतुर्मुखयोरुत्पत्त्यवगमात्पुराणान्तराणां श्रुतिविरोधः स्फुटतरः । यद्यपि कैश्चित् त्रयाणां देवानां साम्यमैक्यं चाभ्युपगतम् , तथाप्ययं विरोधो दुष्परिहरः , तुल्यानामेकीभूतानामपि तेषामुत्पत्तिप्रतिपादने भगवतश्चतुर्मुखशिवयोरुत्पत्तिश्रवणाद्रुद्रादितरयोरुत्पत्तेः क्वचिदपि वाक्ये श्रवणाभावाच्च , कारणवाचिशिवादिशब्दानामाकाशादीनामिव कार्यतयावगतप्रसिद्धरुद्रादिपरत्वाभावाच्च "सर्वे विष्णुमया वेदाः सर्वे विष्णुमया गुणाः । न हि विष्णुसमा काचिद्गतिरन्या विधीयते । इत्येवं सततं वेदा गायन्ते नात्र संशयः ॥" इति लैङ्गादावपि वेदानां भगवत्परत्वप्रतिपादकत्वाभ्युपगमाच्च; अतो नारायणस्यैव परमकारणत्वपराभिः प्रत्यक्षश्रुतिभिर्बाधकप्रत्ययवद्भ्यः पुराणान्तरेभ्यो वैलक्षण्यं स्फुटम् ; तथा नारायणमेव परमकारणं प्रतिपादयद्भिर्मानवादिधर्मशास्त्रैरप्यैकार्थ्यं स्पष्टम् । "आपो नारा इति प्रोक्ताः' 'तद्विसृष्टः स पुरुषः' 'विद्यात्तु पुरुषं परम्' 'नारायणः परोऽव्यक्तात्" इत्यादिभिर्नारायणस्यैव हि कारणत्वं तेषूच्यते । पुराणान्तराणि तु धर्मशास्त्रविरुद्धानि च , तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धम् "सहोवाच व्यासः पाराशर्यः" इति । अत्र पराशरात्मजत्वेन हि व्यासोत्कर्ष उच्यते , तथा लैङ्गेऽपि पराशरवैलक्षण्यं प्रतीयते ,यथा तत्र द्वितीयेऽध्याये "पराशरस्यावतारो व्यासस्य च शुकस्य च । विनाशं राक्षसानां तु कृतं वै शक्तिसूनुना"इति ।

७ भावप्रकाशिका ७

मूलत्वप्रतिपादकत्वस्याप्यसिद्धेः । ( न ह्येतस्मादिति नेत्यन्यत्परमस्तीति ) अयमर्थः,—अथात आदेशो नेति नेतीत्येवमिति नेतिशब्दनिर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं नास्तीति । ( कारणवाचिशिवादिशब्दानामिति ) "यदा तमस्तन्न दिवा न

* श्रुतप्रकाशिका *

अत्र पराशरस्यावतार इत्युक्तिर्हि प्रकर्षातिशयार्था, अन्यथा 'पराशरस्य चोत्पत्ति-र्व्यासस्य च शुकस्य चे'त्यपि हि वक्तुं शक्यते, पुलस्त्यवसिष्ठवरदानलब्धपरदेवता-पारमार्थ्यज्ञानवत्त्वं च महद्वैलक्षण्यम्, वरदाने सत्येतत्पुराणप्रामाण्यं, तत्प्रामाण्ये सति तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यम् ; वरलाभवचनस्य पराशरो न लब्धवर इति बाधकप्रत्ययाभावेन स्वतस्सिद्धप्रामाण्यस्य अनपोदितत्वात्. लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते, यथा तत्र द्वितीयेऽध्याये "देव-तापारमार्थ्यं च विज्ञानं च प्रसादतः । पुराणकरणं चैव पुलस्त्यस्याज्ञया गुरोः" इति । तत्रैव त्रिषष्टितमेऽध्याये । "अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः । प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः" । इति च । तदनन्तरं च "षट्प्रकारं समस्तार्थसाधकज्ञानसंश्रयम् । दशसाहस्रममितं सर्ववेदार्थसंयुतम्" इत्यनेनास्य पुराण-रत्नस्य सर्ववेदार्थसंयुतत्वम्, अत एव समस्तपुरुषार्थसाधकज्ञानप्रसाधकत्वं चोच्यते ; अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तरसिद्धमिति तदुपपन्नम् । इदं चापरं सुमहद्वैलक्षण्यम्, यत्सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वं "सोऽहमिच्छामि धर्मज्ञ ! श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग ! भविष्यति । यन्मयं च जगत् ब्रह्मन् यतश्चैतच्चराचरम् ॥" इत्यादिना सामान्येन पृष्टे "विष्णोः सकाशादुद्भूत"मिति विशेषनिष्ठप्रतिवचनं ह्यवगम्यते । विशेषे पृष्टे सति प्रतिवचनस्य पृष्टविशेषपक्षपातेन तदुत्कर्षकथनं प्रशंसामात्रं न तत्त्वपरमिति शङ्कनीयं स्यात्, सामान्येन पृष्टे सति प्रतिवचनमर्थवशाद्विशेषपर्यवसितमिति तत्त्वपरत्वमेव स्यात् ; अतश्च "त्वत्तो भवन्तं पृच्छामः सूत पौराणिकाद्य तु । पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुताम्" इति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयः स्पष्टतरः । एतत्पुराणार्थश्च लैङ्गादिषु क्वचित् क्वचिदङ्गीक्रियते, यथा लैङ्गे द्वितीये पुराणार्थानुक्रमणे "सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु । विष्णोः प्रसादाज्जिष्णोश्च विष्णोश्चैव तु सम्भवः ॥" तत्र "लीलया चैव कृष्णेन

* भावप्रकाशिका *

रात्रिर्न सन्न चासच्छिव एव केवलः । शिव एको ध्येयः" इत्यादीनाम् 'आकाशादेव समुत्पद्यन्ते' इत्यादिवाक्यतुल्ययोगक्षेमत्वादिति भावः । ( दशसाहस्रममितमिति )

ज्ञानवतो भगवतः पराशरात्स्त्रावगतवेदार्थोपबृंहणमिच्छन् मैत्रेयः परिपप्रच्छ,—

* श्रुतप्रकाशिका *

स्वकुलस्य च संहृतिः । जरकास्त्रच्छलेनैव गमनं स्वेच्छयैव तु ” इति भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धनत्वं हि तत्रोच्यते ; अत एव एतत्पुराणार्थस्यान्यत्राभ्युपगतत्वादप्रकम्प्यत्वमवगम्यते । तर्ह्येतदैकार्थ्यात्तान्यपि पुराणानि प्रमाणानि स्युरिति चेन्न , कार्त्स्न्येनाविरुद्धत्वाभावात् , भगवदुत्कर्षप्रतिपादकांशस्तु आग्रहासम्भवादादरणीय इति पूर्वमेवोक्तम् । अस्य च पुराणस्य कार्त्स्न्येनाऽनाग्रहमूलत्वं चोपक्रमगतप्रश्नस्वाभाव्यादवगतमिति चोक्तम् , अतोऽन्यत्र बद्धाग्रहैरप्यादरणीयत्वोक्तार्थत्वमप्रकम्प्यताहेतुः । किञ्च पुराणान्तरेष्विवास्य पुराणस्य न स्वव्याहतार्थप्रतिपादकत्वं दृश्यते , कार्त्स्न्येन भगवत्प्रकर्षस्यैवावगमात् , पुराणान्तरेषु व्याघातः प्रतीयते , यथा लैङ्गे “ युवमां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः । वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः ” इति । तत्र “ ततः प्रहृष्टस्सुमनाः प्रणिपत्य महेश्वरम् । प्राह नारायणो देवः सलिङ्गं लिङ्गवर्जितम् । यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ॥ भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी ” इतिहरिविरिञ्चयोः शिवादुत्पत्तिस्तदाराधनवरवरणादिकमुक्तम् । तत्र क्वचित् “त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥ इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसम्भवत्वमुक्तमिति स्वव्याघातः । न च वसुदेवादेरुत्पत्तिवत्कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनरूपलीलोक्तिरित्यविरोधः , पुराणरत्नभारतादौ “ मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः । तथापि यो मनुष्याणां धर्मस्तदनुवर्तनम् ॥ कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ । साम चापि प्रदानं च तथा भेदप्रदर्शनम् । करोति दण्डपातं च क्वचिदेव पलायनम् । मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते ॥ लीला जगत्पतेस्तस्य छन्दतः सम्प्रवर्तते ।

* भावप्रकाशिका *

षट्साहस्रप्रतिपादकवचनविरोधस्तु वृत्तभेदादिना आधिक्यमात्रपरतया सङ्ख्याया

१ "सोऽहमिच्छामि धर्मज्ञ! श्रोतुं त्वत्तो यथा जगत्।

* श्रुतप्रकाशिका *

ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः ॥ कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ तेन वञ्चयते लोकान् मायायोगेन केशवः ॥ ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥" इत्यादिभिरित्र तत्र तत्र प्रसक्तापकर्षपरिहारपरग्रन्थादर्शनात् भारतादिषु दशरथवसुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादनाभावादिह भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च, अतः स्वव्याघातो दुष्परिहरः। न च तथात्र स्वव्याहतिः प्रतीयत इति। इदञ्च महद्वैलक्षण्यम्, उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तरस्य च विरोधे सति पुराणरत्नस्य प्राबल्यम्, अन्येषां च दौर्बल्यं च सुस्पष्टम्। एवं प्रसिद्ध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्तत एव नष्टकोशत्वाभावादनतिविस्तृततया प्रक्षेपशङ्कारहितत्वादन्यपरोक्तिप्रसिद्धपरिग्रहातिशयवत्त्वात्सामान्यप्रश्नपूर्वप्रतिवचनरूपत्वेन अनाग्रहमूलत्वाद्तण्वेदशवैलक्षण्यरहितकारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तराणामेतद्विरोधे सति दौर्बल्यस्यावर्जनीयत्वाच्च श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम्। एतत्सर्वं हेतुजातमभिप्रेत्य प्रधानभूतयुक्तिं कण्ठोक्त्या प्रदर्शयन् तन्मुखेन प्रबन्धवैलक्षण्यं वदन् प्रश्नमवतारयदि– तत्रेति। पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवत इत्यत्र देवतापारमार्थ्यशब्देन तमःकार्यं धर्म्यन्तरत्वेन धर्म्यन्तरस्य प्रतीतिरूपं विपरीतज्ञानं व्यावर्तितम्, अनेन देवतापारमार्थ्यं चेति वचनं स्मारितम्। प्रशंसार्थेन मतुप्प्रत्ययेन रजःकार्यं प्रकारान्तरोपेतस्य तद्विरुद्धप्रकारान्तरविशिष्टताप्रतीतिरूपमन्यथाज्ञानं व्यावर्तितम्, अनेन यथावदित्यस्यार्थः सूचितो भवति, देवताशब्देन कर्मणा उपासनेन वा आराध्यत्वं फलप्रदत्वं च विवक्षितम्, अनेन सविशेषत्वसिद्धिः यथावदिति। प्रकारकथनेनापि सविशेषत्वसिद्धिरिति वरलाभकथनं सविशेषत्वोपपादकमित्यभिप्रायः। भगवच्छब्देन ज्ञानवत्त्वमुक्तम्, वरलाभात्तदतिशयसिद्धिः। सोऽहमित्यादि। सोऽहम्–त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहमिति भावः। धर्मज्ञ–विशेषोऽस्ति न सतां शिष्यपुत्रयोः" इत्येवंरूपधर्मज्ञ। यद्वा "आनृशंस्यं परो धर्मः" इति धर्मज्ञ। आनृशंस्यम्,–आश्रित-

१ विष्णु-पु-१-अं. १ अ ४. श्लो.

बभूव भूयश्च यथा महाभाग ! भविष्यति ॥
[1] "यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥" इत्यादिना ।

* श्रुतप्रकाशिका *

संरक्षणपरत्वम् । 'आश्रितेत्यानृशंसता' इति वचनात् । महाभाग—परिपूर्णं कृत्यं हि परसंरक्षणम्, किञ्चित्कारमप्यनपेक्ष्य रक्षकस्त्वमेवेति भावः । यथा यतो बभूव ब्रह्मरुद्रादिषु कः कारणमिति ज्ञातुं यत इति प्रश्नः, किं विवर्ताधिष्ठानत्वं कारणत्वम्? उत परिणामित्वम्? तत्रापि किं सद्वारकपरिणामित्वम्? उताद्वारकपरिणामित्वम्? इतिप्रकारभेदजिज्ञासया यथेतिप्रश्नः । कल्पभेदेन सृष्टिवैषम्यशङ्कया भविष्यतीति प्रश्नः, वृश्चिकस्य गोमयवृश्चिकोपादानकत्वदर्शनात्, कल्पभेदेन उपादानादिभेदशङ्का ह्युपपद्यते, तत्रापि यतो यथेतिपदयोः पूर्ववदर्थः । यतो यथा बभूवेति एकप्रश्नत्वशङ्का यन्मयमितिप्रश्नान्तरव्यवधानेन निरस्यते, यथा कारणं ज्ञातव्यं तथा सृष्टिप्रकारोऽपि पृथग् ज्ञातव्य इति ज्ञापनार्थम्, ज्ञातव्यत्वेऽपि प्राधान्यद्योतनाय प्रकारप्रश्नः पूर्वमेव कृतः । यत इति हेतौ पञ्चमी ; अतो निमित्तोपादानयोस्तन्त्रेण प्रश्नः, अन्तस्स्थित्याद्युपयुक्तात्मशरीरभावप्रश्नः । यन्मयमिति मयट्प्रत्ययः प्राचुर्यार्थः ; अनेन व्याप्तिर्दर्शिता । व्याप्यव्यापकप्राचुर्यं हि घटाकाशादौ दृष्टम् । आत्मतया हि व्याप्तिः, आत्मत्वञ्च धारकत्वम् ; अतोऽन्तर्यामिकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नः फलितः । यन्मयम्—येनान्तर्यामिणा धारकेण प्रचुरं जगत्स्थितमित्यर्थ उक्तो भवति । अन्तःप्रविश्य प्रशासनेन धारकत्वं स्थिति-

* भावप्रकाशिका *

अविवक्षितत्वेन वा समाधेयः । (आश्रितेत्यानृशंसता) स्वयमाश्रिता, अतो रामस्य स्वस्यामानृशंसतेति सीतावचनादितिभावः (तत्रापि यतो यथेतिपदयोरिति) यतो यथा बभूवेत्यत्रेव यतो यथा भविष्यतीत्यत्रापीत्यर्थः । (प्रश्नान्तरव्यवधानेनेति) इदमुपलक्षणम् । यतश्चैतच्चराचरमिति चशब्दादीनामपि द्रष्टव्यम् (आत्मतया हि व्याप्तिरिति) यद्यपि यन्मयमिति मयडर्थप्राचुर्यबलेन व्यापकत्वमात्रं सिध्येत्

१ विष्णु- पु-१-अं. १-अ. ५ श्लो.

* श्रुतप्रकाशिका *

हेतुत्वमिति हि प्रागेव विशदीकृतम्। चशब्दाद्बहिर्भूतपोषकादिकृता पोषणादिलक्षणा स्थितिर्मातापित्रादिभिः कार्या, इष्टप्रापणानिष्टनिवारणलक्षणास्थितिश्च पृष्टा भवति। यत इत्युपादानस्यापि पृष्टत्वात् मयट्प्राचुर्यार्थ एव। न च गोबलीवर्दन्यायेन यत इति पञ्चम्यर्थः सङ्कोचयितव्यः, बलीवर्दशब्दवन्मयटोऽनन्यथासिद्धत्वाभावात्सङ्कोचकत्वानुपपत्तेः। पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचो गोबलीवर्दनय इति हि न्यायविदः। अत्र तु मयटोऽर्थान्तरसम्भवान्नायं सङ्कोचकः, यत इतिपदं निमित्तमुपादानं च बोधयितुं शक्तम्, स्थितिप्रश्नोऽपेक्षितश्च; अतोऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम् 'यतो वा इमानि' इत्यादिश्रुतावपि यत इति पदेनैव निमित्तोपादानयोरुक्तत्वाच्छ्रुतिच्छायानुविधानाच्च यत इति तन्त्रेण प्रश्न इति यन्मयमिति स्थितिप्रश्नः क्रियते। अर्थान्तरस्वीकारे अपेक्षिताऽवचनमनपेक्षितवचनं च स्यात्। नापि स्वार्थिको मयट्, प्रत्ययस्यार्थवत्त्वे सम्भवति तत्परित्यागस्यान्याय्यत्वात्, अतो यथोक्त एवार्थः। लयस्थानप्रश्नो लयप्रकारप्रश्नश्च अनधीतशाखान्तरेषु स्थानभेदप्रकारभेदशङ्कया कृतः, देवतान्तरस्य लयस्थानत्वं तत्रापि सद्वारकत्वाद्वारकत्वकार्यभ्रमनिवृत्तिरूपताख्यप्रकारभेदश्च हि शङ्कास्पदं भवति, भूतभविष्यप्रश्नश्च कल्पभेदेन लयस्थानप्रकारभेदशङ्कया कृतः, चकाराल्लयकर्तृप्रश्नश्च सूचितः, स च कर्तृभेदशङ्कानिबन्धनः। स्वरूपप्रश्नश्लोकद्वयं व्याचिख्यासितश्लोकापेक्षितत्वेनोदाहृत्य आदिशब्देन प्रश्ना-

* भावप्रकाशिका *

नारगत्वम्, अथापि सृष्टिलयसमभिव्याहारात् स्थितिहेतोर्व्यापकस्यैव प्रष्टव्यतयाऽऽत्मत्वसिद्धिरितिभावः। ननु यस्य यथोत्पत्तिस्थानत्वं तस्य तथा लयस्थानत्वञ्च सिद्धमिति लयस्थानतत्प्रकारप्रश्नावयुक्तावित्यत्राह (लयस्थानप्रश्न इति) (सद्वारकत्वाद्वारकत्वेति) सद्वारकत्वं सिद्धान्ते, अद्वारकत्वं यादवभास्करमतयोः, कार्यभ्रमनिवृत्तिरूपत्वं शङ्करमत इति विभागो द्रष्टव्यः। (सच कर्तृभेदशङ्कानिबन्धन इति) लोके उत्पादकसंहर्त्रोर्भेददर्शनादिति भावः। यत्प्रमाणानि भूतानीत्यादिप्रश्नश्लोकानां भाष्ये कण्ठतोऽनुपादाने हेतुमाह (स्वरूपप्रश्नश्लोकद्वयमिति) स्थितिलययोरकर्मकत्वात् स्थितिलयकर्मभूतमित्युक्तिरसङ्गता स्यादित्या

अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकारतदाराधन-स्वरूपफलविशेषाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत्किमात्मक-मिति पृष्टम्, तस्य चोत्तरं जगच्च स इति । इदञ्च

* श्रुतप्रकाशिका *

न्तरपरश्लोकाः क्रोडीकृताः । विष्णोस्सकाशादितिश्लोकस्यार्थोन्तरप्रश्नोत्तररूप-त्वशङ्काव्युदासार्थं तेषां श्लोकानामर्थं संग्रहेणाह ( अत्रेति ) ( ब्रह्मस्वरूपेति ) स्वरूपशब्दो विभूत्यादिव्यावर्तकः, स्वरूपविशेषशब्दो ब्रह्मादिव्यावर्तकः । विभूति-भेदानां प्रकारो विभूतिभेदप्रकारः, स च ज्योतिश्चक्रभुवनकोशादिप्रश्ने ऽन्तर्गतः, वर्णाश्रमधर्मादिप्रश्नेन तदाराधनस्वरूपं पृष्टम्, प्रतिवचने फलविशेषोक्तिदर्शनात् । प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायत इतिनीत्या फलविशेषश्चात्र पृष्टो भव-तीति पूर्वोक्तेषु प्रश्नेष्वन्तर्भावित इत्यभिप्रायेण फलविशेषाश्च पृष्टा इत्युक्तम् । सप्रयोजनमाराधनं पृष्टमिति तत्र तदन्तर्भावः, अयमेवार्थः सकलश्रुतीतिहासपुरा-णानां प्रतिपाद्य इति भावः । ततः किं प्रस्तुतश्लोकार्थस्येत्यपेक्षायां यन्मयमिति-पदस्यार्थं सोपपत्तिकमाह ( ब्रह्मस्वरूपेति ) सृष्टिस्थितिलयकर्मभूतमितिपदं सृष्टि-प्रलययोरुक्तत्वेन स्थितिकथनस्यापेक्षितत्वज्ञापनार्थम्, स्थितिलयशब्दाभ्यां रक्षा-संहारौ विवक्षितौ, स्थितिलययोः प्रयोज्यव्यापारत्वेन तदाश्रयत्वेन तत्कर्मत्वाभावा-ज्जगतः, सृष्टिस्थितिलयकर्मभूतं जगत्स्थित्यर्थं किमात्मकं भवतीति प्रश्नार्थः । ततः किमित्यत्राह ( तस्यचेति ) जगच्च स इति सामानाधिकरण्यप्रतिपन्नं तादात्म्यं स्वरूपैक्यलक्षणमाशङ्क्य परिहरति ( इदं चेति ) इदम्— सामानाधिकरण्यप्रतिपन्न-

* भावप्रकाशिका *

शङ्क्याह ( स्थितिलयशब्दाभ्यां रक्षासंहारौ विवक्षिताविति ) इदमितिपदं व्याचष्टे ( सामानाधिकरण्यप्रतिपन्नमित्यर्थ इति ) अत्र केचित्,—इदञ्च तादात्म्यमिति भाष्ये इदंशब्दस्य सामानाधिकरण्यपरत्वं युक्तम्, तादात्म्यशब्दश्च तत्प्रतिपादक-सामानाधिकरण्यपर एव व्याख्यातुमुचितः, तादात्म्यप्रतिपादकं सामानाधिकरण्यं

तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतम्, न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्। यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य, यन्मयमिति मयडत्र न विकारार्थः, पृथक् प्रश्नवैयर्थ्यात्। नापि प्राण-

* श्रुतप्रकाशिका *

मित्यर्थः। गगनादौ व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति तद्व्यावृत्त्यर्थमात्मत्वं विवृणोति (अन्तर्यामिरूपेणेति) अन्तःप्रविश्य नियन्तृत्वं ह्यात्मत्वम् (व्याप्यव्यापकयोरिति) जगद्ब्रह्मणोर्व्याप्यत्वेन व्यापकत्वेन च श्रुतिसिद्धत्वादिति भावः। नतु वस्त्वैक्यकृतमिति प्रतिज्ञामुपपादयति (यन्मयमिति) विकारार्थत्वमाशङ्क्य परिहरति (यन्मयमिति मयडिति) कुत इत्यत्राह (पृथगिति) विकारार्थत्वे उपादानं पृष्टं स्यात्। न च तत्प्रष्टव्यम्, यत इति पञ्चम्यन्तपदेन उपादानस्यापि पृष्टत्वात्, अतः पृथक्प्रश्नवैयर्थ्यम्। न च गोबलीवर्दन्यायः, अर्थान्तरसम्भवादिति। अपेक्षितविधेरनपेक्षितविधानं दुर्बलमितिन्यायश्चाभिप्रेतः। ब्रह्माज्ञानवादिनोऽभिमतं स्वार्थिकत्वपक्षं दूषयति (नापीति) न तु भेदाभेदपक्षाभ्युपगतम्, तत्तु दूषयिष्यते, नह्यर्थे सम्भवति निरर्थकत्वाश्रयणमुपपन्न-

* भावप्रकाशिका *

जगदन्तर्यामिणो जगच्छब्दार्थस्य तच्छब्दार्थस्य परमात्मनश्चैक्यनिबन्धनम्, नतु व्याप्यव्यापकयोर्जगद्ब्रह्मणोरैक्यनिबन्धनम्, यन्मयमिति प्रश्नोत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्येति योजनैव स्वरसतः प्रतीयते। यदि च तादात्म्यशब्दस्सामानाधिकरण्यप्रतिपन्नैक्यपरः, तदा 'नतु व्याप्यव्यापकयोर्वस्त्वैक्यकृत'मितिभाष्यस्यास्वारस्यम् नहि तादात्म्यलक्षणस्यैक्यनिबन्धनत्वशङ्काऽस्ति, अतस्तादात्म्यशब्द एव सामानाधिकरण्यपरतया योजनीयः। टीकाया अपि तत्रैव तात्पर्यमिति वदन्ति (व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति) गगनं घट इति सामानाधिकरण्यं न दृष्टमित्यर्थः। न त्वैक्यमिति भ्रमितव्यम्। शरीरात्मनोरपि तादात्म्यलक्षणैक्याभावादिति द्रष्टव्यम् (श्रुतिसिद्धत्वादितिभाव इति) व्याप्यत्वव्यापकत्वरूपविरुद्धधर्माध्यस्तयोरैक्यासम्भवादिति भावः। (ब्रह्माज्ञानवादिनोऽभिमतमिति) यद्यपि

मयादिवत् स्वार्थिकः, जगच्च स इत्युत्तरानुपपत्तेः ।
तदा हि विष्णुरेवेत्युत्तरमभविष्यत्, अतः प्राचुर्यार्थं

* श्रुतप्रकाशिका *

मिति भावः। श्रुतार्थस्वीकारेणाश्रुतकल्पनं ह्युचितम्, न तु श्रुतपरित्यागः। ब्रह्माज्ञानवादिनाभ्युपगतस्य स्वार्थिकत्वस्य असाधारणं दूषणमाह (जगदिति) स्वार्थिकत्वपक्षे यदिदं जगत्तत्किमित्युक्तं स्यात्, यदिदं जगत्तत्किमित्युक्ते ज्ञातस्य जगद्रूपमात्रस्य प्रष्टव्यत्वायोगात् प्रश्नावैयर्थ्याय तत्किं सत्यम्? उत मिथ्या? इति पृष्टं भवतीत्यभ्युपेतव्यम् तत्र मिथ्येत्युत्तरं वक्तव्यम्. तत्रान्यतराकारोपस्थापके आकारान्तरनिषेधके चशब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नमित्यर्थः। बाधार्थं सामानाधिकरण्यमिति चेत्तन्नास्ति, माता मे वन्ध्येतिवत् सामानाधिकरण्यं बाधार्थमिति व्याहतत्वादिति भावः । तर्हि कथमुत्तरं स्यादित्यत्राह (तदा हीति) विष्णुरित्यन्यतराकारोपस्थापकः शब्दः, आकारान्तरनिषेधकशब्द एवकारः । साक्षादर्थमाह (अत इति) अतः—स्वार्थिकत्वविकारार्थत्वयोरनुपपन्नत्वादित्यर्थः।

* भावप्रकाशिका *

विकारार्थत्वमप्यभिमतम्, तथापि अत इत्यनेन सिद्धत्वादिदमेव तस्याभिमतमिति भावः। ननु त्वन्मतेपि मयटः प्राचुर्यार्थत्वाश्रयणमात्रेणात्मत्वपर्यन्तार्थालाभाच्च कल्पने च प्रतिपत्तिगौरवान्मयडो निरर्थकत्वमविशिष्टमित्यत आह (श्रुतार्थस्वीकारेणेति) (असाधारणं दूषणमाहेति) अर्थवत्त्वे सम्भवत्यानर्थक्याश्रयणमन्याय्यमित्यस्य भेदाभेदवादिसाधारणत्वादिति भावः। ननु विष्णुरेवेत्युत्तरमभविष्यदिति भाष्यमयुक्तम्, किमत्र जगत्पदं न प्रयोक्तव्यमित्यभिप्रायः? उत एवकारः प्रयोक्तव्यः? इति। न प्रथमः, जगत्किमिति जगद्धर्मिकप्रश्ने उत्तरस्यापि जगद्धर्मिकस्यैवोचितत्वात्। नाप्येवकारप्रयोगः, सर्वं वाक्यं सावधारणमितिन्यायेन सिद्धेः। किञ्च जगद्विष्णुरेवेत्युत्तरञ्चासङ्गतम्, नहि शुक्तिरेव रूप्यमिति उत्तरं क्वचिद्दृष्टचरमित्याशङ्क्य मिथ्यैवेत्युत्तरमभविष्यत्, नतु विरुद्धाकारद्वयसामानाधिकरण्येनेति भाष्यतात्पर्यार्थं हृदि निधायाह (स्वार्थिकत्वपक्ष इत्यादिना) (अन्यतराकारोपस्थापक इति) सत्यत्वमिथ्यात्वयोरन्यतराकारोपस्थापक इत्यर्थः। (विष्णु-

एव । [1] "तत्प्रकृतवचने मयट्" इति मयट् । कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव ; तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः

* श्रुतप्रकाशिका *

शब्दानुशासनानुमतिं दर्शयति ( तदिति ) प्रकृतम्—प्रकर्षेण कृतं प्रभूतम्, प्रचुरमित्यर्थः । "अन्नमयो यज्ञः" 'शकटमयी यात्रा' इति हि तस्योदाहरणम् । किमत्र प्राचुर्यमस्तीत्यत्राह ( कृत्स्नञ्चेति ) 'अन्तर्बहिश्च व्याप्य'इत्यादिश्रुतेस्तदुपपन्नमिति भावः । सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं प्रतिपिपादयिषितमुपसंहरति ( तस्मादिति ) यन्मयमित्यस्य प्राचुर्यार्थत्वेन तस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वम्, तेन स्वार्थिकत्वनिवृत्त्या यन्मयमिति मयटप्रत्ययस्य प्राचुर्यार्थत्वमित्यन्योन्याश्रय इतिचेत्; नैवम्, मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तेः प्राचुर्यार्थनिर्णयस्य च सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वानपेक्षत्वात् । स्वार्थिकत्वं तावत् अर्थवत्त्वे सम्भति निरर्थकत्वस्वीकारायोगादपास्तम् । जगच्च स इति सामानाधिकरण्येन च अपास्तम्, स्वार्थिकत्वे सति आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगात् , नतु शरीरात्मभावनिबन्धनत्वा-

* भावप्रकाशिका *

रित्यन्यतराकारोपस्थापकश्शब्दइति ) विष्णुरेवेतिभाष्ये विष्णुशब्दस्य न विष्णुत्वे तात्पर्यम्, किन्तु सत्यत्वमिथ्यात्वयोरन्यतराकारे तात्पर्यमित्यर्थः । ( प्रभूतं प्रचुरमित्यर्थ इति ) यद्यपि काशिकायां प्राचुर्येण प्रस्तुतं प्रकृतमिति व्याख्यातम् । तद्व्याख्यात्रा हरदत्तेनापि, यद्यपि प्रस्तुतमात्रं वक्ति प्रकृतशब्दस्तथापि इहवचनग्रहणादयं विशेषो लभ्यते, वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयड्वचनं प्रत्यासन्नम्, तत्र यथा स्यादित्येवमर्थ इत्युक्तम्, तथाप्यस्य ततोपि सुन्दरत्वादिदमेव ज्याय इति ध्येयम् । शङ्कते ( यन्मयमित्यस्येति ) ( आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगादिति ) यद्यपि जगन्मिथ्येत्याकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वं सम्भवति, तथापि जगद्विष्णुरेवेति सामानाधिकरण्यस्योत्तरत्वं

[1] अष्टा. ५-अ. ४-पा. २१-सू.

शरीरात्मभावनिबन्धनमिति निश्चीयते । अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते, तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते । तथा हि— सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात् । जगद्ब्रह्म-

---

* श्रुतप्रकाशिका *

योगात् । नच सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभूताकारद्वयोपस्थापकत्वं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिसापेक्षम्, सामानाधिकरण्यलक्षणस्वभावादेव तस्याकारद्वयोपस्थापकत्वसिद्धेः, अतो मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिः सामानाधिकरण्यस्याकारद्वयोपस्थापकत्वादित्यत्र नान्योन्याश्रयः, एवं स्वार्थिकत्वे व्युदस्ते पृथक् प्रश्नवैयर्थ्येन विकारार्थत्वेऽनुपपन्ने परिशेषाच्च स्थितेः प्रष्टव्यत्वे सति स्थितिस्वाभाव्यादनुशासनानुरोधाच्च मयट्प्रत्ययस्य प्राचुर्यरूपार्थविशेषपरत्वसिद्धिः, ततो जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावरूपप्रवृत्तिनिमित्तविशेषसिद्धिरिति नान्योन्याश्रयः । एवं सामानाधिकरण्यस्य मृषावाद्यभिमतैक्यपरत्वे मयडानर्थक्यं सामानाधिकरण्यानुपपत्तिश्चेति दूषणद्वयम्, स्वरूपैक्यपरत्वेऽर्थविरोधो यन्मयमित्युक्तप्रश्नोत्तरत्वानुपपत्तिश्चेति दूषणद्वयं च दर्शितं भवति । स्वोक्तार्थपरत्वानभ्युपगमे दूषणमाह (अन्यथेति) अन्यथा कथं प्रश्नप्रतिवचने स्यातामित्यत्राह (तथा हि सतीति) सामानाधिकरण्यस्य भेदाभेदवाद्यभ्युपगतैकद्रव्यतापरत्वं दूषयति (जग-

* भावप्रकाशिका *

न सम्भवतीत्यत्र तात्पर्यम् । (ननु शरीरात्मभावनिबन्धनत्वायोगादिति) स्वार्थिकत्वमपास्तमिति पूर्वेणान्वयः । सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वायोगप्रज्ञात्स्वार्थिकत्वं नापास्तम्, येन शरीरात्मभावनिबन्धनत्वसाध्याप्यसिद्धत्वात् अन्योन्याश्रयस्स्यादित्यर्थः । (अर्थविरोध इति) जडाजडयोरैक्यविरोध इत्यर्थः । (यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति) मयडोऽर्थवत्त्वाय विकारप्राचुर्ययोरेव प्रष्टुमुचितत्वादिति भावः । ननु न मयड्वैयर्थ्यं यन्मयमिति विकार-

णोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत। सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते ; अतः

* श्रुतप्रकाशिका *

दिति ) अस्मिन्नपि पक्षे जगद्यन्मयं जगद्यद्द्रव्यमिति पृष्टं स्यात्, तदानीं मयड्वैयर्थ्यमस्तीति द्रष्टव्यम्, यत इत्युपादानस्य पृष्टत्वात्। अधिकं दूषणमाह ( सत्येत्यादिना ) सत्यसङ्कल्पेत्यादिना जीवगतदोषः सर्वाशुभेत्यादिना प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यत इत्युक्तम्। यद्वा उभयलिङ्गकत्वहानिर्विपरीताकारप्राप्तिश्चेत्यर्थः। शरीरवाचिपदस्य शरीरिपरत्वे मुख्यत्वं न स्यादित्यत्राह ( आत्मशरीरेति ) स्थाप्यते—स्थापयिष्यत इत्यर्थः। अनन्तरभावित्वात् स्थाप्यत इत्युक्तम्। एवं प्रकृतश्लोकव्याख्यानौपयिकार्थः प्रपञ्चितः। अथ शास्त्रार्थसङ्ग्रहानन्तरं विस्तरोपक्रमे सप्तश्लोकीं नमस्कारविषयामवतार्य व्याख्येयश्लोकस्य नमस्कारश्लोकान्तरैः सङ्गतिं दर्शयितुम् अविकारायेत्यादीनां पद्यानां वाक्यार्थमाह ( अत इति ) अतः—, प्रश्नप्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वावगमात् सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्चेति भावः। अत इत्यस्य व्यष्टिरूपेणावस्थितं च नमस्करोतीत्यनेनान्वयः। यद्वा शास्त्रवाक्यार्थस्यैवंरूपत्वात् "विष्णोः सकाशात्"

* भावप्रकाशिका *

प्रश्नसम्भवादित्याशङ्क्याह ( यत इत्युपादानस्य पृष्टत्वादिति ) निखिलहेयप्रत्यनीकता च बाध्येत सर्वाशुभास्पदञ्च ब्रह्म भवेदित्यनयोः पौनरुक्त्यं परिहरति ( सत्यसङ्कल्पेत्यादिनेति ) असङ्कोचादेकेनैव पदेन उभयदोषप्रसङ्गोक्तिसम्भवादन्यथा पौनरुक्त्यं परिहरति ( यद्वोभयलिङ्गत्वहानिरित्यादिना ) ननु स्थापयिष्यत इत्यर्थे कथं स्थाप्यत इत्यस्य साधुत्वमित्यत आह ( अनन्तरभावित्वादिति ) वर्तमानसामीप्ये वर्तमानवद्वेत्यनुशासनादिति भावः। ( सप्तश्लोकीं नमस्कारविषयामिति ) 'अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे॥ नमो हिरण्यगर्भाय हरये शङ्कराय च। वासुदेवाय ताराय सर्गस्थित्यन्तकर्मणे॥

[1] "विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थिति संयमकर्त्ताऽसौ जगतोऽस्य जगच्च सः ॥"

* श्रुतप्रकाशिका *

इत्यस्य सङ्ग्रहरूपत्वं 'परः पराणा'मित्यादीनां विस्ताररूपत्वं च सिद्धमित्यर्थः। विष्णोः सकाशादित्यत्र सकाशादितिपदं षष्ठ्याः पञ्चम्यर्थत्वसम्पादनार्थम्, यथा अस्य कृते इत्युक्ते कृते इति शब्दस्य चतुर्थ्यर्थत्वसम्पादनपरत्वं तद्वत् । यद्वा सकाशात्—ससङ्कल्पात्, काशनम्—प्रकाशनम्, सङ्कल्परूपज्ञानं तद्वत इत्यर्थः, अनेन निमित्तत्वसिद्धिः । यद्वा सकाशशब्दः पार्श्ववचनः, तेन शरीरमुपलक्षितम् "सोऽभिध्याय शरीरात्स्वा"दितिवच्छरीरादित्यर्थः । तत्रैव च स्थितमिति लयस्थानप्रश्नोत्तरम्, तत्र स्थितमिति स्थितम्—निष्ठाङ्गतम्; अनेन जगतो नित्यत्वमवस्थानामागमापायित्वं च सूचितम्. लयस्थानप्रश्नस्योत्तरमुक्तम् । अथ लयकर्तृप्रश्नस्य बाह्यस्थितिप्रश्नस्य च उत्तरमाह ( स्थितीति ) जगच्च स इति, यन्मयमिति फलितस्य कृत्स्नान्तर्यामिरूपकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नस्योत्तरम् । यद्वा यन्मयमिति फलितस्थितिप्रश्नस्यापि स्थितिसंयमकर्त्तेत्येवोत्तरम्, जगच्च स इति तु यन्मयमिति कण्ठोक्तस्यार्थस्योत्तरम्, इदं सामानाधिकरण्यमात्मतया व्याप्तिनिबन्धनमिति

* भावप्रकाशिका *

एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः । अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥ सर्गस्थितिविनाशानां जगतो यो जगन्मयः । मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् । प्रणम्य सर्वभूतस्थमनन्तं पुरुषोत्तमम् ॥ ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम् । प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥ इति सप्तश्लोकी । ( विस्ताररूपत्वञ्च सिद्धमित्यर्थ इति ) अत इत्यस्य सङ्ग्रहेणोक्तं विस्तरेण वक्तुमित्यनेन सन्निहितेनैवान्वय इति भावः । विस्ताररूपत्वञ्च सिद्धमित्यर्थ इत्युक्तिस्त्वन्वयफलितार्थाभिप्रायेति द्रष्टव्यम् । ( बाह्यस्थितिप्रश्नस्य चेति ) मातापित्रादिक्रियमाणस्थितिप्रश्नस्य चेत्यर्थः । ( कण्ठोक्तार्थ-

---

१ विष्णु-पु-१-अ. १ अं ३१- श्लो.

इति सङ्ग्रहेणोक्तमर्थं 'परः पराणा'मित्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम् 'अविकाराय' इतिश्लोकेन प्रथमं प्रणम्य

* श्रुतप्रकाशिका *

पूर्वमेवोपपादितम्। ननु निष्कर्षकशब्दानां शौक्ल्यादीनां धर्मिपर्यन्तत्वं न दृष्टम्, यन्मयं जगदित्यनेन जगच्छब्दस्य निष्कर्षकशब्दत्वं दृष्टमिति धर्मिपर्यन्ताभिधायित्वाभावाज्जगच्च स इति सामानाधिकरण्यमनुपपन्नमिति चेत्; उच्यते,—निष्कर्षकशब्दा हि द्विविधाः, नियतनिष्कर्षका वैकल्पिकनिष्कर्षकाश्च। तत्र शौक्ल्यादिशब्दा नियतनिष्कर्षकाः, मनुष्यशुक्लादिशब्दा वैकल्पिकनिष्कर्षकाः, प्रयोगस्य नियामकत्वात्, अन्यथा निष्कर्षकानिष्कर्षकविभागोऽपि नोपपद्यते, तथा जगच्छब्दोऽपि वैकल्पिकनिष्कर्षक इति, अत एव यन्मयमिति वैयधिकरण्येन प्रश्नस्य जगच्च स इति सामानाधिकरण्येनोत्तरमर्थभेदाभावादुपपन्नम्, शुक्लगुणस्य आश्रयः कः? इति प्रश्नस्य शुक्लः पटः इत्युत्तरवत्; एवं सङ्क्षेपेणोक्तस्य वक्ष्यमाणमहाविस्तरस्यार्थस्योपद्विस्तररूपेण श्लोकैर्नमस्कारः क्रियत इति नमस्कारश्लोकसङ्गतिः। स्वेनैव रूपेणावस्थितम्—नतु प्रकृत्यादिविशिष्टमित्यर्थः। परब्रह्मणो हि हेयसम्बन्धाभावः, न तु विष्णोरिति शङ्कायां 'विष्णुनामा स वेदेषु' 'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' इतिवचनात् ब्रह्मण एव विष्णुशब्दवाच्यत्वाद्विष्णोरेव भगवच्छब्दवाच्यत्वाच्च विष्णोर्हेयसम्बन्धोऽनुपपन्न इत्यभिप्रायेण परब्रह्मभूतमित्यादिविशेषणमुक्तम्। अविकाराय—विकारशब्दो धर्मिपरो धर्मपरश्च "षोडशकश्च विकारः" इत्यादिप्रयोगात्। स्वयं कस्यचिद्विकारभूतः कार्यभूतो न भवतीत्यविकारः, अनेन कार्याचिद्व्यावृत्तिः। यद्वा विकारः—अवस्था महत्त्वाहङ्कारत्वादिः, नित्यं तत्सम्बन्धविरहादविकारः, अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते, एवं तत्पुरुषबहुव्रीहिभ्याम् अविकारायेतिपदेन कार्यकारणरूपोभयावस्था-

* भावप्रकाशिका *

स्येति) आत्मस्वस्येत्यर्थः। (वक्ष्यमाणमहाविस्तरस्येति) अत्र प्रथनस्य शब्दद्वारकत्वात्प्रथनेचावशब्द इति शब्दविषये घञः प्रतिषेधात् विस्तरेत्युक्तिः (ईत्त-

तमेव हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्तिप्रधान-

* श्रुतप्रकाशिका *

चिद्व्यावृत्तिः, शुद्धायेति बद्धव्यावृत्तिः। नित्याय-शुद्धत्वेन नित्याय, अन्यथा अविकारायेत्यनेन पुनरुक्तिः स्यात्, नित्यपदं शुद्धिं विशिंषदेव शुद्धिमद्वस्तु-विशेषणम्, यथा महोदार इत्यत्र महच्छब्द औदार्यं विशिंषन्नेव दातुर्विशेषणम् तद्वत्, अतो मुक्तव्यावृत्तिः । परमात्मने इति नित्यमुक्तव्यावृत्तिः, ते हि परवन्तः, न तु परमाः 'प्रधानपुरुषव्यक्तकालानां परम'मिति वक्ष्यमाणत्वादविकारायेत्यादिना-पदचतुष्टयेन प्रधानपुरुषाव्यक्तकालव्यावृत्तिरिति केचित् । निमेषाद्यवस्थकालस्य व्यक्तस्याप्यविकारपदव्यावर्तितत्वात्पुरुषत्रैविध्यस्यैव प्रामाणिकत्वाद्विशेषणानां तद्व्या-वर्तनसमर्थत्वाच्च यथोक्तानामेवार्थानां व्यावर्तितत्वमुचितम्। विलक्षणविग्रहवत्तयापि-समस्तवैलक्षण्यमाह- सदैकरूपरूपायेति । प्रथमो रूपशब्दः स्वभाववाची, एकस्वभावमित्यर्थः। परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीकत्वमङ्गलास्प-दत्वध्येयत्वादिस्वभावोऽप्रच्युत इत्यर्थः । यद्वा एकरूपम्- दिव्यात्मस्वरूपेण समानस्वभावम् । तेनापि हेयप्रत्यनीकत्वादिसिद्धिः, एभिः पदैरीक्षत्यानन्दमया-धिकरणान्तरादित्यधिकरणार्था विवक्षिताः, पूर्वोक्तमात्मत्वं न मृदात्मको घट इति-वद्भवतीति तद्वैशद्यमवयवशक्त्या क्रियते विष्णुशब्देन, सर्वजिष्णव- इतिपदेन च, पदद्वयेन नृप नभोव्यावृत्तिः ,। अन्तःप्रविश्य नियन्तृत्वं हि शरीरित्वम्, अत एवमात्मत्वं विवृतं भवति । विष्णुशब्दस्य रूढत्वाद्देवताविशेषनिर्णयश्च सिद्धः। यद्वा विष्णुशब्देनैव नियमनपर्यन्तव्याप्तिरुक्ता, व्याप्तिकृततद्गतदोषस्पर्श-शङ्कां व्युदस्यति- सर्वजिष्णव इति । कथं विष्णोः कारणत्वम् ? हिरण्यगर्भा-

* भावप्रकाशिका *

त्यानन्दमयेति ) पूर्वार्द्धेन ईक्षत्यानन्दमयाधिकरणार्थभूतप्रकृतिजीववैलक्षण्यमुक्तम्, सदैकरूपरूपायेत्यन्तरादित्यधिकरणार्थ उक्त इति भावः । ( नृप नभोव्यावृत्ति-रिति ) विष्णुपदेन नृपव्यावृत्तिः, सर्वजिष्णुपदेन नभोव्यावृत्तिश्चेत्यर्थः । सर्व-जिष्णुपदस्य नियन्तरि स्वारस्याभावाद्व्याप्तिबलादेव नियमस्यार्थसिद्धेश्च जिष्णु-पदं व्याप्यगतदोषास्पृष्टत्वपरं व्याचष्टे ( यद्वा विष्णुशब्देनैवेति ) ( कथं विष्णोः कारणत्वमिति ) यद्यप्यविकारायेतिश्लोके जगत्कारणत्वं नोक्तम्, तथापि विष्णो-

कालक्षेत्रज्ञसमष्टिव्यष्टिरूपेणावस्थितञ्च नमस्करोति ।

* श्रुतप्रकाशिका *

दीनां हि सृष्ट्यादिकारणत्वमवगम्यत इत्यत्राह– नम इति । तत्तच्छरीरको विष्णुरेव सृष्ट्यादिकं करोतीत्यर्थः । 'रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्' इत्युक्तविष्ण्वाख्यावतारविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः, हिरण्यगर्भशङ्करशब्दौ जीवद्वारा भगवत्पर्यन्ताविति "ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा । विष्णुमायामहावर्तमोहान्धतमसा वृताः" इति 'हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा' इति 'हिरण्यगर्भो भगवान्' इत्यारभ्य 'मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् । अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्याद्येतत्प्रबन्धस्थश्लोकतात्पर्यानुरोधात् "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥" 'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्" इति भारतादिवचनैकार्थ्याच्च निश्चीयते । हिरण्यगर्भादिसामानाधिकरण्यं व्याप्तिकृतमिति सूचयति– वासुदेवायेति । ब्रह्मशिवमध्यस्थोऽप्यप्रच्युतस्वभाव इत्यत्राह– तारायेति । यद्वा तेषु त्रिष्वप्ययमेव मोक्षप्रद इत्यर्थः । "अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहाभयात्तारयति तस्मादुच्यते तारम्' इति श्रुतेः । "ब्रह्मविष्णुशिवा ब्रह्मन् ! प्रधाना ब्रह्मशक्तयः" इत्यादिभिः विष्णोः परं तत्त्वं विष्णोश्चतुर्मुखादिसाम्यं च न शङ्कनीयम् । शक्तिरपृथक्सिद्धविशेषणम् ; तत्र धर्मिण्यसमानविभक्तिनिर्दिष्टे धर्मिपर्यन्तस्यापिशब्दस्य धर्ममात्रपरत्वं दृष्टं पटस्य शुक्ल इत्यादिषु, तथा विष्णुशब्दो विशेषणभूतविग्रहमात्रपरः, असमानविभक्तिना ब्रह्मशब्देन धर्मिणः पृथङ्निर्दिष्टत्वात्, ब्रह्मणः शक्तयो हि ब्रह्मशक्तयः, अतोऽसमानविभक्तिनिर्दिष्टत्वमिति । यद्वा भगवतो देवमनुष्यादिशब्दव्यपदेशवत् शक्तिविभूत्यादिशब्दव्यपदेशोऽपि विभूतिसाजात्यात्, यथाहुः श्रीवत्साङ्कमिश्राः "सजातीयस्तेषामिति तु विभवाख्यामपि भजन्" इति, अतो यथोक्त एवार्थः । अथ केवलप्रकृति-

* भावप्रकाशिका *

स्सकाशादुद्भूतमिति तत्पूर्वश्लोके कारणत्वस्येरितत्वात्तथोक्तमिति द्रष्टव्यम् ( विष्ण्वाख्यावतारविग्रहद्वारेति ) विग्रहविशेषद्वारेत्यर्थः ( देवमनुष्यादिशब्दव्यपदेशवदिति )

* श्रुतप्रकाशिका *

कारणव्यावृत्त्यर्थं प्रकृतिविशिष्टं परमात्मानं नमस्करोति—एकानेकेति । कारणावस्थायामेकः, कार्यावस्थायामनेकः । अथ धीस्थां कार्यावस्थामाह—स्थूलेति । तथा बुद्धिस्थां कारणावस्थामाह— अव्यक्तेति । तत्राप्यप्रच्युतस्वभावत्वमाह मुक्तिहेतव इति । अथ कालविशिष्टमाह—सर्गेति । कालस्य वक्ष्यमाणविशेषणोपपत्तेः प्रकरणस्य विशिष्टपरत्वाद्विशेषणान्तरविशिष्टतायाः प्रतिपादितत्वेन कालविशिष्टताकथनपारिशेष्यात् तदप्रतिपादने अपेक्षितविध्यभावप्रसङ्गात् केवलं ब्रह्मस्वरूपकारणपरत्वे अण्डान्तर्गतसर्गादेरुक्तत्वादण्डबहिर्भूततत्त्वसर्गादेर्वक्ष्यमाणत्वाच्च पौनरुक्त्यप्रसङ्गाद्विस्तरे च "प्रधानपुरुषव्यक्तकालानाम्" "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" 'तथा पुरुषरूपेण कालरूपेण च स्थितम्, 'ब्रह्मा दक्षादयः कालः" इत्यादिभिर्व्यक्ताव्यक्तादिभिस्सह वक्ष्यमाणत्वादयं श्लोकः कालपर एव । अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमुचितम् । उत्तरश्लोकः समष्टिजीवपरः, व्यष्टिजीवपरश्लोकसाहचर्यात् । कालस्य सर्गस्थितिविनाशमूलभूतत्वं 'ब्रह्मा दक्षादयः कालः' 'विष्णुर्मन्वादयः कालः' रुद्रः कालोऽन्तकाद्याश्च" इत्यादिषु सिद्धम् । जगन्मयः-अव-

* भावप्रकाशिका *

रामादिविग्रहेषु सत्त्वादिगुणपरिणामविशेषभूतमनुष्यत्वाभावेपि मनुष्यसंस्थानसजातीयतया रामो मनुष्य इति व्यपदेशवद्भगवच्छक्तिभूतजीवात्मभिरात्मत्वेन सजातीयतया औपचारिकशक्तिशब्दस्य व्यपदेश उपपद्यत इतिभावः । केचित्तु शक्तिशब्दस्य औपचारिकत्वममृष्यन्तः देवादिशरीरकतया देवादिशब्दवाच्यत्ववच्छक्तिभूतजगच्छरीरके तस्मिन् शक्तिशब्दव्यपदेशो मुख्य इत्यभिप्राय इति वर्णयन्ति । 'एकानेकस्वरूपाय सूक्ष्मस्थूलात्मने नमः' इति वक्तव्ये स्थूलसूक्ष्मात्मने नम इत्युक्तिरयुक्तेत्याशङ्क्याह ( धीस्थामिति ) अनेकशब्दस्यात्यन्तसन्निहितत्वादिति भावः ( अण्डान्तर्गतसर्गादेरिति ) सर्गस्थित्यन्तकर्मण इत्युक्तत्वादित्यर्थः । ( अण्डबहिर्भूतेति ) 'विष्णुं ग्रसिष्णुं विश्वस्य विष्णुसर्गे महाप्रभुम्' इति वक्ष्यमाणत्वादित्यर्थः । नन्वाधारभूतं विश्वस्यापीत्युत्तरश्लोको वा कालपरः किं न स्यादित्याशङ्क्याह ( उत्तरश्लोकस्समष्टिजीवपर इति ) ( अवच्छेदकतया

तत्र 'ज्ञानस्वरूपम्'इत्ययं श्लोकः क्षेत्रज्ञव्यष्टयात्मनाऽव-स्थितस्य परमात्मनः स्वभावमाह ; तस्मान्नात्र निर्वि-

* श्रुतप्रकाशिका *

च्छेदकतया अवच्छेद्यतया च जगत्प्रचुरः । अथ क्षेत्रज्ञसमष्टयात्मनाऽवस्थितं नमस्यति- आधारभूतमिति । अचेतनस्य चेतनः स्वरूपेणाधारभूतः "एव-मेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः" जीवभूतां महाबाहो ! ययेदं धार्यते जगत्' इति वचनात् । अणीयस्त्वम्- प्रकृतेरपि व्यापनयोग्यसूक्ष्मत्वम् । यद्वा 'विका-साणुत्वरूपैश्च'इत्युक्तप्रकारेण सर्गदशायामिव ज्ञानविकासाभावादणीयस्त्वमेवेत्यर्थः। सर्वभूतस्थम्-भवतीति भूतम्, पृथिव्यन्तेषु सर्वभूतेष्ववस्थितम् । अनन्तरं क्षेत्रज्ञ-व्यष्टिविशिष्टं नमस्करोति-ज्ञानेति । हिरण्यगर्भेत्यादिभाष्ये निर्दिष्टेष्वर्थेष्वयं श्लोकः किं विशिष्टपरमात्मपर इति शङ्कायां समासान्तर्गतप्रस्तुतश्लोकार्थम्, विविच्य दर्शयति (तत्रेति) परमात्मनः सद्वारक एव अमान्वय इत्यर्थः । ततः किमित्यत्राह (तस्मादिति) निर्विशेषज्ञानपरत्वे प्रश्नोत्तरवरलाभकथनानुपपत्ति-मुखेनोपक्रमविरोध उक्तः । अथोपरितनाध्यायगतचोद्यपरिहारान्नुगुणत्वमुच्यते

* भावप्रकाशिका *

अवच्छेद्यतयेति ) जगतः कालपरिच्छेद्यत्वात्कालस्यावच्छेदकत्वं निमेषादिभिः परिच्छिन्नत्वादवच्छेद्यत्वमप्यस्तीति भावः (भवतीति भूतमिति) अकर्मकत्वात्क-र्तरि क्त इत्यत्र तात्पर्यम्, नतु वर्तमानत्वेपीति द्रष्टव्यम् । (क्षेत्रज्ञव्यष्टिविशिष्ट-मिति) ज्ञानस्वरूपमितिश्लोकस्यायमर्थः,— ज्ञानस्वरूपम्-ज्ञानस्वरूपजीवशरीरक-मित्यर्थः । अत्यन्तनिर्मलत्वादिकञ्च जीवद्वारा विशेषणम् । यथा, महोदरः महा-प्राज्ञ इत्यादौ महत्त्वस्यौदार्यज्ञानद्वारान्वयः । नच साक्षादेवान्वयोऽस्तीति वाच्यम्, परमात्मनि साक्षान्निर्मलत्वस्याविकाराय शुद्धायेत्यादिवाक्यप्रतिपन्नत्वात्सर्वज्ञे तस्मिन् भ्रान्तिदर्शनतत्स्थितस्य च साक्षादसम्भवात् सद्वारक एवान्वयो वक्तव्य इति । 'यदि निर्विशेषज्ञानस्वरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्र'मितिभाष्ये शास्त्रपदस्य ज्ञानस्वरूपमितिश्लोकमात्रपरत्वमित्यभिप्रेत्य. तस्य परोक्तार्थपरत्वे उपसंहारविरो-धप्रतिपादनपरतया यदित्यादिभाष्यं व्याख्याय शास्त्रशब्दस्य एकश्लोकमात्रपरत्व-

शेषवस्तुप्रतीतिः । यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठान-भ्रमप्रतिपादनपरं शास्त्रम्; तर्हि —

[१] "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥

इति चोद्यम्;—

[२] "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपतां श्रेष्ठ! पावकस्य यथोष्णता ॥"

इति परिहारश्च न घटते । तथा हि सति— निर्गुणस्य

---

* श्रुतप्रकाशिका *

(यदीति) यद्वा शास्त्रारम्भोपयोगिप्रश्नोत्तरानुपपत्तिरुक्ता । इदानीमेतत्प्रश्नोत्तर-विशेषानुपपत्तिरुच्यते—यदीति । पूर्वाध्याये 'जुषन् रजोगुण'मित्यादिना गुणान्वये कथितेऽपि निर्गुणस्येतिचोदयतोऽयमभिप्रायः,— गुणान्वयस्य सद्वारकत्वात् स्वयं निर्गुण इति । निर्विशेषपक्षे अप्रमेयस्येत्यादिपदवैयर्थ्यम्, निर्गुणस्येतिपदेनैव निर्विशेषत्वसिद्धेः, परिपूर्णत्वादिगुणानभ्युपगमाच्च । अप्रमेयादिपदान्तरसमभिव्याहार एव निर्गुणपदोपस्थापितनिषेधस्य सङ्कुचितविषयत्वसाधकः । (न घटत इति) सर्गाद्या भावशक्तय इति सर्वशक्तियोगेन चोद्यस्य परिहारान्निर्विशेषपक्षाननुगुणत्वमिति भावः । तर्हि कथं चोद्यपरिहारौ स्यातामित्यत्राह (तथा हि सतीति) निर्गुणस्य ब्रह्मण इत्यनेन पदान्तरवैयर्थ्यमभिप्रेतम्, निर्विशेषस्य कर्तृत्वानुपपत्तिचोद्ये कृते कर्तृत्वस्य पारमार्थ्ये सति हि तदनुपपत्तिः, अपरमार्थत्वाद्दुर्घटत्वमेव भूषणमिति परिहारो वक्तव्य इत्यर्थः । किमर्थाविमौ चोद्यपरिहारौ ? यद्ययमर्थो

* भावप्रकाशिका *

मनुचितमिति मत्वा प्रवर्तिष्यमाणप्रश्नोत्तरानुपपत्तिपरतया व्याचष्टे (यद्वा शास्त्रारम्भोपयोगीति) स्वयं निर्गुण इतिच्छेदः, कर्मवश्यत्वकर्मसम्बन्धार्हत्वयोः पर्या-

---

१–२ विष्णु. पु-१ अं. ३ अ. १-२- श्लो.

ब्रह्मणः कथं सर्गादिकर्तृत्वम्? न ब्रह्मणः पारमार्थिकस्सर्गः, अपितु भ्रान्तिपरिकल्पित इति चोद्यपरिहारौ स्याताम्। उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसम्बन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम्। दृष्टसकलविसजातीयस्य

* श्रुतप्रकाशिका *

न प्रतिपाद्यत इति शङ्कायां स्वयमेव तच्चोद्यपरिहारशरीरमाह (उत्पत्त्यादीति) निर्गुणस्येत्यादिविशेषणानां विपरीताकारैः कर्तृत्वस्य व्याप्तिं कथमित्यनेनाभिप्रेतां दर्शयति (सत्त्वादिगुणयुक्तेत्यादिना) सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्यत्वानि निर्गुणत्वादीनां यथाक्रमं विपरीताकाराः, अमलात्मन इत्यस्य विपरीताकारोऽपि कर्मवश्येत्यनेनार्थसिद्धः। अमलात्मत्वम्— अमलस्वभावत्वम्, कर्मसम्बन्धानर्हत्वम्; तद्विपरीताकारः कर्मसम्बन्धार्हत्वम्, तच्च कर्मवश्यशब्देनार्थसिद्धम्, कर्मसम्बन्धार्हत्वकार्यं हि कर्मवश्यत्वम्। निर्गुणस्येत्यादिपदानां यथाक्रममर्थमाह (सत्त्वादिगुणरहितस्येत्यादिपदैः) कर्मसम्बन्धानर्हस्येत्यनेनामलात्मन इतिपदं व्याख्यातं भवति। अकर्मवश्यत्वं मुक्तस्यापि विद्यते, स पूर्वावस्थायां कर्मसम्बन्धित्वात्तदर्हः, अतस्तद्व्यावर्तकं कर्मसम्बन्धानर्हत्वममलात्मत्वम्। अकर्मवश्यत्वम्—कर्मकृतसुखदुःखभाक्त्वाभावः। कर्मवश्यविसजातीयत्वं कर्मसम्बन्धानर्हत्वम्. सर्गादिकर्तृत्वे गुणत्रयवश्यत्वसापेक्षत्वकर्माधीनफलभाक्त्वकर्मसम्बन्धार्हत्वप्रसङ्ग इति विशेषविरोधप्रसञ्जनेन चोद्यम्, अग्नेर्द्रव्यत्वेऽनुष्णत्वप्रसङ्ग इतिवदयं तर्को धर्मिग्राहकप्रमाणबाधितः, अतो विसजातीयधर्मिणो विसजातीयधर्मवत्त्वं युक्तम्। अग्नित्वे सत्यपि वैद्युताग्नेर्जलनिर्वाप्यत्वाभाववत्, अतः सर्वविसजातीयस्य ब्रह्मणः सर्वशक्तियोग उपपद्यत इति परिहार इत्यर्थः। 'शक्तयः सर्वभावानाम्'

* भावप्रकाशिका *

यत्वं परिहरति (अकर्मवश्यत्वं मुक्तस्यापीत्यादिना) ब्रह्मण एव वस्तुत्वाद्ब्रह्मणश्शक्तय इति निर्देष्टव्ये ब्रह्मणोपि भावशक्तय इति निर्देशो न युक्त इत्याशङ्क्याह

ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्सर्वशक्तियोगो न विरुध्यत इति परिहारः। 'परमार्थस्त्वमेवैकः' इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति, अपि तु कृत्स्नस्य तदा-

* श्रुतप्रकाशिका *

इत्यस्य ग्रन्थस्यायमक्षरार्थः,—अचिन्त्यज्ञानगोचराः—अतर्क्यप्रमितिसिद्धाः, सर्गाद्याः-सर्गादिगोचराः, भावशक्तयः—वस्तुशक्तयः, ब्रह्मणो वस्तुशक्तय इतिनिर्देशो ब्रह्मतादात्म्यमितिवत्। यद्वा ब्रह्मणो भावशक्तयः—वस्तुशक्तयः, ब्रह्मणो वस्तुत्वप्रयुक्ताः सत्ताप्रयुक्ता निरुपाधिकाः शक्तय इत्यर्थः। यद्वा भावशब्दः स्वभावपरः, स्वाभाविक्यः शक्तय इत्यर्थः। अथ चतुःश्लोकीं व्याचष्टे ( परमार्थ इति ) कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात्कृत्स्नशरीरं ब्रह्मैव परमार्थः, अतत्पर्यन्तो मिथ्येत्यर्थः। जगतः पते इत्याकाशव्यावृत्तिः, येन व्याप्तमिति नृपव्यावृत्तिः, अनेन जगतः शरीरलक्षणं दर्शितं भवति। नियाम्यत्वधार्यत्वशेषत्वेष्वन्यतमं व्याप्यत्वसहचरं हि शरीरलक्षणद्योतकम्। जगच्छरीरक—त्वदन्यो मिथ्येत्युक्ते अतत्पर्यन्तस्वतन्त्रवस्त्वन्तरस्यैव

* भावप्रकाशिका *

( निर्देशो ब्रह्मतादात्म्यमितिवदिति ) ब्रह्मात्मकमितिवक्तव्ये ब्रह्मशब्दनिर्दिष्टस्य पुनरपि तच्छब्देन परामर्शवदित्यर्थः। तादात्म्यशब्दस्य भेदपरत्वात् ब्रह्मतादात्म्यमित्यत्र नानुपपत्तिः, प्रकृते तु ब्रह्मणो भावशक्तय इत्युक्ते भावस्य ब्रह्मण इत्यर्थो न लभ्यते। नहि घटस्य भावरूपमित्युक्ते भावस्य घटस्येत्यर्थो लभ्यत इति चेत्; सत्यम्,— समासैकदेशस्य नान्यविशेषणत्वम्, तथापि शिवस्य भागवत इत्युक्ते शिवस्य भगवत्त्वलाभवद्ब्रह्मणो भावशक्तय इत्युक्ते अर्थाद्ब्रह्मण एव भावरूपत्वं पर्यवस्यतीति भावः। एतदस्वरसादेवाह ( यद्वा ब्रह्मणो भावशक्तय इति ) ( अतत्पर्यन्तो मिथ्येत्यर्थ इति ) त्वमेव स्वनिष्ठः त्वदन्यस्स्वनिष्ठो नास्तीत्यर्थः। ततश्च परमार्थशब्दः स्वनिष्ठपरः, परम उत्कृष्टोऽर्थः परमार्थः, स्वतन्त्र इति यावत्। ( व्याप्यत्वसहचरं हीति ) व्याप्यत्वविशेषितमित्यर्थः ( शरीरलक्षणद्योतकमिति ) यस्य चेतनस्येत्युक्तशरीरलक्षणद्योतकमित्यर्थः। जगच्छरीरकेतिसम्बुद्धिः। ( अत-

त्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदे- वोपपादयति [1]"तवैष महिमा येन व्याप्तमेतच्चराचरम्" इति । येन त्वयेदं चराचरं व्याप्तम्; अतस्त्वदात्मकमे- वेदं सर्वमिति त्वदन्यः कोऽपि नास्ति ; अतः सर्वा-

## * श्रुतप्रकाशिका *

मिथ्यात्वं स्यात्, न तु जगतस्तच्छरीरभूतस्य, यथा हे भूपते ! त्वदन्यो नास्ती- त्युक्ते न भूर्मिथ्या भवति, तत्तुल्यराजान्तरस्यैव तु मिथ्यात्वं तद्वत् । यद्वा एक- शब्दः प्राधान्यपरः "एकादाकिनिच्चासहाये" इत्यत्रासहायपदव्यवच्छेद्यं हि प्राधान्यम्, ब्रह्मणश्च प्राधान्यं जगत्प्रति विशेष्यत्वरूपम्, तदानीं नान्योऽस्तीति प्रधानभूतोऽन्यो निषिध्यते, न त्वप्रधानमर्थान्तरम् । उक्तार्थस्योपपादकं व्याप्य- त्वप्रतिपादकमुत्तरार्द्धमित्याह ( तदेवेति ) तत्र फलितमर्थमाह ( येनेति ) येन— यस्मादित्यर्थः । त्वदन्यः—अत्वदात्मकः, त्वया आत्मतया व्याप्तत्वात् सर्वं त्वदात्मकं त्वच्छरीरमिति त्वदन्यः अत्वदात्मको नास्ति, तस्मात्सर्वशरीरस्त्वमेव परमार्थ इत्यर्थः । तवैष महिमेतिश्लोकार्द्धैकदेशश्चोक्तार्थोपपादक इत्याह ( अत इति )

## ❀ भावप्रकाशिका ❀

त्पर्यन्तेति ) अतच्छरीरकस्येत्यर्थः । परमार्थशब्दस्य परमप्रयोजनवाचित्वसम्भवे स्वनिष्ठवस्तुपरत्वमयुक्तमित्यस्वरसादाह ( यद्वा एकशब्दः प्राधान्यपर इति ) ( असहायपदव्यवच्छेद्यं हीति ) ननु अन्यप्रधानासहायसङ्ख्यासाधारणवाचिन एकशब्द- स्यासहायपदव्यवच्छेद्यमर्थान्तरमपि सम्भवति, ननु प्रधानत्वमेवेति कथमिदमसहाय- पदमेकशब्दस्य प्रधानार्थत्वं ज्ञापयेदिति चेन्न, असहाय इति विशेषणस्यार्थान्तर- सम्भवमात्रसूचकत्वात् । 'प्रत्यान्ता पद्'इतिसूत्रे महाभाष्ये एकशब्दोऽयं बह्वर्थः, अस्त्यसहायवाची 'एकाग्नयः एकहल' इत्यस्तिसङ्ख्यार्थः एको द्वौ बहव इति । अस्त्यन्यार्थे वर्तते, प्रजामेकारक्षत्यूर्जमेकेत्युक्तेः । 'एके मुख्यान्यकेवलाः' इति निघ- ण्टूक्तेश्चेति भावः । भाष्ये त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोपि नास्तीत्युक्तमयुक्तम्, त्वदात्मकस्यैव जगतः त्वदन्यत्वादित्याशङ्क्य शेषपूरणेन व्या-

---

१. विष्णु- पु- १-अं. ४- अ. ३८- श्लो.

त्मतया त्वमेवैकः परमार्थः । अत इदमुच्यते,-तवैष महिमा या सर्वव्याप्तिरिति । अन्यथा तवैषा भ्रान्ति-रिति वक्तव्यम् , जगतः पते त्वमित्यादीनां पदानां लक्षणा च स्यात् । लीलया महीमुद्धरतो भगवतो

* श्रुतप्रकाशिका *

महिम्नो व्याप्तिरूपत्वात् ; या सर्वव्याप्तिरित्युक्तम् , न तु व्याप्तौ तात्पर्यात् , व्याप्ते र्महिमत्व एव तात्पर्यम् । यद्वा व्याप्तेरुक्तार्थोपपादकत्वं महिमसमभिव्याहारादित्याह ( अत इदमुच्यत इति ) तस्य परमप्रातिकूल्यं दर्शयति ( अन्यथेति ) व्याप्यव्या-प्यादेर्मिथ्यात्वे सर्वव्याप्तिस्तव महिमेति न वाच्यम् , अपि तु भ्रान्तिरिति वक्तव्य-मित्यर्थः । कृत्स्नापारमार्थ्यपरत्वे दूषणान्तरद्वयमाह ( जगतः पत इति ) लक्षणा-अधिष्ठानलक्षणा । अब्रह्मात्मकत्वेन स्वतन्त्रतायाः प्रत्यक्षसिद्धत्वात्तद्विरुद्धं ब्रह्मपर्य-न्तत्वं न शास्त्रं प्रतिपादयति "आदित्यो यूप" इतिवदितिशङ्कायाम् अन्यथा-सिद्धाया अपरोक्षरूपाया अपि स्वातन्त्र्यप्रतिपत्तेः परोक्षरूपाप्यनन्यथासिद्धा पार-

* भावप्रकाशिका *

चष्टे ( त्वदन्यः अत्वदात्मक इति ) अत्वदात्मकः- स्वनिष्ठ इत्यर्थः । ननु श्लोकार्थैकदेश उक्तार्थोपपादक इत्याहेत्यवतारिका न युक्ता, अत इदमुच्यत इत्यादि-भाष्येण श्लोकार्थैकदेशशब्दविवक्षितस्य महिमशब्दमात्रस्य उपपादकत्वकथनात्-सर्वव्याप्तेरपि उपपादकतयोपन्यासादित्याशङ्क्याह ( महिम्नो व्याप्तिरूपत्वा-दिति ) सर्वमिथ्यात्वे सर्वव्याप्तिर्नोपपद्यत इति भाष्याभिप्रायः, अपितु सर्वव्याप्तिर्वा भवतु, यत्किञ्चिद्व्याप्तिर्वा भवतु , अन्या वा भवतु, न तस्य महि-मत्वप्रतिपादनमुचितमित्यत्रैव भाष्यसंरम्भ इतिभावः । प्रयुक्तपदाविवक्षाकथनमस्व-रसत्वमित्याशङ्क्याह ( यद्वा व्याप्तेरुक्तार्थोपपादकत्वमिति ) भाष्ये न केवलं वस्तुतस्त्वदात्मकं जगदित्यत उर्ध्वं तत्रशब्दोऽध्याहर्तव्यः । ततश्च वस्तुतो यत्त्वदात्मकं जगत्तत्रेत्यर्थः । एतेन वस्तुतस्त्वदात्मकं जगदित्यस्यांशस्य भ्रान्तिदर्शनाकारप्रदर्शकत्वासम्भवात् , वस्तुतस्त्वदात्मके जगति वस्तुतस्त्वदात्म-कस्य जगत इति वा षष्ठीसप्तम्यन्यतरान्ततया निर्देश एवोचितो नान्यथेतिशङ्का

महावराहस्य स्तुतिप्रकरणविरोधश्च । यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्त्तम्, तस्मात्त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह 'यदेतद्दृश्यते' इति । न केवलं वस्तुतस्त्वदात्मकं जगत् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम

* श्रुतप्रकाशिका *

तन्त्र्यप्रतिपत्तिर्बलीयसीत्यभिप्रायेण द्वितीयश्लोकमवतारयति ( यत इति ) पारतन्त्र्यप्रतिपत्तिः परमात्मप्रतिपत्तिसापेक्षा, तदभावात्तत्प्रतिपत्त्यभाव इत्यन्यथासिद्धस्वातन्त्र्यप्रतिपत्तिरित्यर्थः । ( केवलदेवमनुष्यादिरूपमिति ) परमात्मशरीरत्वरहितजगद्रूपमात्रमित्यर्थः । अयमर्थः,—यथा देहात्मभ्रमोऽपरोक्षोऽपि परोक्षशास्त्रज्ञानेन बाध्यते तथा स्वातन्त्र्यभ्रमोऽपीति । देहातिरिक्तं स्वात्मानमप्यजानतः परमात्मपारतन्त्र्याप्रतिपत्तिः किम्पुनर्न्यायसिद्धेति च दर्शयितुं तृतीयश्लोकारम्भः । तं व्याचष्टे ( न केवलमिति) चिदचिदात्मके जगति चेतनरूपं जगद्विवक्षितं ज्ञानस्वरूपमखिलं जगदिति जगच्छब्देन, यथा "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम्" इति । अत्र ज्ञानस्वरूपस्य जडरूपार्थस्वरूपत्वबुद्धिर्भ्रम इत्युक्ते अर्थस्वरूपस्यार्थस्वरूपत्वबुद्धिर्न भ्रमः स्यादिति च सिद्धम् । देहात्मभ्रमश्च संसर्गकृतः, जलमुष्णमितिवत्. आत्मासाधारणधर्मज्ञानस्फुरणेऽपि तस्यासाधारणत्वाज्ज्ञानात्

* भावप्रकाशिका *

पराकृता, मामेभ्यः परमव्ययमित्यत्रेतीतिच्छेदः । नन्वपरोक्षस्य देहात्मभ्रमस्य शास्त्रजन्यज्ञानेन बाधः किं न स्यादितिशङ्कां सादृश्यादिरूपभ्रमहेत्वभावात् कथं देहात्मभ्रम इति शङ्कां च परिहरन् देहात्मभ्रममुपपादयति ( देहात्मभ्रमश्च संसर्गकृत इति ) यथा जलमुष्णमिति प्रत्यक्षं तेजोद्रव्यसम्पर्कोद्दीपसाहित्यात् शङ्कितदोष सज्जलस्य शैत्यस्वभावत्वग्राहकशास्त्रेण बाध्यते तद्वदितिभावः । नचैवं ब्रह्मप्रपञ्चयोरपि उपादानोपादेयभावेन परस्परसंसृष्टतया ब्रह्मगतसत्त्वप्रतीतिः प्रपञ्चे

इत्याह 'ज्ञानस्वरूपमखिलम्' इति । ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च, ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगच्छरीरातिरि-

* श्रुतप्रकाशिका *

भ्रमोपपत्तिः । चतुर्थं व्याचष्टे (ये पुनरिति) विज्ञानं चाविज्ञानं चेति विज्ञानशब्दस्यात्मवाचित्वात् ज्ञानस्वरूपात्मविद इत्युक्तम् । अबुद्धय इति पूर्वश्लोकोक्तार्थप्रतियोगित्वेन ज्ञानविद इत्युक्तमिति स्मारयति (बुद्धिमन्त इति) अयोगिन इत्यस्य प्रतियोगित्वेन शुद्धचेतस इत्युक्तमिति सूचयति (योगयोग्यपरिशुद्धमनस इति) योगयोग्यत्वे हेतुः परिशुद्धत्वम्, मनसा तु विशुद्धेन हि भगवत्साक्षात्काररूपोपासननिष्पत्तिः श्रूयते, मनोविशुद्धिश्च कर्मयोगेन. योगेन योग्यतापरिशुद्धिरिति वाऽर्थः । पूर्वश्लोके अखिलजगच्छब्देन चेतनरूपं जगद्विवक्षितम् । अस्मिन् श्लोके अखिलजगच्छब्देन अचिद्रूपं जगद्विवक्षितम् । कृत्स्नापारमार्थ्यं विवक्षितमितिपक्षे प्रथम-

* भावप्रकाशिका *

किं न स्यादिति वाच्यम्, ब्रह्मसंसर्गस्यैव दोषत्वेऽद्वैतशास्त्रमसदेवाप्रमाणमेव अव्यावहारिकमेव सत्त्वेन प्रमाणत्वेन व्यावहारिकत्वेन च गृह्यत इति शङ्कितदोषतया तदपि न बाधकं स्यात् । किञ्च प्रपञ्चस्य सत्त्वाभावे ब्रह्मसंसर्गस्याप्यसम्भवेन तस्य दोषत्वाभावादित्यन्यत्र विस्तरः । अनुभवसाधनयोगयोग्येतिभाष्यम्; अनुभवसाधने ध्यानयोगे योग्यानि परिशुद्धानि मनांसि येषां ते तथोक्ताः, योग्यतायाञ्च परिशुद्धिः हेतुः, परिशुद्धौ च कर्मयोगो हेतुरित्येवम्परतया व्याख्याय योगयोग्येत्यत्र तृतीयातत्पुरुषो विवक्षितः । योगशब्दश्च कर्मयोगपरः, योग्यतापरिशुद्ध्योश्च भेदाभावात् । पूर्ववत्तयोर्हेतुहेतुमद्भावश्च न विवक्षितः । योग्यपरिशुद्धेतिव्यपदेशश्च घटजननयोग्यदृढदण्डेतिवदुपपन्न इत्यभिप्रयन्नाह (योगेन योग्यतापरिशुद्धिरिति वाऽर्थ इति) (अखिलजगच्छब्देनाचिद्रूपं जगद्विवक्षितमिति) अत्र केचित्,—पूर्वश्लोक इव चिद्रूपजगद्विवक्षायामपि न दोषः । चिद्रूपं जगत् ज्ञानात्मकं पश्यतीत्युक्तेपि दोषाभावात् । यद्वा पूर्वश्लोकेपि जगच्छब्दोऽचित्पर

ऋज्ञानस्वरूपात्मकं त्वच्छरीरञ्च पश्यन्तीत्याह 'ये तु ज्ञानविदः' इति। अन्यथा श्लोकानां पौनरुक्त्यम्, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥

—( प्रकार्यद्वैतप्रकाराद्वैतविवेकः )—

"तस्यात्मपरदेहेषु सतोऽप्येकमयम्" इत्यत्र सर्वेष्वा-

---

* श्रुतप्रकाशिका *

श्लोकसङ्क्षिप्तदूषणमनुक्तदूषणेन सह विस्तरेण सर्वश्लोकसाधारणमाह (अन्यथेति) स्वान्यभ्रमो देहात्मभ्रमश्चेति विभागाभावे पौनरुक्त्यमित्यर्थः। लक्षणा परमेश्वर जगतःपते- तव- महिमा- त्वमित्यादिशब्दानां लक्षणा। त्वंशब्दो हि स्वाभिमुखाहमर्थान्तरवाची, अतस्तस्य लाक्षणिकत्वम्। अर्थविरोधः—प्रत्यक्षादिभिरबाध्यत्वेन सिद्धयो ऽसत्यत्वे प्रमाणविरोधः तिरोधानानुपपत्त्यादिस्तर्कविरोधः उभयलिङ्गत्वविरोधश्च। प्रकरणविरोधः—स्तुतिविरोधः "रोमान्तरस्था मुनयः स्तुवन्ती'ति हि प्रकृतम्. स्तोतॄणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिस्तदभावे च नितराम्। शास्त्रतात्पर्यविरोधः—उपक्रमोपसंहारावान्तरप्रकरणोपक्रमोपसंहारादिविरोधः ॥

अथादिभरतचतुःश्लोकीं परस्परव्यवहितां व्याचष्टे (तस्येत्यादिना) ब्रह्माद्वैतं

७ भावप्रकाशिका ७

एव, ततश्चार्थस्वरूपं जगद्देवमनुष्यादिरूपं ज्ञानस्वरूपमात्मस्वरूपं पश्यन्तः देहात्मभ्रमवन्त इत्यर्थः। ततश्च जगच्छब्दद्वयस्यापि न वैरूप्यमित्यपि वदन्ति (प्रथमश्लोकसंक्षिप्तदूषणमित्यादि) अयमर्थः,—प्रथमश्लोके संक्षिप्तं तच्छ्लोकमात्रविषयतयोक्तमनुक्तदूषणैस्सह पौनरुक्त्यार्थविरोधशास्त्रतात्पर्यविरोधैस्सह विस्तरेण सर्वश्लोकसाधारणतया आहेत्यर्थः। सर्वश्लोकसाधारणमित्येतत् विस्तरशब्दविवरणम्। ननु संक्षेपविस्तरशब्दयोर्दूषणस्वरूपसंक्षेपविस्तरपरत्वम्, दूषणस्वरूपं हि प्रथमश्लोके त्वमित्यादिपदानां लक्षणा, महावराहस्य स्तुतिप्रकरणविरोध इति विस्तरेणोक्तम्, उत्तरत्र तु पदानां लक्षणा, प्रकरणविरोध इति संक्षेपेण, अतो यथोक्त एवार्थः। (अवान्तरप्रकरणेति) अवान्तरप्रकरणस्योपक्रमोपसंहारादिविरोधइत्यर्थः ॥

* श्रुतप्रकाशिका *

जीवाद्वैतञ्चेत्यद्वैतं द्विविधं शास्त्रप्रतिपाद्यम् । तत्र ब्रह्माद्वैतं प्रकार्यद्वैतम् । जीवाद्वैतं प्रकाराद्वैतम् । कोऽत्र नियामकः ? इति चेत् ; उच्यते,– ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात् सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकार्यैकत्वपरत्वात् " एकः सन् बहुधा विचार " इति प्रकारबहुत्वस्य कण्ठोक्तत्वादैक्यविधिशेषस्य 'नेह नानास्ती'त्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात्सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन प्रकारिबहुत्वनिषेधपरत्वात् "न तत्समश्चाभ्यधिकश्च दृश्यते" इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेव ब्रह्माद्वैतम्. जीवात्मबहुत्वस्य श्रुतिसिद्धत्वादन्यथा बद्धमुक्तव्यवस्थानुपपत्तेरुपदेशानुपपत्तेः सुखादिव्यवस्थानुपपत्तेः "पुमान्न देवो न नरो न पशुर्न च पादपः । चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ॥" 'देवादिभेदेऽपध्वस्ते" इत्यादिभिर्भेदविशेषनिषेधस्य कण्ठोक्तत्वान्मुक्तानां साम्यवचनात् "अहं त्वं च तथाऽन्ये च' 'तत्र त्वमहमप्यत्र' 'तन्मनस्समतालम्भि"इत्यादिप्राकरणिकवचनानुरोधादेको व्रीहिरितिवदेकशब्दस्यैकजातीयपरत्वोपपत्तेर्वक्ष्यमाणश्लोकस्य शब्दस्वभावाच्च जीवाद्वैतं प्रकाराद्वैतमेव. "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यस्य वाक्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यमस्ति । अस्ति चेद्वाक्यभेदप्रसङ्गादिति चेत्, न; "यदाग्नेयोऽष्टाकपालः' इत्यत्र अष्टाकपालत्वविशिष्टाग्नेयपुरोडाशविधिवद्विशिष्टविधिपरत्वाद्वाक्यस्य, नित्यबहुचेतनविशिष्टकामप्रदानविधिपरं हीदं प्रतीयते, अनित्यानामल्पानां कामप्रदानादपि नित्यानां बहूनां कामप्रदाने कथिते हि कामप्रदानस्यातिशयो भवति. जीवबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रतात्पर्यम् । अप्राप्ते हि शास्त्रमर्थवदिति चेन्न; संसृष्टस्य हि बहुत्वप्रतीतिर्लोकसिद्धा, परिशुद्धात्मस्वरूपबहुत्वस्य लोक-

❁ भावप्रकाशिका ❁

( वक्ष्यमाणश्लोकस्येति ) 'यद्यन्योऽस्ति परः कोपि' इतिश्लोकस्यान्यपरशब्दस्वभावाच्चेत्यर्थः । ( प्रकाराद्वैतमेवेति ) एकप्रकारत्वमित्यर्थः । ( पुरोडाशविधिवदिति ) अष्टाकपालपुरोडाशद्रव्यकाग्निदेवताकयागवदित्यर्थः । पौर्णमास्यधिकरणे आग्नेयस्याष्टाकपालपुरोडाशस्य विधेः प्रत्याख्यातत्वादिति द्रष्टव्यम् ।

त्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्र-
कृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्या-

* श्रुतप्रकाशिका *

सिद्धत्वाभावाचत्र हि शास्त्रतात्पर्यं सम्भवति, औपाधिकाकारस्यानित्यत्वान्नि-ष्कृष्टस्वरूपस्य नित्यत्वान्नित्यत्वसमानाधिकरणबहुत्वे ऽभिहिते परिशुद्धात्मस्वरूप-बहुत्वं युक्तं भवति, उपदेशोऽपि न सम्भवति, गुरुर्भ्रान्तश्चेन्नोपदेशः, अभ्रान्तश्चेद्द्वैत-प्रतीत्यभावान्नितराम्। द्वैतप्रतीतावपि दर्पणस्थं स्वात्मनः प्रतिबिम्बं प्रति विवक्षितस्य नोपदेशः सम्भवतीति। सुखदुःखादिव्यवस्थया चात्मभेदसिद्धिः। ननु सुखदुःखव्यवस्था नाम किं सुखदुःखव्यक्तिबहुत्वम्? उत तदाश्रयबहुत्वम्? एक-स्यैवानेकसुखदुःखव्यक्तिदर्शनात्सुखादिस्वरूपबहुत्वं नात्मैक्यविरोधीति न व्यवस्था। आश्रयभेदश्चेत्साध्याविशिष्टो हेतुरिति चेन्न, त्वदुक्तोभयप्रकारविलक्षणत्वाद्व्यव-स्थायाः, सम्प्रतिपन्नैकाश्रयेषु सुखदुःखादिषु प्रतिसन्धानं दृष्टम्, प्रतिबन्धकाभावे सत्येकाश्रयत्वेन सुखदुःखप्रतिसन्धानाभावो व्यवस्थेति परिहारः। एकमयमित्यत्र मयट् स्वार्थिकः। यद्वा एकशब्दो भावप्रधानः, ऐक्यम् तत्प्रचुरमेकमयम्. शुद्धावस्थस्यात्मनो ह्यैक्यप्राचुर्यं, न तु संसृष्टस्य, तस्य बुद्धिसुखदुःखाद्यान्तरभेदेन देवत्वादिबाह्यभेदेन चैक्यप्राचुर्याभावात्। एकशब्दः समानवाची 'एको व्रीहिः सुनि-ष्पन्नः सुपुष्टं कुरुते प्रजाः" इत्यादिषु तथा प्रयोगदर्शनात्। देवमनुष्यादिप्रकृति-परिणामविशेषरूपेत्यनेन "दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः, 'पुमान्न देवो

५ भावप्रकाशिका ५

(प्रतिबन्धकाभावे सतीति) सुखादिप्रतिसन्धानप्रतिबन्धकाभावे सत्यपि सुखादि-प्रतिसन्धानाभावोव्यवस्थेत्यर्थः। (मयट्स्वार्थिक इति) तस्यात्मपरदेहेष्विति-श्लोकस्यायमर्थः,– सतोपीति षष्ठीचानादर इति अनादराधिकभावलक्षणे चोत्ये षष्ठी, आत्मपरदेहेषु सत्वामनादृत्य एकमयं समानमेकरूपविज्ञानलक्षणमात्म-स्वरूपमेव परमार्थो भवतीत्यर्थः। श्रीविष्णुचित्तार्यैस्तु सतोपि ज्ञानमिति व्यति-रेकनिर्देशस्वारस्याज्ज्ञानशब्दो धर्मभूतज्ञानपरतया व्याख्यातः, मयट्स्वार्थिकत्वस्या-स्वरसत्वादाह (यद्वा एकशब्दो भावप्रधान इति) (ऐकार्थ्यं दर्शितमिति)

कारेण द्वैतदर्शनमतथ्यमित्युच्यते । पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते । देवमनुष्यादिविविधविचित्रपिण्डेषु वर्त्तमानं सर्वमात्मवस्तुसममित्यर्थः । यथोक्तं भगवता—[1] "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" [2] "निर्दोषं हि समं ब्रह्म" इत्यादिषु ;

* श्रुतप्रकाशिका *

न नरो पशुर्न च पादपः । शरीराकृतिभेदस्तु भूपैते कर्मयोनयः " इतिवचनयोरैकार्थ्यं दर्शितम् । "पिण्डः पृथग्यतः पुंसः" इति प्राकरणिकवचनं स्मारयति पिण्डशब्दः, एकमयमित्यात्मन्येकत्वं विधाय भेदे निषिध्यमाने आत्मस्वरूपभेद एव निषेध्यः स्यादिति चेत्, स्यादेवं यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात्तु प्रकारैक्यम् ; अतो भेदनिषेधो वैजात्यनिषेध एवेति भावः । 'द्वैतिनोऽतथ्यदर्शिनः' इति सामान्येनोक्ते कथं देवादिद्वैतनिषेध इत्युच्यत इति चेत्, कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध इत्युच्यते ? न पिण्डात्मनोर्भेदनिषेधः । पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादिति चेत्; आत्मभेदस्यापि प्रामाणिकत्वान्न तद्भेदनिषेधः, अपितु देवादिभेदनिषेध इति भावः । आत्मगतद्वैतमप्रतिषिद्धं चेत् "आत्मा शुद्धोऽक्षरः शान्तः' 'विज्ञानं यज्ञं तनुते' इत्येकवचनं नोपपद्यते, जातावेकवचनं चेद्देहशब्देऽप्येकवचनं स्यादितिशङ्का च देवमनुष्यादिपदेन परिहृता । देवादिष्ववान्तरभेदविवक्षया विविधशब्दः, तत्राप्यनेकविधत्वविवक्षया विचित्रशब्दः, आत्मसु जात्येकत्वादेकवचनं पिण्डेष्ववान्तरजातिबहुत्वाद्बहुवचनमित्यभिप्रायः । साम्ये प्रमाणमाह (यथोक्तमिति) बहुत्वस्य विहितत्वात्साम्य-

* भावप्रकाशिका *

वचनयोरविरोधः प्रदर्शित इत्यर्थः । अविरोधप्रदर्शनप्रकारश्च प्रत्यस्तमितभेदमितिश्लोकभाष्यव्याख्यायां ग्रन्थकृता कृतो द्रष्टव्यः (एकवचनं नोपपद्यत इति) इदमुपलक्षणम्, सतोऽप्येकमयमित्येकवचनं नोपपद्यत इति द्रष्टव्यम् । (देहशब्देऽप्येकवचनं स्यादिति) ततश्च 'तस्यात्मपरदेहेषु' इतिबहुवचनं नोपपद्यत इति

1. गीता. ५-अ. १८. श्लो. ‖ 2. गीता. ५- १९-श्लोक.

'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात्। "यद्यन्योऽस्ति परः कोऽपि" इत्यत्रापि नात्मैक्यं प्रतीयते; यदि मत्तः परः कोऽप्यन्य इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात् तत्र परशब्दस्स्वव्यतिरिक्तात्मवचनः, अन्यशब्दस्तस्यापि

* श्रुतप्रकाशिका *

प्रतिपादनाच्चात्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः। हेत्वन्तरं चाह (तस्येति) अन्यथा- र्थश्चेदेतच्छ्लोकस्थपदानां व्याघातः स्यादित्यर्थः। (उक्तत्वादिति) सममित्यर्थ इत्यन्वयः। एकवचनोक्तौ हि जातावेकवचनमिति निर्वाहः, अन्यनिषेधपरस्य वचनस्यान्यथानिर्वाहायोगादात्मैकत्वसिद्धिरिति शङ्कायां यद्यन्योऽस्तीत्यादिश्लो- कस्यार्थमाह (यदीति) एकस्मिन्नर्थे द्वौ द्वौ शब्दौ प्रयुक्तौ स्थानत्रये, तेषामन्य- तरशब्दस्याकारपरत्वान्नात्मभेदनिषेध इति परिह्रियते। तत्र द्वयोः शब्दयोः कोऽर्थ इत्यत्राह (तत्रेति) परशब्देन धर्मिणमनूद्य तस्य शब्दान्तरोपस्थापि- ताकारान्तरान्वयो निषिध्यत इत्यर्थः। एषोऽहमयञ्चान्य इति वक्तुमशक्यत्वं कथम्? प्रत्यक्त्वपराक्त्वे भेदकधर्मौ हि विद्येते इति चेन्नैवम्, प्रत्यक्त्वपराक्त्वयोः स्वपरापेक्षया सर्वात्मनां साधारणतया व्यावर्तकत्वाभावात्। पूर्वं देवादिष्वन्यतमोऽय- मित्यभिप्रायेण तद्विशेषबुभुत्सया हि सौवीरराजेनादिभरतः पृष्टः, अतो देवाद्या-

* भावप्रकाशिका *

भावः। (स्थानत्रय इति) अन्यः पर इत्येकं स्थानम्, एषोऽहमिति द्वितीयम्, अयञ्चान्य इति तृतीयम्, नन्वहन्त्वतदन्यत्वाभ्यां वैषम्यं वक्तुं शक्यम्, नचाहं त्वमपि परमात्मन्यास्त इति वाच्यम्,—तथासति अहं ब्रह्मास्मीत्यादीना- महमर्थब्रह्माभेदप्रत्यायकानां जीवब्रह्माभेदप्रत्यायकत्वशङ्काया एवाभावेन तत्परिहा- राय यत्नो न कर्तव्यस्स्यात्. अहंशब्दस्य आत्मशब्दापरपर्यायतया आत्मत्वजाते- स्सकलजीवपरमात्मसाधारणतया अहंत्वमादीनामात्मत्वमात्रप्रवृत्तिनिमित्तकत्वेन "तत्त्वमसि' अहं ब्रह्मास्मि" इत्यादिवाक्यानां ब्रह्मण आत्मत्वजात्याश्रयत्व- प्रतिपादकत्वेन विरोधाप्रसक्तेस्तन्निराकरणाय यत्नोऽपि विफलस्स्यादित्यस्वरसादाह

ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः । एतदुक्तं भवति,— यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदाऽहमेवमाकारः, अयञ्चान्यादृशाकार इति शक्यते व्यपदेष्टुम् । न चैवमस्ति ; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति । "वेणुरन्ध्रविभेदेन" इत्यत्राप्याकारवैषम्यमात्मनां न

---

* श्रुतप्रकाशिका *

कारनिषेधपरा इमे शब्दा इति भावः । एवं पदार्थे सति श्लोकेन किमुक्तं भवतीति शङ्कायां वाक्यार्थं योजयति ( एतदुक्तमिति ) एव इतिशब्दस्यार्थमाह ( एवमाकार इति ) अन्यशब्दार्थमाह ( अन्यादृशाकार इति ) आकारैक्यं नाम आकाराणां सौसादृश्यमित्यभिप्रायेण एवमाकारः अन्यादृशाकार इत्युक्तम्, अन्यथा स्वरूपमात्रप्रतिपत्तिरेकेनैव पदेन सिद्धेति पदान्तरवैयर्थ्यप्रसङ्गात्पदान्तरमाकारपरमित्यर्थः । अस्यार्थस्य विपर्यये पर्यवसानमुत्तरश्लोकोक्तम्, सोऽनुदाहृतः । तदर्थमाह ( न चैवमिति ) अयं हि स श्लोकः "यदा समस्तभूतेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोऽहमित्येतद्विफलं वचः" इति । अत्रैकशब्द आकारैक्यपरः, स्वयम्प्रकाशत्वनित्यत्वाणुत्वादिस्सर्वात्मसाधारणः, व्यावर्त्तकदेवाद्याकारस्तु नात्मन्यस्ति, व्यावर्त्तकाभावात्तद्वाचिशब्देन निर्देशोऽनुपपन्नः, प्रत्यक्त्वपराक्त्वपरोक्षत्वापरोक्षत्वादीनि न व्यावर्त्तकानीति को भवानिति प्रश्नस्तदतिरिक्ताकाराभिप्रायः, न हि भवानिति प्रश्नः, भवच्छब्दो धर्मिमात्रपरः, किंशब्दो व्यावर्त्तकदेवाद्याकारपरः, तस्मात्तदतिरिक्ताकाराभावेन न तद्वाचिशब्देन निर्देश उपपद्यत इत्यर्थः । ( ज्ञानैकाकारत्वेन समानत्वादेवेति ) पूर्वोक्तादेवेति भावः । उक्तनिर्वाहागोचरं दृष्टान्तमुखेनाद्वैतपरत्वेन परोक्तस्य श्लोकस्यार्थमाह ( वेणुरन्ध्रेति ) स्वत एकाकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः, अन्यथा सर्वथा

* भावप्रकाशिका *

( पूर्वं देवादिष्विति ) ( अन्यादृशाकार इत्युक्तमिति ) अयमेतदाकारः अयमन्याकार इति निर्देष्टव्ये अन्यादृशाकार इत्युक्तिराकारेपि सुसदृशत्वमात्रमेव, न

स्वरूपकृतम्, अपि तु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते ; नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्त्तिनां वाय्वंशानां न स्वरूपैक्यम् ; अपि त्वाकारसाम्यमेव । तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसञ्ज्ञाभेदः, एवमात्मनां देवादिसंज्ञाभेदः। यथा तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्य-

* श्रुतप्रकाशिका *

साधर्म्याभ्युपगमे हि आत्मनोऽचित्त्वाकाशकार्यत्वादिकमपि स्यात्, तद्धि प्रमाणान्तरविरोधात् त्यज्यते, तथा दृष्टान्तगतमाकारान्तरमपीति भावः । तथाऽसौ परमात्मन इत्युक्ते षड्जादि च सञ्ज्ञाभेदो माभूदित्यभिप्रायेणाह (एवमात्मनां देवादिसञ्ज्ञाभेद इति) भेदषड्जादिसञ्ज्ञिक इति पाठे सत्यपि भेदः षड्जादिसञ्ज्ञाभेद इति व्याख्यातम्, दुरवगमषड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य सञ्ज्ञाभेदाधीनत्वादिति भावः। दार्ष्टान्तिकेऽपि तथैव, दृष्टान्ते व्यक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं तर्केण साधयति (तैजसेति) स्पर्शवद्द्रव्यत्वादिति भावः। यत्र त्वाकाशदृष्टान्त उक्तः तत्राप्येकस्यात्मनो दृष्टान्तत्वेना-

ᛃ भावप्रकाशिका ᛃ

त्वैक्यगस्तीति द्योतयतीतिभावः । (सर्वथा साधर्म्याभ्युपगमे हीति) एकत्वाश्रयत्वेनापि साम्याभ्युपगम इत्यर्थः । (भेदष्षड्जादिसंज्ञित इतिपाठे सत्यपीति) संज्ञाभेद इत्युक्ते यथा एकस्य घटस्य घटकलशादिसंज्ञाभेदः, एवं षड्जादिसंज्ञाभेदमात्रमेव, नतु संज्ञिभेदोऽस्तीति न मन्तव्यम्, संज्ञाभेदाधीनत्वात्संज्ञिभेदस्य तदधीनत्वाचाच्छव्यमितिन्यायेन भाष्ये संज्ञाभेदशब्देन संज्ञिभेद एव उपचर्यत इति भावः। ननु षड्जादिसंज्ञासम्बन्धग्रहः केनचिदितरव्यावर्तकाकारेण गृहीत एव धर्मिणीति वक्तव्यम्, ततश्च संज्ञाभेदमन्तरेणापि भेदकाकारस्याभ्युपगन्तव्यत्वात्कथं तदेकभेदत्वमिति चेत् ; सत्यम्,—संज्ञासम्बन्धो भेदप्रतीतौ प्रायेण हेतुरित्यत्र तात्पर्यात् । (दार्ष्टान्तिकेपि तथैवेति) दृष्टान्ते भेदसिद्धेः दार्ष्टान्तिकेपि तथैव भवत्वित्यर्थः (यत्र त्वाकाशदृष्टान्त इति.) यथा एकस्याकाशस्य कालभेदेन

त्वेनैक्यमेव ; न स्वरूपैक्यम्। तथा वायवीयानामंशाना-

* श्रुतप्रकाशिका *

काशमुक्त्वा आत्मान्तरे तथात्वमिति मन्तव्यम्। 'सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक् पृथक्'' इति नभसः सितनीलादिभेदः शरत्-प्रावृट्सन्ध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथा क्रमभावि तथैकस्यात्मनोऽपि देवादिभेदः क्रमभावीति। यद्वा तत्रापि प्रदेशभेदाङ्गीकारेण सर्वात्मनां दृष्टान्तः स्यात्, आकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसज्येत्। किं घटादेः कृत्स्नाकाशेन सम्बन्धः ? उत प्रदेशभेदेन ? पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याल्पपरिमाणत्वं वा. द्वितीये प्रदेशभेदाङ्गीकार इति । वेदान्तिभिर्नभसो निरवयवत्ववादोऽपसिद्धान्तः , वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशादेकांशेन वायुत्वेन परिणामवादादुत्पत्तिलयदर्शनाच्चेति ; अत एव "घटध्वंसे घटाकाशो न भिन्नो नभसो यथा। ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमान्" इति शौनकवचनमपि नभस्संशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यम् । "यथाऽग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्' इति तत्रैव साम्यदृष्टान्ताभिधानात् । अथादिभरतनिगमनश्लोकमाह

* भावप्रकाशिका *

रूपभेदवत्त्वं तथा एकस्यैवात्मनः कालभेदेन देवादिभेदवत्त्वमिति एतावानेव इह वक्तव्योऽर्थः, ततश्च कस्या व्यक्तेः पूर्वत्वं कस्या व्यक्तेः परत्वं कुत्र व्यक्तावुपदेशः कुत्र वातिदेशः ? इत्यादिविचारे न सन्नद्धव्यमिति द्रष्टव्यम्। ( वेदान्तिभिर्नभसो निरवयवत्ववाद इति ) अत्र निरवयवत्वेन वादो निरवयवत्ववादः, तस्य च कर्म नभः, ततश्च 'उभयप्राप्तौ'' इतिनियमात्कर्तरि तृतीयासम्भवात् तृतीयाया नानुपपत्तिरिति द्रष्टव्या। ( नभस्संशभेदाभिप्रायेणेति ) नचैवं जीवानामपि आकाशवत्प्रदेशभेदमात्रत्वं स्यात्, तच्चात्मैक्यवादिनोपि सम्मतमेवेति वाच्यम्, सुखदुःखव्यवस्थाद्यनन्यथासिद्धभेदग्राहकप्रमाणेन भेदसिद्धेरित्यत्र तात्पर्यम्। ( तत्रैव साम्यदृष्टान्ताभिधानादिति ) नच 'यथाग्निरग्नौ संक्षिप्तस्समानत्वमनुव्रजेत्' इत्यत्र साम्यमात्रस्य प्रागपि सिद्धतया समानत्वमित्यस्य ऐक्यमेवार्थस्समाश्रयणीय इति वाच्यम्, ऐक्यस्य बाधितत्वेन भेदकाकारविशेषप्रहाणेन साम्यविशेषस्यैव तदर्थ-

मपि स्वरूपभेदोऽत्रर्जनीयः । 'सोऽहं स च त्वम्' इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहं त्वमित्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह, अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे अहं त्वं

* श्रुतप्रकाशिका *

(सोऽहमिति) पूर्वोक्तम्– अध्यायचतुष्टयोक्तम् । स इतिपदस्य ज्ञानाकारविशिष्टवस्तुवाचित्वेऽपि विशेषणांशे तात्पर्यं दर्शयितुं सर्वात्मनां ज्ञानाकारमिति विशेषणांशस्य निष्कृष्यनिर्देशः, अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधात् । (ज्ञानमेवाकार इत्युपसंहरन्निति) सोऽहमित्यादिश्लोकानन्तरपूर्वश्लोके "एकं समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्" इत्यर्द्धेन सर्वात्मनां भगवच्छरीरत्वस्योक्तत्वात् सोऽहमित्यादिश्लोकस्य भगवदात्मकत्वनिगमनपरत्वशङ्का स्यात्. तच्चायुक्तम्; प्रकरणस्य शरीरात्मविवेकपरत्वात्तन्निगमनस्य चापेक्षितत्वात्तन्निगमनपरश्लोकान्तराभावादपेक्षितविधेरनपेक्षितविधानायोगाच, आत्मनां देहव्यावर्तकैकाकारत्वनिगमनपरोऽयं श्लोक इत्यभिप्रायः । त्यज भेदमोहमित्यंशस्यार्थमाह (देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेति) देवादिशब्दो भेदशब्दविवरणरूपः, देहगतदेवत्वाद्याकारभेद आत्मनि भेदमोहहेतुः, तं भेदमोहं परित्यजेत्यर्थः । कृत्स्नभेदनिषेधपरत्वेऽनिष्टमाह (अन्यथेति) नच अहं त्वमादिशब्दा देहपराः, नहि तच्छब्देनात्मानं परामृश्य तेनात्मना देहानामैक्यमुपदिश्यते, नाप्यन्तःकरणपराः, न ह्यन्तःकरणानां परमात्मनैक्यं परस्परैक्यं वोपदिश्यते, नापि देहविशिष्टान्तःकरणपराः, न हि देहविशिष्टाना-

☙ भावप्रकाशिका ☙

त्वात् (अध्यायचतुष्टयोक्तमिति) द्वितीयांशत्रयोदशाध्यायप्रभृत्यध्यायचतुष्टयेनोक्तमित्यर्थः । (अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधादिति) अन्यथा ज्ञानाकारमात्रपरामर्शित्व इत्यर्थः । (तं भेदमोहमिति) देवाद्याकारहेतुकं भेदमोहमित्यर्थः । नन्वात्मस्वरूपमित्यस्यैवोपलक्ष्यवाचितया सर्वमेतदात्म-

सर्वमेतदात्मस्वरूपमिति भेदानिर्देशो न घटते । अहं त्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन

* श्रुतप्रकाशिका *

मन्तःकरणानामैक्यमुपदिश्यते ; अतोऽहंत्वमादिशब्दा देहातिरिक्तात्मपरा इत्य- भिप्रायेण देहातिरिक्तेत्युक्तम् । अहंत्वमादिपदानामुपलक्षणत्वादुपलक्ष्ये वस्तुनि न भेद इत्याशङ्क्य परिहरति ( अहमिति ) अहंत्वमादीत्यादिशब्देन सर्वशब्दो विवक्षितः । उपलक्ष्येणेत्यौपचारिकनिर्देशः, उपलक्ष्यवाचिपदेनेत्यर्थः । ( सर्व- मेतदात्मस्वरूपमित्यनेनेति ) अहं त्वं सर्वमिति त्रयाणामपि पदानामात्मस्वरूपशब्देन सामानाधिकरण्यं फलितम्, तेष्वन्यतमेनाहंत्वमर्थसजातीयार्थवाचिना सर्वमेत- दितिपदेनात्मस्वरूपशब्दस्य सामानाधिकरण्यनिर्देशादिति ज्ञापनार्थं सर्वमेतदात्म- स्वरूपमित्युपादानं कृतं भाष्ये, श्लोके सर्वमेतदात्मस्वरूपमिति प्रदर्शनार्थमुक्तम् ; अतो- ऽहंत्वमादिशब्दानामुपलक्ष्यवाचकाभिमतात्मस्वरूपशब्देन सामानाधिकरण्यादहं- त्वमादिशब्दवाच्यानामर्थानामुपलक्षणत्वमसङ्गतम्, नहि चन्द्रः शाखा सारसः केदार इत्युपलक्षणोपलक्ष्यवाचिशब्दानां सामानाधिकरण्यं मुख्यतया दृष्टमित्यर्थः। लक्षणयाऽस्त्विति चेल्लक्षणैव दोष इति भावः । यद्वा अनेनेतिपदमुपलक्ष्यविशे-

* भावप्रकाशिका *

स्वरूपमिति सर्वशब्दस्योपादानं भाष्ये किमर्थमित्याशङ्क्याह ( अहं त्वं सर्वमिति त्रयाणामपि पदानामित्यादिना ) आत्मस्वरूपपदस्य श्लोके सर्वशब्दमात्रेण सामा- नाधिकरण्यं दृश्यते तत्कथमहंत्वंशब्दयोरात्मस्वरूपपदसामानाधिकरण्यमित्या- शङ्कायामाह ( अहंत्वमर्थसजातीयेति ) अहंत्वमर्थसजातीयार्थवाचिसर्वशब्दस्यात्म- स्वरूपशब्देन सामानाधिकरण्यदर्शनादहंत्वंशब्दयोरपि तत्सामानाधिकरण्यं फलि- तमिति ज्ञापनार्थं सर्वमेवैतदात्मस्वरूपमिति सर्वशब्दस्यापि सहोपादानं कृतं भाष्य इति भावः । अत्र सर्वशब्दस्याहंत्वमर्थवचनसामर्थ्ये सत्यपि गोबलीवर्दन्यायम- भिप्रेत्य हंत्वमर्थसजातीयवाचित्वोक्तिरितिद्रष्टव्यम् । इदञ्चोपलक्षणं परमते 'सोऽहं स च त्वमित्यत्रापि स इत्यस्यात्मस्वरूपपरामर्शितया उपलक्ष्यसामानाधिकरण्यस्य परेणाभ्युपेतत्वादितिद्रष्टव्यम् । ( लक्षणयाऽस्त्विति चेदिति ) अहंत्वमादिशब्दाना-

* श्रुतप्रकाशिका *

पणम् , सर्वमेतदात्मस्वरूपमित्यात्मशब्दनिर्दिष्टेनानेनोपलक्ष्येणाहंत्वमादिशब्दानां सामानाधिकरण्यादुपलक्षणत्वमसङ्गतमित्यर्थः । अस्यां योजनायामहंत्वमादिसजातीयार्थवाचिसर्वपदसामानाधिकरण्यनिर्देशस्य हेतुत्वमर्थसिद्धम्, यद्यहंत्वमादिशब्दा उपलक्ष्यपर्यन्तवृत्तयः तदानीमेवमर्थतया उपलक्ष्यवाचिना आत्मस्वरूपमिति पदेन स इति पृथक् सामानाधिकरण्यदर्शनादुपलक्षणवाचकाहंत्वमादिसामानाधिकरण्यवैयर्थ्यमिति । अहंशब्दस्यापेक्षिकप्रत्यक्त्वं प्रवृत्तिनिमित्तम्, त्वंशब्दस्य च चेतनत्वे सत्यभिमुखत्वम्. आत्मशब्दस्य च व्यापनक्षमत्वम् , स इतिपदस्य प्रकृतज्ञानाकारः। ननु " स च सर्वमेतदात्मस्वरूपमित्यत्र कथमात्मस्वरूपविशेषणस्य तच्छब्दस्य पुँल्लिङ्गत्वम् ? उच्यते "आत्मा शुद्धोऽक्षरः शान्त " इत्यादिषु परज्ञानमयत्वेन

* भावप्रकाशिका *

गन्तःकरणविशिष्टात्मवाचिनां विशेष्यस्वरूपमात्रे लक्षणा, यथा घटाकाश एव महाकाश इत्यत्रेतिभावः । प्रक्रमस्थस्योपलक्ष्यपदस्य उपलक्ष्यवाचिशब्दलक्षकत्वापेक्षयोपसंहारगतस्यात्मस्वरूपमित्यनेनेत्यस्यात्मस्वरूपमित्युक्तेनार्थेनेत्यर्थपरत्वं युक्तमित्यन्यथा व्याचष्टे ( यद्वा अनेनेतिपदमुपलक्ष्यविशेषणमिति ) ननु उपलक्ष्यवाचिपदमितिविशेषणभावः । नन्वस्यां योजनायां सर्वमेतादत्मस्वरूपमित्यस्य स्थूलनिर्देशप्रदर्शनोपक्षीणत्वात् अहंत्वंशब्दसामानाधिकरण्यहेतोस्सर्वशब्दसामानाधिकरण्यस्यानुक्तेरित्याशङ्क्याह (अस्यां योजनायामिति ) यद्यपि पूर्वयोजनायामपि सर्वशब्दसामानाधिकरण्यप्रदर्शनमर्थसिद्धमेव, तथापि शब्दपरत्वे सर्वमेतदात्मस्वरूपमिति एतत्सर्वशब्दसामानाधिकरण्यप्रदर्शनपरं भवेत् । द्वितीययोजनायान्तु उपलक्ष्यनिर्देशस्थलप्रदर्शनमात्रपरमिति वैषम्यात् । द्वितीययोजनायामहन्त्वादिशब्दानामित्यत्र अहंत्वमादयश्शब्दा येषां त इति व्युत्पत्त्या अर्थपरत्वं द्रष्टव्यम्, शब्दस्यार्थसामानाधिकरण्यासम्भवात् । ननु उपलक्षणत्वेपि सामानाधिकरण्यं घटाकाशो महाकाशः शाखाग्रे चन्द्रमा इत्यादिषु दृष्टमित्याशङ्क्याह ( यद्यहंत्वमादिशब्दा इति ) तथापि स चात्मस्वरूपमित्यनेनैव सामानाधिकरण्यस्य सिद्धत्वादहंत्वमादिसामानाधिकरण्यं व्यर्थमित्यर्थः । सिद्धान्ते अहमादिशब्दानां प्रयोजनमाह ( अहंशब्दस्यापेक्षिकेति ) प्रत्यक्त्वमात्रस्य प्रवृत्तिनिमित्तत्वे

सामानाधिकरण्यादुपलक्षणत्वमपि न सङ्गच्छते । सोऽपि यथोपदेशमकरोदित्याह "तत्याज भेदं परमार्थदृष्टिः" इति । कुतश्चैष निर्णय इति चेत्, देहात्मविवेकविषयत्वादुपदेशस्य; तच्च [1] "पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमात् । "विभेदजनके ज्ञाने" इति च नात्मस्वरूपैक्यपरम् । नापि जीवपरयोः ।

* श्रुतप्रकाशिका *

प्रकृत आत्मा हि तच्छब्देन परामृश्यते, अतो न विरोध इति । अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतदात्मस्वरूपं ज्ञानैकाकारः स आत्मेत्यर्थः । चतुर्थपादं व्याचष्टे (सोपीति) न जीवब्रह्माद्वैतपरमिदं प्रकरणम्, न चात्मस्वरूपबहुत्वनिषेधपरम्, प्रकारैक्यपरमिति कथं ज्ञायत इत्यभिप्रायेणाह (कुतश्चेति) परिहरति (देहात्मेति) तदपि कुत इत्यत्राह (तच्चेति) देहात्मविवेकपरत्वोपपादनेन जीवपरैक्यपरत्वमात्मबहुत्वनिषेधपरत्वं च दत्तोत्तरमेव । अथ शास्त्रोपसंहारगतस्य विभेदजनक इत्यादिश्लोकस्यार्थं वदन् अर्थान्तरपरत्वं व्युदस्यति (विभेदेत्यादिना) प्रथमं किमात्मस्वरूपैक्यपरम्? उत जीवपरैक्यपरम्? इति विकल्प्य दूष्यते, अत्र चशब्दाभावादात्मब्रह्मशब्दयोः सामानाधिकरण्यं सम्भावितम्, तथासति ब्रह्मशब्दः शुद्धावस्थपरः स्यात्, एवं शुद्धावस्थाज्जीवस्य भेदो नास्तीति जीवस्वरूपैक्यमुक्तं स्यात् । अतः शङ्कास्पदीभूतमात्मैक्यपरत्वं

७ भावप्रकाशिका ७

सर्वेषां स्वात्मनां स्वात्मानं प्रति प्रत्यक्त्वात्परमात्मन्यप्यहंशब्दप्रयोगप्रसङ्ग इत्याशङ्क्य प्रत्यक्त्वस्य प्रवृत्तिनिमित्तत्वेपि स्वतन्त्रशब्दोच्चारयितृत्वमुपाधिरित्यभिप्रेत्याह आपेक्षिकेति । (प्रकृतेति) द्वितीयांशत्रयोदशाध्यायमारभ्य प्रस्तुतत्वादित्यर्थः । अयमस्य श्लोकस्यार्थः,—अहमपि ज्ञानैकाकारस्स आत्मा त्वमपि तादृशः सर्वमेतदात्मस्वरूपमपि ज्ञानैकाकारम्, अत आत्मनु देवाद्याकारेण भेदमोहं परित्यजेति (प्रथमं किमात्मस्वरूपैक्यपरमिति) मुक्तपरैक्यं पश्चाद्दूषयिष्यन्

१. विष्णु-पु-२-अं. १३- अ. ८९. श्लो-

आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न सम्भवति । तथा च श्रुतिः [1]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व-

* श्रुतप्रकाशिका *

दूषयति ( आत्मेति ) उक्तरीत्या—श्रुतिस्मृत्यर्थापत्तिलौकिकार्थापत्त्यादिभिरित्यर्थः । द्वितीयं पक्षं दूषति ( जीवेति ) ( देहात्मनोरिवेति ) विरुद्धधर्मत्वादित्यर्थः । प्रत्यक्त्वपराक्त्वजडत्वाजडत्वनित्यत्वपरिणामित्वादिभिर्विरुद्धधर्मैर्यथा देहात्मनोर्भेदस्तथा जीवपरयोरपि हेयार्हत्वोभयलिङ्गत्वनियाम्यत्वनियन्तृत्वादिविरुद्धधर्मैरैक्यं हि नोपपद्यते । विरुद्धधर्मत्वे प्रमाणमाह (तथाचेति)तथा—विरुद्धधर्मत्व इत्यर्थः । चो ह्यर्थः हेतुवाची । वक्ष्यमाणहेतूनां पञ्चमी प्रयुक्ता तत्स्थानीयोऽयं चशब्दः । समानं वृक्षम्-शरीरम्, पिप्पलम्—कर्मफलम्, अभिचाकशीति—स्वयमनश्नत्वादाशयितृत्वाच्च भृशं भातीत्यर्थः ॥

( द्वासुपर्णेतिश्रुत्यर्थविचारः ॥ )

ननु कथमस्य मन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरो ह्ययं मन्त्रः, पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात् । यथा,– तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् । अनश्नन्नन्यो अभिचाकशीतीति ज्ञः । तावेतौ सत्त्वक्षेत्रज्ञाविति, स्वाद्वत्तीत्यन्तेन सत्त्वमुक्तम्. अभिचाकशीतीत्यन्तेन वाक्येनानश्नन्नन्यो ज्ञ इति क्षेत्रज्ञोऽभिपश्यतीत्युक्तमिति व्याख्यातत्वमवगम्यते । न च सत्त्वशब्दो जीवपरः, क्षेत्रज्ञशब्दः परमात्मपर इति वाच्यम्; सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्, "तदेतत्सत्त्वं येन स्वप्नं पश्यति । अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः । तावेतौ सत्त्वक्षेत्रज्ञौ" इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरत्वेन तथैव व्याख्यातत्वाच्च । येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणम् . स्वप्नद्रष्टृत्वादिपरः क्षेत्रज्ञो हि जीवः, अतो द्वा सुपर्णा इतिमन्त्रोऽयमन्तःकरणजीव-

* भावप्रकाशिका *

इति प्रथमशब्दाभिप्रायः । ( द्वा सुपर्णा इति ) सुपर्णसाम्यात् सुपर्णौ सयुजौ

1. मु. उ. ३-मु. १. ख. १. वा.

जाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति"[१] "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो

* श्रुतप्रकाशिका *

परः ,न तु जीवपरमात्मपर इति । उच्यते ; न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते, अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्षे पुरुषो निमग्नः' इत्यनन्तरमन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च. "समानं वृक्षं परिषस्वजाते' 'समाने वृक्षे पुरुषो निमग्नः" इति तयोरैकार्थ्यं हि प्रतीयते । समाने वृक्ष इतिमन्त्रे च पुरुषो जीवः, अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्, "शोचति मुह्यमानः' 'पश्यति वीतशोकः' इतिपदानामस्वारस्यप्रसङ्गाच्च . अन्यश्च परमात्मा, ईशशब्दवाच्यत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवलमुत्तरमन्त्रैकार्थ्याद्द्वासुपर्णेतिमन्त्रस्य जीवपरमात्मपरत्वम्, किन्तु तस्मिन्नेव स्वाद्वत्ति अनश्नन्नन्य इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च अध्यवसीयते, चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवदन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं न सम्भवति. जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेव अनश्नत्वमपि नोपपद्यते । तर्हि पैङ्गीरहस्यब्राह्मणस्य कोऽर्थः ? उच्यते ; सत्त्वम्—जन्तुरित्यर्थः 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्रीतु जन्तुषु" इति नैघण्टुकपाठाज्जन्तुपरत्वावगतेः, जन्तुः—चेतनः । 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः" इति पाठात्, 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ इतिप्रयोगात्, "वन्यान्विनेष्यन्निव दुष्टसत्त्वान्" इत्यर्वाचीनप्रयोगाच्च । क्षेत्रज्ञशब्दश्चात्र परमात्मपरः, अर्थान्तरप्रसिद्धाकाशप्राणशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः, "विष्णोर्नामसहस्रं मे' इत्युपक्रम्य—'क्षेत्रज्ञोऽक्षर एव च"इति प्रयोगात् क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च । मोक्षधर्मे "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा। प्रविशन्ति द्विजश्रेष्ठ! क्षेत्रज्ञं निर्गुणात्मकम्।' 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः' 'विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिना-

१. कठ. ३-वल्ल्यां. १- वा.

ये च त्रिणाचिकेताः" ॥ [1] "अन्तःप्रविष्टः शास्ता

* श्रुतप्रकाशिका *

सिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥" इति प्रयोगात् 'यस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति च कर्माणि स भूतात्मेति चोच्यते" इति प्रयोगाच्च । येन स्वप्नं पश्यतीत्यत्र येनेतीत्थम्भावे तृतीया, येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते । ततश्च "काठिन्यवान् यो बिभर्ति"इति पृथिवीद्वारा काठिन्यवत्त्वमद्रष्टृत्वं जीवात्मद्वारा परमात्मविशेषणं भवतीति न विरोधः, शरीरशब्दश्च 'तस्यैष एव शारीर आत्मा'इतिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्मन्युपपद्यते, उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च सर्वज्ञस्य तस्यैवोपपद्यते; अतो द्वा सुपर्णेति मन्त्रो जीवपरमात्मपरः ॥ ऋतं पिबन्ताविति पानक्रियायां जीवपरयोः प्रयोज्यप्रयोजकभावेनान्वयः, पिबन्ताविति शतृप्रत्ययः कर्तृमात्रपरः, न कर्तृविशेषपरः, तेन प्रयोज्यप्रयोजकौ द्वावपि कर्तृविशेषाविति तावविशेषेण क्रोडीकृतौ भवतः, अन्यथा अनश्नन्नित्यादिविरोधः स्यात् । यद्वा छत्रिणो गच्छन्तीतिवदजहल्लक्षणा, सुकृतस्य ऋतम्–फलम् । यद्वा सुकृतस्य लोक इत्यन्वयः, तदा सुकृतम् ऋतम्. तत्फलमुच्यते लक्षणया "एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्यत्र 'एव मनृतादात्मानं जुगुप्सेत्' इति पुण्यप्रतियोगित्वेनानृतशब्दप्रयोगात् । गुहाम्–हृदयगुहाम् । परमे परार्ध्ये इति लोकविशेषणं जीवपरविशेषणं वा । छान्दसत्वाल्लिङ्गव्यत्ययः । छायातपौ–अज्ञसर्वज्ञौ,"ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यनेनैकार्थ्यात्, । ब्रह्मविदः–अध्यात्मविदः । पञ्चाग्नयः त्रिणाचिकेताश्च कर्मविशेषनिष्ठाः । ते वदन्ति; यथा "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इति । ऋतं पिबन्तावित्येतद्विशद्यायाह ( अन्तःप्रविष्ट इति ) इत्याद्या श्रुतिरित्यन्वयः । न केवलं श्रुतिसाररस्यात, अस्मिन्नपि प्रबन्धे दृश्यते इत्याह

ⓢ भावप्रकाशिका ⓢ

सर्वदा सहवर्तमानौ, सत्त्वं अन्तःकरणमितिच्छेदः ( येनेतीत्थम्भावे तृतीयेति ) उक्तयुक्तिबलात् दुर्बलाप्युपपदविभक्तिस्सोढव्येति भावः ( द्वावपि कर्तृविशेषाविति )

1. यजुरारण्यके. ३-प्रश्ने. २० पं.

जनानां सर्वात्मा" इत्याद्याः । अस्मिन्नपि शास्त्रे [1] "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ [2] "समस्तकल्याणगुणात्मकोऽसौ" [3] "परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" [4] "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ॥" इति भेदव्यपदेशात्, [5] "उभयेऽपि हि भेदेनैनमधीयते" [6] "भेदव्यपदेशाच्चान्यः" [7] "अधिकं तु भेदनिर्देशात्" इत्यादिसूत्रेषु च [8] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" [9] "प्राज्ञेनात्मना सम्परिष्वक्तः" [10] 'प्राज्ञेनात्मनाऽन्वारूढः" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् ॥

* श्रुतप्रकाशिका *

( अस्मिन्नपीति ) स सर्वभूतेत्यादिना हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे कथिते, जीवस्य हेयास्पदत्वमविद्येत्यादिना उक्तम्, सर्वगेति भेदव्यपदेशादिति पूर्वेण सम्बन्धः, न तु सूत्रोपादानम् , उपर्यस्य सूत्रस्य विषयवाक्यानुपादानात् उदाहृतपुराण-

१.२.३.वि-पु-६-अं.५-अ. ८३-८४-८५ श्लो.
४ विष्णु-पु-६. अं ७-अ. ६१.६२- श्लो.
५ शारीर. १-अ. २-पा. २१-सू.
६ शारीर. १-अ. १-पा. २२-सू.
७ शारीर. २- अ. १-पा. २२-सू.
८ बृ. ५-अ. ७-ब्रा. २२. आत्मशब्दघटितपाठो माध्यन्दिनशाखास्थः ॥
९ बृ. ६-अ. ३-ब्रा. २१ वा.
१० बृ. ६-अ. ३-ब्रा. ३५-वा.

—( मुक्तौ जीवब्रह्मणोः स्वरूपैक्यनिरासः )—

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः, अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात् । यथोक्तम्—

* श्रुतप्रकाशिका *

वचनानां हेतुत्वकथनसापेक्षत्वाच्च, श्रुतिवाक्यस्य हेतुत्वं हि चशब्देनोक्तम् । उभयेऽपीत्याद्युदाहृतसूत्रद्वयस्य विषयवाक्यं य आत्मनीति । अधिकन्त्वित्यादिसूत्रस्य विषयवाक्यं प्राज्ञेनेति । सूत्रेष्वाभिः श्रुतिभिरेवमर्थनिर्णयादित्यर्थः । एवमुपनिषत्पुराणसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम् ॥ .... .... .... ....

अथ ब्रह्मवेद ब्रह्मैव भवतीत्यादिवाक्यानि हृदि निधायास्यान्यथासिद्धिं शङ्कते ( नापीति ) तद्दूषयति ( अविद्याश्रयत्वेति ) अविद्याश्रयत्वयोग्यत्वम्—अविद्याशब्दः समस्तहेयप्रदर्शनार्थः, आश्रयत्वशब्दः सम्बन्धपरः, हेयसम्बन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम्. हेयसम्बन्धात्यन्ताभावाधिकरणत्वं तदनर्हत्वम् 'अनश्नन्नन्य' इति श्रुत्या परमात्मनस्तदनर्हत्वं सिद्धम् । देशकालसन्निकर्षे सत्यपि तदस्पर्शो हि स्वभावसन्निकर्षाभावात्, स्वाभावसन्निकर्षाभाव एव ह्ययोग्यत्वम्, यथा नभसः क्लेदनदहनाद्यनर्हत्वम् ; अतो हेयार्हतदनर्हयोर्हेयापगमेऽपि न स्वरूपैक्यं सम्भवति. निग्राह्यस्य पश्चादनुगृहीतस्य हि निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसम्भव इत्यर्थः, कारागृहनिर्मुक्तस्य नियन्त्रा नरपतिना स्वरूपैक्यं न सम्भवतीत्यर्थः । अस्मिन्नर्थे पुराणवचनमाह ( यथोक्तमिति ) योगशब्द ऐक्यपरः, अन्यथा अन्यद्द्रव्यं हि तद्द्रव्यतां नैतीति प्रतिक्षेपानुपपत्तेः । ननु मिथ्यैतदित्युत्तरत्रान्वयः, परमात्मात्मनोर्योगः परमार्थः, अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येत्यर्थ इति चेत्, नैवम्,—अन्यस्यान्यद्रव्यतानापत्तेस्सत्यत्वात्, इतरथा जडाजडयोस्तादात्म्यप्रसङ्गः 'ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्म मतं तव' इतिवत् । इष्यत इत्य-

* भावप्रकाशिका *

स्वतन्त्रः कर्ता, तत्प्रयोजको हेतुश्चेति द्वयोरपि कर्तृसंज्ञाविधानादितिभावः । ( चशब्देनोक्तमिति ) तथाच श्रुतिरित्यत्रेति भावः । तच्च तत्र सुस्पष्टम् ॥ .... ....

[1] "परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः॥" इति।

* श्रुतप्रकाशिका *

नेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात्, अन्यथा इष्यत इतिपदवैयर्थ्यात्। किञ्च "परमार्थस्तु भूपाल! सङ्क्षेपाच्छ्रूयताम्" इति वक्ष्यमाणपक्षव्यतिरिक्तपक्षाणां निराकरणपरत्वाच्च प्रकरणस्य, एतच्छ्लोकपूर्वार्धोक्तैक्यसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते। 'धर्माय त्यजते' इत्यादिग्रन्थैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते, ततः प्रकृतार्थे स्वरसस्य एतच्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम्। किञ्च अन्यद्द्रव्यं तद्द्रव्यतां नैतीति यत्, एतन्मिथ्येति हि तदानीमर्थः। तथासति यतश्शब्दस्वारस्यभङ्गः, यतश्शब्दस्य हि हेतुपरत्वं स्वरससिद्धम्, न तु यच्छब्दवत्प्रकृतार्थशरीरमात्रपरामर्शित्वम्। अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येति यतः— तत ऐक्यं परमार्थ इत्यन्वये इतिशब्दद्वयाध्याहारप्रसङ्गः, स चानध्याहारेण निर्वाहे सति नोपपद्यते। यदुच्येत पूर्वं पृथग्भूतयोः परमात्मात्मनोरैक्यं परमार्थ इतीष्यत इति चेन्मिथ्यैतत्, अन्यद्द्रव्यं

* भावप्रकाशिका *

(निराकरणपरत्वाच्च प्रकरणस्येति) 'धर्माय त्यजते किन्तु परमार्थो धनं यदि। व्ययश्च क्रियते तस्मात्काममप्राप्त्युपलक्षणम्॥ पुत्रश्चेत्परमार्थस्स्यात्सोप्यन्यस्य नरेश्वर!। परार्थभूतस्सोन्यस्य परमार्थो हि सत्पिता। एवं न परमार्थोस्ति जगत्यत्र नराधिप!। परमार्थो हि कार्याणि कारणानामशेषतः। राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि। परमार्थं भवत्यत्र न भवन्ति च वै ततः। ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्ममतं तव। परमार्थभूतं तत्रापि श्रूयतां गदतो मम। यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया। तत्कारणानुगमनाज्जायते नृप! मृण्मयम्। एवं विनाशिभिर्द्रव्यैस्समिदाज्यकुशादिभिः। निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी। अनाशी परमार्थस्तु प्राज्ञैरभ्युपगम्यते। तत्तु नाशी न सन्देहः नाशिद्रव्योपपादितम्। तदेवाफलदं कर्म परमार्थो मतस्तव। मुक्तिसाधनभूतत्वात्परमार्थो

1 वि. पु. २-अं. १४-अ. २७-श्लो.

मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्,—

[1] "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति ।

इहापि,—

---

* श्रुतप्रकाशिका *

हि तद्द्रव्यतां नैतीति यतस्तस्मात्पूर्वमपि परमात्मात्मनोर्भेदो नास्तीति । नैवम्,— पूर्वं भ्रान्त्या पृथग्भूतयोरित्यस्याश्रुतत्वेनाध्याहारप्रसङ्गात्, स चानध्याहारेण निर्वाहे सम्भवति नोपपद्यते । किञ्च तस्मात्पूर्वमपि भेदो नास्तीत्यश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात्, तच्च तन्निरपेक्षनिर्वाहे सम्भवति नोपपद्यते, तस्मात्प्रागपि भेदो नास्तीतिवाक्यं नाध्याहर्तव्यम् । पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादभेद इति पक्षनिराकरणमात्रपरत्वाद्ग्रन्थस्य इति चेत्; किं तेन प्रयोजनम् ? पूर्वमप्यैक्यसिद्धिरिति चेत्, न; पूर्वं पृथग्भूतयोः पश्चादैक्यायोगे ऽभिहिते सति पश्चादपि भेदसिद्धेः अतः स्वरससिद्ध एव वाक्यार्थः स्वीकार्यः । अथ ब्रह्म वेद ब्रह्मैव भवतीत्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन वक्ष्यन्मुक्तस्य साम्यापत्तिमाह (मुक्तस्येति) तत्रैक्यश्रुतेः प्रतिकूलार्था साम्यश्रुतिर्दर्शयिष्यत इति मत्वा व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं पराभिमतार्थप्रतिकूलार्थस्मृतिवचनं दर्शयति (इदमिति) मुक्तपरत्ववैशद्यायोपादानं सर्गेऽपीति । न केवलं शास्त्रान्तरे, अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह (इहापीति) इह— योगप्रकरणे योगसङ्क्षेपकथनारम्भ इत्यर्थः । "सङ्क्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव" इति

* भावप्रकाशिका *

न साधनम् । ध्यानं नैवात्मनो भूप ! परमार्थार्थशब्दितम् । भेदकारिपरेभ्यस्तत्परमार्थो न भेदवान् । परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः । तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः । परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम । एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः" इति प्रकरणस्येत्यर्थः । (संक्षेपविस्तराभ्यां त्विति) 'इत्युक्तस्ते मया योगः खाण्डिक्य

---

1 गीता. १४-अ. २-श्लो.

[1] "आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ! ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥" इति ।

* श्रुतप्रकाशिका *

द्युक्तम् । आत्मनः शक्त्या विकार्यम्—अवस्थान्तरं नेयम् । ध्यायिनमेनं तद्ब्रह्म आत्मभावं नयति, आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथेत्यन्वयः । आकर्षको वह्निः दोषमाकर्षतीति व्युत्पत्त्या "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्" इति ह्युत्तरत्र वक्ष्यते । श्रीविष्णुधर्मे च "यथाग्निसङ्गात्कनकमपदोषं प्रजायते". इति । सोऽग्निः . आत्मभावम्— आत्मनः स्वभावम्, निर्दोषत्वं लोहं नयति तथेत्यर्थः । अयं सम्यगर्थः । यद्वा आत्मशब्दः स्ववाची सन्नन्ययोगव्यतिरेकपरः, यथाऽग्निर्लोहमात्मभावम्--स्वभावम् -स्वतः सिद्धरूपं नयति तद्वदित्यर्थः । यद्वा आकर्षकः अयस्कान्तः, लोहमात्मभावं नयति— स्वव्यापारं लोहं कारयति स्वमनुकारयति . "स्थितः स्थितामुच्चलितः प्रयाताम्" इतिवदयस्कान्तस्तिष्ठति चेत् लोहस्तिष्ठति, धावति चेत् तमनुधावति; एवं "कामान्नी कामरूप्यनुसञ्चरन्' सर्वेषु लोकेषु कामचारो भवति" इत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति, समानचेष्टितं करोतीत्यर्थः । यद्वा आत्मशब्दः स्ववाची, निष्कृष्टस्वरूपपरः, उपासकं परमात्मा आत्मभावं नयति—प्रकृतिसम्बन्धराहित्येन शुद्धतां नयति, केवलतां नयति, यथा अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति तद्वदित्यर्थः । यद्वा 'भूप्राप्तावात्मनेपदम्' इति वचनाद्भावशब्दः प्राप्तिवचनः, आत्मप्राप्तिं नयति,

* भावप्रकाशिका *

परिपृच्छतः । संक्षेपविस्तराभ्यान्तु किमन्यक्रियतां तव ॥" इति श्लोकः । ( अयं सम्यगर्थ इति ) यथाग्निसङ्गात्कनकमिति स्मृत्यानुगुण्यादिति भावः । आत्मभावं नयत्येनमित्यत्रात्मशब्दस्य ध्येयब्रह्मपरत्वमाकर्षकपरत्वञ्चेति प्रथमव्याख्या, आत्मशब्दस्य ध्यातृपरत्वमिति द्वितीया, पक्षद्वयेऽप्याकर्षकशब्दो यौगिकव्युत्पत्त्याग्निपरः, उत्तरेषु त्रिष्वपि पक्षेषु अयस्कान्तपरः; आत्मशब्दस्य ध्येयपरत्वमेव, भावशब्द-

[1] वि-पु-६-अं, ७-अ. ३० श्लो.

आत्मभावम्-आत्मनः स्वभावम्. न ह्याकर्षकस्वरूपापत्ति-राकृष्यमाणस्य। वक्ष्यति च [1]"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" [2]"भोगमात्रसाम्यलिङ्गाच्च" [3]'मुक्तोपसृप्यव्यपदेशाच्च' इति। वृत्तिरपि [4]"जगद्व्यापारवर्जं समानो ज्योतिषा" इति । द्रमिडभाष्यकारश्च [5]"देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिः स्यात्" इत्याह। श्रुतयश्च [6]"य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" [7]"ब्रह्मविदाप्नोति परम्" [8]"सोऽश्नुते सर्वान्

---

* श्रुतप्रकाशिका *

यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः । प्राप्तिं नयतीति निर्देशः ओदनपाकं पचतीतिवत् । जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तम्। जीवस्य बन्धमोक्षयोर्ज्ञानसङ्कोचविकासरूपविकारार्हत्वात् । अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति (नहीति) आकर्षकस्वरूपापत्तिराकृष्यमाणस्येतिनिर्देशः उक्तस्सर्वार्थसाधारणः। अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः। (समानो ज्योतिषेति) ज्योतिः—परं ब्रह्म "परं ज्योतिरुपसम्पद्य 'अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति श्रुतेः (द्रमिडेति) अशरीरः— मुक्तः, कर्मकृतशरीराभावात् । सिद्धिः— अनुभवः। मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति (श्रुतयश्चेति आप्नोति— परमनुभवतीत्यर्थः। एतद्विवरणरूपं वाक्यं दर्शयति (सोऽश्नुत इति) अनुसङ्ग-

* भावप्रकाशिका *

श्लेषापर इति तृतीया व्याख्या, आत्मशब्दो लोहध्यात्रोर्दृष्टान्तदार्ष्टान्तिकयो-

---

१ शारी. ४ अ ४-पा- १७-सू.
२ शारी. ४-अ. ४-पा. २१-सू.
३ शारी. १-अ- ३-पा. २-सू.
४ बोधायनवृत्तिः ॥
५ द्रमिडभाष्यकारवाक्यम् ॥
५ छा. ८- प्र. १-ख. ६-वा.
७ तैत्ति. आन. १- अ. १-वा.
८ तै. आन. १-अ २-वा.

कामान् सह ब्रह्मणा विपश्चिता" [1]"एतमानन्दमयमात्मानमुपसङ्क्रम्य। 'इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्'[2] 'स तत्र पर्येति"[3]"रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति'[4]'यथा नद्यः स्यन्दमानास्समुद्रे ऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपा-

* श्रुतप्रकाशिका *

रन्नित्यनेन भेदो दर्शितः । रसो वै स इत्यनेन साम्यमानन्दित्वाकारेणेत्युक्तं भवति। परमसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति (यथा नद्य इति) नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गाद्वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः, प्राकृतनामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः । न च तावता भेदनिवृत्तिः, 'पुरुषमुपैती'ति कर्मकर्तृभावावगमात् । साम्यापत्तिं दर्शयति (तथेति) ननु परमं साम्यमुपैतीत्यैक्यापत्तिरुच्यते, समशब्दस्य समानपर्यायत्वात् समानशब्दवदैक्ये प्रयोगाच्च . समशब्दस्यैक्ये प्रयोगो दृश्यते समकालवर्तीत्यादिषु, तथा समशब्दपर्यायतया अवगतसमानशब्दोऽप्यैक्ये प्रयुज्यते "समानं वृक्षं परिषस्वजाते" इति 'एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति च। ऐकाधिकरण्यं हि सामानाधिकरण्यम् एकस्मिन्नर्थे इत्युक्तेः। तत्पर्यायश्च समशब्दः । यद्यपि सदृशस्यापि समशब्दो वाचकः, तथापि मुक्तिवाक्यस्थसाम्यशब्द ऐक्यपरः, 'ब्रह्म वेद ब्रह्मैव भवति'इत्यादिश्रुत्यन्तरैकार्थ्यात् लयसायुज्यशब्दश्रवणान्नदीसमुद्रघटाकाशमहाकाशादिदृष्टान्तश्रवणाच्च । "सा-

* भावप्रकाशिका *

र्निष्कृष्टस्वरूपपर इति चतुर्थी, आत्मशब्दो ध्येयाकर्षकपरः, भावशब्दश्च प्राप्तिवचन इति पञ्चमीनिष्कर्षो द्रष्टव्यः। (अनुसञ्चरन्नित्यनेन भेदो दर्शित इति) अनुशब्देन मुक्तसञ्चारस्य परमात्मसञ्चारपाश्चात्यकथनादितिभावः। (समानशब्दोऽप्यैक्ये प्रयुज्यत इति) ननु वाक्छब्दपर्यायगोशब्दस्य किरणप्रयोगो न वाक्-

---

[1] तैत्ति. भृगु. १०-अनु. ५-वा.
[2] छा..८-प्र. १२-ख. ३ वा.
[3] तै-आन. ७-अनु. १-वा.
[4] मु. ३-मु. २-ख. ८-वा.

द्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" [1]"तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्याद्याः।

* श्रुतप्रकाशिका *

धर्म्यमागताः" इति स्मृतिस्तु सगुणप्राप्तिविषया, अन्यथा प्रत्यक्षश्रुतिविरोधे स्वरूपैक्यविषयबहुश्रुतिविरोधे च तद्दौर्बल्यात्, अत ऐक्यापत्तिरेव अनेन वाक्येन प्रतिपादिता। ऐक्यस्य च पारम्यं नाम पुनर्भेदभ्रमप्ररोहविरहितत्वमिति। अत्रोच्यते,—अत्र साम्यशब्दः सादृश्यमेवाभिधत्ते, न त्वैक्यम्, ऐक्यस्य मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात्। सादृश्य एव हि समशब्दस्य [प्रसिद्धि]प्राचुर्यम्, तस्य चापवादाभावे सत्यस्वरसार्थस्वीकारोऽनुपपन्नः, अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते। न च समादिशब्दानामैक्यं मुख्यार्थः, एकत्वविवक्षायामेको घट इत्यादौ प्रयोगाभावात्; मुख्यत्वे हि एकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति। यस्तु सामानाधिकरण्यं समकालवर्तीत्यादिषु समादिशब्दप्रयोगः, स तु साधारण्यार्थः, न त्वैक्यार्थः। साधारण्येऽपि प्रयोगोऽमुख्यः, प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः। तथा हि,— अनेकप्रतियोगिकैकरूपसम्बन्धवत्त्वं साधारण्यम्, यथा धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन सम्बन्धितया साधारणम्, तयोश्च धनं प्रति शेषितया सादृश्यम्, ताभ्यां सम्बन्धि धनम्, तथा नीलत्वोत्पलत्वे-

* भावप्रकाशिका *

शब्दस्य किरणार्थत्वसाधकः, अप्रयोजकत्वात्; अतः परिहारग्रन्थे सामानाधिकरण्यशब्दविचारोपि न युक्त इति चेन्न, समशब्दाधिकार्थस्य समानशब्देऽव्याप्यसिद्ध्या तथोक्त्युपपत्तेः। (मुख्यार्थत्वेऽभ्युपगतेऽपीति) हरिशब्दस्य भेकादिष्विवेति भावः। (स तु साधारण्यार्थ इति) सादृश्यवाचिना शब्देन लक्षणया साधारण्यं प्रतीयत इत्यर्थः। लक्षणया तत्सिद्धिप्रकारमुपपादयति (तथा हीति) साधारण्यस्यानेकनिरूप्यत्वादनेकप्रतियोगिकेत्युक्तम्। पुत्रं प्रति मातुः श्वशुरं प्रति स्नुषायाः एकस्या एव पुत्रश्वशुरौ प्रति साधारण्याभावादेकरूपेत्युक्तम्। (ताभ्यां सम्बन्धि धनमिति) ततश्च समशब्दार्थभूतसदृशसम्बन्धित्वं साधारण्य-

---

१ मु. ३-मु. १-ख. ३-वा.

* श्रुतप्रकाशिका *

अपेक्ष्याधारतया सम्बन्धिद्रव्यं साधारणम् , तयोश्च द्रव्यं प्रत्याधेयतयास्ते सादृश्यम् , ताभ्यां सम्बन्धि द्रव्यम् , तथा द्वाभ्यां संयोगित्वेनावच्छेद्यावच्छेदकभावेन वा सम्बन्धी कालस्तयोः साधारणः , तत्कालसम्बन्धित्वाकारेण तयोरपि सादृश्यमस्ति, ताभ्यां सम्बन्धी कालः , अतो मिथस्सदृशार्थसम्बन्धितया द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति न मुख्याः , अत ऐक्ये प्रयोगाभावात्समशब्दस्यैक्यं न मुख्यार्थः । मुख्यार्थे सम्भवति लाक्षणिकार्थस्वीकारो नोपपद्यते , अतः साम्यशब्दः सादृश्यमेवाभिधत्ते । मुक्तात्मगोचरसामानाधिकरण्योपपत्तिश्चानन्तरमेव भाष्ये वक्ष्यते । यदुक्तं सायुज्यशब्देन मुक्तावभेद इति। तदयुक्तम् ; सायुज्यशब्दस्य समानगुणयोगवाचित्वात् . युज्यत इति युक्छब्दो गुणपरः, धर्मिणि हि गुणः सम्बध्यते, समानगुणकस्सयुक् , तस्य भावस्सायुज्यमिति हि व्युत्पत्तिः। प्रयोगविरोधाच्च नैक्यं सायुज्यम् "एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति" इति बह्वीभिर्देवताभिरेकस्य सायुज्यापत्तिः श्रूयते, न ह्येकस्य निरवयवस्याच्छेद्यस्यात्मनो बह्वीभिर्देवताभिरैक्यं सम्भवति ।

* भावप्रकाशिका *

स्यास्तीति लक्षणाबीजभूतमुख्यार्थसम्बन्धित्वाल्लक्षणोपपद्यत इति भावः । सादृश्यस्य साधारणधर्मायत्तत्वात्सादृश्यवाचिशब्दस्सादृश्यनिर्वाहके साधारणे वर्तत इति निष्कर्षः । एवं दृष्टान्ते समानाधिकरणसमकालादिस्थलेऽप्यमुमर्थं शिक्षयति ( तथा नीलत्वोत्पलत्वे इति ) ( द्वाभ्यां संयोगित्वेनेति ) ययोस्समकालत्वमुच्यते, ताभ्यां द्वाभ्यामित्यर्थः । ( द्रव्यकालादिषु समसमानादिशब्दा इति ) यद्यपि सामानाधिकरण्यं समकालवर्तीत्युदाहरणानुसारेण काले समशब्दस्य द्रव्ये समानशब्दस्य चोपपाद्यतया द्रव्यकालादिषु समानसमशब्दा इत्येव वक्तुमुचितम् । तथाप्यल्पाच्तरत्वात् क्रमविवक्षणाद्वा नानुपपत्तिरिति द्रष्टव्यम् । ( युज्यत इति युगिति ) अत्र केचित्, सम्बन्धार्थस्य 'युजि योगे' इत्यस्य रौधादिकस्य कर्तरि युज्यत इति रूपस्याभावात् । समाध्यर्थस्य च युजेः कर्तर्येतद्रूपसम्भवेपि तस्यार्थस्य प्रकृतासङ्गतेः 'युजिर्योगे, इत्यस्यैव कर्मण्येतद्रूपमिति वक्तव्यम् । तत्र च ऋत्विगादिसूत्रेण क्विनो वा "सत्सूद्विषा'इत्यादिना 'क्विप्च'इत्यनेन वा क्विपो वा

* श्रुतप्रकाशिका *

क्रमभावित्वाद्विरोध इति चेत्, तर्ह्यग्निनैकीभूतस्य वरुणसायुज्यापत्तौ अग्नित्वोपाधेः प्रहाणादग्नेर्देवताया अभावः स्यात्, अग्नित्वोपाधौ स्थिते वरुणैक्यापत्त्यनुपपत्तिः, औपाधिकभेदप्रहाणं ह्यैक्यापत्तिः, नतु पूर्वमविद्यमानमैक्यमुत्पद्यते। अग्नौ स्थित एव ततः पृथग्भूतस्य वरुणसायुज्यमिति चेत्, एकीभूतस्य पृथग्भावो ह्युपाधितः स्यात्, उपाधिश्च देहान्तःकरणादिः, तत्सम्बन्धस्याहेतुकत्वेऽतिप्रसङ्गाद्धेतुर्वाच्यः। कर्मैव हेतुरितिचेत्, अग्निसायुज्यापत्तिदशायां तत्कर्म नष्टं न वा? नष्टं चेत् पुनरुपाध्यनुदयेनाग्नितः पृथग्भावायोगादग्नित्वोपाधेश्चाप्रहाणात्पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते, अनष्टं चेत्, तत्कृतोपाधेरनष्टत्वान्नाग्निनैक्यापत्तिसम्भवः, औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्तिविरोधित्वात्, अनष्टमपि तत्कर्माग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति. कर्मणां कार्यकारित्वस्य कालविशेषनियतत्वादिति चेत्, तथापि व्यवस्थितकर्मविशेषपरिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति नाग्निनैक्यापत्तिरुपपन्ना। किञ्च पृथिव्यैकीभूतपृथग्भूतघटस्येवाग्निनैकीभूतपृथग्भूतजीवस्याजत्वनित्यत्वानुपपत्तिश्च, अतो भेदे स्थित एव अग्न्यादिसायुज्यम्, समानलोकतासाहचर्याच्च नैक्यं सायुज्यम्, नह्येकस्य स्वेन समानलोकत्वसम्भवः, अतस्समानलोकत्ववद्भेदे सिद्ध एव सायुज्यं भवति, समानलोकताप्राप्त्यनन्तरं सायुज्यापत्तिः, नतु युगपदेव; अतस्तयोरविरोध इति चेन्न, 'सायुज्यं सार्ष्टितां समानलोकता'मिति सायुज्यस्य पूर्वश्रुतत्वात्, अर्थक्रमेण पाठक्रमबाध इति चेन्न; अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वादर्थान्तरकल्पनस्याहेतुकत्वाच्च। यदि पाठक्रमबाधार्थं सायुज्यशब्दस्य ऐक्यापत्तिलक्षणार्थ-

* भावप्रकाशिका *

कर्तरि विहितत्वेन कर्मण्यसम्भवात् युज्यतेऽनेनेति कर्तर्येव क्विन् पच्यतेऽनेनेति पाचक इतिवत्तस्य सहशब्देन सदृशवाचिना बहुव्रीहिः, अस्ति च सहशब्दस्स-दृशपर्यायः, यदा सदृशः सख्या ससखीति तस्यास्वपदविग्रहोऽयं बहुव्रीहिः, समानं युक् गुणजातमस्येत्यर्थः। तत्र चोपसर्जनस्येति सहस्य सभावः। (अग्नित्वोपाधेश्चाप्रहाणादिति) अपृथग्भूतस्याप्यग्नित्वप्रहाणे अग्नेर्देवताया एव अभावप्रसङ्ग-

* श्रुतप्रकाशिका *

विषया रूढिशक्तिः कल्प्यते, तदाऽन्योन्याश्रयस्स्यात्, सायुज्यस्यैक्यापत्तिलक्षणत्व-निश्चये पाठक्रमबाधः, पाठक्रमबाधे सति सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चय इति। 'एतेषामेव सलोकतां सायुज्यमश्नुते" इति वाक्यात् पूर्वोदाहृतवाक्यस्य-क्रमबाध इति चेत्, न; विरुद्धार्थविषयायारूढिशक्तेरक्लृप्ततया विरोधास्फुरणात्। किञ्च "अग्नेर्वा एतानि नामधेयानि अग्नेरेव सायुज्यं सलोकतामाप्नोति वायो-रेवेन्द्रस्यैव बृहस्पतेरेव प्रजापतेरेव ब्रह्मण एव सायुज्यं सलोकतामाप्नोति" इति भूयसां वाक्यानां बलीयस्त्वात्त्वदुक्तक्रम एव बाध्यः। किञ्च "एतेषामेव सलो-कतां सायुज्यमश्नुते 'अग्नेरेव सायुज्यं सलोकतामाप्नोति"इत्यादिवाक्यानि कर्मविधे-षार्थवादरूपाणि, कर्मफलत्वाच्चाग्न्यादित्यादिदेवतासायुज्यमनित्यम्, अतः कर्म-फलावसानेऽग्न्यादिभ्यस्तत्सायुज्यं प्राप्तानां पृथग्भावस्यावर्जनीयत्वादामोक्षाज्जीव-भेदस्थितेर्भवतामपीष्टत्वादग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया। अग्न्यादि-सायुज्यङ्गतानां ततः पृथग्भावः पुनरप्युपाधित इति चेत्, दत्तमुत्त-रम्। न चाग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम्, वेदान्तिभि-रर्थवादानां प्रतीयमानार्थे प्रामाण्याभ्युपगमात्, अतो न सायुज्यमैक्यम्, अपि तु समानगुणयोग एव। लयोऽपि न स्वरूपैक्यम्, लयशब्दस्य तदर्थत्वाभावात् प्रयो-गानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति। नित्यनैमित्तिकमहाप्रलयेष्वपि लयशब्दः प्रयुज्यते। न तत्र स्वरूपैक्यापत्तिः, न तावन्नित्यप्रलये, स्वर्गनरकादिगमना-गमनशास्त्रात्। नापि नैमित्तिके, पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञा-नवतामेव पुनरुत्पत्त्यवगमात्. नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिह कल्पेऽभिहि-तमिति पुराणेष्ववगम्यते। नापि महाप्रलये, वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्व-बहुत्वकर्मवासनानां तदानीं विद्यमानताया अभ्युपगन्तव्यत्वात्, तथा "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" इति वदता भगवता पराशरेणैव "हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। तद्भा-

* भावप्रकाशिका *

दित्यर्थः। ननु वाक्यद्वयेन विरुद्धक्रमद्वये प्रतीयमाने कथमविरोध इत्यस्वरसादाह (किञ्चाग्नेर्वा एतानीति) (दत्तमुत्तरमिति) उपाधिश्च देहान्तःकरणादिरित्युक्त-

## परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्, फलं चैक-

* श्रुतप्रकाशिका *

विताः प्रपद्यन्ते तस्माच्चत्तस्य रोचते" "प्रधानकारणीभूता यतो वै सृज्यशक्तयः" "तेषां यो यानि कर्माणि प्राक् सृष्ट्याः प्रतिपेदिरे" इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम्, अत एव भेदप्रहाणं च न लयशब्दार्थः, । नच प्राकृतप्रतिसञ्चरमोक्षविषयप्रलयशब्दयोरर्थवैरूप्यं वक्तुमुचितम्, शक्तिभेदकल्पनाऽमुख्यत्वयोरन्यतरप्रसङ्गात्, नच तत्रापि महाप्रलयादिषु लयशब्दस्यामुख्यत्वं वाच्यम्, बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिमात्रविषयप्रलयशब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः, अतस्सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः, अतो विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लयः. तस्मादैक्यं न लयशब्दार्थः, घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः, आकाशादितत्त्वानामपि सांशत्वात्तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिरभ्युपेतव्या, अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं क्वचिदपि नावगम्यते । निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थः अनन्तरमेवोपपाद्यते , अतः साधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वान्न परममोक्षविषयत्वम् , अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतेर्दौर्बल्यप्रसङ्गादित्यपि दुरुक्तम्, तस्मात् "यदा पश्यः" इत्यादिवाक्ये साम्यशब्दः सादृश्यपरः, येनाकारेण साम्यं तस्याकारस्य निरवधिकत्वं परमशब्दाभिप्रेतम्, अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति । अथ गुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताः श्रुतयः, न तु परब्रह्मविदः परब्रह्मप्राप्तिमिति शङ्कायामाह (परविद्यास्विति) परविद्यासु—ब्रह्मविद्यास्वित्यर्थः । सर्वासु—परेण सगुणविषयत्वेन निर्गुणविषयत्वेन चोक्तासु दहरविद्यासाद्विद्याऽक्षरविद्यादिष्वित्यर्थः । 'अदृश्यत्वादिगुणक' इति परविद्यावाक्यविषयसूत्रस्यारस्यात्तस्याः सगुणविषयत्वं प्रतीयते 'आनन्दादयः प्रधानस्य' इतिसूत्रमुपास्यस्य सगुणत्वायोदाहृतम् । "विकल्पोऽविशिष्टफलत्वात्" इतिसूत्रं प्राप्यस्य सगुणत्वायोपात्तम् , । अय-

* भावप्रकाशिका *

मित्यर्थः । (प्राप्यस्य सगुणत्वायेति) नच विकल्पोऽविशिष्टफलत्वादितिसूत्रं निर्गुणविद्याव्यतिरिक्तविषयं किं न स्यात्, येन सर्वविद्याप्राप्यस्य एकरूपतया

रूपमेव, अतो विद्याविकल्प इति सूत्रकारेणैव [1]"आनन्दादयः प्रधानस्य" [2]'विकल्पोऽविशिष्टफलत्वात्' इत्यादिषूक्तम्। वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः [3]"युक्तं तद्गुणकोपासनात्" इति। भाष्यकृता व्याख्यातश्च [4]"यद्यपि सच्चित्त" इत्यादिना। [5]"ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि [6]"नामरूपाद्विमुक्तः परात्परं

* श्रुतप्रकाशिका *

मर्थः,– परेण निर्गुणविषयत्वेनाभिमतानां 'सत्यं ज्ञानम्, आनन्दो ब्रह्म' इत्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वम्, तेषां च गुणानां सर्वविद्यानुयायित्वं चोक्त्वा तास्वेकैव विद्या फलायालमिति विद्याविकल्पश्चोक्तः, अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्यादहरविद्यादिषूपास्यं फलं च सगुणमिति सगुणप्राप्त्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या, अतो मुक्तौ भेदपराणां श्रुतीनामन्यथासिद्धिर्नोपपद्यते, प्राप्यवैषम्याभावादिति। सूत्रकाराभिप्रायविदामुक्तिं दर्शयति (वाक्येति) (युक्तं तद्गुणकोपासनादिति) युक्तम्–गुणयुक्तमेव प्राप्यम्, कुतः तद्गुणकोपासनादित्यर्थः। विद्याविकल्पश्च तत्रैव द्रष्टव्यः। सच्चित्तः– सद्विद्यानिष्ठः। तर्हि मुक्तावभेदश्रुतेः कोऽर्थ इत्यत आह (ब्रह्मेति) "स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति' इति प्रकृतस्य वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति

* भावप्रकाशिका *

सर्वत्र सगुणत्वमेव सिध्येदिति वाच्यम्, सङ्कोचे प्रमाणाभावादिति भावः (विद्याविकल्पश्च तत्रैव द्रष्टव्य इति) (गुणयुक्तमेव प्राप्यमिति) प्राप्यस्यैकरूप्यकथनेनाविशिष्टफलत्वाविष्करणाद्विकल्पोऽपि तस्मिन् वाक्ये उक्तप्राय इति द्रष्टव्य इत्यर्थः। भाष्ये–यद्यपि सच्चित्त इत्यादिनेति। यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत् तथाप्यन्तर्गुणामेव देवतां भजते, तत्रापि सगुणैव देवता

---

१ शारीर. ३-अ ३-पा. ११-सू.
२ शारीर. ३-अ. ३-पा. ५७-सू.
३ वाक्यम् ॥
४ द्रमिडभाष्यकारीयम् ॥
५ मु. ३-मु. २-ख. ९-वा.
६ मु. ३-मु. २-ख ८-वा.

पुरुषमुपैति दिव्यम्' [1]"निरञ्जनः परमं साम्यमुपैति" [2]"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं

* श्रुतप्रकाशिका *

यथा सेत्स्यति तथा वक्ष्यते, इह त्वर्थान्तरमुच्यते. प्राकृतनामरूपप्रहाणज्ञापनाय नामरूपाद्विमुक्त इति श्रुतिरुदाहृता । साम्यप्रतिपत्त्यर्थं 'निरञ्जन' इति वाक्यमुपात्तम्। तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकं 'परं ज्योति'रिति वाक्यम्, तर्ह्यमुख्यत्वं स्यादित्यत्राह (प्रकारैक्ये चेति) सोऽयं व्रीहिरित्यादेरुपलक्षणमिदमुदाहरणम् 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इत्यादिप्रयोगो भारतादिषु द्रष्टव्यः। दृष्टान्ते प्रकारैक्येऽपि तत्त्वव्यवहारो मुख्योऽप्यस्वरसः, पूर्वदृष्टे गवि व्यक्त्यंशप्रहाणादस्वारस्यम्, जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम्, दार्ष्टान्तिके तु गङ्गायां घोष इति गङ्गापद-

ঌ भावप्रकाशिका ঌ

प्राप्यत इति व्याख्यातमित्यर्थः। अस्य चायमर्थः,—सञ्चितो न निर्भुमदैवतं गुणगणं मनसानुधावेत् अपहतपाप्मत्वादिगुणं दैवताद्विभक्तम्। यद्यपि दहरविद्यानिष्ठ इव सञ्चितो न स्मरेत् तथापि अन्तर्गुणामेव देवतां भजते देवता तत्रापि सगुणैव देवता प्राप्यत इति स्वरूपानुबन्धित्वात्सकलकल्याणगुणगणस्य केनचित् परदेवतासाधारणेन निखिलजगत्कारणत्वादिनोपास्यमानापि देवतावस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते, अतस्सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थ इति। सोयं गौरित्यत्र विप्रतिपन्नं प्रत्याह (सोऽयं व्रीहिरित्यादेरुपलक्षणमिति) (मुख्योप्यस्वरस इति) जात्यंशे मुख्यत्वम्, व्यक्त्यंशे अमुख्यत्वमित्यर्थः। अत्यन्तामुख्यो न भवतीत्यर्थः। (व्यक्त्यंशप्रहाणादस्वारस्यमिति) जातेर्जात्या सौसादृश्यवद्व्यक्त्यन्तरे भेदकाकारोपलम्भेन सौसा-

१ मु. ३-मु. १-ख. ३-वा. ॥ २ छा. ८-प्र. १२-ख. २ वा.

गौरिति । अत्रापि, —

[1] "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः" ॥ इति ।

परब्रह्मध्यानादात्मा परब्रह्मवत् प्रक्षीणाशेषभावनः—कर्मभावनाब्रह्मभावनोभयभावनेति भावनात्रयरहितः । प्रापणीय इत्यभिधाय—

* श्रुतप्रकाशिका *

वत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण मुख्य एवेत्युक्तम्, लाक्षणिकगङ्गापदवन्नात्यन्तामुख्य इत्यर्थः । नहि मुक्तस्यापरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्त्वं स्वरूपबृहत्त्वं चास्ति. आकारैक्येऽपि तत्तद्व्यवहारस्यात्यन्तामुख्यत्वाभावे सोऽयं गौरितिदृष्टान्तः, न केवलं योगसङ्ग्रहारम्भे विस्तरेण्यव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह ( अत्रापीति ) न केवलं मुक्तविषयप्रकरणान्तरेषु, अस्मिन् प्रकरणेऽपीति वार्थः । अस्मिन् श्लोके तथैवेति ब्रह्मसाधर्म्योपदेशे उपयुज्यते . तथैवेत्येतद्व्याख्यानं परब्रह्मवदित्यादि । प्रक्षीणाशेषभावनशब्दं व्याचष्टे ( कर्मभावनेति ) परब्रह्मवत्प्रक्षीणाशेषकर्मभावन इति पाठे कर्मशब्दो यागादिक्रियोपासनसाधारणानुष्ठेयमात्रपरः, तदा कर्मशब्देन 'त्रिविधा भावभावने'त्यत्र भावशब्दो व्याख्यातो भवति । अत्रायमर्थः, प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वात् शुद्धस्वस्वरूपमपि प्राप्यमिति तदनुसन्धेयमिति । "अयं च व्यतिरेकस्तद्भावभावित्वादित्याधिकरणार्थः, तत्र बद्धस्वरूपं चिन्त्यमिति पूर्वपक्षीकृत्य मुक्तस्वरूपं चिन्त्यमिति हि सिद्धान्ति-

* भावप्रकाशिका *

दृश्याभावादित्यर्थः । मुख्य इत्यस्य अत्यन्तामुख्यो न भवतीति व्याख्याने बीजमाह (नहि मुक्तस्येति) स्वरूपतो गुणतश्च यन्निरवधिकातिशयं सोऽस्य मुख्यार्थ इति पूर्वं भाषितत्वादिति भावः । श्लोके, प्रकृतोपयुक्तं पदं दर्शयति ( अस्मिञ्छ्लोके तथैवेति )

[1] वि-पु- ६-अं. ७-अ- ९३-श्लो.

[1] "क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज!।
निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्त्तयेत्॥"

इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा—

[2] "तद्भावभावमापन्नस्तदाऽसौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥"

---

* श्रुतप्रकाशिका *

तम्, । अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानन्तरश्लोकोऽपि व्याख्यायते (क्षेत्रज्ञ इति) यावत्क्षेत्रज्ञावस्थस्तावत्करणी उपासकः, तस्य करणं ज्ञानम्, करणभूतं ज्ञानम्, मुक्तिकार्यं निष्पाद्य निवर्तयेत्, नतु मुक्तेः पूर्वमेव निवर्तयेदित्यर्थः। न हि मुक्तस्योपासननिवृत्तिर्विधेया, अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमितिभावः। तद्भावभावशब्देन ब्रह्मसाम्यापत्तिज्ञापनार्थं 'विभेदजनके ज्ञाने' इत्यत्र ज्ञाने इति पदच्छेदशङ्काव्युदासार्थं च तद्भावभावमितिश्लोको व्याख्यायते। तद्भावेतिश्लोके तद्भाव इत्युपमानबहुव्रीहिः, तद्भाव इति पदान्तर्गतौ तच्छब्दभावशब्दौ व्याख्यातुमाह (तद्भाव इति) भाष्यस्थस्तद्भावशब्दो न बहुव्रीहिः, किन्तु तत्पुरुषः, समासे

* भावप्रकाशिका *

(एकप्रकरणत्वज्ञापनायेति) "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव!। प्रापणीयस्तथैवात्मा प्रक्षीणाशेपभावनः। क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज!। निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत्। तद्भावभावमापन्नस्तथासौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्। विभेदजनके ज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" इति हि श्लोकक्रमः। (तद्भावेतिश्लोके तद्भावेत्युपमानबहुव्रीहिरिति) तद्भाव इव भावो यस्य स तद्भावः तत्समानस्वभावः, तस्य भावस्तद्भावभाव इति व्याख्याने द्वितीयभावशब्दस्य प्रयो-

---

१–२. वि॰ पु॰ ६-अं. ७ अ. ९४-९५-श्लो.

इति मुक्तस्य स्वरूपमाह । तद्भावः– ब्रह्मणो भावः, स्वभावः, न तु स्वरूपैक्यम् 'तद्भावभावमापन्न' इति द्वितीयभावशब्दानन्वयात्, पूर्वोक्तार्थविरोधाच्च, यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः, यदैवमापन्नस्तदाऽसौ परमात्मना अभेदी भवति–

* श्रुतप्रकाशिका *

व्याचिख्यासिते सति हि बहुव्रीहिविशिष्टरूपेण पदोपादानम्, तच्छब्दभावशब्दमात्रस्य व्याचिख्यासितत्वात् बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानम् . तच्छब्देन ब्रह्मोच्यते, प्रथमभावशब्देन स्वभाव उच्यत इत्यर्थः । "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः" इति नैघण्टुकाः । यद्वा भाष्यस्थतद्भावशब्दोऽपि बहुव्रीहिविशिष्टः । ( तद्भावः–ब्रह्मणो भावः स्वभाव इति ) तद्भाव इति पदे तच्छब्दवाच्यब्रह्मसम्बन्धितया प्रतिपन्नो भावः स्वभाव इत्यर्थः । अथवा श्लोकेऽपि तद्भावशब्दस्तत्पुरुषः, द्वितीयभावशब्दः सत्तावाची । व्यावर्त्यमाह (न त्विति) कुत इत्यत्राह ( तद्भावेति ) हेत्वन्तरमाह ( पूर्वोक्तार्थविरोधाच्चेति ) हेयप्रत्यनीकत्वहेयार्हत्वादिविरोधोऽर्थविरोधः, एवं शब्दपर्यालोचनया अर्थपर्यालोचनया च भावशब्दस्य स्वभाववाचित्वमुपपादितम् । स्वभावशब्दवाच्यञ्च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावनत्वमित्याह ( यदिति ) तच्छब्दसामर्थ्यात् यद्वृत्तमाक्षिप्य व्याचष्टे ( यदैवमिति ) अभेदीत्यत्र भेदशब्दव्याख्यानार्थं भेदशब्दं नञ्प्रत्य-

* भावप्रकाशिका *

जनवत्तरत्वमिति भावः । भाष्यस्थतद्भावशब्दस्य श्लोकवैरूप्येण तत्पुरुषत्वमनुपपन्नमित्यत आह ( समासे व्याचिख्यासिते सति हीति ) श्लोकभाष्ययोर्वैरूप्यपरिहारार्थमाह ( यद्वा भाष्यस्थतद्भावशब्दोऽपीति ) ननु भाष्यस्थतद्भावशब्दस्य बहुव्रीहित्वे 'तद्भावो ब्रह्मणो भाव' इति भाष्यमयुक्तमित्याशङ्क्यानेकशब्दाध्याहारपूर्वकं व्याचष्टे ( तद्भाव इतिपदे तच्छब्दवाच्यब्रह्मसम्बन्धितया प्रतिपन्न इति ) ( द्वितीयभावशब्दस्सत्तावाचीति ) यद्यप्यस्मिन् पक्षे द्वितीयभावशब्दस्य परपक्ष इव वैयर्थ्यमस्ति, तथाप्यभेदस्य बाधितत्वात्पराभिमतार्थो न सम्भवतीत्यत्र तात्पर्यम् । अर्था-

भेदरहितो भवति। ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः, स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्त्तत इत्यभेदी भवति। यथोक्तम्—

* श्रुतप्रकाशिका *

याभ्यां विभज्य निर्दिशति (भेदरहितो भवतीति) यद्वा भेदरहितो भवति– न तादात्म्यवानितिभावः। अन्यथा 'भेदश्च तस्याज्ञानकृतः' इत्यनन्तरनिर्देशो न घटते। देवादिभेदाभावः कथमिति शङ्कायां भेदश्च तस्येत्यादि व्याचष्टे (ज्ञानैकाकारतयेति) 'परमात्मना भवत्यभेदीति परमात्मनः प्रस्तुतत्वादात्मनो ब्रह्मण इत्यत्रापि पञ्चमीविवक्षया च तस्माद्भेद इत्युक्तम्। ब्रह्मणो मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वान्निरसनीयभेदविशेषस्य वचनान्तरसिद्धत्वाच्च भेदो देवादिरूप इत्युक्तम्। कर्मरूपशब्देन अज्ञानशब्दो व्याख्यातः, ज्ञानविरोधीति व्युत्पत्तिरित्यर्थः। 'अविद्यया मृत्युं तीर्त्वा' इति हि श्रुतिः। अत्रापि 'अविद्या कर्मसंज्ञाऽन्या।' इति हि पठ्यते। ततः किं भेदराहित्यस्येति शङ्कायां भेदश्च तस्याज्ञानकृतो भवेदित्यनेनार्थसिद्धमभिप्रेतं कारणाभावं विशदयन् कार्याभावमुपपादयति (स त्विति) भेदस्य देवादिरूपत्वे अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह (यथोक्तमिति) आदिभरतचरितेऽयं श्लोकः, तत्र पूर्वं देहेन्द्रियादिबाह्यभेदरहितत्वमात्मन उक्तं सितनीलादीत्यादिना। अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाद्यान्तरभेदोऽपि नास्तीत्युच्यते. एकस्वरूपेति। कर्मैव वृतिः कर्मवृतिः, बाह्यमान्तरं च कर्म द्विविधम्, आन्तरमात्मप्रावरणहेतुः कर्म, बाह्यं बहिर्विषयप्रावरणहेतुः कर्म। यद्वा बाह्यमस्वाभाविकं कर्म, तदेव वृतिः, तया प्रकर्षेण जातः एकस्वरूपभेदः, बाह्यकर्मशरीर-

৬ भावप्रकाशिका ৬

न्तरप्रतीतिनिवारणार्थत्वेन साफल्यसम्भवे स्वरूपव्याक्रियामात्रमनर्थकमित्यभिप्रेत्याह (यद्वा भेदरहितो भवतीति) (अनन्तरनिर्देशो न घटत इति) भेदस्य कल्पितत्वेन कृतत्वासम्भवादितिभावः। सिद्धान्ते भेदश्च तस्याज्ञानकृतो भवेत्,

[1] "एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥" इति ।

एतदेव विवृणोति "विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इति । विभेदः—विविधो भेदः, देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि [2] "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इति । आत्मनि ज्ञानरूपे

* श्रुतप्रकाशिका *

द्वारकमेकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः । द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरो भेदो नास्ति । कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाश इत्यत्राह (अनावरणो हि स इति) सः—निवृत्तदेवादिभेद आत्मा, कर्मावरणरहितो हीत्यर्थः । यद्वा कर्मवृतिः—कर्मजन्या वृतिः, देवादिशरीरम् ; तत्सम्बन्धजः आन्तरभेदः, देवादिभेदेऽपध्वस्ते स नास्ति । कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्यत्राह—अनावरणो हि स इति । कर्मजन्यवृतिर्देवादिशरीरभेदरूपेत्यर्थः । एतदेव 'भेदश्च तस्याज्ञानकृतो भवे'दित्युक्तमेवार्थम्. [विवृणोतीत्यर्थः] 'विभेदजनक'इत्यादिश्लोकेन'अनावृत्तिः शब्दा'दित्यधिकरणार्थ उच्यते, परस्माद्ब्रह्मण आत्मनो देवादिभेदस्य प्रणष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते । विभेदशब्दं व्याचष्टे (विभेदो विविधो भेद इति) भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह (यथोक्तमिति) मिथ्याज्ञाननिबन्धनः—मिथ्यज्ञानम् आत्मविषयभ्रान्तिज्ञानम्, तत्कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः । अस्योत्तरार्द्धं 'देवतिर्यङ्मनुष्याख्यस्तथैव नृप ! नारकः' इति । व्याख्येयश्लोकस्य वाक्यार्थमाह (आत्मनीति) ब्रह्मण

❁ भावप्रकाशिका ❁

देवादिभेदश्चात्मन्यारोपितः, तस्य मुक्तस्याज्ञानकृतो भवेत्, कर्मकृतो भवेत्, कर्मकृतत्वेन ज्ञातो भवेदित्यर्थः । अथवा कुत इत्यध्याहृत्य कुतो भवेदित्यर्थः ।

---

१ वि-पु-२-अं. १४-अ. ३३. श्लो. ॥ २ विष्णुधर्मे. १००-अ. ११-श्लो.

देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशङ्गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । 'अविद्या कर्मसंज्ञान्या' इति ह्यत्रैवोक्तम् । "क्षेत्रज्ञं चापि

* श्रुतप्रकाशिका *

इतिपदस्य पञ्चम्यन्तत्वसूचनाय परस्मादित्युक्तम् । उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तम्, चशब्दाभावात्, अनन्तरपूर्वश्लोके 'परमात्मना भवत्यभेदी'ति परमात्मनः प्रतियोगितया निर्देशाच्च, अत एव समानाधिकरणपष्ठ्यन्तत्वमप्ययुक्तम् , पूर्वप्रपञ्चितादर्थविरोधाच्च , पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेन्न, परब्रह्मणोऽपि हेयार्हत्वापत्तेः स्वाभाविकत्वप्रसङ्गात् , अतः परस्मात् ब्रह्मण इत्युक्तम् । असन्तम्–सच्छब्दः परमार्थपर्यायः, 'अनाशी परमार्थश्च' इत्यत्रैव ह्युक्तम् अनित्यमित्यर्थः, तेन स्वाभाविकनित्यभेदव्यावृत्तिः, अनित्यत्वं कादाचित्कत्वम्. अनित्यत्वाद्धेत्वपेक्षो देवादिभेदः, तं कः करिष्यति, न कश्चिदपि । हेत्वभावात्– कर्मरूपहेत्वभावादित्यर्थः । न केवलमेकार्थविषये 'बाह्यकर्मवृतिप्रजः' 'अज्ञानकृतो भवे'दित्यज्ञानकर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम्, अस्मिन् प्रकरणे च कण्ठोक्तमित्याह ( अविद्या कर्मसंज्ञान्येति ह्यत्रैवोक्तमिति ) आत्मन औपाधिकभेद उपाध्यपगमे नश्यतीति श्लोकार्थः । उपाध्यभावादविद्यमानं भेदं क

* भावप्रकाशिका *

अथवा अभवेदित्यकारप्रश्लेषो वा 'अपचासि त्वं जाल्मे'तिवत् नञो न लोपे सति ङिक्षेप इति द्रष्टव्यः । प्रकर्षेण जात एकस्वरूपभेद इति छेदः । ( हेयार्हतापत्तेस्स्वाभाविकत्वप्रसङ्गादिति ) ब्रह्मण इत्यस्य षष्ठ्यन्तत्वपक्षे देवादिभेदस्य तन्मूलकर्माविद्यादिदोषस्य च ब्रह्मगतत्वेनैवाभ्युपगन्तव्यत्वात् ब्रह्मावारकस्य चाज्ञानस्य 'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् । अज्ञानं चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने" इति न्यायेन निवर्तकान्तराभावात्स्वाभाविकत्वप्रसङ्ग इत्यर्थः । ( उपाध्यपगमे नश्यतीति श्लोकार्थ इति ) कः करिष्यतीत्यस्य कः परिपालयिष्यतीत्यर्थ इति भावः । असन्तमित्यस्यानित्यवाचिन उपयोगमान्द्यादाह ( उपाध्यभावादिति )

मां विद्धि' इत्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम् । अन्यथा [1]"क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते , उत्तमः पुरुषस्त्वन्यः" इत्यादिभिर्विरोधः । अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम् [2]'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति' [3]"सर्वस्य चाहं हृदि सन्निविष्टः" इति च ।

* श्रुतप्रकाशिका *

उत्पादयेदिति वार्थः । अयं श्लोको मृषावादिनामत्यन्तास्वरसः, तथा हि,– विभेदजनक इत्यत्र जनकशब्द उत्पादके स्वरसः, न त्वध्यासहेतौ, अज्ञानशब्दस्य अनिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम्. कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता, नाशशब्दस्य बाधवाचित्वममुख्यम् , असन्तमितिपदश्च व्यवच्छेद्याभावादफलम् , सतो भेदस्यानभ्युपगमात्, तदभ्युपगमे हि तत्साफल्यम् । करिष्यतीतिपदमप्यस्वरसम् , अध्यासवाचित्वाभावात् । अथाद्वैतपरत्वेन परोक्तं भगवद्गीतावचनं व्याचष्टे ( क्षेत्रज्ञं चापीति ) पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति ( अन्यथेति ) न केवलम् 'उत्तमः पुरुषस्त्वन्य' इति भेदप्रतिपादनात्तद्विरोधेन स्वरूपैक्यपरत्वाभावः । सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह ( अन्तर्यामीति ) "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति" इत्यत्र भूतशब्दस्यात्मपर्यन्तदेहपरत्वम् 'भ्रामयन् सर्वभूतानि' इत्यस्योत्तरार्धेनावगम्यते, 'न हिंस्यात् सर्वाभूतानि'इत्यादिप्रयोगाच्च । "सर्वस्य चाहं हृदि सन्निविष्टः" इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं "मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यनेनावगम्यते । हृद्देशे– हृद्देशस्य आत्मनीत्यर्थः । 'सर्वस्य चाहं हृदि'इत्यपि तथा 'अहमात्मा गुडाकेश'इत्यत्रा-

* भावप्रकाशिका *

अस्मिन् पक्षे करिष्यतीत्यत्र कृञ्धातोरुत्पादने स्वारस्यमस्तीत्यपि द्रष्टव्यम् । ( व्यवच्छेद्याभावादफलमिति ) ननु नैतद्व्यवच्छेदकतयोपात्तम्, अपितु कल्पके अज्ञाने नष्टे कल्पितत्वरूपं सत्त्वं पुनर्भेदानुत्पत्तौ हेतुतयोक्तमिति चेत् , न ;

---

1 गीता. १५-अ. १६-१७ श्लो. | 2 गीता. १८-अ. ६१-श्लो. | 3 गीता. १५-अ.१५-श्लो.

"अहमात्मा गुडाकेश ! सर्वभूताशयः स्थितः" इति च तदेवोच्यते । भूतशब्दो ह्यात्मपर्यन्तदेहवचनः । यतः सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते "न तदस्ति विना यत्स्यात्" इति; भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम्। तत इदमुच्यते—

[1] "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥
[2] विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति ।

* श्रुतप्रकाशिका *

र्यन्तर्यामित्वपरतामाह (अहमिति) कुत इत्यत्राह (भूतशब्दो हीति) पूर्वदर्शितसर्वशब्दैकार्थ्याच्चेतिभावः । अन्वयरूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं 'न तदस्ती'तिव्यतिरेकनिर्देशस्तदनुगुण एवेत्यभिप्रायेणाह (यतः सर्वेषामिति) अविनाभावशब्दस्य सम्बन्धनियमवाचित्वादिति भावः । हेत्वन्तरञ्चाह (भगवदिति) "एतां विभूतिं योगं च" इति प्रक्रमाद्विभूतिपरत्वमवगम्यते, अतः उपक्रमानुगुण एव उपसंहार इत्यर्थः । नहि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमितिभावः । प्रकरणस्य विभूतिपरत्वं दर्शयति (यद्यदिति) विभूतिमत्—नियाम्यवत्, श्रीमत्—भोग्यसमृद्धिमत्, ऊर्जितम्— बलवत्, कल्याणगुणारम्भेषूद्युक्तम्. तेजः—पराभिभवनसामर्थ्यम्—प्रशासनम्. तेजोंशसम्भवम्—नियमनशक्तिम-

* भावप्रकाशिका *

पूर्वोक्तदोष एव तात्पर्यात् (हृद्देशस्य आत्मनीत्यर्थ इति) तद्ग्रहणार्थं तदन्तःप्रवेशस्यावश्यकत्वात् 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' 'योऽन्तरो यमयति' इत्यादिप्रमाणादिति भावः । केचित्तु सर्वभूतशब्दस्यैव चेतनपर्यन्तत्वात् हृद्देशशब्देन जीवानामन्तःप्रदेश एव विवक्षित इति वदन्ति । नापि चिदचिदीश्वराणा-

१-२ गीता. १०-अ. ४१-४२ श्लो.

अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति । नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम् । नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

—( सप्तविधानुपपत्त्यारम्भः )—

यदप्युच्यते— निर्विशेषे स्वयम्प्रकाशे वस्तुनि दोषपरिकल्पित×मीशेशितव्याद्यनन्तविकल्पं सर्वं जगत् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सद-

* श्रुतप्रकाशिका *

दाज्ञालवाधीनमित्यर्थः । शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति ( अत इति ) अतः—श्रुतियोजनाप्रभृतिप्रतिपादितैर्न्यायैरित्यर्थः । भ्रान्तत्वम्—भ्रान्तिसिद्धत्वम् । जगद्ब्रह्मणोरेकद्रव्यत्वपक्षे ब्रह्मणः सविशेषत्वं जगतः सत्यत्वं चोपपन्नमिति शङ्कायां तद्व्युदासार्थमाह ( नापीति ) चेतनेष्वचिद्धर्मबुद्धिः परतन्त्रेषु स्वतन्त्रबुद्धिश्च भ्रमः, न तु स्वरूपभेदधीरित्यभिप्रायेण स्वरूपभेदनिषेध इत्युक्तम् । अथवा मृषावादिनमेवोद्दिश्य जीवपरयोः स्वरूपभेदनिषेधाभावमाह— नापीति । अचिदुपादानं दृष्टान्ततया ॥ .... .... .... .... .... .... .... ....

अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति ( यदपीति ) निर्विशेषस्य कथं भ्रमसम्भव इत्यत्राह ( दोषेति ) ब्रह्मव्यतिरिक्तदोषोऽस्ति चेत्, अद्वैतहानिरित्यत्राह ( दोषश्चेति ) अस्मिन्नर्थे परोक्ताःश्रुतिस्मृत्यर्थापत्तीर्दर्शयति ( अनृ-

* भावप्रकाशिका *

मितिभाष्यस्य मृषावाद्यभिमतैक्यपरत्वमयुक्तम् , अचिदीश्वरयोस्तैरैक्यानभ्युपगमादित्यभिप्रेत्य भास्कराद्यभिमतैक्यनिषेधपरतया व्याचष्टे ( जगद्ब्रह्मणोरिति ) मृषावादिमतनिरासोपसंहारे इतरमतनिरासो न युक्त इत्यभिप्रेत्य तन्मतनिरासपरतया अवतारयति ( अथवा मृषावादिनमेवेति ) इति पुराणप्रक्रिया ॥

( कथं भ्रमसम्भव इति ) निर्विशेषे स्वयम्प्रकाशे परिकल्पितमित्येतावन्मात्रकथने कथं निर्विशेषस्य परिकल्पितशब्दोक्तभ्रमसम्भव इति शङ्का स्यात् ,

× ईश्वरेशितव्येति. पा०

सदनिर्वचनीयाऽनाद्यविद्या, सा चावश्याभ्युपगमनीया [1]"अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः, ब्रह्मणः तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च, सा तु न सती, भ्रान्तिबाधयोरयोगात्।

* श्रुतप्रकाशिका *

तेनेति ) सदसद्विलक्षणत्वमुपपादयति ( सा त्विति ) भ्रान्तिबाधयोरयोगात्—भ्रान्तिविषयत्वबाधविषयत्वयोरयोगात् । प्रमितिभ्रान्तिबाधान्यथानुपपत्त्या सद-

* भावप्रकाशिका *

अतो दोषपदमिति भावः । अनृतेन हि प्रत्यूढाः । प्रत्यूढाः— प्रतीपं नीताः, वैपरीत्यं प्राप्ता इत्यर्थः । "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः एवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति छान्दोग्यम् । भाष्ये आदिशब्देन 'नासदासी'दित्यादिश्रुतयो विवक्षिताः । भाष्ये जीवैक्यानुपपत्त्येति—विरुद्धधर्माध्यस्तयोर्जीवपरयोरैक्यासम्भवेन धर्माणां कल्पितत्वस्य वक्तव्यतया तत्कल्पिकाविद्याभ्युपगन्तव्येत्यर्थः । सत्त्वेऽप्यात्मनो भ्रान्तिबाधाश्रयत्वयोर्दर्शनात् न भ्रान्तिबाधाभ्यां सद्विलक्षणत्वसिद्धिः, असिद्धिश्च हेतोस्स्यात् । भ्रान्तिबाधयोरतन्निष्ठत्वादित्यत आह ( भ्रान्तिविषयत्वबाधविषयत्वेति ) भाष्ये भ्रान्तिबाधयोरयोगादित्यत्र शुक्तिरूप्यस्येतिशेषः पूरणीयः । उत्तरत्र तद्विवरणभाष्ये प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयमित्युपक्षिप्य शुक्त्यादिषु रजतादिप्रतीतेरितिदर्शनात् परैरपि ख्यातिबाधानुपपत्तेः शुक्तिरूप्यविषये उपन्यासाच्च. न चाज्ञानस्य जगदुपादानत्वं सदसद्विलक्षणत्वञ्च प्रतिज्ञाय तद्धेतुतया शुक्तिरूप्ये प्रतीतिभ्रान्तिबाधोपपादनं कथं सङ्गतं स्यादिति वाच्यम्, उपादानोपादेययोरभेदाभिप्रायेण तथोक्त्युपपत्तेः । स्वाभिन्नकार्यजनकत्वमुपादानत्वं विवर्तपरिणामोपादानलक्षणमिति कथयद्भिरुपादानोपादेयाभेदस्याभ्युपेततया शुक्तिरूप्ये ख्यातिबाधसमर्थनस्य तत्समर्थनपर्यवसितत्वात् । ननु भामत्यामारम्भणाधिकरणे 'नहि वयमभेदं ब्रूमः, किन्तु भेदं व्यासेधामे'त्युक्तेरभेद एवो-

1 छा. ८-प्र. ३-ख. २-वा.

नाप्यसती, ख्यातिबाधयोश्चायोगात् । अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति । तदयुक्तम्;—

—०( आश्रयानुपपत्तिः )०—

सा हि किमाश्रित्य भ्रमं जनयति ? न तावज्जीवमाश्रित्य,

* श्रुतप्रकाशिका *

सदनिर्वचनीयत्वमित्यर्थः । 'सद्भाव एवं भवतो मयोक्तः' इतिवन्न परमतमितिदर्शयितुं तत्त्वविद इत्युक्तम् । दूषयति ( तदयुक्तमिति ) ॥

आश्रयानुपपत्तितिरोधानानुपपत्तिस्वरूपानुपपत्त्यनिर्वचनीयत्वानुपपत्तिप्रमाणानुपपत्तिर्निवर्तकानुपपत्तिर्निवृत्त्यनुपपत्तिभिर्दूषयिष्यन् प्रथममाश्रयानुपपत्तिमाह—( सा हीति ) किमाश्रित्य—न किञ्चिदपीत्यर्थः । किं जीवमाश्रित्य ? उत ब्रह्म ?

* भावप्रकाशिका *

पादानोपादेययोर्नास्तीति वाच्यम् । ब्रह्मसमसत्ताकाभेदप्रतिक्षेपमात्रपरत्वात् । यद्वा, प्रतीतिबाधानुपपत्त्या शुक्तिरूप्यमिथ्यात्वसिद्धौ मिथ्याभूतस्य मिथ्याभूतमेव उपादानमन्वेषणीयमिति अज्ञानस्यापि सदसद्विलक्षणत्वं सिद्ध्यतीत्यभिप्रायेण तथोक्त्युपपत्तेः । केचित्तु अहमज्ञ इत्यज्ञानप्रतीतेः 'नेह नाने'तिश्रुत्या बाधदर्शनात्, अत एव भ्रमत्वाच्च प्रतीतिभ्रान्तिबाधानामविद्याविषयत्वमेव न शुक्तिरूप्यविषयत्वम्, उत्तरत्र शुक्तिरूप्यादिषु प्रतीतिभ्रान्तिबाधैर्मिथ्यात्वसमर्थनं युक्त्यन्तरमेव, नैतद्विवरणरूपम्, तत्रानिर्वचनीयत्वे परोक्तं हेतुं विस्तरेण दूषयतीति तत्रत्यसंक्षिप्तस्य विस्तरार्थमिति श्रुतप्रकाशिकावाक्यमपि कथञ्चिन्नेयमिति वदन्ति । ख्यातिबाधयोश्चायोगादित्यस्य ख्यातिबाधयोश्चायोगप्रसङ्गादित्यमुमर्थं स्फोरयति ( प्रमितिभ्रान्तिबाधान्यथानुपपत्त्येति ) प्रतीतिरसद्विलक्षणत्वसाधिका, भ्रान्तिस्तु सद्विलक्षणत्वसाधिका, बाधस्तूभयसाधारण इति विवेको द्रष्टव्यः । नच सद्वादिनं प्रति भ्रान्तेः हेतुत्वोपन्यासो युक्तः । तन्मते भ्रान्तित्वस्यानभ्युपगतत्वात् बाधेन भ्रान्तित्वसमर्थने च बाध एव हेतुरस्तु, किमनेन भ्रमत्वसमर्थनेनेतिवाच्यम्, अहं रजततया अभ्राम्यमित्यनुभवसिद्धतया भ्रमत्वस्य सद्वादिनाप्यप्रत्याख्येयतया हेतुत्वसम्भवादितिभावः । ( सद्भावएवमिति ) परमतत्वाभावे दृष्टान्तः ॥

अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य; तस्य स्वप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्, सा हि ज्ञानबाध्याभिमता–

[1] "ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत् तिरस्कुर्यात्कः प्रभुस्तन्निवर्त्तने॥
ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्त्तकम्।
ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्त्तकम्॥

* श्रुतप्रकाशिका *

इतिविकल्पाभिप्रायेणाह (न तावदिति) जीवे सिद्धे अविद्यासिद्धिः-अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रय इत्यर्थः। जीवाज्ञानवादनिरासः उत्तरत्र विस्तरेण वक्ष्यत इत्यत्र संक्षेपः। अथ ब्रह्माश्रयत्वपक्षं दूषयति (नापीति) विरोधित्वं कथमित्यत्राह (सा हीति) ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वाद्विरोधः। अत्र नाथमुनिभिरुक्तान् श्लोकानाह (ज्ञानरूपमिति) स्वप्रकाशत्वं विवक्षितम्। ज्ञाननिवर्त्यत्वे हेतुमाह (मृषात्मकमिति) नहि स्वरूपज्ञानमज्ञानविरोधि, अपि तु प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति (ज्ञानमिति) ब्रह्मवत्तत्प्रकाशत्वात्–स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः। नहि शुक्लभास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः

ध भावप्रकाशिका ध

(ब्रह्माश्रयत्वपक्षं दूषयतीति) ब्रह्मणश्चिन्मात्रत्वेन तस्याश्रयत्वे पूर्वोक्तान्योन्याश्रयदोषाप्रसङ्गः। आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति, नापि गोचर इत्युक्तेरिति भावः। ज्ञानत्वेपि नैयायिकादिरीत्या जडत्वाभ्युपगमे स्वस्य स्वयाथात्म्यज्ञानरूपत्वाभावेन स्वयाथात्म्याज्ञानविरोधित्वासम्भवादाह (स्वप्रकाशत्वं विवक्षितमिति) विषयित्वलक्षणज्ञानत्वाभावात् स्वप्रकाशत्वं विवक्षितमिति केचिद्वदन्ति। ननु ब्रह्मस्वरूपतद्विषयकज्ञानयोस्साधारणं स्वरूपप्रकाशत्वं किं स्वरूपाभिन्नप्रकाशत्वम्? उत स्वरूपविषयप्रकाशत्वम्? नाद्यः,

---

१ इमे श्लोका नाथमुनिसूक्तयः॥

ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते" ॥

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकम्, न स्वरूपभूतं ज्ञानमिति चेन्न, उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति अन्यतरस्याविद्याविरोधित्वमन्यतरस्य

* श्रुतप्रकाशिका *

शुक्लभास्वरद्रव्यमित्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः । दूषणान्तरमाह (ज्ञानमिति) ततः किमित्यत्राह (ब्रह्मण इति) एषु श्लोकेषु प्रथमश्लोकस्यार्थः पूर्वं ज्ञानबाध्याभिमतेत्यन्तेन भाष्येणोक्तः। द्वितीयश्लोकं व्याचष्टे (ज्ञानस्वरूपमिति) ब्रह्मस्वरूपप्रकाशत्वे सति स्वरूपविषयज्ञानत्वे सतीत्यर्थः । विशेषानवगमात्— विषयवैषम्याभावादित्यर्थः । कथं विशेषानवगमः प्रमाणजन्यत्वं विशेषोऽस्तीति चेत् किं तेन? विषयवैषम्यं हि न विद्यते । किं स्वरूपभूतज्ञानान्निवर्त्तकज्ञानस्य विषयवैषम्यमस्ति वा? न वा? अस्ति चेत्सविशेषत्वम् । नो चेत् स्वरूपमेव निवर्त्तकं स्यात् । प्रमाणजन्यज्ञानमनिवर्त्तकं वा स्यात्, पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत् . प्रमाणजन्यज्ञानत्वं न निवर्त्तकत्वे प्रयोजकम्, इदं शुक्लभास्वरद्रव्यमिति वाक्यजन्यस्य ज्ञानस्य निवर्त्तकत्वाभावात्; तस्मात् भ्रमसहकारादतिरिक्ताकारविषयत्वं निवर्त्तकत्वे प्रयोजकम् । ननु विषयवैषम्याभावेऽपि कस्यचित् ज्ञानस्य भ्रमाविरोधित्वं कस्यचिद्भ्रमविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः, अयमेको देवदत्त इत्यभिज्ञाया एकविषयत्वेऽपि पूर्वदृष्टादयमन्य इति पुरुषद्वित्वभ्रमो दृष्टः ।

* भावप्रकाशिका *

तस्य प्रमाणज्ञाने अभावात् । न द्वितीयः, अभेदे विषयविषयिभावाभावेन स्वरूपाव्यापनादित्याशङ्क्य तद्विषयव्यवहारानुगुण्यलक्षणं तद्विषयकत्वं प्रकृते विवक्षितमित्यभिप्रयन्नाह (स्वरूपविषयज्ञानत्वे सतीत्यर्थ इति) (विषयवैषम्याभावादित्यर्थ इति) विषयवैषम्याभावेन विशेषानवगमादित्यर्थः । ननु विशेषानवगम इत्यस्य विषयवैषम्याभावोर्थः । तथासति कथं विशेषानवगम इत्यपेक्षानुत्थितेरिति द्रष्टव्यम् । (अयमेको देवदत्त इति) एक इत्यस्याभेदोर्थः, सतु स्वाष्ट्यार्थः,

नेति विशेषानवगमात्। एतदुक्तं भवति; ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते; स ब्रह्मणः स्वयम्प्रकाशत्वेन स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति। किञ्च

* श्रुतप्रकाशिका *

प्रत्यभिज्ञायास्तु सोऽयमेको देवदत्त इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टमिति विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्त्तकत्वं युक्तमिति शङ्कायामाह (एतदुक्तमिति) सत्यत्वज्ञानत्वादिस्वभावोऽस्तीति चेत्; स च स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्दः, अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति। अभिज्ञायामेकस्य धर्मिण एकदेशकालसम्बन्धित्वं प्रतिपन्नम्, न तु कालद्वयदेशद्वयसम्बन्धित्वम्; तत्तु प्रत्यभिज्ञायां प्रतिपन्नम्। एकदेशकालसम्बन्धित्वप्रतीतिर्न द्वित्वविरोधिनी, एकस्य धर्मिणः कालद्वयदेशद्वयसम्बन्धित्वं ह्यैक्यम्, तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति, अतस्तत्रापि विषयवैषम्यमस्तीति फलितम्। अथ तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह (किञ्चेति)

* भावप्रकाशिका *

अयं देवदत्त इत्येव विवक्षितम्, अयं देवदत्त इत्यभिज्ञायास्सोयं देवदत्त इति प्रत्यभिज्ञाया इव पुरोवर्तिनि देवदत्ताभेदविषयत्वमविशिष्टम्, नह्यभेदे द्वैविध्यमस्ति, येन विषयवैषम्यं स्यात्, तथापि प्रत्यभिज्ञाया एव भेदभ्रमनिवर्तकत्वं नाभिज्ञाया इति द्रष्टव्यम्। नच प्रत्यभिज्ञायामेकस्मिन् वस्तुनि कालद्वयसम्बन्धो विषयः नाभिज्ञाया इति वाच्यम्, ऐक्यस्य कालद्वयसम्बन्धस्य चाभिज्ञाभ्यामेव सिद्धः, अभिज्ञाद्वयानवगतार्थविषयकत्वाभावेनाभिज्ञाद्वयानिवर्त्यभेदभ्रमनिवर्तकत्वं न स्यादिति भावः। द्वित्वभ्रमः— भेदभ्रम इत्यर्थः। सत्यत्वज्ञानत्वादिरस्ति चेत् सः स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्द इति समीचीनः पाठः। सत्यत्वज्ञानत्वस्वभावोऽस्ति चेदितिपाठे स्वभावशब्दो धर्मपरः। सत्यत्वज्ञानत्वादिधर्मोऽस्तिचेत् सच स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्द इत्यर्थः। (कालद्वयदेशद्वयसम्बन्धित्वं ह्यैक्यमिति) नचैतदप्यभिज्ञाद्वयसिद्धमिति प्रागेवोक्तमिति वाच्यम्,

अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयज्ञानमस्ति ; अतो ज्ञानमज्ञानविरोधि चेत्स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसम्भवः । शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्त्तने च ज्ञानान्तरमपेक्षन्ते,

* श्रुतप्रकाशिका *

प्रमाणज्ञानत्वं निवर्त्तकत्वव्यापकम्, अतोऽधिष्ठानभूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावान्न भ्रमनिवर्त्तकत्वम् । अधिष्ठानत्वाच्छुक्त्यादिवत् ब्रह्मस्वरूपं न भ्रमविरोधीति प्रमाणान्तरज्ञानमपेक्षत इति शङ्कयामाह (शुक्त्यादयस्त्विति) अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकम्, अतो व्यापकनिवृत्त्या अधिष्ठानत्वनिवृत्तिरिति, अधिष्ठानत्वादेव ब्रह्म, स्वरूपस्फुरणेऽपि प्रमाणान्तरमपेक्षेत । नैवम्, जडत्वादेव हि शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा, नाधिष्ठानत्वात् ; अतोऽधिष्ठानत्वं सोपाधिकम् । अत्र स्वजडत्वात्स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीति चेत्; तर्हि जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा, नाधिष्ठानत्वात्; अस्ततत्सोपाधिकम् ; तस्मादजडे तु प्रमाणान्तरापेक्षभ्रमनिवृत्तौ च न स्यादित्यभिप्रायः । शुक्त्यादयस्त्वित्यत्र तु तुशब्दो

* भावप्रकाशिका *

अभिज्ञाद्वये सत्यपि एकस्मिन् कालद्वयसम्बन्धो मया ज्ञात इत्यनुभवाभावात्, सत्यां च प्रत्यभिज्ञायां तथानुभवदर्शनेनानुभवस्यैवात्र साक्षित्वात् , अनुभवापलापे चोपेक्षणीयत्वप्रसङ्गादिति भावः . द्वित्वभ्रमशब्दः सर्वत्र भेदभ्रमपरः । ननु न प्रमाणज्ञानत्वं निवर्तकत्वप्रयोजकम्, अपितु भ्रमविरोधित्वमेव ; तच्च ब्रह्मस्वरूपेऽपि सम्भवतीतिशङ्कां व्युदस्यति ( अधिष्ठानत्वाच्छुक्त्यादिवदिति ) यद्वा अनिवर्तकत्वे हेत्वन्तरमप्याह—अधिष्ठानत्वादिति । अधिष्ठानस्य भ्रमविरोधित्वं प्रमाणान्तरसापेक्षम्, शुक्त्यादौ तथा दर्शनादित्यभ्युपगम्यमाने शुक्त्यादिवदेवाधिष्ठानस्फुरणमपि प्रमाणान्तरसापेक्षं स्यादिति प्रतिबन्द्या दूषयति ( अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वमिति ) ( अधिष्ठानत्वनिवृत्तिरितीति ) अधिष्ठानत्वनिवृत्तिः प्रसज्येतेत्यर्थः । यदि शुक्त्यादौ अधिष्ठानस्य भ्रमाविरोधित्वदर्शनात् ब्रह्मण्यपि भ्रमाविरोधित्वमापाद्यते,

ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव, तत एव निवर्त्तकान्तरं च नापेक्षते। अथोच्येत– ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति- न, इदं ब्रह्मव्यरितिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि ? उत प्रपञ्चसत्यत्वरूपाज्ञान-

---

* श्रुतप्रकाशिका *

ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः। द्वयी ह्यद्वैतिनां गतिः, ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्त्तकम्, प्रपञ्चमिथ्यात्वविषयज्ञानं भ्रमनिवर्त्तकमिति च; तत्र प्रथमपक्षो दूषितः। अथ द्वितीयपक्षं दूषयितुं शङ्कते (अथोच्येतेति) दूषयति (नेत्यादिना) (इदमिति) ननु कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते ? अज्ञानं हि ज्ञानप्रतिबन्धकम्, न हि प्रपञ्च-

* भावप्रकाशिका *

तर्हि तद्वदेवाध्यासाधिष्ठानत्वार्थं ज्ञानान्तरवेद्यत्वप्रसङ्गः। यदि च ज्ञानान्तरवेद्यत्वं जडत्वप्रयुक्तं तर्हि भ्रमाविरोधित्वमपि जडत्वप्रयुक्तमिति, न ब्रह्मणि भ्रमाविरोधित्वमिति प्रघट्टार्थः (प्रथमपक्षो दूषित इति) स्वरूपज्ञानस्याज्ञानानिवर्तकत्वे साक्षिवेद्यसुखादावप्यज्ञानप्रसङ्गात्। किञ्च स्वरूपचैतन्यस्याज्ञानाविरोधित्वे घटादिवज्जडत्वप्रसङ्गात्। किञ्च विवरेण अन्तःकरणपरिणामे ज्ञानत्वोपचारादित्युक्तत्वेन औपचारिकज्ञानविरोधिनोऽज्ञानत्वायोगाच्च। न च यथा सौरप्रकाशान्धकारयोः परस्परविरोधे सत्यपि दिवाभीतादिकल्पितान्धकारस्य सौरप्रकाशाविरोधित्वम्, एवमज्ञानस्य कल्पिततया न स्वरूपज्ञानविरोधित्वमिति वाच्यम्, सौरप्रकाशविरुद्धतत्समसत्ताकतमोन्तरवत् चैतन्यप्रकाशविरुद्धतत्समसत्ताकाज्ञानान्तराभावेनातात्त्विकाज्ञानस्यैव ज्ञानेन विरोधस्य वक्तव्यतया अज्ञानासम्भवात्, अहमर्थधर्मभूतवृत्तिज्ञानस्यैव विरोधित्वाभ्युपगमे ज्ञानाज्ञानयोः समानाश्रयत्वस्य वक्तव्यतया अहमज्ञ इति प्रतीत्यनुसारेण जीवाश्रयत्वपक्ष एवाङ्गीकृतस्स्यात्, न ब्रह्मशब्दितचिन्मात्राश्रयत्वपक्ष इत्यादि द्रष्टव्यम्। भाष्ये प्रपञ्चसत्यत्वरूपाज्ञानविरोधीत्यस्य प्रपञ्चसत्यत्वप्रतिभासरूपाज्ञानविरोधीत्यर्थः। प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपज्ञानमिति टीकायामुक्तत्वादिति द्रष्टव्यम्। (अज्ञानं हि ज्ञानप्रतिबन्धकमिति) नच ज्ञान-

विरोधि? इति विवेचनीयम्; न तावद्ब्रह्मयाथात्म्याज्ञानविरोधि, अतद्विषयत्वात्। ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः, प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुद्ध्यते। तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव। ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव, तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम्। स्वरूपं तु स्वानुभवसिद्धमिति चेत्, न; ब्रह्मणो-

---

* श्रुतप्रकाशिका *

सत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति। सत्यम्; आच्छादकाज्ञानमेवम्भूतम्, प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति पराभ्युपगमादेवमुक्तम्। प्रथमं शिरो दूषयति (अतदिति) कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानाविरोधित्वमित्यत्राह (ज्ञानाज्ञानयोरिति) विरोधे हि निवृत्तिरित्यर्थः। द्वितीयं शिरो दूषयति (प्रपञ्चेति) प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते (ब्रह्मस्वरूपेति) सद्वितीयत्वम्—सद्वितीयत्वज्ञानमित्यर्थः। न हि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति, अपारमार्थ्यात्। सद्वितीयत्वविशिष्टब्रह्मगोचराज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपसिद्धिः कथमित्यत्राह (स्वरूपं स्विति) दूषयति

* भावप्रकाशिका *

निवर्त्त्यस्याज्ञानस्य कथं ज्ञानप्रतिबन्धकत्वमिति वाच्यम्, चरमवृत्तिनिवर्त्त्यस्याज्ञानस्य निरतिशयानन्दस्वरूपात्मस्फुरणप्रतिबन्धकत्वस्य तैरभ्युपेतत्वादिति द्रष्टव्यम्। (पराभ्युपगमादेवमुक्तमिति) अत एव अनिर्वाच्याविद्याद्वितयसाचिवस्य प्रभवत इति प्रबन्धादौ वाचस्पतिनोक्तम्. तत्र ह्येकानादिर्भावरूपा अविद्या देवताधिकरणोक्ता, अन्या च अध्यासभाष्य एव प्रदर्शिता, आत्मन्यनात्माध्यासं प्रस्तुत्य तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्त इति अयथाव्याख्याने हेतुमाह (नहि सत्त्वयेति) सत्ताया एवाभावेन सत्ताया द्वितीयत्वस्याज्ञानरूपत्वासम्भवात् सद्वितीयत्वज्ञानमेवाज्ञानमिति भावः। (सद्वितीयत्वविशिष्टब्रह्मगोचराज्ञाने-

ऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम्। अद्वितीयत्वं धर्म इति चेत्, न; अनुभवस्वरूपस्य ब्रह्मणोनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात्, अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ॥

—( तिरोधानानुपपत्तिः )—

किञ्चाविद्यया प्रकाशकस्वरूपं ब्रह्म तिरोहितमिति

* श्रुतप्रकाशिका *

(नेति) अद्वितीयत्वं किं स्वरूपम्? उत धर्मः? इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति (नेति) धर्मपक्षे अपसिद्धान्तमाह (अद्वितीयत्वमिति) आश्रयनुपपत्तिं निगमयति (अत इति) विरोधादेव—पूर्वोक्तादेवेत्यर्थः। एवमाश्रयानुपपत्तिरुक्ता ॥

अथ तिरोधानानुपपत्तिमाह (किञ्चेति) ननु भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्फुरणमस्ति, तथापि तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति तुल्यानुपपत्तिः; सत्यम्, स्वरूपस्फुरणमस्त्येव, न तस्य तिरोधानमभ्युपगम्यते। नच स्वरूपस्फुरणं भ्रमविरोधि, किन्तु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि, तान्यागमगम्यानि, तेषां तिरोधिस्तद्विषयज्ञानप्रसराभावरूपस्सङ्कोचः, अतः स्वरूपातिरिक्ताकारान्तरतिरोधानाभ्युपगमान्नात्मनो नाशप्रसङ्गः, ज्ञानस्यात्मासाधारणाकारस्य स्फुरणाद्भ्रमानुपपत्तिरिति चेन्न, तस्यासाधारणत्वास्फुरणात्, असाधारणतया

* भावप्रकाशिका *

इति) सद्वितीयत्वज्ञानरूपे ब्रह्माज्ञाने निवृत्त इत्यर्थः। स्वरूपन्तु स्वानुभवसिद्धमिति भाष्यं केचिदेवमवतारयन्ति. प्रपञ्चमिथ्यात्वं शास्त्रप्रतिपाद्यं चेत्तस्यैव शास्त्रप्रतिपाद्यतया ब्रह्मणश्शास्त्रात्सिद्ध्यभावेनाप्रामाणिकत्वमेव स्यादित्यत्राह—स्वरूपन्तु स्वानुभवसिद्धमिति ॥ .... .... .... .... .... .... ....

(तेषां तिरोधिरिति) अत्र उपसर्गे 'घोः किः' इत्यस्याप्रवृत्तावपि प्रयोगबाहुल्यात् 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात्समर्थनीयम्। (ज्ञानस्यात्मा-

वदता स्वरूपनाश एवोक्तस्स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ॥ .... .... .... .... ....

* श्रुतप्रकाशिका *

स्फुरतो हि धर्मस्य भ्रमविरोधित्वं दृष्टम् । यथा शुक्तित्वादेः, शुक्तित्वं हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चात् भ्रमं निवर्त्तयति, न तावत् ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन कचिद्दृष्टचरम्, अतो भ्रमः सम्भवति । आत्मासाधारणधर्मत्वादर्शनादध्यासः, अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः । धर्मभूतज्ञानस्य नित्यत्वं तिरोधानं च भवद्भिरभ्युपगम्यते, तदा ज्ञाननाशप्रसङ्ग इति चेन्न, ज्ञानं हि द्रव्यम्, तस्य स्वरूपातिरेकेण सङ्कोचविकासात्मकमवस्थाद्वयमभ्युपेतम्, अतस्तत्तिरोधानम्, कर्मणा तत्सङ्कोचः, तन्निवृत्तिस्तु प्रसरः, स एव प्रकाशः, स चानित्यः, तस्य नित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः, स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः, अतोऽवस्थाद्वयस्यागमापायित्वात् द्रव्यं नित्यमेव । असदवस्थास्थानीयो हि भवतः प्रकाशः, स एव स्वरूपम्; तस्मात्तिरोधानं तन्निवृत्तिरेव, इतीममर्थमभिप्रेत्य प्रकाशैकस्वरूपं ब्रह्मेत्युक्तम् । अतः स्वरूपातिरेकिप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात् स्वरूपनाश एव तिरोधानं स्यादित्यर्थः ॥

७ भावप्रकाशिका ७

साधारणाकारस्येति ) इदमुपलक्षणं प्रत्यक्त्वादेरित्यपि द्रष्टव्यम् । (तस्यासाधारणत्वास्फुरणादिति ) नन्वसाधारणधर्मत्वं साधारणधर्माद्व्यावृत्तिः, सा च नैल्यस्य शौक्ल्यव्यावृत्तिरिव प्रत्यक्त्वादिस्वरूपाभिन्नैव, ततश्च प्रत्यक्त्वादिस्वरूपे भासमानेपि तदभिन्नायास्साधारणधर्मव्यावृत्तेरभासमानत्वकथनं परोक्ततिरोधानपर्यवसितमेवेति चेन्न, प्रत्यक्त्वादौ साधारणधर्माभेदभ्रमदर्शनेन प्रत्यक्त्वादिगतायाः साधारणधर्मव्यावृत्तेः स्वरूपरूपत्वे प्रमाणाभावात् । नैल्यादौ तु शौक्ल्याभेदभ्रमस्य कदाप्यभावेन तत्र तद्व्यावृत्तेस्स्वरूपरूपत्वात् । तत्रापि शौक्ल्याभेदभ्रमसत्त्वे स्वरूपातिरिक्तव्यावृत्तेरिष्टत्वादिति द्रष्टव्यम् । ( असदवस्थास्थानीय इति ) असद-

॥ भावप्रकाशिका ॥

भिमतस्वप्रकाशधर्मभूतज्ञानविकासावस्थास्थानीय इत्यर्थः । सदा स्वप्रकाश इति यावत् । ( स्वरूपनाश एव तिरोधानं स्यादित्यर्थ इति ) नन्वस्तु प्रकाशाभाव एव तिरोधानम्. नच प्रकाशाप्रकाशयोर्विरोधः, अप्रकाशस्यारोपिततया अविरुद्धत्वात्, त्वदुक्तमर्थं न जानामीत्यादौ श्रुत एवार्थे अज्ञातत्वस्यापि अनुभूयमानत्वाच्चेति चेन्न, अधिष्ठानयाथात्म्येऽवभासमाने अप्रकाशकल्पनाया अप्यनुदयात् । वह्नावारोपितस्यावह्नित्वस्य वह्निकार्याप्रतिबन्धकत्वात्, प्रकाशारोपितस्याप्रकाशस्य प्रकाशकार्याप्रतिबन्धकत्वाच्च, त्वदुक्तमर्थं न जानामीत्यादौ सत्तावधारणात्मकज्ञानाभावविषयत्वेन प्रकाश प्रकाशविरोधसाधकत्वाभावात्, अन्यथा घटः प्रकाशते न प्रकाशते चेत्यनुभवापातात्; एतेन नास्ति न प्रकाशत इति विपरीतव्यवहारयोग्यत्वमेवावरणमिति निरस्तम् । विपरीतव्यवहारलक्षणावरणकल्पनाया अपि भासमानेऽधिष्ठाने असम्भवादानन्दस्वरूपस्य भासमानत्वेन तदंशे आवरणस्य वक्तुमशक्यत्वाच्च । नचानवच्छिन्नानन्दाप्रकाशादावरणमस्तीति वाच्यम्; आनन्दे भेदाभावेन तदस्फुरणस्य वक्तुमशक्यत्वात्, नच संसारदशायामानन्दे भासमानेपि अनवच्छेदो न भासत इति वाच्यम्, आनन्दस्य मोक्षकालीनस्य स्फुरणे सिद्धे अनवच्छेदांशस्यापुरुषार्थत्वात् तन्मते संसारमुक्त्योरविशेषप्रसङ्गात् । नच निरतिशयानन्दस्फुरणास्फुरणाभ्यां संसारमुक्त्योर्विशेष इति वाच्यम्, अद्वैतिमते वैषयिकानन्दस्य ब्रह्मानन्दातिरिक्तस्याभावेनोत्कर्षापकर्षायोगात् । आनन्दो भासते चेत् स एव मुक्तिकालीनानन्द इति संसारमोक्षयोरानन्दानुभवेन वैषम्यं मृषावादिमते सुवचम् । नच यथा त्वन्मते जीवस्वरूपानन्दस्य कैवल्यदशायामनुभूयमानस्य च स्वरूपरूपत्वेनाभेदेपि स आनन्द आवृत एव, तस्येदानीमसत्त्वव्यवहारात्सातिशयानन्दो भवतीत्यभ्युपगम्यते, एवमिहापि स्यादिति वाच्यम्, तत्र आनन्दस्यैकत्वेपि तस्मिन्नानन्दे तीव्रत्वमान्दत्वादिभेदोऽस्ति, ततस्संसारदशायामानन्दानुकूल्यं स्वरूपरूपज्ञानेन भासते । तद्गततीव्रानुकूल्यन्तु कैवल्यदशायां धर्मभूतज्ञानेन भासत इति ह्यस्माकं प्रक्रिया । ननु तीव्रानुकूलत्वमपि स्वरूपरूपं स्वप्रकाशमित्यस्माभिरभ्युपगम्यते, येन दोषस्स्यात्; तस्मात्तिरोधानं भासमानस्वरूपे अनुपपन्नमिति भावः ॥

(स्वरूपानुपपत्तिः)

अपिच– निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः ? उत अपरमार्थभूतः ? इति विवेचनीयम् । न तावत्परमार्थः, अनभ्युपगमात् । नाप्यपरमार्थः, तथा सति हि

* श्रुतप्रकाशिका *

अथ स्वरूपानुपपत्तिमाह (अपिचेति) ज्ञातृत्वादीनामपरमार्थतया हि दोषान्तरापेक्षा, तद्वदिहापीति दृष्टान्ततया वक्ष्यमाणानवस्थोपयोगित्वेन निर्विषयेत्यादिपरिपाटीप्रकटनं कृतम्। यद्वा विषयाश्रयभेदानामसत्त्वप्रतिभासयोरुक्तिर्दोषकल्पनाकारणत्वेन कृता (अनभ्युपगमादिति) परमार्थत्वे ह्यद्वैतहानिप्रसङ्ग इति भावः । अपरमार्थपक्षं दूषयितुं कोटित्रयमेव सम्भावितमित्याह (तथासतीति) अपरमार्थत्वान्मूलदोषान्तरापेक्षयाऽनवस्थेति दूषणं कोटित्रयस्यापि साधारणम् । दृशित्वपक्षे अधिकं दूषणमस्तीति दर्शयति (न तावदिति) किमनवच्छिन्ना दृशिः ? उतावच्छिन्ना ? दृशेरनवच्छिन्नत्वे किं स्वरूपातिरिक्ता ? उत स्वरूपमेव ? इति विकल्पमभिप्रेत्यानवच्छिन्नपक्षे स्वरूपातिरिक्तपक्षं दूषयति (दृशिस्वरूपभेदानभ्युपगमादिति) अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः। अनवच्छिन्नपक्षे स्वरूपदृशित्व-

* भावप्रकाशिका *

(ज्ञातृत्वादीनामपरमार्थतया हीति) अनुभूतेर्निराश्रयत्वे ज्ञातुरभावादेव ज्ञातृत्वादिरप्यपरमार्थो भवतीत्यर्थः । ननु निर्विषया निराश्रयेत्येतत्परमतानुवादरूपम्, नच पर एव स्वमतदूषणावकाशमभिलषन् विशेषणं प्रयच्छति, अपितु स्वोक्तार्थोपयोगितयैव, प्रकृते च स्वाभिमतनिष्कर्षोपयोगितया तस्य विशेषणस्य साफल्यमेव वक्तुमुचितम् । ननु परदूषणमित्यस्वरसादाह (यद्वा विषयाश्रयभेदानामिति) (असत्त्वप्रतिभासयोरुक्तिरिति) निर्विषया निराश्रयेत्यसत्त्वोक्तिः अनुभवतीति तत्प्रतिभासोक्तिरिति द्रष्टव्यम् । (किं स्वरूपातिरिक्तेति) अधिष्ठानब्रह्मस्वरूपव्यतिरिक्तेत्यर्थः । (अनवच्छिन्नदृशिद्वयानभ्युपगमादिति) अनव-

द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाभ्युपगमनीयः, न तावद्दृशिः, दृशिस्वरूपभेदानभ्युपगमात्; भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च। द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात्। अथैतत्परिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मरूपादोष इति चेत्; ब्रह्मैव चेद्दोषः, प्रपञ्चदर्शनस्यैव तन्मूलं स्यात्। किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन? ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च

---

* श्रुतप्रकाशिका *

पक्षं दूषयति (भ्रमेति) अवच्छिन्नदृशिदूषणत्वेन वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना, अत्राधिकदूषणद्वयसद्भावात्सा नोक्ता। अवच्छिन्नदृशित्वेन द्रष्टृत्वेन दृश्यत्वेन चाभ्युपगमं दूषयति (द्रष्टृदृश्ययोरिति) काल्पनिकत्वेन अपरमार्थत्वेनेत्यर्थः। दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम्। अवच्छिन्नदृशिपक्षेपि स्वरूपतद्व्यतिरिक्तविकल्पे स्वरूपपक्षेपि तुल्यमनभ्युपगमदूषणम्, ब्रह्मस्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात्; अतोऽवच्छिन्नपक्षे न विकल्पितम्। स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता (अथैतदिति) अपारमार्थिकत्वेऽनवस्था, परमार्थत्वे अद्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः। अनुभूतेरेव दोषत्वान्नाद्वैतहानिः, तस्याः पारमार्थ्यान्नानवस्थेति च भावः। एतद्दूषयति (ब्रह्मैवेति) अपारमार्थ्याद्दोषान्तरसा-

* भावप्रकाशिका *

च्छिन्नाधिष्ठानभूतदृशिस्वरूपापेक्षया अतिरिक्ताया दोषभूताया अपरमार्थभूताया अनवच्छिन्नदृशेरनभ्युपगमादित्यर्थः। (अनवच्छिन्नपक्षेऽपि समानेति) दृशेरवच्छिन्नानवच्छिन्नविकल्पस्य परमार्थशिरोन्तर्गततया अपरमार्थे सर्वत्र कल्पकान्तरापेक्षाया अविशेषादित्यर्थः। काल्पनिकशब्दस्य कल्पनप्रयोजनकत्वभ्रान्तिं व्युदस्यति (अपरमार्थत्वेनेत्यर्थ इति) (अनुभूतेरेव दोषत्वादिति) अविद्याकल्पक-

स्यात्; अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद्भ्रान्तिरुपपादिता भवति ॥

* श्रुतप्रकाशिका *

पेक्षत्वसाम्यमभिप्रेत्य प्रपञ्चतुल्यशब्द उक्तः । अतः-प्रतिशिरोऽभिहितैर्दूषणैरित्यर्थः । अनिर्मोक्षप्रसङ्गपरिहाराय ब्रह्मव्यतिरिक्तत्वम्, अनवस्थापरिहाराय पारमार्थिकत्वम्। परैरनवस्था त्रिधा परिहृता, जीवाज्ञानवादिना बीजाङ्कुरन्यायात् प्रवाहानादित्वेन परिहृता, अविद्यया जीवः जीवादविद्येति हि तन्मतम्. ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता, उभाभ्यां च दुर्घटत्वेन परिहृता, दुर्घटत्वमविद्याया भूषणम्, न तु दूषणमिति। परमार्थस्य ह्युपपत्त्यपेक्षा, प्रासादनिगरणादिष्वल्पासेन विपुलप्रासादनिगरणमनुपपन्नमिति युक्तिर्न प्रवर्तते, अत उपपत्तिनिरपेक्षत्वमपारमार्थ्यसाधकम् । दोषस्य स्वरूपनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्थेति । अत्रोच्यते,- प्रवाहानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरम्, जीवनित्यत्वश्रुतिभिरकृताभ्यागमकृतविप्रणाशादिरूपश्रुत्यर्थापत्त्या च आमोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति। अपारमार्थ्येन स्वरूपानादित्वमपि नानवस्थापरिहारः, तथासति माध्यमिकपक्षविजयप्रसङ्गात्; तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वे तस्याः भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्, तस्यापि भ्रान्तिसिद्धत्वे अनवस्था स्यादित्यनवस्थया ह्यधिष्ठानपारमार्थ्यं साधितम् । माध्यमिकेनापारमार्थ्यादधिष्ठानस्य स्वरूपानादित्वे स्वीकृते ऽनवस्था परिहृतेत्यधिष्ठा-

* भावप्रकाशिका *

दोषत्वादित्यर्थः । (प्रवाहानादित्वेन परिहृतेति) 'तदधीनत्वादर्थवत्' इतिसूत्रे वाचस्पतिना बीजाङ्कुरन्यायोपन्यासादिति भावः । इदन्तु स्वरूपानादीत्यस्याप्युपलक्षणम्. यथा निरंशेप्याकाशे घटस्तटस्थ एव तमुपलक्ष्य एकदेशं सम्पाद्य तेन सम्बन्ध्यते । तद्वदविद्यापि तटस्थैव चिन्मात्रमुपलक्ष्य एकदेशरूपजीवं सम्पाद्य तत्रावतिष्ठत इति नेतरेतराश्रयत्वम् "स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम् । तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥" जीवाज्ञानयोरनादित्वे उत्पत्तिज्ञप्त्यप्रतिबन्धाच्चान्योन्याश्रयो न दोष इति जीवाश्रयाज्ञानवादिवाचस्पतिना स्वरूपानादित्वस्याप्युपपादितत्वादिति द्रष्टव्यम् । (दोपस्य स्वरूपनिर्वाहकत्वेनेति)

* श्रुतप्रकाशिका *

नापारमार्थ्यमेव स्यात् । किञ्च स्वरूपानादित्वेऽपि मूलदोषापेक्षास्त्येव, जीवस्यानादित्वेप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात् . दुर्घटत्वं चानुपपन्नम्, दुर्घटत्वं नामोपपत्तिनिरपेक्षत्वम्. तदपारमार्थ्यसाधकं चेदपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वान्मूलदोषापेक्षा च न स्यात्, निवर्त्तकज्ञाने सत्यपि सावतिष्ठेत, विरोधान्न तिष्ठतीति चेत्; तर्ह्युपपत्त्यनुवर्त्तिन्यविद्या स्यादिति । परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधोपपत्तिः । तत्र दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वम्, अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा ; अतः प्रपञ्चस्य मूलदोषपरिकल्पनं युक्तमिति चेत्, तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषापेक्षा अपरमार्थभूतदोषस्यापि स्यात्, ततोऽनवस्था तदवस्थैव । दुर्घटत्वमनवस्थापरिहारश्चेत् अधिष्ठानापारमार्थ्येप्यनवस्था परिहृता स्यात्, तत्रापारमार्थ्यप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिरिति वक्तव्यम् । तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहरा । प्रवाहानादित्वपक्षेऽप्यधिष्ठानापारमार्थ्येऽप्यनवस्था सुपरिहरा, पितृपुत्रादिपरम्परावदधिष्ठानपरम्परानादित्वाभ्युपगमात्, जीवाज्ञानवादिनं प्रति ब्रह्माज्ञानवादिना यद्दुर्घटत्वे दूषणमुक्तं तद्ब्रह्माज्ञानवादेपि तुल्यम् । यथा अविद्याया दुर्घटत्वं चेन्मुक्तान् परब्रह्म चाश्रयेदविद्या, शुद्धस्वरूपं ब्रह्म अशुद्धस्वरूपा अविद्या विरोधान्नाश्रयतीति चेत्तर्ह्युपपत्तिमत्यविद्या, तस्मादुक्तान्योन्याश्रयणादिदूषणान्यापतेयुरिति ह्युक्तम् । तत्त्वापि तुल्यम्, मोक्षेऽपि ब्रह्माश्रयेदविद्या । नहि बाधकज्ञाने सत्यपरमार्थभूता अविद्या तिष्ठतीति चेत्, बाधकसन्निधौ न बाध्यसिद्धिरित्येवंरूपोपपत्तिमत्त्येवाविद्येत्यस्मदुक्तान्यनवस्थादिदूषणान्यापतेयुरिति वक्तुं शक्यते ; दोषस्य स्वपरनिर्वाहकत्वे अधिष्ठानमपि तथा स्यात्, परं प्रत्यधिष्ठानत्वे सिद्धे हि

⁂ भावप्रकाशिका ⁂

नन्वेवं परिहारचातुर्विध्यात् परैरनवस्था त्रेधा परिहृतेति पूर्वोक्तविरोध इति चेत् । अत्र केचित्,– जीवाज्ञानवादिना प्रवाहानादित्वदुर्घटत्वस्वपरनिर्वाहकत्वानामेवोक्तत्वेन स्वरूपानादित्वस्यानुक्तत्वात् ब्रह्माज्ञानवादिनापि प्रवाहानादित्वस्यानुक्तत्वाच्च त्रैविध्यमेवेति वदन्ति । ( परमार्थत्वप्रयुक्तोपपत्तीति ) परमार्थे वस्तुनि या उपपत्तिरपेक्षिता सा परमार्थत्वप्रयुक्तोपपत्तिरित्यर्थः । ( अपरमार्थत्वप्रयुक्तेति ) दोषोप्य-

अनिर्वचनीयत्वञ्च किमभिप्रेतम् ? सदसद्विलक्षणत्वमिति चेत्; तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् । एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिस्सदसदाकारा । सदसदाकारयास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यात्— इति ॥

---

* श्रुतप्रकाशिका *

स्वनिर्वाहकत्वमिति चेत्, परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वम्, तदेव नास्तीति तुल्यं स्यात्, अधिष्ठानारोप्ययोर्भेदो दृष्टः, तत्राधिष्ठानस्य स्वपरनिर्वाहकत्वे अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इति चेत्, दोषतत्कार्ययोरपि तिमिरचन्द्रद्वित्वयोर्भेदो दृष्टः, दोषस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्ग इति तुल्यमिति, एतदभिप्रायेण यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावद्भ्रान्तिरुपपादिता भवतीत्युक्तम् । यथोक्तमाचार्यपादैः "स्वरूपानादित्वस्वपरघटने दुर्घटनता प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः । असत्या विद्याया गदितुमनवस्थापरिहृतौ मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥" इति ॥ अथानिर्वचनीयत्वानुपपत्तिमाह (अनिर्वचनीयत्वञ्चेति) अनिर्वचनीयता—विद्वत्सन्निधौ दुरुपपादत्वम् । कथं प्रमाणशून्यत्वमित्यत्राह (एतदुक्तमिति) (सर्वं सर्वप्रतीतेर्विषयः स्यादिति) सदसद्विलक्षणमिति या प्रतीतिस्तत्रापि सदसदेव विषयः स्यादित्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते, तस्मात्सदसदाकारायाः प्रतीतेः सदाकार एव विषयः, न सदसद्वि-

* भावप्रकाशिका *

परमार्थवस्तुसामग्रीकोट्यनुप्रविष्ट इत्यर्थः । अपारमार्थिकस्य वस्तुनः पारमार्थिकवस्तुसामग्रीनिरपेक्षत्वेपि अपारमार्थिकवस्तुसामग्रीसापेक्षत्वमस्त्येव, स्वप्नास्वेन विपुलप्रासादनिगरणस्य पारमार्थिकप्रासादनिगरणहेतुनिरपेक्षत्वेपि अपारमार्थिकप्रासादनिगरणहेतुभूतैन्द्रजालिकमन्त्रौषधादिसापेक्षत्वदर्शनादिति भावः । (अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इतीति) स्वपरनिर्वाहकत्वपक्षे तस्मिन्नेवाधिष्ठाने तदेवाध्यस्तमित्यागतम्, ततश्चाधिष्ठानत्वाध्यस्तत्वयोः परस्परविरोधाभावात् सर्वमपि स्वस्व-

* श्रुतप्रकाशिका *

क्षणः। यथा ख्यातिविवेके "न ह्यन्यदवभास्यमानो विषयः—अवभासनव्यवस्था-व्यत्वाद्विषयस्य" इति। एकस्य विषयस्य सदसदाकारत्वमनुपपन्नम्, व्याप्तिविरोधादिति चेत्, सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नम्, सतोऽसद्विलक्षणत्वमसतस्स-द्विलक्षणत्वञ्च हि दृष्टम्, न त्वेकस्योभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः। अयं विशेषः,– सदसद्विलक्षणत्वं क्वचिदपि न दृष्टं सदसदात्मकत्वं दृष्टमिति। यथा संवित्सिद्धौ "नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत्। प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जगत्॥" इति। अर्थस्थितौ सत्त्वमसत्त्वं वा स्यात्, न तद्विलक्षण-त्वम्। सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति चेन्न, तथासति ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात्, अन्यतरत्वसहं सदसद्विलक्षणत्वमिष्टमेवेति चेत् तुल्यम्, ईदृशं सदसद्वैलक्षण्यं वदता शब्दान्तरेण सत्त्वमेवाङ्गीकृतं भवति; अतस्त्वदभि-मतं सदसद्विलक्षणत्वं विरोधादपास्तम्। अस्तीति प्रतिपन्नत्वं सत्त्वम्, नास्तीति धी-विषयत्वं बाधितत्वमित्येकस्यैव सत्त्वासत्त्वविरोधस्सदसद्विलक्षणत्वकल्पकश्चेत् सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वादुभयाकारविलक्षण एवार्थः साध्यत इति सिद्धान्तसमर्थनवैयर्थ्यं स्यात् ततश्च भेदस्सुनिरूप इति पूर्व-पक्षीकृत्य दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात्सुनिरूपदुर्निरूपवि-लक्षणः स्यात्, एवं संवित्सत्यत्वमिथ्यात्वजडत्वाजडत्वनित्यत्वानित्यत्वादिवादेषु पूर्व-पक्षसिद्धान्ताकारविलक्षणत्वं संविदः स्यात्। तच्चानभिमतम्, अतः परस्पर-विरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वै-लक्षण्यसिद्धिः, तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहार उक्त इति चेत्

ϖ भावप्रकाशिका ϖ

रूप एव कल्पितमिति वक्तुं शक्यतयाध्यस्ताद्भिन्नमधिष्ठानान्तरं नापेक्षणीयं स्यादिति भावः। (व्याप्तिविरोधादिति चेदिति) सत्त्वस्यासत्त्वभावव्याप्तत्वादिति भावः। (सदसदात्मकत्वं दृष्टमिति) भ्रान्तिबाधाभ्यां सदसदात्मकतया प्रतिपन्न-त्वात्तदेव स्वीकर्तुमुचितमित्यर्थः। (अर्थस्थितौ सत्त्वमसत्त्वं वा स्यादिति) वस्तु-स्थितौ पर्यालोच्यमानायां सत्त्वासत्त्वयोरन्यतरदेव स्यादित्यर्थः। (सदसद्विलक्ष-णत्वं दृष्टमिति चेदिति) सन्मात्ररूपत्वेपि उभयरूपत्वाभावादिति भावः।

—( प्रमाणानुपपत्तिः )—

अथ स्यात्—वस्तुस्वरूपतिरोधानकरमान्तरबाह्य-रूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्या-

* श्रुतप्रकाशिका *

अन्यथैवोपपत्तिरुक्ता भवति । सत्त्वे सत्यन्यथाख्यानादिभिस्तत्तद्बाद्यभिमतैरेव ख्यातिबाधोपपत्तेः । सतः कथं बाधः ? अन्यत्र ख्यातत्वात् । नन्वन्यत्र सच्चेन्न बाधः, न सच्चेदसत्ख्यातिप्रसङ्ग इति चेन्न, अन्यत्र सत्त्वात् , अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथाख्यातत्वम् . अन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात्. दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमिति चेत् ; दोषस्यानिर्वचनीयतावभासहेतुत्वं च न क्वचिद्धिमति-पदादन्यत्र दृष्टमिति तुल्यम् । मिथो विरुद्धद्वयप्रतिपन्नाकारवैलक्षण्यमेकस्य विरुद्धमित्ये-तच्चाधिकम् । अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः, सत एवा-गृहीतभेदतया ख्यातिः, भेदग्रहश्च बाधः, बाध्यत्वं च प्रवृत्तेः, यथार्थख्यातिपक्षे तु शुक्तिरजतस्थाप्रार्थादौ सत्त्वात्प्राचुर्याभावास्थिरस्वतदेकानुभाव्यस्वाग्रहाच्च ख्यातिबाधोपपत्तिः, पुरोवर्तिनि सत एव रजतस्य ख्यातिः, शुक्तिप्राचुर्यग्रहो बाधः, तेन प्रवृत्तिर्बाध्या, तद्बाधश्च प्रवृत्त्यनुपपत्तिः, अलातचक्रादौ त्वख्यातिपक्ष इव तदुप-पत्तिः, अतोऽन्यथैवोपपत्तिः सिद्धेत्यनिर्वचनीयत्वकल्पकमयुक्तम्, एवमाश्रयतिरो-धानस्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः ॥

अथ 'नहि दृष्टेऽनुपपन्नं नामे'तिन्यायात्प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त इत्यभिप्रायवता परेण प्रमाणप्रतिज्ञा शङ्क्यते ( अथ स्यादिति ) पूर्वदूषिता-कारान् साधयितुमाह ( वस्तुस्वरूपेति ) अनेन तिरोधानमुक्तम् । आन्तरबाह्येति स्वरूप-मुक्तम् , अध्यासोपादानत्वेन हि मिथ्यात्वं फलितम् । सदसदित्यनिर्वचनीयत्वमुक्तम् ।

* भावप्रकाशिका *

( अन्यथाख्यानादिभिरिति ) आदिपदेनाख्यातियथार्थख्याती विवक्षिते । ( सत्त्वे सतीति ) सत्त्वे सत्येवेत्यर्थः । ( भेदाग्रहेण ख्यातिबाधोपपत्तिरिति) नच भेदाग्र-हस्य ख्यात्युपपादकत्वेपि कथं बाधोपपादकत्वमिति वाच्यम् ; वर्षकृतं दुर्भिक्ष-मितिवदुपपत्तेः । अथवा भेदाग्रहेणेत्युपलक्षणम् ,भेदाग्रहणे भेदग्रहणेन च ख्याति-

ज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः । तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तुतत्तज्ज्ञानरूपाध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते ॥

---

* श्रुतप्रकाशिका *

शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थम् अविद्याज्ञानादिपदवाच्यमित्युक्तम् । सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वेनाह ( वस्तुयाथात्म्यज्ञानेति ) तदुपहितेत्याश्रयश्च । आन्तराध्यासः कः ? बाह्यः कः ? कथं चाविद्योपादानत्वं ब्रह्मण उपादानत्वमित्यत्राह ( तदुपहितेति ) निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिं सूचयति ( अविकारे स्वप्रकाशचिन्मात्रवपुषि प्रत्यगात्मनीति ) अविकारत्वात् स्वप्रकाशत्वात् प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामो नोपपद्यत इत्यर्थः । स्वप्रकाशस्य कथमध्याससम्भव इत्यत्राह ( तिरोहितस्वरूप इति ) तिरोधायकं किमित्यत आह ( तेनैवेति ) तेनैव—अध्यासहेतुनैवेत्यर्थः । अहङ्कारोऽज्ञानं चान्तराध्यासः, ज्ञेयं बाह्याध्यासः । अध्यासरूपे—अध्यस्तरूपे । कर्मणि कः । तस्यैव—दोषस्यैव । अवस्थाविशेषेण—कादाचित्कावस्थाविशेषेण . रज्जुसर्पाद्यध्यासः । एवं निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिरुक्ता । दोषस्योपादानत्वे उपपत्तिमाह ( कृत्स्नस्येति ) सुवर्ण-

* भावप्रकाशिका *

बाधोपपत्तिरित्यर्थः । तमर्थमुपपादयति ( सत एवेत्यादिना ) पुरोवर्त्यर्थगृहीतासंसर्गभेदप्रतियोगितयानुपस्थितस्य उपस्थितिः ख्यातिः, तत्र गृहीतभेदप्रतियोगितया तस्य वस्तुनः प्रतीतिर्बाध इति वदन्ति ॥

कारणाज्ञानविषयं प्रत्यक्षं तावत् अहमज्ञो मामन्यं च न

* श्रुतप्रकाशिका *

जातीयस्य भूषणस्य सुवर्णमेव ह्युपादानं दृष्टं तद्वदिति भावः । हेतुबलात्—कार्यकारणयोस्सजातीयत्वदर्शनलक्षणात् ॥ अथ प्रत्यक्षमाह ( कारणेति ) अहमज्ञ इत्यस्य विवरणं मामन्यं च न जानामीति । अहमज्ञ इत्यज्ञानस्वरूपकीर्तनम्, तस्य मामन्यं च न जानामीत्याच्छादनरूपकार्यकथनम् । कारणशब्देन कार्यरूपाज्ञानव्यावृत्तिः, तस्मात्सौषुप्तिकमज्ञानं विवक्षितम् । जागरितावस्थायां घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण, सुषुप्तौ तु अनवच्छिन्नकारणा-

* भावप्रकाशिका *

तद्विवरणरूपतामेवोपपादयति ( अज्ञानस्वरूपकीर्तनमिति ) विषयावरणरूपकार्यविनिर्मुक्ताज्ञानस्वरूपकीर्तनम्, मामन्यञ्चेत्यत्र तु विषयावरणकार्यविशिष्टाज्ञानकीर्तनमित्यर्थः, अत एव विवरणव्याख्याने तत्त्वदीपने अहमज्ञ इत्यज्ञानस्य साश्रयत्वम्, मामन्यञ्च न जानामीति सविषयत्वं प्रतीयत इत्युक्तम्। अहमज्ञ इति प्रतीत एवाज्ञानस्वरूपे सविषयत्वरूपधर्मान्तरवैशिष्ट्यावगाहित्वेन तद्विवरणरूपत्वमिति भावः । ( कार्यरूपाज्ञानव्यावृत्तिरिति ) "श्रूयतां चाप्यविद्यायास्स्वरूपं कुलनन्दन ! । अनात्मन्यात्मबुद्धिर्या" इत्यादावनात्मनि आत्मबुद्धेरपि अविद्याज्ञानादिशब्दप्रयोगविषयतया तद्व्यावृत्तिरित्यर्थः । वक्ष्यति चानात्मबुद्धेरपि अज्ञानशब्दवाच्यत्वमिति ( सौषुप्तिकमज्ञानमिति ) सुषुप्त्यनुवृत्तमज्ञानमित्यर्थः । अहम्बुद्धिरूपस्य कार्याज्ञानस्य सुषुप्त्यनुवृत्तत्वाभावात् तद्व्यावृत्तिरित्यर्थः । ननु च मामन्यञ्च न जानामीत्यनुभवः सुषुप्त्यनुवृत्ताज्ञानेन प्रमाणीकर्तुं योग्यः, सुषुप्तावहमर्थस्य तदन्यस्य वा विषयस्योल्लेखनासम्भवादित्याशङ्कयाह ( जागरितावस्थायामिति ) सविकल्पकप्रत्यक्षरूपसाक्षिणा अहमर्थतदन्यरूपविषयावच्छिन्नाज्ञानानुभवो जाग्रद्दशायाम्, तस्यैवाज्ञानस्य निर्विषयतयानुभवः सुषुप्तावित्यर्थः । ततश्च कारणाज्ञानस्य जाग्रद्दशायां तत्त्वशुद्धिकारमते सर्वात्मना अप्रतीतिरितिमन्तव्यम् । साक्षिभास्यस्याज्ञानस्य ज्ञातत्वासम्भवात् । नचाज्ञानस्य निर्विषयत्वावस्था च न सम्भवति, निर्विषयत्वेनाज्ञानानुभवश्च न सम्भवतीति वाच्यम्, सुषुप्तौ प्रत्यगर्थमात्रविषयतया अज्ञानस्य भाने दोषाभावात् । ननु जाग्रद्दशायां साक्षिणो घटं

# जानामीत्यपरोक्षावभासः। अयन्तु न ज्ञानप्रागभाव-विषयः, स हि षष्ठप्रमाणगोचरः, अयन्तु अहं सुखीति-

* श्रुतप्रकाशिका *

ज्ञानप्रतीतिरिति तत्त्वशुद्धिकारादिभिरुक्तम् । जागरितावस्थायामेवाज्ञानानुभवोऽयमिति सम्प्रदायः, अन्यं च न जानामीत्युक्तेः । न हि स्वापेऽन्यपरामर्शः, न जानामीत्याच्छादकतया प्रतीयमानस्याज्ञानस्य कारणत्वात् कारणाज्ञानविषयमित्युक्तम्। अपरोक्षावभास इति परोक्षरूपानुमानादिप्रमाणव्यावृत्त्यर्थमुक्तम् । ज्ञानप्रागभावविषयत्वमाशङ्क्य परिहरति ( अयन्त्विति ) भवत्वयमपि षष्ठप्रमाणविषय इत्याशङ्क्याह ( अयं त्विति ) परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि, तस्मात्

* भावप्रकाशिका *

न जानामीति विषयोल्लेखित्ववत् सुषुप्तौ विषयोल्लेखित्वे को दोषः ? नहि साक्ष्युल्लेखानुल्लेखयोर्जागरणाजागरणे उपयुज्येते, अत एव सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य सर्वदा विषय एवेत्युक्तं विवरण इति चेत्. सत्यम्, जाग्रद्दशायां घटं जानामीति विशिष्य विषयविशेषोल्लेखवत् सुषुप्तिदशायां विषयाणां विशिष्योल्लेखादर्शनेन तदनुरोधेन कस्यचित् हेतोः कल्पनीयत्वात्। न केवलं तत्त्वशुद्धिकारादिभिराधुनिकैरुक्तम् . सम्प्रदायोपि तथैवेत्याह ( जागरितावस्थायामेवेति )। ( अज्ञानानुभवोयमिति ) अहमज्ञो मामन्यञ्च न जानामीति अयमज्ञानानुभव इत्यर्थः । ननु न जानामीत्यत्राज्ञानमात्रमनुभूयते, न तस्य कारणत्वमपि , तत्कथं कारणाज्ञानविषयं प्रत्यक्षमित्युच्यत इत्याशङ्क्याह ( न जानामीत्याच्छादकतयेति ) कार्याज्ञानस्याच्छादकत्वाभावादिति भावः । भाष्ये— कारणाज्ञानविषयं प्रत्यक्षं तावदिति । अहमज्ञो मामन्यञ्च न जानामीत्यपरोक्षावभासः कारणाज्ञानविषयं प्रत्यक्षमिति योजना । ततश्च प्रत्यक्षमपरोक्षावभास इत्यनयोर्न पौनरुक्त्यमितिध्येयम् । भाष्ये—सहि षष्ठप्रमाणगोचर इति । षष्ठप्रमाणमात्रगोचर इत्यर्थः। मात्रपदेन प्रत्यक्षगोचरत्वं निषिध्यते , प्रत्यक्षागोचर इत्यर्थः । अत एवोत्तरत्राभावस्य प्रत्यक्षगोचरत्वाभ्युपगमेपीत्युक्तम् , भवत्वयमपि षष्ठप्रमाणविषय इत्यत्र चोदयति। अयं त्वमहं सुखीतिवदपरोक्ष इत्यत्र भाष्ये अयमित्यनेनानुभवः परामृश्यते, नतु विषयः। अहं सुखीतिवदितिकरणावमृष्टप्रत्यक्षानुभवस्य दृष्टान्ती-

वदपरोक्षः । अभावस्य प्रत्यक्षत्वाभ्युपगमेऽप्ययमनु-
भवो नात्मज्ञानाभावविषयः , अनुभववेलायामपि
ज्ञानस्य विद्यमानत्वात् ; अविद्यमानत्वे ज्ञानाभावप्रती-

* श्रुतप्रकाशिका *

परोक्षप्रमाणविषयः प्रागभावो न परोक्षप्रमाणविषयभूतमज्ञानं भवितुमर्हतीत्यर्थः। भाव-ग्राहिप्रमाणेनाभावस्य वेद्यत्वेऽपि दूषणमाह (अभावस्येति) हेतुमाह (अनुभवेति) अभावस्यानुभववेलायां ज्ञानं विद्यते ? न वा ? विद्यते चेत् ग्राह्याभावान्नाभावप्रतीतिः। न चेत् ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थः। भावाभावयोरेकविषयत्वे हि विरोधः, अत्र विरोधो नास्ति। अभावविषयकज्ञानस्य विद्यमानस्य ग्राहकत्वात् इतरविषय-ज्ञानस्याभावप्रतियोगित्वेनाविद्यमानत्वादिति शङ्कां परिहरन् अनुभववेलायां ज्ञानस्य विद्यमानत्वम्, अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तिं भावरूपत्वे विरोधाभावं च

* भावप्रकाशिका *

करणात् न हि सुखादिवदित्युक्तम्। किञ्चाभावः प्रत्यक्षयोग्यः, इदन्तु ज्ञानं प्रत्यक्षरूपम्, अतो नानयोर्विषयविषयिभावस्सम्भवतीत्यस्यार्थस्यैव प्रतिपादयितु-मुचितत्वात् अयमिति ज्ञानपरामर्श एवोचितः, न विषयपरामर्शः। ततश्च भव-त्वयमनुभवष्षष्ठप्रमाणजन्य इत्येवावतारिकया भवितव्यमिति , तन्न ; उपायस्य उपायान्तरादूषकत्वात् । ( परोक्षप्रमाणविषयः प्रागभाव इति ) परोक्षैकविषय इत्यर्थः। ततश्च परोक्षप्रमाणविषयस्य वह्न्यादेरपरोक्षत्वस्यापि दर्शनादितिशङ्काया नावकाशः । ( भावग्राहिप्रमाणेनेति ) प्रत्यक्षस्य सन्निकृष्टार्थमात्रग्राहितया संयोगादिलक्षणस्य पञ्चविधस्य सन्निकर्षस्य भावेष्वेव सम्भवेन भावग्रहणैकशील-स्यापि प्रत्यक्षस्य विशेषणतालक्षणसन्निकर्षान्तरपरिकल्पनेनाभावग्राहकत्वाभ्युपग-मेपीति भावः। ततश्च भाष्ये प्रत्यक्षत्वाभ्युपगमेपीति स्पष्टमर्थे प्रतीयमाने भाव-ग्राहकप्रमाणेनाभावस्य वेद्यत्वाभ्युपगमेपीति अवतारिकायां न सामञ्जस्यम्। किञ्च भावग्राहिणां शब्दानुमानादीनामभावग्राहित्वस्य सर्वसिद्धत्वाच्चेति चोद्यस्य नाव-काशः ( ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थ इति ) ग्रहणकारणीभूताधिकरण-प्रतियोगिज्ञानाभावादभावज्ञानं नोत्पत्तुमर्हतीति भावः । ननु ग्राहकस्याभावज्ञान-

त्यनुत्पत्तेश्च। एतदुक्तं भवति—अहमज्ञ इत्यस्मिन्ननुभवे अहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा? नवा? अस्ति चेद्विरोधादेव न ज्ञानाभावानुभवसम्भवः। नो चेद्धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न सम्भवति।

---

* श्रुतप्रकाशिका *

विवृणोति (एतदुक्तं भवतीति) ज्ञानप्रागभावस्य प्राह्यत्वे अनिच्छयापि भावाभावयोरेकविषयत्वमापतितमित्यभिप्रायेणाह (अहमिति) ज्ञानस्य चेति ज्ञानशब्द आत्मघटादिज्ञानसाधारणः, इह भूतले घटो नास्तीत्यादिषु अभावग्रहणे प्रतियोगिधर्मिणोर्ज्ञानापेक्षा दृष्टा, तस्मादत्राप्यभावधर्मितया आत्मनो ज्ञानमस्तीति वक्तव्यम्, अभावव्यतिरिक्तो ह्यात्मा; अतस्तद्विषयज्ञाने सत्यपि अभावव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति वचनं व्याहतं स्यात्। अभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयज्ञानमभावप्रतियोगि चेत् तदानीमभावप्रतियोगितया ज्ञानस्यापि प्रतीतिरस्तीति वक्तव्यम्, प्रतीयमानं ज्ञानं स्वविषयावच्छिन्नं प्रतीयत इति विषयाणामपि प्रतीतिरस्ति, एवमभावप्रतियोगिज्ञानावच्छेदकतया विषयेषु ज्ञायमानेषु तद्विषयज्ञानाभावोऽनुपपन्न इति भावः। अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तदूष-

❁ भावप्रकाशिका ❁

णेत्यर्थः। उत्तरत्र 'एतदुक्तं भवती'तिभाष्ये तथैव विवरणदर्शनात्। नच ग्राहकशब्दस्य ग्रहणजनकप्रतियोग्यधिकरणज्ञानपरत्वे अभावविषयकज्ञानस्य ग्राहकत्वादिति अव्यवहितशङ्काया अनुत्थानमिति वाच्यम्; आशयानभिज्ञस्य तथा चोद्यसम्भवात्। केचित्तु ग्राहकाभावादभावग्राहकस्य ज्ञानस्याभावान्न तदभावप्रतीतिः, न तदभावोल्लेख इत्यर्थः। एतदुक्तं भवतीत्येतस्य कथञ्चिदुपपादकमात्रत्वेनाप्युपपत्तेरिति वदन्ति (ज्ञानप्रागभावस्य प्राह्यत्व इति) अत्र प्रागित्येतदविवक्षितं ज्ञानाभावस्य प्राह्यत्व इत्यर्थः। इतरथा प्रागभावस्य यावज्ज्ञानप्रतियोगिकस्यासम्भवेन व्यक्तिविशेषप्रतियोगिकस्यैव वक्तव्यतया तत्र विरोधाभावादिति द्रष्टव्यम्। (अभावधर्मितया आत्मनो ज्ञानमस्तीति वक्तव्यमिति) अभावधर्मित्वा-

ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषय... ...श्चय-मनुपपत्तिः समाना। अस्याज्ञानस्य भावरूपत्वे धर्मि-प्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भा-वरूपाज्ञानविषय एवाभ्युपगन्तव्य इति । ननु च भाव-रूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन

* श्रुतप्रकाशिका *

णमतिदिशति ( ज्ञानाभावस्येति ) . प्रमाणान्तराणां विद्यमानविषयत्वनियमाभा-वेऽपि विद्यमानतया दर्शयितुमशक्यमिति भावः । अहमज्ञ इति वर्तमानतया ह्यज्ञानं प्रतीयते। अस्मिन् पक्षे अधिकं दूषणान्तरं पूर्वमुक्तम्, अपरोक्षस्य परोक्षरूप-प्रमाणविषयत्वानुपपत्तिरूपमर्थसिद्धम्। भावरूपत्वे उक्तदूषणं नास्तीत्याह ( अस्येति ) धर्मिप्रतियोगिविषयज्ञानं धर्मिप्रतियोगिज्ञानम्, न तेन भावरूपाज्ञानस्य विरोधः, घटाच्छादकमज्ञानं घटज्ञानेन हि विरुध्यते, न तु घटज्ञानविषयज्ञानेन धर्मिज्ञानेन चेत्यर्थः। वस्तुयाथात्म्यज्ञाननिवर्त्यमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचै-

* भावप्रकाशिका *

दात्मनः तज्ज्ञानमस्तीति वक्तव्यमित्यर्थः । ननु धर्मित्वेन प्रकारेण ज्ञानमिति भवितव्यम् । तेन रूपेण तज्ज्ञानस्याहेतुत्वाद्धर्मितया प्रतियोगितयावगतिरस्ति नवेति भाष्यस्याप्ययमेवार्थः ( अस्मिन् पक्ष इति ) प्रत्यक्षागोचरत्वपक्षाभ्युपगम इत्यर्थः । ततश्चानुमेयत्वमात्रेण कथमपरोक्षत्वविरोधः, वह्न्यादावुभयदर्शनादिति शङ्का परास्ता वेदितव्या ( घटाच्छादकमज्ञानं घटज्ञानेन हि विरुध्यत इति ) अयमर्थः,– घटज्ञाने सति घटाच्छादकमज्ञानं नहि विरुध्यते, घटज्ञानविषय-ज्ञानधर्मिज्ञानाभ्याञ्च न विरुध्यते, भावाभावरूपत्वाभावादुभयोरपि भावरूपत्वा-दित्यर्थः । भाष्यस्वारस्यात् भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्यैव भावान्तरस्यापि नानुत्पत्तिर्नियन्तुं शक्य इति पुरोवादिपञ्चपादिका-विवरणग्रन्थानुसाराच्च उक्त एवार्थः । यथाश्रुतार्थग्रहणे साक्षाद्घटविषयज्ञानस्यैव घटं न जानामीति ज्ञानविषयत्वप्रसङ्गेनाज्ञानासिद्धिप्रसङ्गात् ( वस्तुयाथात्म्यज्ञान-निवर्त्यमिति ) उभयोर्भावरूपत्वेपि तेजस्तिमिरयोरिव विरोधस्सिद्ध इति भावः ।

विरुध्यते? नैवम्,—साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्, अपि त्वज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः, न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्तत इति न विरोधः। ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव

* श्रुतप्रकाशिका *

तन्येन विरुध्यत इति चोदयति ( ननु चेति ) परिहरति ( नैवमिति ) याथात्म्यशब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितम्। प्रपञ्चमिथ्यात्वसिद्धवत्कारेण हेतुमाह ( अन्यथेति ) अन्यथा—स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्व इत्यर्थः। अज्ञानविषयत्वमस्तु, ततः किमित्यत्राह ( नहीति ) नहि रजतविषयज्ञानेन रजतं निवर्त्यमित्यर्थः। दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टम्, दृश्याज्ञानावच्छेदकस्यास्मदर्थस्य दृश्यत्वानभ्युपगमात् असदर्थावच्छिन्नमज्ञानं विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति ( ननु चेदमिति ) विषय-

* भावप्रकाशिका *

भाष्ये—साक्षिचैतन्यमिति। वस्तुयाथात्म्यविषयकप्रमाणज्ञानं न भवतीत्यर्थः। प्रमाणज्ञानस्यैवाज्ञाननिवर्तकत्वात्, अन्यथेत्यस्याज्ञानविषयमितिसन्निहितविषयत्वसम्भवेपि प्रकृष्टवस्तुयाथात्म्यविषयत्वानभ्युपगमप्रतिपादकत्वमयुक्तमित्यस्वरसादाह— अज्ञानविषयत्वाभावेनेति। ( नहि रजतविषयज्ञानेनेति ) साधकस्य बाधकत्वायोगादित्यर्थः। भाष्ये— ननु चेदम्भावरूपमप्यज्ञानमिति। अत्र चोदयन्ति, नन्वज्ञानस्य व्यावर्त्तको विषयः कथं साक्षिचैतन्येनावभास्यते? प्रमाणायत्तत्वाद्विषयसिद्धेरिति। उच्यते,— सर्वं वस्तु ज्ञाततयाऽज्ञाततया च साक्षिचैतन्यस्य विषय एव, तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते. अन्यस्तु सामान्याकारेण विशेषाकारेण वा अज्ञानव्यावर्त्तकतया सदा भास्यत इति पञ्चपादिकाविवरणग्रन्थानुवादरूपमिदं वाक्यम्। तस्य चायमर्थः,— कथं मामन्यञ्च न जानामि त्वदुक्तमर्थं सङ्ख्यां वा न जानामीति विषयावच्छिन्नमज्ञानं साक्षिभास्यं स्यात्, अज्ञानावच्छेदकस्य विषयस्य साक्षिणा भानासम्भवात्. साक्षिणो बहिर्विषये नैयायिकमते मनस इव स्वातन्त्र्यासम्भवात्, इतरथा प्रमाणान्तरवैयर्थ्यप्रसङ्गात्; ततश्चाज्ञानावच्छेदकस्य घटादेः प्रमाणत

साक्षिचैतन्यस्य विषयो भवति । स विषयः प्रमा... र्थां-नसिद्धरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते । नैष दोषः, सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम् । तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा । अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न

* श्रुतप्रकाशिका *

विशेषः—अवच्छेदकविशेषः । ( स इति ) स एव परामृश्यते । परिहरति ( नैष दोष इति ) अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः । ज्ञाततया अज्ञाततया वा—ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा । साक्षिचैतन्यस्य विषयभूतम्— साक्षिचैतन्येन प्रतिभातीत्यर्थः । अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचारिकम्, स्वयम्प्रकाशस्य विषयत्वायोगात् . जडस्य स्वयम्प्रकाशत्वायोगात् प्रमाणाधीनसिद्धि सत् दृश्यविशेषणं भवति । अस्मदर्थस्तु स्वयम्प्रकाशतया स्वयमेव सिध्यन् अज्ञानावच्छेदक इत्यर्थः । दृश्यावच्छेदकत्वाद्दृश्यमिति चोद्यम्, तज्जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः ।

* भावप्रकाशिका *

एव सिद्धिरेष्टव्या, प्रमाप्रमाणज्ञानश्चाज्ञानविरोधि , नतु साक्षिवदज्ञानसाधकम् ; येनाज्ञानं न विरुन्ध्यात्, ततश्चाज्ञानानुभवो न सम्भवतीति शङ्काभिप्रायः । स्वतो मनोग्राह्यत्वाभावेपि परमाणोर्ज्ञातः परमाणुरिति ज्ञाततया मनोवेद्यत्ववत् तत्तदाकारवृत्त्यनुपहितेन केवलेन साक्षिणा स्वतो ग्रहणायोग्यमपि वस्तु ज्ञातत्वाज्ञातत्वान्यतराकारेण सदा भास्यत एव । इयांस्तु विशेषः , वस्तुनो ज्ञाततया भाने प्रमाणव्यवधानापेक्षा , ज्ञाततायाः प्रमाणोत्पाद्यत्वात् . अज्ञाततायास्तु स्वतस्सिद्धत्वात् ; अज्ञाततया भानेन प्रमाणव्यवधानापेक्षा । ततश्च सर्वमपि वस्तु प्रमाणाप्रसरणदशायामज्ञाततया भासत एवेति न विषयभानार्थं प्रमाणापेक्षा . येनाज्ञानस्य विरोधस्स्यात् । साक्षिरूपञ्च घटादिविषयज्ञानं नाज्ञानविरोधि, साधकतया तस्य बाधकत्वाभावादिति प्रागेवोक्तत्वादिति परिहाराभिप्रायः । एवमेव हीदं वाक्यं व्याख्यातं तत्त्वदीपनकृता । इह तु कथं तद्विहायान्यथानूद्यते ?

प्रम........वधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते ; तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते । तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति—विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्व-

* श्रुतप्रकाशिका *

तस्मात्—अभावरूपत्वपक्षे उक्तविरोधाद्भावरूपत्वपक्षे तदभावाच्चेत्यर्थः ( न्यायोपबृंहितेनेति ) पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः । एवं प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं न जानामीत्यनेनात्माश्रयत्वं च सिद्धम्, शास्त्रेष्वज्ञानशब्दवाच्यतया पराभिमतकर्मव्यावृत्तिः प्रत्यक्षतया सिद्धा, अस्य शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वादहमज्ञ इति प्रतिपन्नतया च सिद्धम् । अथ स्वविषयावरणत्वस्वनिवर्त्यत्वाभ्यां सहोपपादिताकारविशिष्टं चाज्ञानमनुमानेनापि साध्यते ( विवादाध्यासितमित्यादिना ) ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासम्भवात् तद्व्यावृत्त्यर्थं प्रमाणज्ञानमित्युक्तम् । तथाऽपि धारावाहिकज्ञाने उत्तरोत्तरविज्ञानानां सिषाधयिषितवस्त्वन्तरपूर्वकत्वाभावात् तद्व्यावृत्त्यर्थं विवादाध्यासितमित्युक्तम् । तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं प्रमाणज्ञानमित्युक्तम्, अयं धर्मी दर्शितः । अथ साध्यधर्ममाह ( स्वप्रागभावेति ) वस्त्वन्तरपूर्वकमित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह

* भावप्रकाशिका *

इति । तत्रायं परिहारः,—सत्यम् ; विवरणवाक्यं तत्त्वदीपनकृता व्याख्यातम्, तथापि जडस्याज्ञानविषयत्वमभ्युपगच्छतो विवरणकारस्य मते प्रत्यगर्थावच्छिन्नाज्ञानमेवानुभूयत इत्येव वक्तव्यम्, नतु घटादिविषयम् ; ततश्च शङ्कापरिहारौ प्रत्यगर्थविषयावेव वक्तव्यावित्यभिप्रेत्य भगवता भाष्यकृता तदनुसारेण शङ्कापरिहारग्रन्थौ योजनीयावित्यभिप्रेत्य तथानूदितमिति द्रष्टव्यम् । ( उपपादिताकारविशिष्टमिति ) प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं न जानामीत्यनेनात्माश्रयत्वञ्च सिद्धमिति पूर्वमुक्तत्वेन स्वप्रागभावव्यतिरिक्तत्वस्वदेशगतत्वयो-

न्तरपूर्वकम्; अप्रकाशितार्थप्रकाशकत्वात्; ...कारे प्रथमोत्पन्नप्रदीपप्रभावत्- इति ॥

* श्रुतप्रकाशिका *

( स्वदेशगतेति ) स्वाश्रयगतेत्युक्ते दृष्टान्तस्य साध्यवैकल्यम्, न हि तमो दीपगतम्; अतः स्वदेशगतेत्युक्तिः । धर्माधर्मव्यावृत्त्यर्थमाह ( स्वनिवर्त्येति ) ननु कथं स्वनिवर्त्यशब्देन धर्माधर्मव्यावृत्तिः? ज्ञानोत्पत्तिहेतुभूतमदृष्टं ज्ञानोत्पत्त्या हि नश्यति । नैवम्; सर्वेषां धर्माधर्माणां ज्ञानफलकत्वाभावात् ज्ञानोत्पादकव्यतिरिक्त-धर्मादीनां पूर्वक्षणे स्वदेशे विद्यमानत्वाच्च । यद्वा स्वनिवर्त्यपदेन संस्कारव्यावृत्तिः, नहि संस्कारो ज्ञानेन निवर्त्यः । भयादिव्यावृत्त्यर्थमाह—स्वविषयावरणेति । प्राग-भावस्यैवंविधत्वात्तद्व्यावृत्त्यर्थमाह— स्वप्रागभावव्यतिरिक्तेति । इयं प्रतिलोम-व्यावृत्तिः । वस्त्वन्तरपूर्वकमित्युक्ते अभावस्यापि पदार्थत्वेन वस्तुशब्दवाच्यत्वात्तद्-व्यावृत्त्यर्थमाह— स्वप्रागभावव्यतिरिक्तेति । घटादिस्वविषयव्यावृत्त्यर्थमाह— स्ववि-षयावरणेति । कुड्यादिव्यावृत्त्यर्थमाह— स्वनिवर्त्येति । वेद्यगतवित्त्यभिव्यक्ति-प्रागभावव्यावृत्त्यर्थमाह— स्वदेशगतेति । प्रमाणज्ञानेनाज्ञाने निरस्ते वेद्यगतचैत-न्यमभिव्यक्तं भवतीति हि तत्परिपाटी, अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वम्, न तु तत्प्रतिबन्धकत्वम्; इत्यनुलोमव्यावृत्तिः । हेतुमाह ( अप्रका-शितेति ) साक्षाद्वा परम्परया वा अबाध्यव्यवहारानुगुणयहेतुत्वं प्रकाशकत्वमिह विवक्षितम् । साक्षाद्वा परम्परया वेत्युक्ते हि दीपप्रभायां ज्ञाने च हेत्वनुगम-सिद्धिः । इदं रजतमिति ज्ञानेऽतिव्याप्तिपरिहाराय अबाध्यव्यवहारानुगुणय-हेतुत्वमित्युक्तम् । प्रकाशकत्वादित्युक्ते धारावाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वे-ऽपि सिषाधयिषितधर्माभावाद्धेतोरनैकान्तिकत्वं स्यादिति तद्व्यावृत्त्यर्थमाह ( अप्रका-शितार्थप्रकाशकत्वादिति ) इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वे सतीति

* भावप्रकाशिका *

सिद्धत्वादिति भावः ( न हि तमो दीपगतमिति ) दीपस्यैव प्रभाश्रयत्वात्प्रभा-देशस्य प्रभाश्रयत्वं नास्ति, प्रभादेशइतिवत्प्रभाश्रय इति व्यवहाराभावादिति भावः । ( वेद्यगतवित्त्यभिव्यक्तिप्रागभाव इति ) वेद्यगतवित्तिर्विषयाधिष्ठानचैतन्यम्,

—( तमसो द्रव्यत्वसमर्थनम् )—

आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमो ×न द्रव्यान्तरम्, तत्कथं भावरूपाज्ञानसाधने निदर्शन-

* श्रुतप्रकाशिका *

हेतुर्विशेष्यत इति मन्तव्यम्। दृष्टान्तमाह (अन्धकार इति) दीपप्रभावदित्युक्ते उत्तरोत्तरप्रभाणामप्रकाशितार्थप्रकाशकत्वाभावात्साधनविकलता स्यात्, स्वनिवर्त्य-वस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्पन्नप्रदीप-प्रभावदित्युक्तम्, तथापि दिवादीपप्रभायास्तथाविधत्वादर्शनात् तद्व्यावृत्त्यर्थमन्ध-कार इत्युक्तम्॥ .... .... .... .... .... .... .... ....

दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति (आलोकेत्यादिना) आलोके सत्युलूकादीनामन्धकारसम्भवादनुयायिनमाकारमाह (रूपदर्शनाभावमात्रं वेति) यद्वा निमीलिताक्षस्य तमःप्रतिपत्तिनिर्वाहार्थमाह— रूपदर्शनेति। अत्र नैयायि-कादिभिरुक्तं दूषणमनुसन्धत्ते, तत्र उत्पादकज्ञापकानुपपत्त्या द्रव्यान्तरत्वं दूषितम्, रूपवत्त्वेऽपि परमाणूनामेव अनुत्पाद्यत्वम्, तमसस्तु रूपवत्त्वाद्दृष्टत्वाच्चोत्पाद्यत्वं स्यात्। तत्र रूपवत्त्वात्तद्रहितानि वाय्वाकाशादीनि नोत्पादकानि भवन्ति, स्पर्श-रसगन्धविरहान्नान्यान्यपि द्रव्याणि, कारणगुणप्रक्रमेण हि कार्ये वैशेषिकगुणा-रम्भः, इत्युत्पत्त्यनुपपत्तिः। आलोकाननुगृहीतत्वाच्चक्षुर्न ग्राहकम्, आलोकसन्नि-धावनवस्थानान्नास्य ग्राह्यत्वम्। रूपवत्त्वप्रतीतिस्तु भ्रान्तिरेव, निमीलने नीलप्रति-भासवदिति ज्ञप्त्यनुपपत्तिः। अत्र परिहारो वार्त्तिककारैरुक्तः “तमः खलु चलं

* भावप्रकाशिका *

तन्निष्ठाभिव्यक्तिप्रागभाव इत्यर्थः। वेद्यगतं चैतन्यमभिव्यक्तं भवतीत्युत्तरग्रन्था-नुसारादयमेवार्थः। (अनुलोमव्यावृत्तिरिति) अत्र स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतामज्ञातताञ्च व्युदसितुं क्रमेण विशेषणानीत्यपि वदन्ति॥

(इयमुत्पत्त्यनुत्पत्तिरिति) दीपनिर्वापणसमयसौधोदरव्यापिसन्तमसोत्पत्ति-कारणं दुर्निरूपमित्यनुपपत्तिरनुसन्धेया। (निमीलने नीलप्रतिभासवदिति)

× न द्रव्यम्, इति पा.

तयोपन्यस्यत इति चेत्; उच्यते–बहुलत्वविरल[illegible]द्य-
वस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तम

* श्रुतप्रकाशिका *

नीलं परापरविभागवत् । प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति "इति । स एवात्रो-च्यते, तत्र परापरशब्दार्थौ बहुलत्वविरलत्वशब्देनोक्तः, आदिशब्देन चल-त्वम्, रूपवत्तयेति नीलशब्दार्थ उक्तः, द्रव्यान्तरशब्देन दशमद्रव्यत्वमुक्तम्, नवद्रव्यस्वीकारो हि तेषां पृथिव्यादीनां द्रव्याणामन्योन्यवैधर्म्यात्स्वीक्रियते, अ-न्यथा पृथिव्येव द्रव्यं नान्यत् गन्धवत्त्वाभावादिति वक्तुं शक्यते, एवं द्वे द्रव्ये इत्यादि, तच्चानभिमतम्, द्रव्याणां परस्परवैधर्म्यात्, एवं नवद्रव्यवैधर्म्याद्दशमभङ्गी-कार्यमिति वार्त्तिकार्थः । निमीलने नीलप्रतिभानं बाधितविषयम्, इदं त्वबा-धितत्वान्न तथा भवितुमर्हति, तथापि रूपोपलब्धिवेलायाम्, अनुपलब्धेर्निमील-नवदपि सम्भवतीति शङ्कितं प्रत्यक्षमिति चेत्, उलूकादीनामस्मदादिरूपोपल-ब्धिवेलायां रूपानुपलब्धौ तद्रूपोपलब्धेरपि शङ्कितत्वापातात् उलूकादिरूपोपलब्धि-वेलायामस्मदादेः रूपानुपलब्ध्या अस्मदादिरूपोपलब्धेरपि शङ्कितत्वप्रसङ्गात् आगम-स्वारस्याच्च शङ्काया निरस्तत्वात्तमसो दशमद्रव्यत्वमवसीयते 'तमः ससर्ज भगवान्'

* भावप्रकाशिका *

अयम्भावः,–अस्ति तावन्निमीलितनेत्रस्य नीलं तम इति प्रतीतिः, सा तु न प्रमा बाधितविषयत्वात् । तथाहि, किमत्र बाह्यं तमः प्रतीयते ? उत आन्तरम् ? नाद्यः–बहुलालोकवितते देशे बाह्यस्यान्धकारस्याभावात् । न द्वितीयः–बहिः प्रसरणशीलानां नायनरश्मीनामान्तरतमोग्राहकत्वाभावात्, इतरथा नयनान्तस्स्था-ञ्जनग्रहणप्रसङ्गात्, तस्माद्भ्रान्तिरेवेति । ( नीलप्रतिभानं बाधितविषयमिति ) यद्यपि विवरणादौ पिहितकर्णपुटस्यान्तरशब्दोपलम्भवत् निमीलितनेत्रस्यान्तर्मु-खैर्लोचनरश्मिभिरान्तरं तमो गृह्यत इति नीलं तम इति प्रतीतेर्गोलकान्तर्वर्तितमो-विषयतया प्रमात्वमेवोपपादितम्, अतस्तथैवानुवादो युक्तः, तथापि तस्य लोक-विरुद्धत्वाद्भ्रमत्वमभ्युपगम्य इह परिहारान्तरमुपन्यस्तमिति द्रष्टव्यम् । ( रूपो-पलब्धिवेलायामिति ) सजातीयघटादिरूपोपलब्धिवेलायामित्यर्थः । ( कारण-

इति निरवद्यम्-इति ॥

—( अविद्याप्रत्यक्षनिरासः )—

अत्रोच्यते-'अहमज्ञो मामन्यं च न जानामि' इत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते। यस्तु ज्ञानप्रागभावविषयत्वे विरोध

* श्रुतप्रकाशिका *

'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्' 'यस्य तेजः शरीरम्' 'यस्य तमः शरीरम्" इति सृज्यत्वसंहार्यत्वशरीरत्वादीनि हि श्रूयन्ते। आलोकनैरपेक्ष्यं यथा ज्ञातृविशेषप्रयुक्तं दृश्यते तथा ज्ञेयविशेषप्रयुक्तमप्युपपद्यते। यथा लोके कार्यं हि प्रतीतं तथा कारणकल्पनायां प्रमाणम्, न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हतीति न्यायादबाधितप्रतीतिसिद्धस्य तमस उत्पादकं कल्प्यमिति नोत्पादकानुपपत्तिर्ज्ञापकानुपपत्तिर्वा ? यथा "तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीतं केनापि क्वचिदपि न बाधश्च ददृशे। अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात् ॥" तमो द्रव्यमित्येव भाष्यकारमतम्। सिद्धान्ते तस्यादूषितत्वात् सृज्यत्वसंहार्यत्वशरीरत्वश्रवणाच्च. स्वच्छद्रव्यत्वादाकाशकार्यं तमः, रूपवत्त्वं पञ्चीकरणादुपपद्यते। यद्वा तेजःकार्यं तमः, रूपवत्त्वात्, स्पर्शानुपलम्भः स्वच्छद्रव्यत्वादिति ( इति निरवद्यमिति ) प्रमाणसिद्धत्वेन तर्कबाधानुपपत्त्या निरवद्यमित्यर्थः ॥ .... .... ....

अथ सिद्धान्तं वक्तुमुपक्रमते ( अत्रोच्यत इति ) केवलेन च प्रत्यक्षेणेति दृष्टान्ततयोक्तम्, उपपत्तिदूषणे कृते केवलप्रत्यक्षं न साधकमित्यर्थः। उपपत्तिर्हि ज्ञानप्रागभावविषयत्वे विरोधः, स भावरूपत्वेऽपि तुल्य इत्याह ( यस्त्विति )

* भावप्रकाशिका *

निरूपणायापह्नवमर्हतीति ) प्रयोजनार्थे चतुर्थी, प्रयोजनञ्च निवर्त्यमानतया मशकेभ्यो धूम इतिवत् कारणनिरूपणाभावायापह्नवमर्हतीत्यर्थः। कारणनिरूपणं प्रसज्येतेति भयादित्यर्थः। ( स्वच्छद्रव्यत्वादिति ) प्रभावत्स्वच्छद्रव्यविशेषत्वात्स्पर्शानुपलम्भ इत्यर्थः ॥ .... .... .... .... .... ....

उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः । वि... ना-श्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा? अप्रतिपन्नो वा? प्रतिपन्नश्चेत्; तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति । अप्रतिपन्नश्चेत् व्यावर्त्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत ॥ अथ विशदस्वरूपावभासोऽज्ञानविरोधी; अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोधः—इति । हन्त तर्हि ज्ञानप्राग-

* श्रुतप्रकाशिका *

तुल्यत्वमुपपादयति (विषयत्वेनेति) प्रतिपन्नशब्देन भासनमुच्यते (तत्स्वरूपज्ञाननिवर्त्यमिति) स्वरूपज्ञानम्—स्वरूपावभासः, स्वतो वा प्रमाणान्तरेण वा स्वरूपावभासनिवर्त्त्यमित्यर्थः । इदं रजतमित्यत्र इदं शुक्लभास्वरमित्येवंरूपप्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनात् प्रमाणज्ञानत्वमप्रयोजकमिति सिद्धवत्कारेण तत्स्वरूपज्ञाननिवर्त्यमित्युक्तम् । व्यावर्त्तकाश्रयविषयज्ञानशून्यम्— आश्रयतया विषयतया च व्यावर्तकः प्रत्यगर्थः, तदवभासशून्यम् । विषयत्वेनेत्यादिना भाष्येण स्वात्मविषयाज्ञानप्रतिपत्तौ विरोधतुल्यत्वं दर्शितम्, घटादिविषयाज्ञानप्रतीतावपि अज्ञानस्य विषयत्वेन व्यावर्तकतया घटः प्रतिपन्नो न वा? प्रतिपन्नश्चेत् घटस्वरूपज्ञाननिवर्त्त्यं घटाज्ञानं तस्मिन् घटे प्रतिपन्ने कथमिव तिष्ठति, घटोऽप्रतिपन्नश्चेत् व्यावर्तकविषयज्ञानशून्यमज्ञानं कथमनुभूयेतेत्यर्थसिद्धो विरोधो द्रष्टव्यः, एवं परेण भावाभावयोर्विरोधे दर्शिते तत्प्रतिबन्दीत्वेन निवर्त्यनिवर्त्तकविरोध उक्तः ॥ अथ विशदाविशदविभागादविरोधं शङ्कते (अथेति) प्रत्यगर्थस्य प्रमाणज्ञानेनावभासो विशदावभासः । स स्वपक्षेऽपि तुल्य इत्याह (हन्त तर्हीति) विशदस्वरूपमवच्छेदकं यस्य स विशदस्वरूपविषयः, विशदस्वरूपस्य प्रागभावाव-

* भावप्रकाशिका *

(प्रतिपन्नशब्देन भासनमुच्यत इति) ननु विषयत्वपर्यन्तम्, तथाहि

भाव॰ [illegible] विशदस्वरूपविषयः । आश्रयप्रतियोगि-
ज्ञानन्तु अविशदस्वरूपविषयमिति न कश्चिद्विशेषो

* श्रुतप्रकाशिका *

च्छेदकत्वं स्वविषयज्ञानद्वारा, ज्ञानप्रागभावोऽपि विशदस्वरूपज्ञानावच्छिन्न इत्यर्थः। ज्ञानस्य चाभावावच्छेदकत्वं प्रतियोगितया, विशदस्वरूपज्ञानं प्रागभावप्रतियोगीति यावत् । अविरोधसिद्धये विद्यमानज्ञानस्य ततोऽर्थान्तरत्वमाह ( आश्रयेति ) आश्रयप्रतियोगिनोर्ज्ञानमाश्रयप्रतियोगिज्ञानम् । ( अविशदस्वरूपविषयमिति ) आश्रयज्ञानस्याविशदस्वरूपविषयत्वम् अविशदप्रत्यगर्थविषयत्वम् । प्रतियोगि-ज्ञानस्याविशदस्वरूपविषयत्वम् अभावप्रयोगिभूताविशदज्ञानविषयत्वम् । सविषयं निवर्त्तकज्ञानम् अभावप्रतियोगित्वेनेदानीं ज्ञानमवलम्ब्यते, तत्र निवर्त्तकज्ञानाविषयस्य प्रत्यगर्थस्येदानीमविशदत्वान्निवर्त्तकज्ञानस्येदानीमविद्यमानत्वाच्च प्रतियोगिनो ज्ञानस्या-

* भावप्रकाशिका *

सति प्रत्यगर्थस्य प्रतिपन्नत्वकथनं व्याहतं स्यादिति भावः । ( अभावप्रति-योगिभूतविशदज्ञानविषयत्वमिति ) अत्र चोदयन्ति ; आश्रयप्रतियोगिज्ञानन्तु अविशदस्वरूपविषयम्— इतिभाष्यस्य ह्ययमर्थः,– यद्यप्यहं मां न जाना-मीत्यत्राश्रयज्ञानं प्रत्यगर्थविषयम् , तथा प्रतियोगिज्ञानमपि ज्ञानविषयतया प्रत्यगर्थविषयकम् , तथापि न तद्द्वयमपि विशदप्रत्यगर्थविषयकं प्रत्यगर्थांशे तयोर-विशदत्वात्, ततश्च मां न जानामीति यथा विशदं भवति तथा न जानामीत्यर्थः । मदर्थविषयकावधारणात्मकसाक्षात्काररूपज्ञानं नास्तीति पर्यवसितोऽर्थः। ततश्चाभाव-प्रतियोगिभूतज्ञानस्य वैशद्यं विद्यमानस्य प्रतियोगिविषयकज्ञानस्यावैशद्यञ्चाविरोध-सिद्धये समर्थनीयम्। तद्विहाय तुरगारूढस्य तुरगविस्मरणन्यायेन प्रतियोगिभूतज्ञान-स्यावैशद्यं कथं समर्थ्यत इति । अत्र ब्रूमः,–सत्यम् , प्रतियोगिभूतज्ञानस्य वैश-द्यमेव समर्थनीयम्, तथापि भाष्ये आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषय-मित्युक्तेस्साक्षाद्विषयप्रतियोगिभूतज्ञान एवाविशदत्वं समर्थनीयमित्यभिप्रेत्य तदु-पपादनायायं संरम्भः कृतः । ( सविषयं निवर्तकज्ञानमिति ) सविषयं निवर्तक-ज्ञानं कर्म इदानीं ज्ञानं कर्तृ स्वशब्देन प्रतियोगिविषयकं ज्ञानमुच्यते, निवर्तकज्ञानं

* श्रुतप्रकाशिका *

विशदत्वम् , विद्यमानं हि साश्रयं ज्ञानमपरोक्षावभासरूपम् , अत[illegible]स्याविशद-त्वमविद्यमानतया भवति ; एवमाश्रयतया भासमानं स्वरूपमविशदम् , प्रतियोगि-तया स्मर्यमाणं ज्ञानमिदानीमविशदविषयत्वादविद्यमान[illegible]व अविशदमिति तदुभयविषयं ज्ञानमविशदस्वरूपविषयम्, तच्च निद्यते, विशद[illegible]त्वविद्यमानमभाव-प्रतियोगीति न विरोध इत्यर्थः । अयमर्थः,— अज्ञा[illegible]र्त्तकाभिमतप्रमाणज्ञा-नाभावस्तावत् त्वयाभ्युपगन्तव्यः, अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवासम्भवात् । ततश्च त्वदभ्युपगतः प्रमाणज्ञानाभाव एव अहमज्ञ इति प्रतिपत्तेर्विषयो भवितुमर्ह-तीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति । पूर्वपक्षोक्तविरोधः कथं परिहृतो भवतीति चेत्, इत्थम्,—तत्र हि यदर्थावच्छिन्नं ज्ञानमभावप्रतियोगितयो-च्यते , अभावप्रतियोगिज्ञानावच्छेदकतदर्थप्रतिपत्तौ सत्यां तज्ज्ञानाभावोऽनुप-पन्न इति हि विरोधः । तत्रायं परिहारः,—अभावप्रतियोगिज्ञानं स्मृत्यारूढं प्रति-षिध्यते, यथा घटसाक्षात्कारो नास्तीति निषेधे घटसाक्षात्कारः स्मर्यते, स्मर्यमाणस्य स्मृतिसमकालवर्तित्वनियमाभावान्निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगि-त्वविरोधः, त्वया च स्मृत्यारूढस्य निवर्त्तकज्ञानस्य स्मृतिसमकालवर्तित्वाभावादज्ञाना-वच्छेदकतया प्रतिपत्तावपि स्मृत्यारूढनिवर्त्तकज्ञानं नाज्ञानविरोधीति वक्तव्यम् ;

ॐ भावप्रकाशिका ॐ

प्रतियोगिभूतज्ञानमित्यर्थः । ( विद्यमानं हि साश्रयमिति ) स्ववृत्तिवर्तमानस्या-परोक्षत्वादित्यर्थः । वर्तमानमपि परकीयं न प्रत्यक्षम्, स्वीयमप्यतीतादिकं न प्रत्यक्षम् । स्ववृत्तिवर्तमानञ्च यज्ज्ञानं तदेव विशदमित्यर्थः । ततश्च स्वरूपतो विषयतश्च इदानीमभावप्रतियोगिभूतं ज्ञानमविशदमिति पर्यवसितोऽर्थः । ( अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानेति ) प्रमाणज्ञानाभावानभ्युपगमे प्रमाण-ज्ञानस्य सत्यत्वप्रसङ्गेन तन्निवर्त्यमज्ञानं कथमनुभूयते ? प्रमाणज्ञानस्य विरोधिन-स्सत्त्वादित्यर्थः । ( तत्रायं परिहार इति ) ननु विशदतदर्थप्रतीतिर्नास्तीति भाष्य-एवास्याश्शङ्कायाः परिहृतत्वात् किमिति टीकायां परिहारान्तरमुपन्यस्यत इति चेन्न, विशदतदर्थप्रतिपत्तिनिषेधविषये विशदप्रतिपत्तेस्स्मरणावश्यम्भावेन स्मृत्या-रूढाया अपि विशदप्रतिपत्तेस्सत्त्वमपेक्षितमिति हि शङ्काभिप्रायः । तत्र च यथा-

* श्रुतप्रकाशिका *

तस्मादात्मविषयं घटादिविषयकञ्च प्रमाणज्ञानं स्वविषयेणात्मना घटादिभिश्च सह स्मृत्यारूढमविशदतया प्रतिपन्नमभावप्रतियोगि भवतीत्युपपन्नतरमिति । अनुभूतस्य हि स्मरणसम्भवः, प्रमाणज्ञानं केनानुभूतमिति चेत् , भवतो वा निवर्त्तकज्ञानं केनानुभूतम् ? शास्त्रागमादिति चेत् , अस्माकमप्यात्मसाक्षात्कारस्तद्विधायकवाक्यावगतः स्यात्; घटादिसाक्षात्कारस्तु प्रत्यक्षादिषु येन केनाप्यनुभूतः, मेरुसाक्षात्कारः कथं निषिध्यते ? स हि न केनापि मानेन पूर्वमनुभूतः । उच्यते; इहादृष्टचत्वरद्विरदेन पुरुषेण कथमिह चत्वरे गजो नास्तीत्युच्यते ; संसर्गाननुभवेपि संसर्गिणोरनुभवमात्रेणान्यत्रान्यतरनिषेध उपपद्यत इति चेत्, एवं तर्हि सुमेरुसाक्षात्कारसंसर्गाननुभवेऽपि मेरुसाक्षात्कारयोः केनाप्यवगमात् तत्संसर्गनिषेध उपपद्यते, प्रमाणज्ञानानामभावप्रतियोगित्वादभावस्य तदानीं ग्राहकं नास्तीति यदुक्तं तत् सर्वप्रमाणज्ञानाभावानां युगपदनुभवासम्भवात् कतिपयमानज्ञानाभावस्य मानान्तरेण ग्रहणोपपत्तेश्च परिहृतम्; एवं भावरूपपक्षे विरोधपरिहारसाम्यं दर्शितम् । ननु विरोधसाम्यं वक्तुमशक्यम्, अज्ञानस्य नञर्थप्रतियोग्यवच्छिन्नतयैवावगन्तव्यत्वे सति हि नञर्थप्रतियोगिनस्तस्य ज्ञानस्य स्वविषयाश्रयभूतप्रत्यगर्थावच्छिन्नत्वेन भातत्वात् विषयाश्रयभूतप्रत्यगर्थज्ञाने सति तन्निवर्त्याज्ञानस्थितिविरोधः , न हि भावरूपस्याज्ञानस्य ज्ञानप्रतिपत्त्यपेक्षा, स्वरूपेणैव प्रतिपत्तिसम्भवात् । न हि भाव-

* भावप्रकाशिका *

श्रुतभाष्येण परिहारसम्भवात् परिहारान्तरं टीकायामारब्धमित्यदोषः । यद्यपि ज्ञानसत्त्वे भासमानसत्त्वमपेक्षितमिति शङ्का मन्दा, अथापि सा मन्दविषन्यायेन परिहर्तव्येति परिहार उपन्यस्त इति द्रष्टव्यम् । ( मेरुसाक्षात्कारः कथं निषिध्यत इति ) यद्यपि स्वस्य मेरुसाक्षात्काराभावेपि परकीयमेरुसाक्षात्कारस्य पुराणादिनाऽवगतस्य स्वात्मनि निषेधेनानुपपत्तिः , तथापि स्वीयमेरुसाक्षात्कारनिषेधस्थले स्वीयमेरुसाक्षात्कारस्याप्रसिद्धत्वादिति शङ्काभिप्रायात् । ( इहादृष्टचत्वरद्विरदेनेति ) चत्वरीयो द्विरदश्चत्वरद्विरदः ( नञर्थप्रतियोग्यवच्छिन्नतयैवेति ) यद्यपि अभावस्यैव भावरूपाज्ञानस्यापि विरोधितया नञर्थत्वमविशिष्टं तथापि अभावत्वपक्षे अभावस्य स्वप्रतियोग्यवच्छिन्नत्वेन भाननियमवद्भावत्वपक्षे ज्ञानविरोधित्वेनैव

ऽन्यत्राभिनिवेशात् । भावरूपस्याज्ञानस्यापि ज्ञान- मिति सिध्यतः प्रागभावसिद्धाविव सापेक्षत्वम- स्त्येव । तथा हि, अज्ञानमिति ज्ञानाभावस्तदन्यस्तद्वि- रोधी वा? त्रयाणामपि तत्स्वरूपज्ञानाऽवश्याश्रय- णीया । यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते; तथापि प्रकाशविरोधीत्यनेनाकारेण प्रति- पत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव । भवदभिमताज्ञानं

* श्रुतप्रकाशिका *

रूपस्य घटस्य आश्रयप्रतियोगिज्ञानसापेक्षत्वं दृष्टमित्यत्राह ( भावरूपस्येति ) कथं सापेक्षत्वमित्यत्राह ( तथा हीति ) अभावस्य नञर्थत्वसम्भवात् तदुक्तिः । प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधीति वा तत्प्रतिपत्तिः, तदा तस्य ज्ञानस्य स्ववि- षयावच्छिन्नत्वेन प्रतिपन्नत्वात्प्रत्यगर्थस्य घटादेर्वा ज्ञाने सति तन्निवर्त्यमज्ञानं न गृह्यतेत्यर्थः । यथा प्रकाशविरोधित्वेऽपि तमसः तत्प्रतिपत्तौ न प्रकाशापेक्षा तद्वदिहापीत्यत्राह ( यद्यपीति ) भावरूपमज्ञानमपि स्वरूपेण सिध्यतीत्यत्राह ( भव- दभिमतेति ) मुग्धोऽस्मि मूढोऽस्मीति स्वरूपेण सिद्धिरिति चेन्न, कस्यचित्पुरुषस्य कस्मिंश्चिद्विषये हि मोहः "स विमलमतिरेति नात्ममोहम्" 'दिङ्मोहालातचक्रादि- भ्रान्तयश्च कथं पुनः" इत्यादिषु विषयाश्रयावच्छिन्नत्वेन हि मोह उपलभ्यते ; मुग्धो- ऽस्मीत्यनेनाश्रयावच्छिन्नत्वं प्रतीयते , विषयोऽप्यर्थवशात् सिद्धः , इदं दूषणं 'संविस्सिध्यति वा न वे'त्यत्रोक्तया दिशा फलितम् । ततश्च स्वात्मविषयमज्ञानं विष- याश्रयभूतप्रत्यगर्थप्रतिपत्तिसद्भावहतम् , घटाद्यज्ञानन्तु विषयभूतघटाद्यवगमविरुद्धम् , मायाशब्दादिभिरज्ञानप्रतिपत्तौ विषयाश्रयापेक्षा नेति चेन्न, मायादिशब्दाना- मपि व्युत्पत्तिनैरपेक्ष्येण बोधकत्वासम्भवादज्ञानादिपदपर्यायत्वेन च व्युत्पन्नत्वात्स्व-

* भावप्रकाशिका *

प्रतीतिनियमाभावदितिभावः । ( अभावस्य नञर्थत्वसम्भवादिति ) भावरूपा- ज्ञानवादिना ज्ञानाभावत्वस्य सर्वात्मनानभ्युपगमेपीति शेषः । ( स्वरूपावच्छिन्ना-

न [illegible]वत्स्वरूपेण सिध्यति, अपि त्वज्ञानमित्येव; तथा [illegible]तीति ज्ञानाभाववत्तदपेक्षत्वं समानम्। ज्ञान-

* श्रुतप्रकाशिका *

रूपेण सिद्धिर्दुर्वचे[illegible]ायेण न कदाचित्स्वरूपेण सिध्यतीत्युक्तम्। ननु स्वरूपावच्छिन्नाज्ञानप्रतीतौ [illegible]र्थप्रतियोगिज्ञानावच्छिन्नतया सिद्धावपि न निवर्त्यनिवर्त्तकविरोधः, स्वरूपभू[illegible]ादन्यतया तत्सिद्धेः, स्वरूपज्ञानं हि नाविद्यानिवर्त्तकम्, किन्तु प्रमाणज्ञानमेव; अतो न विरोध इति। नैवम्; मामन्यं च न जानामीति विषयाश्रयसम्बन्धिज्ञानावच्छिन्नतया प्रतीतेः। न हि स्वरूपभूतज्ञानं साश्रयं सविषयं च तव मतम्. स्वरूपं किमाश्रयतयैवाज्ञानस्यावच्छेदकम्? उत विषय-

* भावप्रकाशिका *

ज्ञानप्रतीताविति) प्रत्यगर्थाज्ञानप्रतीतावित्यर्थः। (स्वरूपभूतज्ञानादन्यतया तत्सिद्धेरिति) यद्यपि प्रमाणज्ञानादन्यतया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः, अन्ततो गत्वा प्रमाणज्ञानविरुद्धया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः, नहि प्रमाणज्ञानविरुद्धमित्युल्लिख्यमानत्वमात्रेण विरोधिप्रमाणज्ञानमाविर्भूतमुपस्थितं स्यात् येन विरोधो भवेत्। नहि तेजोविरुद्धोन्धकार इत्युल्लेखमात्रेणान्धकारस्य तेजसा निवृत्तिर्भवति। इयञ्च शङ्कापिशाची स्मृतेः सर्थमाणसमकालवर्तित्वनियमाभावादिति पूर्वमेव प्रक्षिप्ता च। ततश्च किं वैषम्यमभिप्रेत्य स्वरूपज्ञानादन्यतया प्रतीतिरस्तु, नतु प्रमाणज्ञानविरोधितयेत्युपन्यस्यत इति चेत्; अत्र ब्रूमः,—प्रमाणज्ञानस्य तदानीमसत्त्वे प्रमाणज्ञानविरुद्धतया अज्ञानस्योल्लेखस्साक्षिणा न युक्तः, ज्ञातत्वाज्ञातत्वोपरागाभावे साक्षिणस्स्वाध्यस्तविद्यमानमात्रग्राहित्वात्, तथा च प्रमाणज्ञानस्य साक्षिणोल्लेखमभ्युपगच्छता प्रमाणज्ञानस्य सत्त्वमभ्युपगन्तव्यम्—इति। (नहि स्वरूपभूतं ज्ञानं साश्रयं सविषयञ्चेति) यद्यपि स्वरूपज्ञानस्याज्ञानादिभासकस्य सविषयत्वमस्ति, तथापि साश्रयत्वाभावेन द्वित्वावच्छिन्नाभावमभ्युपेत्य तथोक्तमिति द्रष्टव्यम्। यद्वा, मामहं न जानामीति प्रत्यगर्थकर्मकत्वस्य ज्ञाने प्रतीते स्वरूपज्ञानस्य स्ववृत्तिविरोधेन प्रत्यगर्थविषयत्वाभावमभिप्रेत्य स्वरूपज्ञानस्य सविषयत्वाभावकथनमिति द्रष्टव्यम्। ननु मामहं न

प्रागभावस्तु भवताप्यभ्युपगम्यते । प्रतीयते च । मया- भ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञो मामन्यं च न

* श्रुतप्रकाशिका *

तयापि ? आद्ये न त्वदभिमतसिद्धिः, तदानीं प्रत्यगर्थस्य ...सादन्येन केनापि विशिष्टत्वमेव हि सिध्यति । विषयतयावच्छेदकत्वे प्रत्यगर्थस्याज्ञानमावरणं स्यात्, आवरणत्वं च तद्विषयकज्ञानप्रतिबन्धकत्वम्; अतस्तर्हि प्रमाणज्ञानप्रतीत्यवश्यम्भा- वादुक्तविरोधोऽनतिवृत्तः, अतः स्वरूपभूतज्ञानावच्छिन्नप्रतीत्यभ्युपगमोऽनुपपन्नः । उभयत्र साधनदूषणयोस्तुल्यत्वाद्भावरूपमज्ञानं परिगृह्यतामित्याशङ्क्य लाघवन्यायेन परिहरति (ज्ञानप्रागभावस्त्विति) अभ्युपगम्यते—अहमज्ञ इति प्रतिपन्नस्य अभावरूपत्वे हि विप्रतिपत्तिः न त्वभावानभ्युपगमः, अन्यथा प्रमाणज्ञानस्य प्रागभावाभावादना- दित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात्; अतो ज्ञानाभावस्त्वयाऽभ्युपगत इत्यर्थः । प्रतीयते च—लोके तत्तज्ज्ञानाभावविवक्षया ज्ञानं नास्तीति व्यवहारदर्शनात् अप्रतिपन्ने च विवक्षानुपपत्तेः ज्ञानाभावप्रतीतिरस्त्येवेत्यर्थः । अतः सम्प्रतिपन्नेन ज्ञानाभावेनैवाहमज्ञ इति प्रतीत्युपपत्तेरतिरिक्तकल्पने हेत्वभावाल्लाघवेन स एव अहमज्ञ इति प्रतीतेर्विषयतयाभ्युपगन्तव्य इत्यर्थः । ननु उभयाभ्युपगतो- ऽभावो नाम कश्चिन्नास्ति, भावान्तरमभावः स्वमते । परमते तु भावातिरिक्तः, तत्कथमुभयाभ्युपगतेनाहमज्ञ इति प्रतीत्युपपत्तिः ? उच्यते, नह्युभयाभ्युपगत इत्युक्तम्, किन्तु भवताभ्युपगम्यत इत्युक्तम् । अभावशब्दवाच्यत्वेन कश्चिदर्थ उभाभ्यामभ्युपगतः, स च भावरूपस्तदतिरिक्त इति इयदेव विमतम्, अत्र भाव-

* भावप्रकाशिका *

जानामीत्यत्र न नञर्थप्रतियोगिनि ज्ञाने साश्रयत्वसविषयत्वप्रतीतिः, येनायं दोषः स्यात्, अपितु नञर्थे एवाज्ञाने इत्याशङ्क्य तत्रापि प्रत्यगर्थविषयत्वं तदावरण- त्वम्, तच्च तद्विषयकज्ञानप्रतिबन्धकत्वमिति घट्टकुटीप्रभातवृत्तान्त इत्याह (स्वरूपं किमाश्रयतयेत्यादिना)। (स्वस्मादन्येन केनापीति) स्वरूपभूतज्ञानान्य- मात्रार्थकत्वस्य परेणोक्ततया तदन्येन येन केनाप्याश्रितत्वमात्रं सिद्ध्येदिति भावः। (प्रमाणज्ञानप्रतीत्यवश्यम्भावादिति) तत्प्रतीतौ प्रत्येतव्यस्य प्रमाणज्ञानस्य सत्त्व-

जानन्स्वम्' इत्यनुभूयत इत्यभ्युपगन्तव्यम् ॥ नित्यमुक्त-
स्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न

* श्रुतप्रकाशिका *

त्वेन यः स्वाभिमतो न च तदतिरिक्तत्वेन अभावशब्दवाच्यतया पराभिमतः तयोरन्यतरेणाहमज्ञ इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति न विरोधः । तदुभयाभावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात् । नैवम्, सिद्धान्तद्वयानभिज्ञानकृतं हीदं चोद्यम्, स्वयंप्रकाशस्यैव ज्ञानस्य सङ्कोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतम्, स्वप्रकाशज्ञानव्यतिरेकेण भावरूपमज्ञानं पराभिमतम्; अतस्तयोः कथमैक्यम्? तर्हि ज्ञानसङ्कोचरूपावस्थां परित्यज्याज्ञानशब्दवाच्यत्वेन परोक्तं भावरूपमज्ञानं स्वीक्रियताम्, भावरूपत्वाविशेषादिति चेत्; प्रामाणिकं परित्यज्य अप्रमाणिकं स्वीक्रियतामितीदमनुपपन्नम् "न विज्ञातुर्विज्ञातेर्विपरिलोपो वर्तते' 'विद्यते' सर्वं हि पश्यः पश्यति' तथा तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते' । 'अप्राणिमत्सु स्वल्पा सा" इत्यारभ्य—"हिरण्यगर्भोऽतितरां पुंसः शक्त्युपलक्षितः" इति श्रुतिस्मृतिसिद्धत्वात् ज्ञाननित्यत्वं तत्सङ्कोचादिकञ्च प्रामाणिकं कथं त्यज्येत? भावरूपाज्ञानं तु कल्प्यम्, कल्पकं चान्यथासिद्धमिति तदप्रामाणिकं कथं स्वीक्रियते; कल्पनायां हि लाघवन्यायश्च प्रवर्तते, न तु प्रमाणप्रतिपन्नेऽर्थे; अतोऽहमज्ञ इति ज्ञानप्रागभाव एव प्रतीयते । एवमहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे, भावरूपपक्षोपपत्त्यभावरूपपक्षानुपपत्तिरूपानुकूलतर्काभाव उक्तः ॥ अथ प्रतिकूलतर्कपराहतिरुच्यते (नित्येति) नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्येतिपदं हेतुगर्भम्, नित्यमुक्तत्वम्—परमार्थतो दोषासंस्पृष्टत्वम्, अतः परमार्थदोषो न सम्भवति, स्वानुभवस्वरूपत्वादपरमार्थपरानुभवो न सम्भवतीत्यर्थः ।

❁ भावप्रकाशिका ❁

मावश्यकमित्यत्र भावः पूर्वोक्तो द्रष्टव्यः । प्रतीयतेचेति व्याख्येयं पदम्, नन्नुभयाभ्युपेत एक इत्युक्तमित्यर्थः । नन्नुभयाभ्युपेतो ज्ञानप्रागभाव एवाहमज्ञो मामन्यञ्च न जानामीत्यनुभूयत इत्यभ्युपगन्तव्यमिति भाष्ये उक्ततया न तद-

सम्भवति, स्वानुभवस्वरूपत्वात्। स्वानुभवस्व... अपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत्; किमिदं तिरोहितस्वस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेत्; स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूप[illegible]? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरू[illegible]पपद्यत इति चेत्; एवं तर्हि प्रकाशाख्यधर्मानभ्यु[illegible]न प्रकाशस्यैव स्वरूपत्वादन्यतस्स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम्॥ किञ्च— ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं

---

* श्रुतप्रकाशिका *

अन्यानुभवरूपप्रदेशभेदाभावाञ्चेत्येकशब्दाभिप्रायः। एकशब्देन ज्ञेयत्वाभावश्च विवक्षितः। अभिप्रेतं हेतुगर्भत्वं विवृणोति (स्वानुभवस्वरूपत्वादिति) अविद्यानिवृत्तिदशायाम् अनुवर्तमानम् अविद्यावभासप्रत्यनीकं स्वानुभवैकस्वभावत्वं हेतुतया विवक्षितम्, न तु भ्रमवेलायामपि विद्यमानं स्वयंप्रकाशत्वमात्रम्, अतः स्वानुभवैकस्वभावत्वस्य प्रागपि विद्यमानत्वादित्यर्थः। स्वानुभवस्वरूपस्यापि तिरोधानादज्ञानानुभवः सम्भवतीति शङ्कते (स्वानुभवेति) अभिप्रेतं विवरितुं तिरोधानशब्दस्यार्थान्तरं नास्तीतिज्ञापनार्थं प्रश्नपूर्वकं तिरोधानशब्दार्थमाह (किमिदं तिरोहितस्वरूत्वम् अप्रकाशितस्वरूपत्वमिति चेदिति) स्वानुभवरूपस्याप्रकाशितत्वं व्याहतमिति बुद्ध्या दूषयति (स्वानुभवेति) अन्यत इति परिहारं शङ्कते (स्वानुभवेति) अन्यतोऽप्रकाशितस्वरूपत्वे पूर्वोक्तदूषणमतिदिशति (एवं तर्हीति) दूषणान्तरमाह (किञ्चेति) अपरमार्थत्वान्न सत्तया तिरस्कारकम्, अपि तु प्रतीयमानतया तिरस्कारमित्यनुभवपूर्वकस्तिरस्कारः, तिरस्कारपूर्वकोऽनुभवः अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणोऽज्ञानानुभवासम्भवादित्य-

५ भावप्रकाशिका ५

पलापश्चोदनीयः (न तु भ्रमवेलायामपि विद्यमानमिति) यद्यपि स्वानुभवैकस्वभावत्वस्यापि भ्रमवेलायां विद्यमानत्वमस्त्येव, अन्यथा तेन हेतुना अज्ञानानुभव-

स्व[illegible]नुभूतं सत् ब्रह्म तिरस्करोति। ब्रह्म तिरस्कृत्य स्वयं तदनुभ[illegible]विषयो भवतीत्यन्योन्याश्रयणम् ॥ अनुभूतमेव तिर[illegible]रोतीति चेत्; यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभ[illegible] तदा तिरोधानकल्पना निष्प्रयोजना स्यात्, अज्ञ[illegible]रूपकल्पना च। ब्रह्मणोऽज्ञानदर्शनवदज्ञानकार्यतथ[illegible]मतप्रपञ्चदर्शनस्यापि सम्भवात् ॥ किञ्च– ब्रह्मणोऽज्ञा[illegible]नुभवः किं स्वतोऽन्यतो वा? स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्। अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्त्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा। अन्यतश्चेत्; किं तदन्यत्? अज्ञानान्तरमिति

---

* श्रुतप्रकाशिका *

न्योन्याश्रयणमित्यर्थः। एतत्परिजिहीर्षया अनुभवपूर्वकं तिरस्कारं शङ्कते (अनुभूतमेवेति) तत्र दूषणमाह (यदीति) अतिरोहितस्याप्यज्ञानानुभवसम्भवात्तदर्थतिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। तदुपपादयति (ब्रह्मण इति) यथा अतिरोहितस्वरूपस्यापि अपरमार्थभूताज्ञानानुभवसम्भवः तथा अपरमार्थभूतप्रपञ्चानुभवोऽप्यतिरोहितस्य सम्भवतीति तदर्था तिरोधानकल्पना तदर्थाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। अनुभवपूर्वकतिरस्कारपक्ष एव विकल्पमुखेन दूषणमाह (किञ्चेति) स्वतःपक्षे दूषणद्वयम्, अनिर्मोक्षो ब्रह्मस्वरूपनिवृत्तिश्च। रजतानुभवस्यापीत्यपिशब्देन रजतस्य च निवृत्तिः सूचिता; अन्यतःपक्षेऽनवस्था। तिरस्कारपूर्वकानुभवपक्षं

* भावप्रकाशिका *

प्रतिक्षेपायोगात्, तथापि तादृशस्य स्वानुभवैकस्वभावत्वस्य भ्रमवेलायां विद्यमानत्वं न पराभ्युपगतम्, अज्ञानानुभवस्वभावत्वस्याभ्युपेतत्वादिति विशेषः। (नैतदित्या-

चेत्; अनवस्था स्यात् । ब्रह्म तिरस्कृत्यैव स्वयम[illegible]भव-विषयो भवतीति चेत्; तथा सतीदमज्ञानं काचा[illegible]दिवत्स्व-सत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वम[illegible]नस्य न स्यात्॥ अथेदमज्ञानं स्वयमनादि, ब्रह्मण[illegible]त्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करो[illegible]अतो नान-वस्थादयो दोषा इति। नैतत्; स्वानुभ[illegible]स्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षि[illegible]त्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमिति चेत्; तर्ह्यस्यानादित्व-मपास्तम्, अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूप-

* श्रुतप्रकाशिका *

शङ्कते ( ब्रह्मेति ) तिरस्कृत्यानुभवविषय इत्युक्ते सत्तया तिरस्कारकमित्युक्तं स्यात्, न तु प्रतीयमानतया, तदानीं काचादिवत्परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्य-तीत्यर्थः । अथ तिरस्कारानुभवयोर्यौगपद्यं शङ्कते ( अथेदमिति ) नैतदित्यादिना दूषयति । स्वानुभवस्वरूपस्येति हेतुगर्भविशेषणम् । स्वानुभवस्वरूपत्वं स्वाभाविक-मिति परानुभवो हेतुना विना नोपपद्यत इत्यर्थः । हेत्वन्तरेण तिरस्कृतिमाशङ्क्य दूषयति ( हेत्विति ) यौगपद्यपक्षे पूर्वोक्तपक्षद्वयदूषणमप्यापततीत्यभिप्रायेणाह ( अनवस्था च पूर्वोक्तेति ) ज्ञानानिवर्त्यत्वदूषणस्याप्युपलक्षणमियमनवस्था,

* भावप्रकाशिका *

दिना दूषयतीति ) ननु सिद्धान्तेपि 'पराभिध्यानात्तु तिरोहितम्' इत्यादि कथमुप-पादनीयम् । अतिरोहितापहतपाप्मत्वाद्यवस्थस्य पुण्यापुण्यरूपपरमात्मसङ्कल्पेन तिरोधानं न सम्भवत्येव, प्रकृत्यात्मत्वस्वतन्त्रात्मत्वभ्रमशून्यावस्थायां कर्मणोऽप्र-सक्तेः, अतस्तिरोधानान्तरं पराभिध्यानस्य लब्धसत्ताकत्वम्, तस्मिंश्च सति तिरोधान-मित्यन्योन्याश्रय इति चेन्न, कर्मतिरोधानयोर्बीजाङ्कुरन्यायेन प्रवाहानादितया अदोषात्। तन्मते अविद्याया एकत्वाभ्युपगमेन प्रवाहानादित्वानभ्युपगमादिति भावः । ( यौगपद्यपक्ष इति ) यद्यपि हेत्वन्तरेण तिरस्कृतमिति पक्षो न यौग-

स्यैव स्व साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ॥ अपिच— अविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किञ्चिदपि प्रकाशते ? उत किञ्चित्प्रकाशते ? पूर्वस्मिन् पक्षे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरूपदुक्ता । उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशः तिरस्क्रियते ? को वा प्रकाशते ? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासम्भवेन तिरस्कारः प्रकाशश्च युगपन्न सङ्ग

* श्रुतप्रकाशिका *

अनन्तरपूर्वोक्तेः । स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनेऽनिष्टमाह ( अतिरस्कृतेति ) पूर्वं विशदाविशदावभासमभ्युपगम्य दूषणमुक्तम्, इदानीं तमेव दूषयितुमुपक्रमते ( अपिचेति ) विकल्पयति ( अविद्ययेति ) पूर्वोक्तदूषणमतिदिशति ( पूर्वस्मिन्निति ) ( उत्तरस्मिन्निति ) किंशब्दः क्षेपे, अनुपपन्नमित्यर्थः । सच्चिदानन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात्तिरस्कृतातिरस्कृतविभागोऽनुपपन्न इति भावः । ( कोऽयमंशः तिरस्क्रियते को वा प्रकाशत इति ) को वा विशेषस्तिरस्क्रियते— को वा प्रकाशत इत्यस्याप्युपलक्षणार्थमिदम्, निरंशे निर्विशेषे इत्यनन्तरोक्तेः । ( कोऽयमंश इति ) अंशभेदो वक्तुमशक्य इत्यभिप्रायः । तदुपपादयति ( निरंश इति ) प्रकाशमात्रे— मात्रचा अविषयत्वं विवक्षितम्, अविषयभूत इत्यर्थः । ( युगपन्न सङ्गच्छेते इति ) न हि त्वया कालभेदेन प्रकाशतिरस्कारावुच्येते, अपि तु युगपदेव, तदानीमंशभेदाभावादाकारभेदाभा-

※ भावप्रकाशिका ※

पद्यपक्षः तस्य दूषितत्वात्, तथाप्यनवस्था चेत्यत्र चशब्दः पूर्वोक्तयौगपद्यपक्षेऽनुभवपूर्वकस्तिरस्कारः तिरस्कारपूर्वकोऽनुभव इति पक्षद्वयोक्तदूषणमपि सूचयतीति (ज्ञानानिवर्त्त्यदूषणद्वयस्यापीति) इदञ्च तिरस्कारहेत्वन्तरस्याननुभूयमानस्यैव काचादिवत्तिरस्कारकत्वमित्यभिप्रेत्योक्तम्, यदा तु तदपि हेत्वन्तरं हेत्वन्तरतिरस्कृते-

च्छेते ॥ अथ सच्चिदानन्दैकरसं ब्रह्म अविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति ; प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किंरूपा ? एतदुक्तं भवति– यस्सांशस्सविशेषः प्रकाशविषयः, तस्य सकलावभासो विशदावभासः, कतिपयतिरोहितावभासश्च अविशदावभासः । तत्र य आकारोऽप्रतिपन्नः तस्मिन्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते । यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव, अतः सर्वत्र प्रकाशांशे अवैशद्यं न सम्भवति ।

* श्रुतप्रकाशिका *

वाच तौ न सङ्गच्छेते इति भावः । एवं प्रकाशतिरस्कारयोर्यौगपद्यानुपपत्तौ सत्यामप्यविशदशब्देन प्रत्यवतिष्ठते ( अथेति ) अथशब्दोऽनुमतिप्रदाने वर्तते । दूषयति ( प्रकाशेति ) किंरूपा– अनुपपन्नेत्यर्थः । कथमनुपपत्तिरिति शङ्कायां वैशद्यावैशद्यस्वरूपं शिक्षयितुमत्र तदनुपपत्तिञ्च दर्शयितुमाह ( एतदुक्तमिति ) वैशद्यावैशद्यस्वरूपं शिक्षयति ( यस्सांश इत्यादिना ) ज्ञाने तदनुपपत्तिमाह ( तत्रेति ) ( प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यत इति ) धर्म्यभावाद्धर्माभाव इत्यर्थः । ज्ञेयेऽपि ज्ञातांशस्य विशदत्वादज्ञातांशस्याज्ञातत्वाच्च क्वचिदप्यवैशद्यं

* भावप्रकाशिका *

नानुभूतमेव तिरस्करोतीत्यभ्युपगम्यते तदाऽनवस्थैवेति द्रष्टव्यम् । ( अनुमतिप्रदाने वर्तत इति ) पक्षान्तरपरिग्रह इत्यर्थः । यस्सांशस्सविशेष इत्यादेरज्ञानकार्यं न सम्भवतीत्यन्तस्य भाष्यस्य चायमर्थः,– अविशदप्रकाशत्वं हि अविशदत्वविशिष्टं प्रकाशत्वम् अविशदत्वञ्चाप्रकाशमानत्वम्, अप्रकाशमानत्वञ्च धर्मद्वारा धर्मिगतम् । प्रकाशमानत्वञ्च साक्षाद्धर्मिगतम्, ततश्चाप्रकाशमानधर्मकत्वे सति प्रकाशमानत्वमविशदप्रकाशत्वमित्येवावगन्तव्यम् . न त्वविशदत्वप्रकाशमानत्वयोः साक्षादेकनिष्ठत्वम्, विरोधात् । य आकारो अविशदः तत्र प्रकाशमानत्वस्याभावेना-

विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्; तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतीतिरूपावैशद्यं नामाज्ञानकार्यं न सम्भवति– इति॥

अपिच– इदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्त्तते न वा? अनिवृत्तावपवर्गाभावः। निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्; तद्विशदस्वरूपं प्रागस्ति न वा? अस्ति चेत् अविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेन्मोक्षस्य कार्यतया अनित्यता स्यात्। अस्या-

* श्रुतप्रकाशिका *

न सम्भवतीत्याह (विषयेऽपीति) एकस्मिन् वस्तुनि कतिपयांशस्य कतिपयाकारस्य वा अनवभासस्समुदितरूपस्यावैशद्यम्, न तु तत्रापि प्रकाशमानांशस्येत्यर्थः। (तस्मादिति) स्वरूपे प्रकाशमान इत्यस्य न ब्रह्मणीति पूर्वत्रान्वयः, अपि तूत्तरत्र, वस्तुस्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपमवैशद्यं ब्रह्मणि न सम्भवतीत्यर्थः। कतिपयविशेषाप्रतिपत्तिशब्दः कतिपयांशाप्रतिपत्तेरप्युपलक्षणार्थः। मुखान्तरेण दूषणमाह (अपिचेति) (अविद्याकार्यं तन्निवृत्तिश्च न स्यातामिति) विशदस्वरूपस्याविद्याविरोधित्वादिति भावः। (मोक्षस्य कार्य-

* भावप्रकाशिका *

विशदप्रकाशमानत्वाभावात्, यश्च प्रकाशमानस्तत्राविशदत्वलक्षणा, प्रकाशमानत्वाभावात्, ततश्चाविशदत्वलक्षणमप्रकाशमानत्वं धर्मद्वारकम्, प्रकाशमानत्वमद्वारकमित्येवाभ्युपगन्तव्यम्। ततश्च निर्द्धर्मके ब्रह्मणि अविशदप्रकाशमानत्वं न सम्भवतीति टीकाग्रन्थस्याप्यत्रैव तात्पर्यम् अविशदस्वरूपं प्रागस्ति नवेति विकल्पे विशदस्वरूपस्य प्रागसत्त्वे अविशदस्वरूपस्यागन्तुकत्वेनानित्यत्वप्रसङ्ग एवापादनीयः, न मोक्षस्य, व्यधिकरणत्वात्। किञ्च मोक्षस्याविद्यानिवृत्तिरूपत्वेनाभावरूपतया कार्यत्वेपि

ज्ञानस्याश्रयानिरूपणादेवासम्भवः पूर्वमेवोक्तः। अपि च-अपरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासम्भवोऽपि दुरुपपादः, भ्रमहेतुभूतदोषदोषाश्रयत्ववदधि-

* श्रुतप्रकाशिका *

तयेति ) मोक्षस्य– मुक्तस्वरूपस्य। भावरूपत्वे सति ; कारणानेत्यम्, वैशद्यं च भावरूपम्, अतः परमते त्वयोक्तं दूषणं तवैवापततीत्यर्थः । प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्य अनित्यत्वप्रसङ्गः कालात्ययापदिष्टः ) शास्त्रेण तस्य नित्यतया प्रतिपादितत्वादिति चेत्; तदा ब्रह्मणः सविशेषत्वं स्यादित्यभिप्रायः । पूर्वोक्तामाश्रयानुपपत्तिं परोक्तप्रत्यक्षप्रमाणस्य प्रतिकूलतर्कत्वेनाह ( अस्येति ) स्वरूपानादित्वादिमुखेन परिहाराणां प्रतिबन्दीत्वं हृदि निधाय दूषणान्तरमाह (अपि चेति ) यथा दोषदोषाश्रयत्वादेरपारमार्थ्येऽपि भ्रमसम्भवः, तद्वदधिष्ठानापारमार्थ्येऽपि भ्रमस्सम्भवति । अधिष्ठानापारमार्थ्ये तस्यापि प्रपञ्चवदपारमार्थ्येन अधिष्ठानान्तरापेक्षया ऽनवस्था स्यादिति चेत्, तर्हि दोषस्यापि प्रपञ्चवदपारमार्थ्येन दोषान्तरापेक्षया ऽनवस्था स्यात् । दोषस्यापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति चेत्, तर्हि अधिष्ठानापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति । प्रवाहानादित्वेन दुर्घटत्वेन च परिहारोऽपि तुल्यः, दोषः प्रपञ्चदर्शनस्य स्वदर्शनस्य च स्वयमेव निर्वाहक इति न दोषान्तरापेक्षया अनवस्थेति चेन्न; अपरमार्थस्यास्य स्वपरनिर्वाहकत्वासम्भवात् । न हि स्वप्ने द्विचन्द्रज्ञानहेतुभूतोऽङ्गुल्यवष्टम्भः स्वकल्पने दोषनिरपेक्षः, अपरमार्थस्य स्वपरनिर्वाहकत्वं सम्भवतु, तथासत्यधिष्ठानापारमार्थ्येऽपि स्वपरनिर्वाहकत्वादनवस्था न स्यात्, अपरमार्थस्य परं प्रति अधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वसिद्धिरिति चेत्, अपरमार्थस्य परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वमिति तुल्यम्, मिथ्याभूतजगदवभासाद्दोषत्वं सिद्धमिति चेत्, तर्हि तत एवाधिष्ठानत्वमपि सिद्धमिति स्वपरनिर्वाहकत्वमधिष्ठानस्य सिध्यति । अधिष्ठानापारमार्थ्ये भ्रमो न दृष्ट इति चेत्, दोषदोषाश्रयत्वापारमार्थ्येऽपि भ्रमो

* भावप्रकाशिका *

नानित्यत्वापादनं युक्तमित्याशङ्क्य मोक्षस्येत्येतद्व्याचष्टे (मुक्तस्वरूपस्येति) ( वैशद्यञ्च

व्याख्या.

ष्टान्तपारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्वमेव स्यात् ॥

* श्रुतप्रकाशिका *

न दृष्ट इति दृष्टं न तत् इत्यभिप्रायः। ततः किमित्यत्राह (ततश्चेति) एवमहमज्ञो मामन्यं च न जानामीति प्रत्यक्षस्य प्रतिकूलतर्कपराहतिरुक्ता। अत्र केचिदाहुः,—सुप्तोत्थितस्य न किञ्चिदवेदिषमिति परामर्शान्यथानुपपत्तिः भावरूपाज्ञाने प्रमाणम्। कथमन्यथानुपपत्तिः? इत्थम्; न किञ्चिदवेदिषमिति परामर्शो न ज्ञानाभावविषयः, स्वापे ज्ञानाभावस्याननुभूतत्वात्। ज्ञानाभावानुभवे हि प्रतियोगिभूतज्ञानस्य विषयावच्छिन्नस्यावभासोऽभ्युपगन्तव्यः, तदभ्युपगमे सुषुप्तिव्याघातः। न चास्मरणलिङ्गजन्यं ज्ञानाभावविषयमनुमितिरूपज्ञानमिदमिति वाच्यम्; असरणस्याननुभवव्याप्यत्वाभावात्. पथि गच्छता स्पृष्टं हि तृणादिकं न स्मर्यते; अतः सुषुप्तावनुभूतं भावरूपमज्ञानं स्मर्यते न किञ्चिदवेदिषमिति, अतस्तदन्यथानुपपत्त्या भावरूपाज्ञानसिद्धिरिति। नैतदुपपद्यते,— भावरूपत्वेऽप्यज्ञानस्य प्रतियोग्यपेक्षत्वोपपादनात् प्रतियोगिनश्च सुषुप्तावनवभासात् अज्ञानानुभवाभावेन तत्स्मरणानुपपत्तेः, प्रतियोग्यवभासे सुषुप्तिव्याघातस्तथैवोक्तः। नच तदन्यवाचिनञर्थप्रतियोगिस्वरूपभूतं ज्ञानं तदानीमवभातमिति वाच्यम्, न किञ्चिदवेदिषं मामन्यं च न जानामीतिविषयावच्छिन्नज्ञानस्य प्रतियोगित्वावगमात्, अतस्तदनवभासे अज्ञानानुभवायोगात् तत्स्मरणानुपपत्तिः। किञ्च सुषुप्तौ निर्विकल्पकेन वा सविकल्पकेन मनोव्यापारेण वा भावरूपाज्ञानानुभवः? प्रथमे स्वाभिमतनिर्विकल्पकस्य साक्षिचैतन्यावभासरूपस्य संस्काराधायकत्वानभ्युपगमात्प्रति-

* भावप्रकाशिका *

भावरूपमिति) विशदस्वरूपश्च भावरूपमित्यर्थः। (तदनवभासे अज्ञानानुभवायोगादिति) प्रमाणज्ञानानवभासे तदन्यत्वेनाज्ञानानुभवायोगात् प्रमाणज्ञानस्यावभासोऽपेक्षितः। ततश्चावभास्यमानस्य प्रमाणज्ञानस्यापि पूर्वोक्तरीत्या सत्त्वमपेक्षितमिति तदन्यरूपमज्ञानं कथमवभासेतेत्यर्थः। (निर्विकल्पकेन वा सविकल्पकेनेति) नित्येन वा अनित्येन वेत्यर्थः। निर्विकल्पकसविकल्पकशब्दयोर्निष्प्रकारकसप्रकारकपरत्वे परमते

* श्रुतप्रकाशिका *

सन्धानमनुपपन्नम् । न द्वितीयः, सुषुप्तिविरोधेन तदा मनोव्यापारासम्भवात्, अतो न किञ्चिदवेदिषमिति ज्ञानं न स्मरणम्, किन्तु अस्मरणलिङ्गकं ज्ञानाभावविषयमनुमितिरूपम् । नच पथि गच्छता स्पृष्टतृणाद्यस्मरणेन [illegible]चारः, अन्यव्यासङ्गादिसंस्कारविरोध्यभावविशेषितस्यास्मरणस्य व्यभिचारा[illegible] "तदन्यधीरतात्पर्यं पटुत्वविरहो धियः । दुःखादितीव्रमुन्मादोऽनभ्या[illegible] का[illegible]कालता ॥ एतैश्चादृष्टवैगुण्यं कल्प्यं संस्कारोधिषु । एतेष्वसत्स्वस्मरणसदा[illegible] ज्ञानाभावोऽनुमीयते" ॥ पथि गच्छता स्पृष्टतृणादिकं पटुतरसंस्कारोदय[illegible]राधिसद्भावान्न स्मर्यते, पथि गच्छन् हि गन्तव्यदेशकार्यचिन्तादिव्यासक्तो भवति, तृणादावादरश्च नास्ति, प्रयोजनाभावात् । तदभावेऽपि गजादिदर्शनस्येव न पटुतरत्वं तृणादिज्ञानस्य, विषयवैपुल्यवैचित्र्याद्यभावात् । जन्मान्तरानुभवजसंस्कारस्तु प्रायणनरकप्रसूतिजन्यतीव्रदुःखाभिभवादनुद्बुद्धः, उन्मादश्च संस्कारोद्बोधविरोधी, अनभ्यासश्च तथा, तस्य विस्मरणहेतुत्वदर्शनात् । कालदैर्घ्यमपि तत्प्रमोषकं दृष्टम्, बाल्येऽनुभूतानां वृद्धावस्थायामस्मरणात् । नचैते हेतवः सुषुप्तौ सन्ति, नच किमप्यदृष्टं संस्कारोद्बोधविरोधि कल्प्यम्, कल्पकाभावेन सौषुप्तिकज्ञानस्य तद्विषयार्थस्मरणविरोध्यदृष्टस्य च कल्पनायोगात् । यदि किञ्चित्कल्पकतयोत्प्रेक्ष्येत तदाप्यक्लृप्त्या निर्वाहे सम्भवति न कल्पनमुपपद्यते । एवमन्यपरत्वादिसंस्कारनिरोधकहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदं न किञ्चिदवेदिषमिति ज्ञानम्, त्वयाऽपि ज्ञानाभावः सुषुप्तावभ्युपगतः, स चोक्तलिङ्गानुमेय एव इत्यभ्युपगन्तव्यम्, तदस्माकमपि तुल्यम्, अतः स्मृतित्वानुपपत्तेरनुमितिरूपत्वोपपादनाच्च न किञ्चिदवेदिषमिति ज्ञानमन्यथैवोपपन्नमिति न ततो भावरूपाज्ञानसिद्धिरिति । ईदृशदुर्वादानामनुपपन्नत्वं भावरूपाज्ञानविषयप्रत्यक्षप्रतिक्षेपतः सिद्धम् ॥ .... .... .... .... .... .... .... .... ....

* भावप्रकाशिका *

अज्ञानान्तःकरणतद्धर्मादिभासकसाक्षिचैतन्यस्वरूपस्य निष्प्रकारकत्वाभावात्, अखण्डार्थवाक्यजन्यस्य वृत्तिरूपज्ञानस्य निष्प्रकारकत्वदर्शनेन वृत्तिज्ञानस्य सप्रकारकत्वनियमाभावाच्च, निर्विकल्पकसविकल्पकशब्दाभ्यां साक्षिस्वरूपचैतन्यवृत्ति-

व्या.

—( अविद्यानुमाननिरासः )—

यदुक्तम्—अनुमानेनापि भावरूपमज्ञानं सिद्ध्यतीति। तदयुक्तम्; अनुमानासम्भवात्। ननूक्तमनुमानम्। सत्यमुक्तम्, दुरुक्तं तु तत्; अज्ञानेऽप्यनभिमताज्ञानान्तरसाधने विरुद्धत्वाद्धेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम्, साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयेत्। ततश्चाज्ञानकल्पना निष्फला

* श्रुतप्रकाशिका *

अथानुमानं दूषयति– ( यदुक्तमित्यादिना ) ( अनुमानासम्भवादिति ) त्वदुक्तमनुमानमाभास इति भावः। कथं दुरुक्तत्वमित्यत्राह ( अज्ञानेऽपीति ) कथमज्ञानान्तरसाधनमवश्यं भावि? तस्य कथमनभिमतत्वम्? इत्याशङ्कायां तदवश्यम्भावमुपपादयति ( तत्रेति ) अज्ञानस्यानभिमतत्वमुपपादयति ( साधने चेति ) ततः किमित्यत्राह ( ततश्चेति ) अस्य प्रमाणज्ञानस्य अप्रकाशितार्थप्रकाशकत्वात्, स्वविषयावरणाज्ञानान्तरसाधकत्वे सति तदज्ञानं ब्रह्मस्वरूपाच्छादकं सिषाधयिषितमज्ञानमावृणोति, तेनावृतत्वात्तदज्ञानं ब्रह्मणा न साक्षात्क्रियते, अपरमार्थस्याप्रतीयमानस्य कार्यकरत्वायोगादज्ञानकल्पना निष्फला स्यात्। तिरोधानरूपकार्यार्थं हि तत्कल्पना, यद्यसाक्षात्कृतमेव कार्यकरं तदा सत्तया कार्यकरमिति काचादिवदसत्यत्वात् ज्ञाननिवर्त्यं न स्यात्; एवमज्ञानस्य ज्ञाननिवर्त्यत्वनिष्फलत्वे

* भावप्रकाशिका *

ज्ञानपरिग्रहं सिद्धवत्कृत्य दूषणानुपपत्तेर्नित्यानित्यज्ञान एव निर्विकल्पकसविकल्पकशब्दाभ्यां विवक्षिते इत्येव युक्तमिति द्रष्टव्यम्॥ .... .... .... ....

भाष्ये– हेतोरनैकान्त्यमिति। अप्रकाशितार्थप्रकाशत्वरूपलिङ्गजन्यायाः स्वप्रागभावेत्यादिसाध्यविषयकानुमितेरप्यप्रकाशितार्थप्रकाशकत्वं स्वीकर्तव्यम्, इतरथा तस्याः प्रकाशितप्रकाशकत्वमप्रकाशकत्वं वा स्यात्। ततश्च तस्यामनुमितौ हेतुसत्त्वादनुमितिविषयीभूताज्ञानावारकाज्ञानानभ्युपगमेन स्वविषयावरणपूर्वकत्वलक्षण साध्याभावेन हेतोरनैकान्त्यमित्यर्थः। यद्यपि परैः परोक्षस्थलमात्र एव वृत्तिनिर्गमा-

* श्रुतप्रकाशिका *

कारणतयाऽनभिमताज्ञानान्तरसाधकत्वम् , तदसाधने चानैकान्त्यमुक्तम् । ननूक्त-हेतुजन्यं ज्ञानं सम्यङ्निश्चयरूपं चेत्; तद्विरोधादेव न हेतोरनैकान्त्यम् । यदि न सम्यक् तथापि न हेत्वनैकान्त्यम्, अप्रकाशितार्थप्रकाश[illegible]हेतोस्तत्र वृत्त्य-भावात् । उच्यते ; हेत्वनैकान्त्यपरिहारः साध्यावि[illegible]स्य प्रमितिरूपत्वं

* भावप्रकाशिका *

[illegible]; का[illegible]
भावेनाज्ञाननिवर्तकत्वस्याभ्युपगमेन परोक्षवृत्तिमात्रे [illegible]चारस्तुवचः । तथापि परोक्षस्थले विषयावस्थचैतन्यस्थाज्ञाननिवृत्तावपि [illegible]प्रमातृगताज्ञाननिवृत्तेरभ्युपेत-त्वात् परोक्षज्ञानमात्रे व्यभिचारो नोद्भावित इति वदन्ति । केचित्तु—इदमुप-लक्षणं परोक्षज्ञानमात्रस्येति मन्यन्ते । अत्र जडविषयकज्ञानमात्रे व्यभिचारश्च बोद्धव्यः, जडावारकाज्ञानाभावात् । जडस्याप्रसक्तप्रकाशत्वेन परैरावरणानभ्युप-गमात् । नच जडावच्छिन्नचैतन्यावारकमज्ञानं सम्भवतीति वाच्यम्, घटविषयक-ज्ञानस्य घटावच्छिन्नचैतन्यावारकाज्ञाननिवर्तकत्वस्य भिन्नविषयत्वेनासम्भवात् । नच सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थित इत्युक्तरीत्या घटादिज्ञानमपि तदवच्छि-न्नचैतन्यविषयमितिवाच्यम्, 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इत्यादिश्रुतिविरोधात् । तथाहि सति घटोस्तीतिज्ञाने सद्रूपब्रह्मस्फुरणेन ब्रह्मसाक्षात्कारादविद्यानिवृत्तिप्रसङ्गः । नच तस्य ब्रह्ममात्रविषयकत्वाभावात् । नाज्ञाननिवर्तकत्वमितिवाच्यम्; दण्डी देवदत्त इति विशिष्टज्ञानस्य विशेष्याज्ञाननिवर्त-कत्वानापत्तेरित्यादिदूषणं द्रष्टव्यम् । तस्य प्रमाणज्ञानस्याप्रकाशितार्थप्रकाश-कत्वादित्यस्यानन्तरं तस्य हेतोरितिशेषः पूरणीयः, अतः स्वविषयावरणाज्ञाना-नन्तरसाधनत्वे सतीत्यस्य नान्वयानुपपत्तिरिति द्रष्टव्या ( तद्विरोधादेव न हेतोर-नैकान्त्यमिति ) नचासल्लिङ्गजन्याया अप्यनुमितेर्विषयाबाधेन प्रमात्वसम्भवान्न विरोध इति वाच्यम्, असल्लिङ्गस्य प्रमायामसामर्थ्यात्, वह्निमत्पर्वते व्यभिचारि-लिङ्गजन्यानुमितेरपर्वतीयवह्निविषयतया वा पर्वतस्थपाषाणादौ वह्नित्वविषयतया वा भ्रमत्वावश्यम्भावात् . लिङ्गोपहितलैङ्गिकभानेन भ्रमत्वावश्यम्भावाच्चेतिभावः । ( तत्र वृत्त्यभावादिति ) अप्रकाशितार्थप्रकाशकत्वस्याबाध्यव्यवहारानुगुण्यरूप-प्रमात्वपर्यवसितस्य तत्रानुमितावभावादितिभावः । अज्ञानानुमितेः प्रमात्वे प्रमा-

* श्रुतप्रकाशिका *

प्रतिक्षिपति ; ज्ञानसम्यक्त्वन्तु हेत्वनैकान्त्यपरिहारं प्रतिक्षिपति ; अतो ज्ञानस्य सम्यक्त्वे तस्यो हेतुजन्यत्वं व्याहतम्, हेतोरनैकान्त्यात् । नहि सम्यग्ज्ञानं दुष्टहेतुजन्यम्, हेतोरनैकान्त्यं न चेत्तस्यासम्यङ्निश्चयरूपज्ञानजनकत्वं व्याहतम् . अदुष्टहेतो ज्ञानजनकत्वायोगात् , एवं हेत्वनैकान्त्यपरिहारज्ञानसौष्ठवयोः परस्परवि योरिह समुच्चित्या सिद्धेरन्यतराभावेऽपि साध्यसिद्ध्यभावादनुमानमसमञ्जसमित्य इति। ननु न हेत्वनैकान्त्यम्, साध्यविपयज्ञाने हेतोरवृत्तेः, न ह्यप्रकाशितमज्ञान न प्रकाश्यते, किं तर्हि ? साक्षिचैतन्यसिद्धस्यैवाज्ञानस्याभावाद्विवेचनमात्रं क्रियते । नैवम् ; अहमर्थधर्मभूतप्रकाशोत्तीर्णेन स्वरूपचैतन्येनाज्ञानसिद्धावनुमानप्रामाण्यम्, तत्प्रामाण्येन भावरूपाज्ञानसिद्धिः, तत्सिद्धौ ज्ञातुरपि तत्कल्पितत्वात्तदुत्तीर्णसाक्षिचैतन्येनाज्ञानानुभवसिद्धिरिति चक्रकापत्ते-

* भावप्रकाशिका *

त्वस्य अप्रकाशितार्थप्रकाशकत्वस्य व्यभिचारित्वावश्यम्भावेन व्यभिचारिहेतोः प्रमाजनकत्वविरोधः, अप्रमात्वे प्रमात्वहेतोरव्यभिचारित्वेन सन्निकृष्टत्वावश्यम्भावेन तस्याप्रमाजनकत्वविरोध इत्यभिप्रायेण परिहरति ( उच्यत इत्यादिना ) ( अन्यतराभावेपि साध्यसिद्ध्यभावादिति ) ननु ज्ञानसौष्ठवमात्रेणापि साध्यं सिध्यतीति चेत्, सत्यम् ; तदपि हेत्वनैकान्त्येन सिध्यतीत्यत्र तात्पर्यात् ( अभावाद्विवेचनमात्रं क्रियत इति ) नचाभावविवेकस्याप्रकाशितस्य प्रकाशकतया व्यभिचारस्तदवस्थ इति वाच्यम्,—अभावविवेकावारकाज्ञानसत्त्वेन तन्निवर्तकत्वस्यानुमितौ सम्भवेन व्यभिचाराभावात् । ( अहमर्थधर्मभूतेति ) धर्मभूतज्ञानभिन्नेनेत्यर्थः । ( अज्ञानसिद्धावनुमानप्रामाण्यमिति ) उक्तरीत्या अस्याभावविवेचनानुमितित्वेन व्यभिचाराभावादिति भावः । ( भावरूपाज्ञानसिद्धिरिति ) भावरूपतया अज्ञानसिद्धिरित्यर्थः । ( ज्ञातुरपि तत्कल्पितत्वादिति ) ततश्चाज्ञानकल्पिताहमर्थधर्मभूतज्ञानस्यागन्तुकस्यानाद्यज्ञानभासकत्वासम्भवेनानाद्यज्ञानभासकत्वं नित्यं साक्षिचैतन्यमभ्युपेयमिति भावः । ( तदुत्तीर्णसाक्षिचैतन्यनेति ) ननूत्तीर्णसाक्षिचैतन्यसिद्धौ भावरूपाज्ञानसिद्धिर्नापेक्षिता, साक्षिसिद्धेस्तदेकोपायत्वाभावात् । धारावाहिकज्ञानसुखादिभासकत्वेनापि सिद्धिसम्भवात् । किञ्च मामन्यञ्च न जानामीति

स्यात्, दृष्टान्तश्च साधनविकलः, दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् । सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम् । सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात् । इन्द्रियाणामपि ज्ञानो[illegible]तहेतुत्वमेव

* श्रुतप्रकाशिका *

दुस्तरत्वात् । दूषणान्तरमाह ( दृष्टान्तश्चेत्यादिना )सद[illegible] किं साक्षात्प्रकाशकत्वम् ? उत परम्परया ? उत साक्षाद्वा परम्परया वा प्र[illegible]शकत्वमात्रम् ? उत स्वविषयावरणनिरासकत्वं प्रकाशकत्वम् ? इति चत्वारो विकल्पाः । तत्र प्रथमे कल्पे दृष्टान्तः साधनविकलः , द्वितीये तु पक्षे असिद्धिः , तृतीये तु इन्द्रियेष्वनैकान्त्यम् , तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् साक्षाद्वा परम्परया वा प्रकाशकयोरन्यतरत्वाच्चेषाम् , इन्द्रियाण्यपि पक्षीकृत्य तेषामपि तथाविधवस्त्वन्तरपूर्वकत्वकल्पनमयुक्तम् । आहङ्कारिकाणामिन्द्रियाणामुत्पत्तेः स्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकत्वाभावात् , आलोक एव हि तादृशः । चतुर्थपक्षे तु साध्याविशिष्टतेत्यभिप्रेत्य प्रथमकल्पे दूषणमाह– दृष्टान्तश्च साधनविकल इति । कथं ज्ञानस्यैव साक्षात्प्रकाशकत्वमिति -शङ्कायां तदुपपादयति ( सत्यपीति ) ज्ञानस्यैव प्रकाशकत्वमित्यनेन द्वितीयकल्पे हेतोः पक्षे असिद्धिः फलिता । इन्द्रियाणामित्यनेन तृतीयपक्षे इन्द्रियेष्वनैकान्त्यं विवक्षितम् । दीपप्रभायाः परम्परयापि प्रकाशकत्वं

७ भावप्रकाशिका ७

साक्षिचैतन्येनाज्ञानसिद्धौ साक्षिणः अहमर्थोचीर्णत्वसिद्धिरपि नोपजीव्या । न ह्ययं घट इति ज्ञानेन घटसिद्धौ घटाज्ञानस्य देहान्तःकरणात्मधर्मत्वादिविवेकोऽपेक्षित इति चेत्, सत्यम्, तस्याः प्रणाड्या अपि पौरुषन्यस्तत्वात् तद्रीतिमनुसृत्यान्योन्याश्रय उपन्यस्त इति द्रष्टव्यम् । भाष्ये–सत्यपि दीप इति । ज्ञानमुखाद्यविषयप्रकाशत्वायोगादित्यर्थः । ततश्च ज्ञानेन सहितस्य प्रकाशकत्वमस्तीति शङ्का निरस्ता । ( असिद्धिः फलितेति ) ( ज्ञानस्यैव हि साक्षात्प्रकाशकत्वमिति ) तस्यार्थ इति भावः । ( इन्द्रियाणामित्यनेन तृतीयपक्ष इति ) तर्हीन्द्रियाणामप्युपकारकत्वेन तेषामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयमिति भाष्येणेत्यर्थः । ननु-

न प्रकाशकत्वम् । प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमे[illegible] । प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपका[illegible] हेतोर ज्ञान[illegible]हेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः [illegible]योऽस्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदो[illegible] इति, अपि तु ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वकप्र[illegible]ाशकत्वमङ्गीकृत्येति चेन्न ; न हि

---

* श्रुतप्रकाशिका *

दूरत इत्याह (प्रदीपेति) प्रकाशकत्वव्यवहारः कथमित्यत्राह (प्रकाशकेति) चतुर्थपक्षं शङ्कते (नास्माभिरिति) (निरसनपूर्वकेति) निरसनद्वारकेत्यर्थः । साध्याविशिष्टत्वमाह (नहीति) ज्ञानस्य विषयावरणनिरसनरूपं प्रकाशकत्वं न ख्याति, तद्धि साध्यम्, न सम्प्रतिपन्नमित्यर्थः । मात्रचाऽर्थपरिच्छेदव्युदासः । हिशब्देन विषयावरणनिरासकत्वस्य साध्यत्वं फलितम् । तत्र सम्प्र-

छ भावप्रकाशिका छ

न्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव न प्रकाशकत्वमितिग्रन्थेनेति भ्रमितव्यम् । एतस्य हेत्वभावसमर्थनपरस्य तद्विरुद्धानैकान्त्यसमर्थनाभिप्रायानुपपत्तेः, नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेनेत्येतत्पर्यन्तभाष्यग्रन्थस्य साक्षात्प्रकाशकत्वरूपपक्षव्युदासकत्वेन पक्षान्तराप्रतिक्षेपकत्वात् । ननु यदि सर्वत्र ज्ञानस्यैव प्रकाशकत्वं तर्हीन्द्रियस्य प्रकाशकत्वं न स्यादित्याशङ्क्य इष्टापत्त्या परिहरति ; भाष्ये—इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेवेति । (मात्रचार्थपरिच्छेदव्युदास इति) अत्र 'प्रमाणे द्वयसच् दघ्नच् मात्रच्' इति मात्रच्प्रत्ययः प्रमाणार्थकः । विरोधिनिरसनपर्यन्तस्वरूपं प्रकाशकत्वं न सम्प्रतिपन्नमित्यर्थः । ननु क्षीरमात्रं पिबेत्यत्रेवोत्तरपदत्वनियतव्यवच्छेदार्थं मात्रपदम् । तथाहि विरोधिनिरसनमात्रं न सम्प्रतिपन्नमित्युक्ते इतरसहितन्तु सम्प्रतिपन्नमिति प्रतीयेत, अतो यथोक्त एवार्थः । (तद्धि साध्यम्, न सम्प्रतिपन्नमिति) ततश्च भाष्ये सम्प्रतिपन्नमितिशेषः पूरणीय

विरोधिनिरसनमात्रं प्रकाशकत्वम्, अपि स्वर्थपरिच्छेदः, व्यवहारयोग्यतापादनमिति यावत्; तत्तु ज्ञानस्यैव । यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम्। तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशि[illegible]प्रकाशकत्वमङ्गीकरणीयम्, तथा सति तेषां [illegible]नवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद्धेतोरनैकान्त्यमि[illegible]मनेन ॥ प्रतिप्रयोगाश्च— विवादाध्यासितमज्ञा[illegible] न ज्ञानमात्रब्रह्मा-

* श्रुतप्रकाशिका *

तिपन्नप्रकाशकत्वमाह (अपित्विति) परिच्छेदशब्दस्य परिगितिपरत्वशङ्काव्यावृत्त्यर्थमाह (व्यवहारेति) व्यवहारयोग्यता— व्यवहारप्रतिसम्बन्धित्वम् । ननु न साध्याविशिष्टत्वं हेतोः, स्वप्रागभावनिरासकत्वं स्वविषयावरणनिरसनशब्देन विवक्षितम्, तेन भावरूपनिरसनीयपूर्वकत्वं साध्यमिति । न; स्वप्रागभावनिरासकत्वस्य हेतोरिन्द्रियसम्प्रयोगे अनैकान्तिकत्वात् । भासमानत्वे सति अप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपि पूर्ववद्विकल्पः स्यात्, तत्र साक्षात्पक्षे दृष्टान्तस्साधनविकलः, प्रणाड्येति पक्षे हेत्वसिद्धिः । तृतीये लिङ्गादौ व्यभिचारः, चतुर्थे साध्याविशिष्टता, भासमानत्वविशेषितस्य विषयावरणनिरासकत्वस्यासम्प्रतिपत्तेः । अथास्यानुमानस्य प्रतिकूलतर्कपराहतिमाह (प्रतिप्रयोगाश्चेति) तर्कस्यापि व्याप्तिमूलत्वात् प्रयोगा इत्युक्तम्। स्वदेशगतत्वस्वविषयावरणत्व-

७ भावप्रकाशिका ७

इति भावः । नन्वप्रकाशितार्थप्रकाशकत्वहेतौ विकल्पे दूषितेपि इन्द्रियादिव्यभिचारवारणार्थं भासमानत्वविशेषिततया पूर्वमुपन्यस्तो हेतुर्न दूषित इत्याशङ्क्य विशेष्यदूषणादेव विशिष्टोपि दूषित इत्याह (भासमानत्वे सति अप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेपीति) अनुमाने पक्षस्योभयसिद्धत्वस्यापेक्षितत्वान्नेदमनुमानरूपम्, अपितु प्रतिकूलतर्करूपमित्यभिप्रयन्नाह (अथास्यानुमानस्येति) प्रयोगशब्दस्यानुमान एव प्रयोगप्रसिद्धिमाशङ्क्याह (तर्कस्यापि व्याप्ति-

श्रयम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्; ज्ञात्राश्रयं हि तत्। विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्; विषयावरणं हि तत्। वि[illegible]दाध्यासितमज्ञानं न ज्ञाननिवर्त्यम्, ज्ञानविषयाना[illegible]त्वात्, यज्ज्ञाननिवर्त्यम् अज्ञानं तत् ज्ञानविषयावरणम्; यथा शुक्तिकाद्यज्ञानम्। ब्रह्म

* श्रुतप्रकाशिका *

स्वनिवर्त्यत्वानां प्रतिकूलं यथाक्रममनुमानत्रयम् अज्ञानं पक्षीकृत्योच्यते। विवादाध्यासितम्— ब्रह्माश्रयमतदाश्रयमिति विवादाध्यासितमित्यर्थः। ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः, तद्धि जीवाश्रयम्, अप्रामाणिकमपि भावरूपमज्ञानं ज्ञानमात्रं ब्रह्म चाभ्युपगम्य प्रतिकूलतर्का उच्यन्ते। शुक्त्याद्यज्ञानस्य ज्ञानाश्रयत्वं कथमित्यत्राह (ज्ञात्राश्रयमिति) एवं व्याप्तिर्दर्शिता। अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्तो भवति। प्रतिकूलतर्कान्तरमाह (विवादेति) व्याप्तिं दर्शयति (विषयावरणमिति) अज्ञानत्वे ज्ञानानावरणत्वप्रसङ्ग इत्यर्थः। तृतीयेपि प्रयोगे ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः। अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते। (ब्रह्मेत्यादिना) अज्ञानाश्रयत्वे ब्रह्मणो ज्ञातृत्वप्रसङ्ग इत्यर्थः। द्वितीयेऽपि प्रयोगे ब्रह्मणोऽज्ञानावरणत्वे ज्ञेयत्वप्रसङ्ग-

* भावप्रकाशिका *

मूलत्वादिति) (यथाक्रममनुमानत्रयमिति) प्रतिकूलतर्कत्रयमित्यर्थः। ननु कथमेषामेतदनुमानप्रतिरोधित्वम्, प्रत्युत स्वविषयावरणस्वदेशगतेति विशेषणानुकूलत्वमेव, ताभ्यां हि विशेषणाभ्यां ज्ञानसमानाश्रयं ज्ञानसमानविषयं ह्यज्ञानं साध्यते, तत्कथं प्रकृतानुमानविरुद्धमिति चेत्, अर्थानवबोधात्, स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां साधनं चिन्मात्राश्रितत्वचिन्मात्रविषयत्वप्रतिकूलम्, यथाक्रममनुमानत्रयमज्ञानं पक्षीकृत्योच्यत इत्यर्थः। अज्ञानं न प्रमात्राश्रितम्, नापि प्रमेयजडविषयकम्, अपितु चिन्मात्राश्रितं चिन्मात्रविषयकञ्चेति वदतः स्वदेशगतस्वविषयावरणेत्यनुमानोक्तिर्विरुध्येति पर्यवसितोऽर्थः। (ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्त

नाज्ञानास्पदम्, ज्ञातृत्वविरहात्; घटादिवत् । ब्रह्म नाज्ञानावरणम्, ज्ञानाविषयत्वात् । यदज्ञानावरणं तज्ज्ञानविषयभूतम्, यथा शुक्तिकादि । ब्रह्म न ज्ञाननिवर्त्याज्ञानम्, ज्ञानाविषयत्वात् । यज्ज्ञाननिवर्त्याज्ञानम् तज्ज्ञानविषयभूतम्, यथा शुक्तिक... । विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावाति...ज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्, भवदभिम...ज्ञानसाधनप्रमाणज्ञानवत् । ज्ञानं न वस्तुनो विनाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् । यद्वस्तुनो विनाशकं तच्छक्ति-

* श्रुतप्रकाशिका *

इत्यर्थः । तृतीयेऽपि ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतितर्कमाह ( विवादाध्यासितमिति ) प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्ग इत्यर्थः । यद्वा अनुमानमेवेदम्, धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वमुत्तरोत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यते । ज्ञानं न वस्तुनो विनाशकमित्यादिना व्यतिरेक्यनुमानमुक्तम् । व्यतिरेकव्याप्तिं द्विधा दर्शयति ( यद्वस्तुन इति ) शक्तिविशेषोपबृंहणविरहे सति

ॐ भावप्रकाशिका ॐ

इति ) अज्ञानञ्चेज्ज्ञानं नाश्रयेदित्यर्थः । ( ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्व इति ) ज्ञाननिवर्त्याज्ञानविषयत्व इत्यर्थः । ( उत्तरोत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यत इति ) अपिशब्दो भिन्नक्रमः, अज्ञानानुमितिवदुत्तरोत्तर ज्ञानमपीत्यर्थः । अतो भाष्योक्तस्याज्ञानसाधनप्रमाणज्ञानस्यापि दृष्टान्तत्वं विरुद्ध्यत इति द्रष्टव्यम् । यद्वा, अज्ञानसाधकप्रमाणज्ञानस्योभयसम्प्रतिपन्नत्वाभावादुत्तरोत्तरज्ञानानां सपक्षत्वमुक्तमिति द्रष्टव्यम् । ( न वस्तुनो विनाशकमिति ) प्रागभावस्याभावरूपस्यावस्तुत्वात् वस्तुत्वेपि ज्ञानस्य स्वप्रागभावविनाशरूपत्वेन विनाशकत्वाभावाद्वा न बाध इति भावः । ( व्यतिरेकव्याप्तिं द्विधा दर्शयतीति ) ईश्वरयोगिज्ञानादौ शक्तिविशेषोपबृं-

विशेषोपबृंहितज्ञानमज्ञानं च दृष्टम्, यथेश्वरयोगि- प्रभृतिज्ञानम्, यथा च मुद्गरादि । भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति । अथो- च्येत- [illegible]कज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो [illegible]ने- इति । नैवम्; नहि ज्ञानेन तेषां

## * श्रुतप्रकाशिका *

ज्ञानत्वादिति विशिष्टो हि हेतुः, अत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषात् शक्तिविशेषोपबृंहितं ज्ञानं शक्तिविशेषानुपबृंहितमज्ञानं च द्वयमपि व्यतिरेक- व्याप्तिभूमिरित्युभयत्र व्याप्तिर्दर्शिता । भावरूपमज्ञानं पक्षीकृत्याह ( भावरूपमिति ) भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः । भावरूपत्वज्ञाननिवर्त्यत्वयोर्न व्याप्तिः, भयादेर्भावरूपस्य ज्ञाननिवर्त्यत्वदर्शनादिति व्याप्तिभङ्गमाशङ्कते ( अथो- च्येतेति ) पूर्वज्ञानोत्पन्नानाम्—पूर्वभ्रान्तिज्ञानोत्पन्नानामित्यर्थः । बाधकज्ञानोदयात् प्राक् भयानुवृत्तेस्तदुत्पत्तेः पश्चाद्भयादिनिवृत्तिश्चेति भावः । परिहरति ( नैवमिति ) फलविनाश्यानि हि स्वाश्रयविनाशाधीननश्वरव्यतिरिक्तक्षणिकानि, उक्तविशेष- णेन ज्वालाव्यावृत्तिः, तथा भयाद्यपि कम्पादिकार्यं जनयित्वा स्वयं नश्यतीत्यर्थः ।

## ॐ भावप्रकाशिका ॐ

दृणविरहरूपविशेषणविरहादौ मुद्गरादौ ज्ञानस्वरूपविशेष्यविरहेणेति दर्शयतीत्यर्थः । भाष्ये—अज्ञानञ्च दृष्टमिति । ज्ञानभिन्नञ्च दृष्टमित्यर्थः । ( पूर्वभ्रान्तिज्ञानोत्पन्ना- नामिति ) भ्रान्तित्वेन ज्ञायमानपूर्वज्ञानोत्पन्नानामित्यर्थः । बाध्यज्ञानोत्पन्नाना- मितियावत् । नतु वस्तुतो भ्रान्तित्वं विवक्षितम्, प्रमितिजन्यभयस्यापि भ्रमरूप- बाधकज्ञानेन निवृत्तिदर्शनादिति द्रष्टव्यम् । क्षणिकत्वेन स्वयमेव नश्यतीति भाष्यमयुक्तम्; दीपज्वालादौ व्यभिचारात्. तस्य कारणनाशनाश्यत्वेन स्वयमेव नाशाभावात् । किञ्च नाशकाभावेपि तस्य नाशे अहेतुककार्योत्पत्तिप्रसङ्ग इत्या- शङ्क्य क्षणिकत्वात्स्वयमेव नश्यतीत्यस्य कारणनाशानाश्यं क्षणिकं फलविनाश्य- मित्यर्थ इत्याह ( फलविनाश्यानि हीति ) ( उक्तविशेषणेनेति ) यत् क्षणिकं तत्फलविनाश्यमित्युक्ते ज्वालादौ व्यभिचारस्स्यात् . समवायिकारणनाशानाश्य-

विनाशः, क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः । क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसन्निधान एवोपलब्धेः, अन्यथा-

* श्रुतप्रकाशिका *

न भयादेः क्षणिकत्वम्, चिरोपलब्धेरिति चेन्न ; कारणभूतभ्रान्तिज्ञानाद्यनुवृत्त्या भयादिसन्तत्युत्पत्तेर्हि चिरोपलब्धिः । तर्हि सदा भयसन्ततिरुपलभ्येतेति चेदत्राह ( कारणनिवृत्त्या च पश्चादनुत्पत्तेरिति ) कारणभूतभ्रान्तिज्ञानादिनिवृत्त्या कार्यभूतभयादिसन्तत्यनुत्पत्तेर्न सदोपलब्धिरित्यर्थः । पश्चादनुत्पत्तेरिति पञ्चम्याः क्षणिकत्वेनेति पूर्वत्रान्वयः । कारणनिवृत्त्या च पश्चादनुत्पत्तेः सिद्धेन क्षणिकत्वेन स्वयमेव विनाशादित्यर्थः । यद्वा न क्षणिकत्वमिति शङ्कायाम् उपपन्नं क्षणिकत्वमित्यर्थवशादाकृष्टेन वाक्येनान्वयः; एवं क्षणिकत्वानुबन्धिचोद्यपरिहारः कृतः । यद्वा—नैवमिति दूषणप्रतिज्ञामुपपादयितुं यावद्बाधं भयस्वरूपानुवृत्तेरसिद्धिमाह— क्षणिकत्वेनेति । बाधकज्ञानानन्तरनिवृत्तेरन्यथासिद्धिमाह— कारणनिवृत्त्या चेति । तत्क्षणिकत्वं कुतः सिद्धमिति शङ्कायां तदुपपादयति ( क्षणिकत्वं चेति ) स्थायिनो हि घटादयो दण्डचक्रादिकारणनिवृत्तावप्युपलभ्यन्ते, न तथा ज्ञानदीप-

* भावप्रकाशिका *

क्षणिकफलविनाश्यमित्युक्ते तु न व्यभिचार इति भावः । ( तथा भयाद्यपीति ) तथाच भयाद्यपीत्यर्थः । ( तर्हि सदा भयसन्ततिरुपलभ्येतेति ) नन्वयं दोषोऽक्षणिकत्ववादिनोपि समान एव, भयस्याक्षणिकत्वे सर्वदोपलब्धिप्रसङ्ग इत्यापादनसम्भवादिति चेत् । सत्यम्, कस्यचित्तटस्थस्य ईदृशशङ्कासम्भवात् । केचित्तु बाधकज्ञानेन तेषामनाशे उत्पन्नबाधकज्ञानस्यापि पुंसो भयोपलम्भः किं न स्यादित्याशङ्क्य किं पूर्वभयोपलम्भ आपद्यते ? उत उत्तरभयोपलम्भः ? इति विकल्प्य पूर्वस्य स्वत एव नष्टत्वात्, उत्तरस्य च कारणाभावेनानुत्पत्तेर्न भयोपलम्भप्रसङ्ग इत्याह ; भाष्ये— क्षणिकत्वेन तेषामित्यादिना । इतिटीकातात्पर्यं वदन्ति ( अनन्तरनिवृत्तेरन्यथासिद्धिमाहेति ) अत्र केचित्, क्षणिकत्वेन तेषां स्वयमेव नाशादितिग्रन्थेनैव यावद्बाधं भयस्वरूपानुवृत्तेरनन्तरनिवृत्तेश्च हेतोरन्यथासिद्धिस्सम्भवति । किञ्च कारण-

ऽनुपलब्धेश्चावगम्यते । अक्षणिकत्वे च भयादीनां भयादिहेतुभूतज्ञानसन्ततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च ॥

* श्रुतप्रकाशिका *

ज्वालादिः, तथा भयादेरपि कारणसन्निधानतन्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चितमित्यर्थः । विपक्षे बाधमाह (अक्षणिकत्वे चेति) स्थायिनो हि घटादयः प्रतिक्षणमुत्पाद्यमाना बहवो युगपदुपलभ्यन्ते, तथात्रापि प्रसजेदिति भावः अतो न भयादिकं ज्ञाननिवर्त्यम्, स्वयमेव क्षणिकतया नश्यति । भयसन्तत्युच्छेदो भ्रान्तिज्ञानपरम्परारूपकारणनिवृत्त्या, तन्निवृत्तिश्च दोषनिवृत्त्या, नायं सर्पो रज्जुरेषेति ज्ञानं स्वविषयव्यवहारहेतुः, न तु साक्षाद्भयादिनिवृत्तिहेतुः, रज्जुत्वं हि सर्पव्यावृत्तिः, अतः सर्पव्यावृत्तिरूपरज्जुत्वज्ञानाभावेन सर्पबुद्ध्यनुवृत्त्या पाश्चात्यभयानुवृत्तिः, सर्पव्यावृत्तिरूपरज्जुत्वज्ञानेन सर्पपारमार्थ्याभिमाननिवृत्त्या भयनिवृत्तिरिति सर्वाभ्युपगतप्रकारेण दूषणमुक्तम् । स्वपक्षे तु ज्ञानविशेष एव भयादिः क्षणिकतया स्वयं नश्यति, भयादिरूपज्ञानानुवृत्तिस्तु दोषात्सर्पादिभ्रमानुवृत्तिमूला ; तन्निवृत्त्या च तत्सन्ततिनिवृत्तिरिति परिहारः । एवमर्थदूषणमुक्तम् ॥

* भावप्रकाशिका *

निवृत्त्या पश्चादनुत्पत्तेरित्यनेनानन्तरनिवृत्तेरन्यथासिद्धिरपि दुर्वचा, तस्य ग्रन्थस्य तदन्यथासिद्ध्युपपादकत्वाभावादिति चोदयन्ति । ननु तन्निवृत्तिर्दोषनिवृत्त्या चेत् नायं सर्पो रज्जुरेषेति ज्ञानस्योपदेशो न स्यादित्याशङ्क्य रज्जुत्वज्ञानस्य रज्जुत्वरूपविशेषादर्शनरूपदोषनिवृत्तिद्वारा सर्पपारमार्थ्याभिमानरूपभ्रमोत्पत्तिप्रतिबन्धमुखेन भयानुत्पत्तिहेतुत्वमित्यभिप्रयन्नाह (नायं सर्पो रज्जुरेषेतिज्ञानमिति) स्वविषयव्यवहारहेतुरिति दृष्टान्तार्थः । यथा साक्षात्स्वविषयव्यवहारहेतुर्नैवं भ्रमनिवृत्तौ साक्षाद्धेतुरिति भावः । नच विशेषादर्शनरूपदोषस्य तन्निवर्त्यत्वाभ्युपगमेपि ज्ञानस्य वस्तुनाशकत्वाभ्युपगमप्रसङ्ग इति वाच्यम्, भावस्यैव विनाश्यत्वानभ्युपगमेन विशेषादर्शनस्य विनाश्यत्वाभ्युपगमे दोषाभावात् । नच सिद्धान्ते भावातिरिक्ताभावानभ्युपगमाद्विशेषादर्शनमपि भाव एवेति वाच्यम्,

—( अनिर्वचनीयत्वानुपपत्तिः )—

स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता ; अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः । श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते । मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि [1]"न विलक्षणत्वात्" इत्यधिकरणन्यायेन परिहियते, अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति । प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपग-

* श्रुतप्रकाशिका *

अथ प्रयोगदूषणमाह ( स्वप्रागभावेति ) स्वशब्दः प्राक्शब्दोऽभावव्यतिरिक्तशब्दोऽन्तरशब्दश्च निरर्थकाः, वस्तुशब्दो हि भाववाची । अनुमानेन भावरूपाज्ञानासिद्धिं निगमयति ( अत इति ) श्रुत्यर्थापत्तिभ्यां तत्सिद्धिमाशङ्क्याह ( श्रुतीति ) अनिर्वचनीयत्वे परोक्तहेतुं विस्तरेण दूषयति ( प्रतीतीति ) प्रतीतिः—भ्रान्त्यभ्रान्तिसाधारणरूपा । भ्रान्तिः—विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता । बाधः—आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः । न तथाभ्युपगमनीयम्—नानिर्वचनीयत्वेनाभ्युपगमनीयमित्यर्थः । प्रतीतिभ्रान्तिबाधानां स्वविषयोल्लेखमात्रेण वा अन्यथानुप-

* भावप्रकाशिका *

ज्ञानं स्वप्रागभावव्यतिरिक्तविनाशकं नेत्यभ्युपगमे विरोधाभावादिति भावः ॥

( विद्यमानभेदाग्रहणेति ) विद्यमानस्य भेदस्याग्रहणमित्यर्थः । ( स्वविषयान्यथात्वेति ) अन्यस्यान्यात्मनावभास इत्यर्थः । अत्रान्यस्यान्यात्मनेत्येव भ्रान्तिस्वरूपमितरांशेन तत्कार्यकारणयोः कीर्तनमिति द्रष्टव्यम् । ( स्वविषयोल्लेखमात्रेणेति ) किमनिर्वचनीयोल्लेखित्वादासां प्रतीतीनां तत्र प्रामाण्यम् , उत सतो

1 . शारी . २-अ . १-पा. ४-सू .

मनीयम् । प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाध-विषयः। आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्ध-मासां विषय इति न युज्यते कल्पयितुम् ॥ शुक्त्या-दिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वच-

* श्रुतप्रकाशिका *

पत्त्या वा अनिर्वचनीयसिद्धिरिति विकल्पमभिप्रेत्य प्रथमं दूषयति ( प्रतीयमान-मिति ) प्रतीयमानम्— प्रतीत्युल्लिख्यमानम्, नहि नीलोल्लेखः पीतोल्लेखतया अङ्गीकार्यः, तथा सति सर्वोपप्लवप्रसङ्गादिति भावः। द्वितीयं दूषयति (आभि-रिति ) आभिः —प्रतीतिभ्रान्तिबाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः। प्रतीत्य-न्तरेण— प्रमाणान्तरजन्येन । यद्वा आभिः— लौकिकप्रतीतिभिः । प्रतीत्य-न्तरेण— आगमजन्येन । यद्वा आभिः प्रतीतिभिः— एकाधिष्ठाने सर्पभूदल-नाम्बुधारादिबहुत्वाभिप्रायं बहुवचनम् । प्रतीत्यन्तरेण— बाधज्ञानेन । सङ्क्षिप्तस्य दूषणस्य विस्तरार्थं परमतमनुवदति ( शुक्त्यादिष्विति ) ( अन्यस्यान्यथाभाना-योगाच्चेति ) ननु कथमन्यथाभानायोगः ? उच्यते ; न तावद्धर्मधर्मिणोर्मिथस्ता-दात्म्यभानमन्यथाख्यानम्, पुरोऽवस्थितशुक्लभास्वरशकलं न रजतत्वजातितया

* भावप्रकाशिका *

वा असतो वा प्रतीतिभ्रान्तिबाधविषयत्वासम्भवादनिर्वचनीयत्वं कल्प्यत इत्यर्थः । उपपत्तिनिरपेक्षाणामेवैषां घटादिविषये अयं घट इति प्रत्यक्षस्यैव तत्र प्रामाण्यम्, उतोपपत्तिभिर्निष्कृष्यमाणानामेवैषामिति पर्यवसितोऽर्थः । ( प्रतीत्योल्लिख्यमान-मिति ) नच विषयमपि ह्युल्लिख्यमानमेवेति प्रतीत्युल्लिख्यमानमेव प्रतीतिभ्रान्ति-बाधोल्लिख्यमानमित्युक्ते प्रयोज्यप्रयोजकाभेद इति वाच्यम्, उल्लिख्यमान-मेवोल्लिख्यमानतया अभ्युपगन्तुं युक्तमित्यर्थकत्वेनादोषात् ( विस्तरार्थं परमत-मनुवदतीति ) ननु प्रतीति भ्रान्तिबाधैरज्ञानस्यानिर्वचनीयत्वं प्रागुपन्यस्तम्। अधुना शुक्तिरूप्यप्रतीतिभ्रान्तिबाधा उपन्यस्यन्त इति वैरूप्यात् कथमेतस्य पूर्वोक्त-विस्तररूपत्वमिति चेन्न, पूर्ववाक्यस्यापि शुक्तिरूप्यविषयत्वेन विरोधाभावात् ।

* श्रुतप्रकाशिका *

प्रतीयते, रजतत्वञ्च न भास्वरशकलतया प्रतीयते, शकलं च शकलत्वेन जातिश्च जातित्वेन प्रतीयते, तस्मान्नानयोरन्यतरस्य तदितरत्वभानमिति। नापि धर्म्यन्तरस्य धर्म्यन्तरतादात्म्यमन्यथात्वम्, तत्किं विषयगतम्? उत तज्ज्ञानगतम्? विषये तदन्यथात्वमस्ति चेत् यथार्थैव प्रतीतिः। नास्ति चेत् असत्ख्यातिप्रसङ्गः, यदि ज्ञानगतं विषयोऽन्यः ज्ञानमप्यन्यदेवेति नोपपद्यते। न हि घटज्ञानस्य पटज्ञानत्वसम्भवः, आत्मख्यातिप्रसङ्गश्च, ज्ञानाकारत्वाद्रजतादेः। स्वस्मिन्नसता आकारेण ख्यानमन्यथाख्यानमिति चेन्न, असत्ख्यातिप्रसङ्गात्. अन्यत्र सतोऽन्यत्र ख्यानं ख्यानस्यान्यथात्वमिति चेन्न, खण्डे दृष्टस्य गोत्वस्य मुण्डे दर्शनस्यापि भ्रमत्वापातात्, अन्यत्रैव सतोऽन्यत्र ख्यानमन्यथात्वमिति चेत्; अन्यत्रैव सत्त्वं कथं निश्चीयते? इह बाधादिति चेन्न, भ्रान्तिज्ञानबाधितस्य सत्यरजतस्याप्यन्यत्रासत्त्वनिश्चयप्रसङ्गात्। प्रवृत्तिबाधादन्यत्रैव सत्त्वनिश्चय इति चेन्न, मन्त्रौषधादिप्रतिबद्धस्याग्नेरपि स्फोटजननादिप्रवृत्तिबाधेन मिथ्यात्वनिश्चयप्रसङ्गात्। दुष्टकारणजन्यज्ञानविषयत्वादिह बाध्यत इति चेत्; कथं दुष्टकारणजन्यत्वनिश्चयः? बाधक-

* भावप्रकाशिका *

नन्वेवमपि शुक्त्यादिषु रजतादिप्रतीतेरित्यादिभाष्यस्य पूर्वोक्तार्थविस्तररूपत्वं न सम्भवति, पूर्वं हि शुक्तिरूप्यादेः प्रतीतिभ्रान्तिबाधविषयत्वं सिद्धवत्कृत्य तदन्यथानुपपत्त्या अनिर्वचनीयत्वं साधितम्। इदानीमन्यस्यान्यथाभानायोगाच्चेति अन्यथाख्यात्यसम्भव एव प्रतिपाद्यते। कथमनयोस्सङ्कोचविस्तररूपत्वमिति चेन्न, अन्यथाख्यातिरूपभ्रमासम्भवात् सद्भिन्नविषयत्वेन च भ्रमत्वस्योपपाद्यत्वात्तादृशभ्रमविषयत्वानुपपत्तिरेवेहापि प्रमाणीक्रियत इति सङ्क्षेपविस्तररूपत्वेनानुपपत्तिरिति द्रष्टव्यम्। (अस्तिचेत् यथार्थैव प्रतीतिरिति) इदञ्च दूषणं धर्मधर्मिणोर्मिथस्तादात्म्यपक्षेपि समानम्। ज्ञानगतमन्यथात्वमित्यत्र किं शुक्तिज्ञानस्य रजतज्ञानत्वमन्यथात्वमित्यर्थः? उत शुक्तिज्ञानस्य रजतरूपत्वमन्यथात्वम? इति विकल्प्याद्यं दूषयति (विषयोऽन्यः ज्ञानमप्यन्यदेवेति नोपपद्यत इति) अन्यविषयज्ञानेऽन्यविषयकज्ञानत्वं नास्तीत्यर्थः। ततश्चासतो ज्ञानान्तरतादात्म्यस्य ख्याने असत्ख्यातिप्रसङ्ग इति भावः। द्वितीयं दूषयति (आत्मख्यातिप्रसङ्गश्चेति) (नहि पुरोवर्तिनि रजत-

नीयमपूर्वमेवेदं रजतं दोषवशात् प्रतीयत इति कल्प-

* श्रुतप्रकाशिका *

ज्ञानोदयादिति चेत्, पूर्वज्ञानमेव बाधकं स्यात्, परस्यास्याकिञ्चित्करत्वं हि दर्शितम्। पूर्वज्ञानस्य दुष्टकारणजन्यत्वे निश्चिते पाश्चात्यज्ञानस्य बाधकत्व-निश्चयः, तस्य बाधकत्वे निश्चिते पूर्वस्य दुष्टकारणजन्यत्वनिश्चय इत्यन्योन्याश्रयश्च स्यात्। किञ्च यत्तावद्रजतं पुरोवर्तिनि भातम्, तस्यैवान्यत्र सत्त्वे किं प्रमाणम्? न तावत्पूर्वज्ञानम्, अत्र सत्त्वेन हि तदवगमयति। न बाधकज्ञानञ्च, तद्धि पुरोवर्तिन्यसत्त्वमवगमयति। नापि रजतग्राहकप्रमाणम्, तत्खल्वापणे रजत-सत्तामवगमयति। नतु तस्य पुरतः ख्यातस्य चैक्यम्। क्वचिदप्यसतः ख्यानायोगात् अन्यत्र सत एव ख्यातत्वं निश्चीयत इति चेन्न; असतः ख्यानायोगस्य सम्बन्धे परित्यक्तत्वात्। नहि पुरोवर्त्तिनि रजतधर्मिसम्बन्धो रजतत्वजातिसम्बन्धो वा अन्यत्र विद्यते। नन्वन्यत्र सम्बन्धमात्रमस्ति, तदिह प्रकाशत इत्यन्यत्र सत एवान्यत्र ख्यानमिति चेन्न; सम्बन्धद्वयानवभासात्, अन्यत्र सतः सम्बन्धस्यान्यत्र ख्याने सम्बन्धिन इव सम्बन्धान्तरमपेक्षितम्. सम्बन्धान्तरावभासे चान्यत्र सतः ख्यानं न स्यात्, द्वितीयसम्बन्धस्य क्वचिदप्यसत्त्वात्। सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वात् सम्बन्धान्तराभावेऽपि पुरोवर्त्तिनि भानं युक्तमिति चेत्; एवं तर्हि सम्बन्ध्यन्तर-सम्बन्धः पुरोवर्त्ति च निरन्तरं भातमिति यथार्थख्यातिरेवोक्ता स्यात्, ख्यातांशस्य सत्त्वात् असतः कस्यचित् ख्यातत्वाभावाच्च। किञ्च शुक्तिशकलस्यैव रजतज्ञानविषयत्वं रजतोपायान्यत्वे सति रजतार्थप्रवृत्तिविषयत्वादितिसाधयितुमप्ययुक्तम्। तथा हि; इदमर्थस्य रजतत्वजातिविशिष्टताज्ञानविषयत्वं हि साध्यम्, तदबाधितप्रवृत्ति-

* भावप्रकाशिका *

धर्मिसम्बन्ध इति) नहि पुरोवर्त्तिनि रजताभेद इत्यर्थः। (अन्यत्र सम्बन्धमात्रमिति) शुक्तिरजततादात्म्यस्य वा शुक्तिरजतत्ववैशिष्ट्यस्य वा असत्त्वेपि रजतत्ववैशिष्ट्यस्य वा रजततादात्म्यस्य वा सत्यरजते प्रसिद्धत्वादिति भावः। (सम्बन्धद्वयानवभासादिति) अन्यत्र सतस्सम्बन्धस्यान्यत्र भाने सम्बन्धसम्बन्धो भासत इत्यर्थस्स्यात्. ततश्च सम्बन्धद्वयभानप्रसङ्ग इत्यर्थः। शङ्कते (सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वादिति) (निरन्तरं भातमिति) अगृहीतासंसर्गतया एकप्रतीत्यु-

नीयमिति चेत्. न; तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात्; अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् । कल्प्यमानं हीदमनिर्वचनीयम्, न तावदनिर्वचनीयमिति प्रतीयते, अपि तु परमार्थरजतमित्येव । अनिर्वचनीयमित्येव प्रतीतं चेत्, भ्रान्तिबाधयोः प्रवृत्तेरप्यसम्भवः, अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेस्तस्यापरिहार्यत्वाच्च, शुक्त्यादिरेव रजताद्याकारेणावभासत इति

* श्रुतप्रकाशिका *

विषयत्वप्रयुक्तमिति हेतोस्सोपाधिकत्वम् । शुक्तिर्न रजततया भाति, शुक्तित्वात् सम्प्रतिपन्नवदिति च बाधः । एवमादिदूषणाभिप्रायेणान्यस्यान्यथाभानायोगाच्चेत्युक्तम् । दूषयति ( नेति ) अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानम् अन्यथाभानम्, प्रतिपन्नाकारस्य पुरोवर्तिन्यभावनिश्चयश्च प्रवृत्तिबाधसचिवान्नास्तीति प्रत्ययात् । नहि प्रतिबद्धाग्नेरग्नित्वं नास्तीति प्रत्यय इति प्रसिद्धम् । कथं तत्कल्पनायामप्यन्यथाभानस्यावर्जनीयत्वमित्यपेक्षायामाह ( कल्प्यमानं हीति ) अनिर्वचनीयमित्येव प्रतीत्यभ्युपगमे प्रतीतेर्भ्रमरूपत्वं बाधः प्रवृत्तिश्च न स्युः, अनिर्वचनीयं निर्वचनीयत्वेन प्रतीतं चेदस्यान्यथावभासोऽवर्जनीयः स्यादित्यर्थः । ( तस्यापरिहार्यत्वाच्चेति ) तस्य—अन्यथाभानस्य । अयमभिप्रायः, नान्यस्यान्यथाभानं विद्यमानस्यैव प्रतीतेः, अलौकिकं सल्लौकिकं सच्चेति द्विविधं सत्, अनिर्वचनीये चालौकिकं सत्त्वमस्ति, अत्र तदलौकिकं सद्रजतं प्रतीयत इति चेत्, किमलौकिकं सदलौकिकसत्त्वेन प्रतीयते ? उत लौकिकसत्त्वेन ? प्रथमे भ्रमत्वबाधप्रवृत्त्यसम्भवः । अलौकिकं लौकिकं सदिति प्रतीतं चेत् अन्यस्यान्यथाख्यानं स्यात्;

* भावप्रकाशिका *

पारूढमित्यर्थः । ( नहि प्रतिबद्धेति ) ततश्च प्रवृत्तिबाधमात्रस्य न प्रयोजकत्वम्,

भवताऽभ्युपगन्तव्यम् ॥ ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः — असत्ख्यातिपक्षे सदात्मना ; आत्मख्यातिपक्षेऽर्थात्मना, अख्यातिपक्षेपि अन्यविशेषणमन्यविशेषणत्वेन ; ज्ञान-

* श्रुतप्रकाशिका *

अलौकिकसतो लौकिकसता भेदाग्रहात् प्रवृत्त्यादिसम्भव इति चेत्, तर्हि तत्रानिर्वचनीयं वस्तु कल्पयित्वा तत्र भेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादनादपि प्रथमत एव सम्प्रतिपन्नरजताच्छुक्तित्वरूपभेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादने कल्पनालाघवादनिर्वचनीयं वस्त्वनुपपन्नमित्यादिपदकपरम्परामभिप्रेत्य तस्यापरिहार्यत्वाच्चेत्युक्तम् ॥ यथार्थख्यातिव्यतिरिक्तपक्षेष्वन्यथाख्यातिपक्षः प्रबल इत्यभिप्रायेणाह ( ख्यात्यन्तरेति ) सुदूरमपि गत्वा— पदकपरम्परामुक्त्वापीत्यर्थः । तदुपपादयति ( असदिति ) अयं माध्यमिकपक्षः । किमसदित्येव प्रतीयते ? उत सत् ? इति । असदिति चेत् भ्रमत्वबाधप्रवृत्त्यसम्भवः । सदिति चेत् अन्यस्यान्यथाभानं स्यादित्यर्थः । ( आत्मेति ) अयं योगाचारपक्षः । आत्मशब्दो ज्ञानपरः । किं ज्ञानमित्येव प्रतीतम् ? उतार्थः ? इति । प्रथमे प्रवृत्तिबाधभ्रमत्वासम्भवः । द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः । ( अख्यातिपक्ष इति ) इदं रजतमिति किमेकज्ञानम् ? उत ज्ञानद्वयम् ? इति विकल्पमभिप्रेत्य एकज्ञानमितिपक्षे ज्ञेये अन्यथाख्यातिं प्रसञ्जयति ( अन्यविशेषणमन्यविशेषणत्वेनेति ) इदं रजतमित्येकत्वेन सम्प्रतिपन्नसम्यग्रजतवदारोप्यलिङ्गानुविधायिप्रयोगानुगुणसामानाधिकरण्येन प्रतीतत्वादन्यविशेषणमन्यविशेषत्वेन प्रतीयत इत्यापादितम्, न तु तत्पक्ष उपन्यस्तः । ज्ञानद्वयमितिपक्षे ज्ञानेऽन्यथाख्यातिं प्रसञ्जयति ( ज्ञानेति ) ज्ञानद्वयं किं ज्ञानद्वय-

❁ भावप्रकाशिका ❁

अपितु प्रवृत्तिबाधसचिवस्य नास्तीति प्रत्ययस्यापीति भावः । ( आरोप्यलिङ्गानुविधायीति ) ग्रहणस्मरणात्मकत्वे इयं रजतमित्यपि स्यादिति भावः । ( नतु तत्पक्ष उपन्यस्त इति ) तन्मते ज्ञानैक्यानभ्युपगमादिति भावः । भाष्ये— विपर्यासद्भावपक्ष इति । माध्यमिकमते ज्ञानमपि नास्ति, योगाचारमते ज्ञानाभिन्नतया विष-

द्वयमेकत्वेन च; विषयासद्भावपक्षेऽपि विद्यमानत्वेन ॥ किञ्च— अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम् ; न तावत्तत्प्रतीतिः, तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात् । निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम् । अथेन्द्रियादिगतो दोषः, तन्न ; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात् ।

* श्रुतप्रकाशिका *

मित्येव प्रतीतम् ? उतैकमिति ? इति विकल्पे पूर्ववद्रूपणम् (विषयासद्भावेति) किम-विद्यमानत्वेन प्रतीयते ? उत विद्यमानत्वेन प्रतीयते ? प्रथमे प्रवृत्त्याद्यसम्भवः । द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः ॥ अथ अकारणत्वमुपपादयति (किञ्चेति) तस्याः—प्रत्यक्षप्रतीतेः । तद्विषयत्वेन— विद्यमानविषयकारणकत्वेन । कारणं हि नियतपूर्वभावीति भावः । (महतामिदमुपपादनमिति) तस्य वृत्तिज्ञानस्य विषयरहितावस्थास्वीकारेण कारणत्वाभ्युपगमेऽपसिद्धान्तापातात् निर्विषयख्याति-वादिनामिव तत्प्रभावेन प्रवृत्त्यादिसिद्धावनिर्वचनीयक्लृप्तिवैयर्थ्याद्विषयरूप-कारणेन विनोत्पत्तिवचनाद्विरम्यव्यापारवचनाच्चात्यन्तमनुपपन्नमित्यर्थः । (अथे-न्द्रियादीति) आदिशब्देन विषयगतदोषः पुरुषस्यानवधानं वा गृह्यते (तस्य पुरुषाश्रयत्वेनेति) दूरत्वादिदोषस्य विषयगतत्वेऽपि पुरुषगतत्वस्यापि सम्भवा-

* भावप्रकाशिका *

योऽप्यस्ति, एतन्मते तु ज्ञानमस्ति विषयो नास्तीति विशेषः (विद्यमानविषयकारण-कत्वेनेति) विषयजन्यत्वेनेत्यर्थः । कारणत्वे विद्यमानत्वमपि सिध्यतीत्यभिप्रेत्य विद्यमानेत्युक्तम् । (तस्या वृत्तिज्ञानत्वेनेति) अपरोक्षवृत्तिज्ञानत्वेनेत्यर्थः । ततश्च परोक्षवृत्तिज्ञाने विषयरहितावस्थासम्भवेन न दोष इति ध्येयम् । (विरम्यव्या-पारवचनाच्चेति) निर्विषयमुत्पन्नं सविषयमुत्पाद्य पश्चाद्विषयीकरोतीति क्रमिकव्या-पारद्वयाश्रयणाद्विरम्यव्यापार इति द्रष्टव्यम् । (पुरुषगतत्वस्यापि सम्भवा-

नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्। नापि दुष्टा-

* श्रुतप्रकाशिका *

दुभयत्र कार्यमुत्पाद्यम्, न विषयमात्रे, नियामकाभावात्; अतः पुरुष इव विषयेऽपि न सम्भवतीत्यभिप्रायः। ननु चक्षुषः पुरुषाश्रयत्वेऽपि चाक्षुषरश्मेः प्रसृतस्य विषयसम्बद्धस्य तत्र कार्यकरत्वं दृष्टम्; न, तत्कार्यस्य ज्ञानस्य पुरुषाश्रितत्वात् दोषांशस्याकार्यकरत्वात्। ननु विषयमात्रगतास्सादृश्यादयो दोषाः सन्ति, तेषां तत्रैव कार्यकरत्वमुपपद्यते। नैवम्; सादृश्यादेर्यावद्द्रव्यभाविनस्सदोत्पादकत्वप्रसङ्गात्, आगन्तोरन्यस्य तत्रादृष्टेः, इन्द्रियसंयोगस्य पुरुषगतज्ञानातिरिक्तहेतुत्वासिद्धेः, दृष्टिविषादिन्यायस्यात्रासम्भवात्, सम्भवेऽपि सर्वैरुपलम्भप्रसङ्गाच्च। नन्विन्द्रियाणि यथा पुरुषविशेषसम्बन्धात्तत्रैव कार्यविशेषमुत्पादयन्ति, एवं विषयविशेषसम्बन्धात्तत्रैव किञ्चिज्जनयन्तु। तत्राह (नापीन्द्रियाणीति) पुरुषगतज्ञानाख्यकार्यकरत्वमन्वयव्यतिरेकावस्थितम्, विषये त्विन्द्रियजन्यं कार्यान्तरं न दृष्टम्, तत्क्लृप्तिरन्यथैवोपपत्त्या निरस्तेति भावः। तथापि दुष्टपुरुषसन्निधानाद्यथा देशादिषु दोषाः प्रादुष्युः तथा दुष्टेन्द्रियसन्निधानाद्विषये कार्यविशेषः स्यादित्यत्राह (नापि

* भावप्रकाशिका *

दिति) यद्यपीन्द्रियापेक्षया दूरत्वं विषयगतमेव, न पुरुषगतम्। अथापि सामान्यतो दूरत्वमात्रस्य दोषत्वमिति वदन्तं प्रतीदं दूषणं द्रष्टव्यम्। (उभयत्रेति) ननु विषय इव पुरुषेऽप्यविद्यानिवृत्तिरूपभ्रान्त्युत्पादनेनोभयत्र कार्यमुत्पाद्यत इति शक्यं वक्तुमिति चेन्न, उभयत्र एकरूपकार्योत्पत्तिप्रसङ्ग इत्यत्र तात्पर्यात्। (तत्र कार्यकरत्वं दृष्टमिति) विषयविषयकज्ञानोत्पत्तेरिति भावः। (दोषांशस्याकार्यकरत्वादिति) चक्षुरश्म्यादेर्यथातथावास्तु, दोषांशस्य तु न क्वापि भिन्नाधिकरणे कार्यजनकत्वं दृष्टम्, अतो न प्रमात्राश्रितदोषस्य विषयनिष्ठानिर्वचनीयरजतोत्पादकत्वमिति भावः। ननु दुष्टेन्द्रियसम्प्रयोगस्य आगन्तुकदोषस्य सम्भव इत्याशङ्क्याह (इन्द्रियसम्प्रयोगस्येति) (दृष्टिविषादिन्यायस्येति) दृष्टौ विषं येषां ते दृष्टिविषाः, केचन सर्पविशेषाश्च चक्षुरिन्द्रियसम्प्रयोगेन विषमुत्पाद्य पुरुषान् घ्नन्तीति हि प्रसिद्धिः, तद्वद्दुष्टेन्द्रियसम्प्रयोगमात्रेण रजतमुत्पाद्यतामित्याक्षेपाभिप्रायः। (तत्रैव कार्यविशेषमिति) पुरुषविशेष एव ज्ञानादिकमुत्पादयति

नीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम् । अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ॥ किञ्च–अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते, न घटादिबुद्धिशब्दाभ्याम् । रजतादिसादृश्यादिति चेत्; तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम्, रजतादिजातियोगादिति चेत्; सा किं परमार्थभूता ? अपरमार्थभूता वा ? न तावत्परमार्थभूता, तस्या अपरमार्थान्वयायोगात् । नाप्यपरमार्थ-

* श्रुतप्रकाशिका *

दुष्टानीति ) अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किञ्चित्साधयितुं शक्यमिति भावः । किमत्र हेत्वन्तरगवेषणया ? अनादिभावरूपाज्ञानमेव विश्वोपादानभूतं शुक्तिरजताद्यपि विचित्रकार्यं जनयेदित्यत्राह ( अनादीति ) तस्य स्वरूपानादित्वात्कार्यमपि प्रागेव स्यात्, सहकारित्वेन शङ्कनीयमिन्द्रियादिकं तु निरस्तम्, मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम्, आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इतिभावः ॥ एवमनिर्वचनीयस्य रजतादेरुत्पादकानुपपत्तिमुक्त्वा तदुत्पत्तावपि रजतादिबुद्धिशब्दान्वयनियमानुपपत्तिमाह ( किञ्चेति ) तद्व्यवस्थापकं शङ्कते ( रजतादीति ) प्रातिभासिकस्य रजतादेरर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यादित्यर्थः । उक्तस्य व्यवस्थापकत्वाभावमभिप्रेत्य सादृश्यस्य यथादर्शनं साध्यान्तरमाह ( तर्हीति ) यदि तत्सदृशे तद्बुद्धिः तदा गवये गोबुद्धिवदन्यथाख्यातिः स्यादित्येवकाराभिप्रायः, सादृश्यस्यानिर्वाहकत्वेऽपि तज्जातियोगस्य तद्बुद्धिनिर्वाहकत्वं दृष्टमिति शङ्कते (रजतादीति ) सा–रजतादिजातिः । अपरमार्थान्वयायोगात्– अपरमार्थव्यक्त्यन्वयायोगा-

ॐ भावप्रकाशिका ॐ

नतु पुरुषान्तर इत्यर्थः । यथा देशादिषु दोषाः प्रादुष्युरिति सम्भवानायां लिङ्, प्रादुर्भावसम्भव इत्यर्थः । भाष्ये– सा किं परमार्थभूता अपरमार्थभूता वेति ।

भूता, परमार्थान्वयायोगात् । अपरमार्थे परमार्थ-बुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणतकुतर्क-निरसनेन ॥

* श्रुतप्रकाशिका *

दित्यर्थः । व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति भावः । जातिरपि हि बाध्यते, नहि व्यक्तिर्नास्ति जातिरस्तीति प्रतीतिः, जातिरपि नास्तीत्येव हि प्रतिपत्तिः । न च प्राक्-प्रतिपन्नाया अपि जातेः पश्चादप्रतीतिरभिव्यञ्जकव्यक्त्यभावात्, नतु जात्यभावादिति वाच्यम्, अभिव्यञ्जकवति पूर्वकाले प्रतिपन्नाया अपि जातेस्तत्कालसम्बन्धितयैव नास्तितागोचरत्वाद्बाधकप्रत्ययस्य, प्रतिपन्नोपाधौ नास्तीति प्रत्ययो हि बाधः । अपरमार्थपक्षं दूषयति ( नापीति ) परमार्थान्वयायोगात्— आपणस्थरजतव्यक्त्य-न्वयायोगादित्यर्थः । व्यक्त्यवस्थानेऽपि जातेः कदाचिद्बाधितत्वप्रसङ्ग इति भावः। न हि कदाचिदप्यापणस्थरजते रजतत्वं बाध्यते । परमार्थव्यक्त्यनन्वये बाधकमाह ( अपरमार्थ इति ) परमार्थबुद्धिशब्दयोः— परमार्थविषयबुद्धिशब्दयोः । परमार्थ-व्यक्तौ जातिरनन्विता चेत्तस्याः क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्ति-स्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः । यद्वा जात्यपारमार्थ्ये एव दूषणान्तरं बुद्धिशब्दान्वयानुपपत्तिमाह— अपरमार्थ इति । तदानीम् परमार्थ-

ଓ भावप्रकाशिका ଓ

सत्यरजते शुक्तिरूपादौ च प्रतीयमानेत्यर्थः । नच सत्यरजते सत्या मिथ्यारजते मिथ्येति किं न स्यादिति वाच्यम्, तदा रजतत्वजातेस्साधारणत्वभावेन उभयत्रा-प्यैकरूप्यस्य वक्तव्यत्वादिति भावः । ( व्यक्तिबाधेपि जातेरबाधितत्वप्रसङ्ग इति ) नहीदं रजतमिति प्रतीयमानयोर्जातिव्यक्त्याकारयोरेकस्य साध्यत्वमपरस्य नेति द्रष्टव्यम् ( आपणस्थरजतव्यक्तीति ) रजतत्वजातिमात्रस्यापारमार्थ्याभ्युपगमेनापण-स्थरजतनिष्ठरजतत्वजातेरपि तथात्वावश्यम्भावादिति भावः ( कदाचिद्बाधितत्वप्रसङ्ग इति ) व्यक्तिस्सती जातिरसतीति कदाचिद्बुद्धिस्स्यादित्यर्थः । ( क्वचिदपि परमार्थ-बुद्धिशब्दहेतुत्वादर्शनादिति ) यद्यपरमार्थभूतापि जातिः परमार्थव्यक्तौ क्वचिद्वर्तेत । तदा व्यक्तिगतपरमार्थत्वैकार्थसमवायात्, जातिः परमार्थभूतेत्येवं परमार्थबुद्धिशब्दयोः

—( सत्ख्यातिसमर्थनम् )—

अथ वा—

[1] "यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ।
श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥
[2] 'बहु स्या'मितिसङ्कल्प–पूर्वसृष्ट्याद्युपक्रमे ।

* श्रुतप्रकाशिका *

बुद्धिशब्दयोः—परमार्थभूतबुद्धिशब्दयोरित्यर्थः । असत्यात्सत्योत्पत्तिनिरासमुपजीव्येदं दूषणमुच्यते , व्यक्तेस्तन्निर्वाहकत्वायोगं दर्शयितुमपरमार्थ इत्युक्तिः । अपरमार्थजातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोगाज्जात्यपारमार्थ्यमयुक्तमित्यर्थः । बुद्धिशब्दयोश्च पारमार्थ्यं तद्बाधकादर्शनादेव सिद्धम् ॥

अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं दर्शयति ( अथवेति ) तस्यास्साम्प्रदायिकत्वं दर्शयन् तां प्रतिजानीते ( यथार्थमिति ) वेदविदाम्—भगवद्बोधायननाथमुनिमिश्रादीनामित्यर्थः । कुत इत्यत्राह ( श्रुतिस्मृतिभ्य इति ) श्रुतिं दर्शयति ( बहु स्यामितीति ) आदिशब्देन नामरूपव्याकरणमुच्यते । यद्वा सन्मूला इत्यादिवाक्योक्तं स्थितिप्रलयादिकं गृह्यते । सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् सृष्ट्याद्युपक्रमे। इदं श्लोकार्द्धं किमर्थमिति चेत् . उच्यते ; पाठक्रमेणाण्डसृष्टेः पश्चात् त्रिवृत्करणमिति जायते, अण्डसृष्टेः प्रागपि त्रिवृत्करणमस्ति, अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्य , त्रिवृत्करणमुपायः , अण्डसृष्टिः

❀ भावप्रकाशिका ❀

कथञ्चिन्निर्वाहकत्वदर्शनादपरमार्थव्यक्तिस्थलेपि अपरमार्थजातौ परमार्थबुद्धिशब्दयोर्निर्वाहस्सम्भवेत् । यदि च क्वापि परमार्थव्यक्तिसम्बन्धो न स्यात्, तर्हि क्वापि परमार्थबुद्धिशब्दनिर्वाहकत्वादर्शनात् भ्रान्तिस्थलेपि तन्निर्वाहोपि न स्यादित्यर्थः ॥ .... .... .... .... .... .... .... ....

( पाठक्रमेणाण्डसृष्टेः पश्चादिति ) "नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृत-

1. 'यथार्थं सर्वविज्ञानम्' इत्यारभ्य– 'व्यवहार व्यवस्थितिः' इत्येतत्पर्यन्तं भाष्यकारीयाः श्लोकाः

2 छा. उप. ६-प्र. २-ख. ३-वा.

[1]"तासां त्रिवृतमेकैका"मिति श्रुत्यैव चोदितम् ॥

* श्रुतप्रकाशिका *

फलम् । उत्पत्तौ तत्फलं पश्चाद्भवति, सङ्कल्पे तु पूर्वभावि, उपायस्तूत्पत्तौ पूर्वभावी, सङ्कल्पे पश्चाद्भावीति लोकसिद्धं किं केन कथमित्यादौ; अतो "नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इत्यस्मिन् व्यष्टिसृष्टिसङ्कल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्ट्युपायभूतं त्रिवृत्करणम् । "नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्युत्पत्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामरूपव्याकरणस्य फलभूतत्वात्, त्रिवृत्करणस्य फलरूपसृष्टेः पूर्वभावो निश्चीयते, अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात्, "अग्निहोत्रं जुहोति यवागूं पचति' इतिवत् । अस्मिन्नर्थे निदर्शनम् उपक्रमे 'बहु स्यां प्रजायेये'तिवाक्यम् , अत्र बहु स्यामिति फलसङ्कल्पः , प्रजायेयेति तदुपायसङ्कल्पः , अनेन केवलं किं केन कथमित्यादिलोकप्रसिद्ध्या अत्र त्रिवृत्करणस्य फलभूतसृष्टेः पूर्वभावित्वनिश्चयः, उपक्रमभूतसङ्कल्पवाक्यानुगुण्यञ्चेति ज्ञापितम् ; एवं त्रिवृत्करणस्याण्डसृष्टेः प्राक् सद्भावं ज्ञापयितुमुपक्रमगतसङ्कल्पवाक्यस्य तदनुगुणत्वज्ञापनाय बहु स्यामित्याद्युद्धृतमुपा-

* भावप्रकाशिका *

मेकैकामकरोत्" इति पाठक्रमेणेत्यर्थः । ( सङ्कल्पे तु पूर्वभावीति ) फलेच्छा पूर्वं भवति, उपायेच्छाया इष्टसाधनताज्ञानजन्यत्वादिति भावः । ( किं केन कथमित्यादाविति ) यद्यपीयं जिज्ञासारूपा शाब्याकाङ्क्षा, नतु फलोपायेच्छारूपा, अत एव हि करोतीत्युक्ते किं करोति सर्वस्वापहारं करोति शिरश्छेदं करोतीति शाब्ये जिज्ञासा जायते, अथापि फलोपायविषयकेच्छापि फलोपायजिज्ञासातुल्यशीलेति भावः । न च भाव्याकाङ्क्षायाः पूर्वभावित्वे समानपदोपात्तधात्वर्थस्यैव भाव्यत्वेनान्वयस्स्यादिति वाच्यम्, समानपदोपात्तविध्यवरुद्धाया भावनायास्समीहितभाव्यापेक्षितया यागस्य तस्य भाव्यतया नान्वयः, अपितु करणत्वेनेति स्वर्गकामाधिकरणे स्थितत्वादिति द्रष्टव्यम् । ( अस्मिन्नर्थे निदर्शनमिति ) 'बहु स्यां प्रजायेय' इत्यत्र प्रजायेयेतिनिर्दिष्टप्रजननापेक्षया बहु स्यामिति पूर्वनिर्दिष्टस्य बहुभवनस्य कार्यत्वदर्शनात्, तद्वदेव 'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृत-

1. छा. उप. ६-प्र. ३-ख. ३-वा.

त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते ।
यदग्नेरोहितं रूपं तेजसस्तदपामपि ॥
शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता ।
श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वत्र सङ्गताः ॥
पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे ॥

---

* श्रुतप्रकाशिका *

णम् । अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणस्य प्रदर्शनादण्डसृष्टेः पश्चात् त्रिवृत्करणमिति शङ्कायां श्रुतेरर्थमाह ( एवं हि प्रत्यक्षेणोपलभ्यत इति ) अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनं नेयत्ताबुद्ध्या, अपित्वण्डान्तर्भूतस्यैव प्रत्यक्षयितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसम्भावनाप्रदर्शनार्थमिति भावः । अण्डसृष्टेः प्रागेव त्रिवृत्करणमस्तीति स्पष्टं ज्ञापयति ( पुराणे चेति ) अस्यामुपनिषदि भूतत्रयसृष्टेरुक्तत्वात् सृष्टतयोक्तानां मिश्रणमुक्तम्, इदं तत्त्वान्तरसृष्टिप्रतिपादनप्रकरणेषु तेषामपि मिश्रणस्य प्रदर्शनार्थमितिज्ञापनाय पुराणवचनोदाहरणम् । वैष्णव इत्यनेन सात्त्विकत्वात्प्रामाण्यं सूचितम् "सात्त्विकेषु च सर्वेषु विष्णोर्माहात्म्य-

* भावप्रकाशिका *

मेकैकां करवाणि' इत्यत्र सङ्कल्पवाक्ये पूर्वनिर्दिष्टस्य नामरूपव्याकरणस्य कार्यत्वं निश्चीयते, ततश्च 'नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत् इतिवाक्ये पाठक्रमो बाध्य इति भावः । ननु त्रिवृत्करणनामरूपव्याकरणयोः कार्यकारणभावे यस्य विप्रतिपत्तिः तस्य बहुभवनप्रजननयोः कार्यकारणभावः कथं सम्प्रतिपन्नः स्यात्, नह्ययमर्थस्ततोपि सुप्रसिद्धः । किञ्च कथमस्य श्लोकार्धस्य ईदृशार्थसूचकत्वमितिचेन्न, बहुभवनप्रजननयोः कार्यकारणभावस्य सुप्रसिद्धत्वात्, इतरथा भाष्यकृता निदर्शनतया उपादानासम्भवात् । न च निदर्शनतयोपादानमस्मिन् श्लोकेऽसिद्धमिति वाच्यम्, व्याख्यानतो विशेषप्रतिपत्तिसम्भवात् । ( अस्यामुपनिषदीति ) छान्दोग्ये तेजःप्रभृति सृष्टेरेवोपात्तत्वात् आकाशवायुसृष्टेरनुक्तेः । तिस्रो देवताः त्रिवृतं करवाणीत्युक्तिः, नैतावता पञ्चीकरणं नास्तीति मन्तव्यम् । त्रिवृत्करणस्य पञ्चीकरणोपलक्षणार्थत्वादिति भावः ।

[1] "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः।
महदाद्या विशेषान्ता ह्यण्ड"मित्यादिना ततः॥
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत्।
'त्र्यात्मकत्वात्तु भूयस्त्वा'दिति तेनाभिधाभिदा॥

* श्रुतप्रकाशिका *

मिष्यते" इति वचनात्। संहतत्वं समागतत्वञ्चेति अवस्थाद्वयमस्ति। संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रम्, समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः, एतद्द्वयाभावात् स्रष्टुं नाशक्नुवन्नित्याह (नानावीर्या इति) एतदुभयप्राप्त्या असृजन्नित्याह (समेत्येति) एकैकस्मिन् भूते सर्वभूतानि सन्ति चेत् सर्वे शब्दाः सर्वत्र प्रयुज्येरन्नित्यत्राह (परस्परसमाश्रया इति) अन्येषां भूतानां समाश्रितानामेकं भूतं समाश्रयः, आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः, तत्कृता शब्दव्यवस्थेति भावः। उपात्तवचनानन्तरं 'सम्प्राप्यैक्यमशेषतः' इति कृत्स्नशस्समागतत्वमुक्तम्। महदादय इति पाठे सत्यपि वृत्तभङ्गपरिहाराय स्वसन्दर्भे महदाद्या इत्युक्तं भाष्यकारैः। अयमेव श्रुत्यभिप्राय इति स्थापयितुं सूत्रकारोक्तिं दर्शयति (सूत्रेति) ततः सूत्रकारोऽप्यवददित्यन्वयः। ततः– अस्यार्थस्य श्रुतिस्मृतिसिद्धत्वादित्यर्थः। एवं प्रथमं भूते भूतान्तरसद्भाव उक्तः, वक्ष्यमाणस्य सदृशे सदृशान्तरसद्भावस्योपयोगित्वात्। तेनाभिधा-

छ भावप्रकाशिका छ

(अवस्थाद्वयमस्ती) ततश्च संहतिं विना असमागम्येतिपदद्वयस्य न पौनरुक्त्यमिति भावः। (समेत्यान्योन्यसंयोगमिति) संहतत्वावस्थाकथनेपि कृत्स्नशस्समागतत्वरूपावस्थान्तरं नोक्तमिति शङ्कां व्युदस्यति (उपात्तवचनानन्तरमिति) पुराणे "समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। एकसङ्घातलक्ष्याश्च सम्प्राप्यैक्यमशेषतः॥" इति पाठक्रमादिति भावः। सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्। सोमावयवसद्भावात्–इति भाष्यस्यायमर्थः,– 'यदि सोमं न विन्देत्पूति-

१. वि-पु. १-अं २-अ. ५२-५३-५४-श्लो. | २. शारीर. ३-अ. १-पा. २-सू.

सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ।
सोमावयवसद्भावादितिन्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ।
तदेव सदृशं तस्य यत्तद्‌द्रव्यैकदेशभाक् ॥
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः ।

* श्रुतप्रकाशिका *

भिदा— भूयस्त्वेनाभिधानव्यवस्थेत्यर्थः । सदृशे सदृशान्तरसद्भावमाह (सोमेति) न्यायविदः— परीक्षकाः । 'सोमाभावे पूतीकानभिषुणुयात्' इत्ययं विधिर्नियमार्थः । सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वतः प्रवृत्तेः । एतत्तुल्यन्यायसिद्ध्यर्थमाह (व्रीहीति) व्रीहिभावतः— व्रीह्यवयवसद्भावतः । ततः कथं सदृशे सदृशान्तरसद्भाव इत्यत्राह (तदेवेति) अनेन शुक्त्यादौ रजताद्यवयवसद्भावः फलित इत्याह (शुक्त्यादा-

* भावप्रकाशिका *

कानभिषुणुयात्' इत्यनेन सोमाभावे निमित्ते नैमित्तिकतया फलचमसवत् पूतीका न विधीयन्ते, अपितु सोमावयवस्य सोमसदृशद्रव्येषु सत्त्वात्, प्रतिनिधित्वेन पूतीकानां तदतिरिक्तद्रव्याणाञ्च प्राप्तौ पूतीकानेव गृह्णीयादितिनियमार्थं पूतीकग्रहणं श्रुतिचोदितमिति । ततश्च सोमावयवसद्भावात् पूतीकग्रहणं श्रुतिचोदितमित्यस्य चोदनायां सोमावयवसद्भावो हेतुः, अतश्चोदनानुपपत्त्या सोमावयवसिद्धिरित्यर्थ इति न भ्रमितव्यम् । सोमावयवसद्भावे न्यायस्यैवयावज्ञापकचोदनाया अज्ञापकत्वात् । भाष्ये—व्रीह्यभावे तु नीवारग्रहणं व्रीहिभावतः इति । नीवारग्रहणं न्याय्यमिति न्यायविदो विदुरिति योजना, षष्ठे प्रतिनिधिपेटिकायामस्य न्यायस्य व्युत्पादितत्वादिति भावः । एतत्सर्वमभिप्रेत्याह (अयं विधिर्नियमार्थ इति) (प्रतिनिधिश्रुत्यैवेति) प्रतिनिधिश्रुतेर्नियमविधित्वसम्पादकन्यायेनेत्यर्थः । एवं हि स्थितिः, षष्ठे ब्राह्मणस्य सोमविद्या प्रजमृणवाक्येन संयोगादित्यत्र सोमयागस्य 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्सया वीप्सितवसन्तस्य निमित्तत्वावगमात् नित्यत्वं स्थापितम् । नित्ये च यथाशक्त्यङ्गोपसंहारेणापि अधिकारोस्तीति सर्वशक्त्यधिकरणे स्थितम् । ततश्च सोमद्रव्यरूपाङ्गाभावेपि द्रव्यान्तरमादाय शक्या-

रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ।

* श्रुतप्रकाशिका *

विति ) श्रुत्यैव बोधितः— प्रतिनिधिश्रुत्यैवाभिहितत्वेन फलितः । यद्वा त्रिवृत्करण-श्रुत्यैव बोधितत्वं फलितम्, तेजःप्रचुररूप्यांशः शुक्तौ त्रिवृत्करणात्सिध्यतीत्यर्थः । कथं शब्दव्यवस्थेत्यत्राह ( रूप्येति ) शुक्तिरूप्ययोः सादृश्ये सति हि शुक्तौ रूप्यसद्भावसिद्धिः, शब्दव्यवस्थाया भूयस्त्वहेतुकत्वसिद्धिश्चेत्यत्राह ( रूप्यादीति ) यद्वा शुक्तौ रजतैकदेशसद्भावे प्रमाणान्तरमाह—रूप्यादीति । ततः किमित्यत्राह ( अत इति ) प्रतीतेः—रूप्यसदृशतया प्रतीतेः । शुक्त्यादौ रजताद्यवयवसद्भावश्चेत् सदा गृह्येत प्रवृत्तिश्च सदा स्यात् बाधश्च नोपपद्यत इत्यत्राह ( कदाचिदिति ) दोषः शुक्त्यंशाग्रहहेतुः, प्रचुरग्रहणाभिभूतत्वाभावाददृष्टवशाच्च रजतग्रहणम्, अदृष्टवशाच्चाम्बुनो ग्रहणादिति हि वक्ष्यते । उदाहरणान्तरेष्वप्युपजीव्यत्वाय

* भावप्रकाशिका *

ऽोपसंहारेण यागस्य कर्तव्यत्वं सिद्धम् । "तत्र च सोमद्रव्यसदृशस्य वा तद्धि-सदृशस्य वा यागनिवर्तकतया यागविध्याक्षेपबलादुपादानं कर्तव्यम्" इति श्रुति-प्रमाणत्वात् 'शिष्टाभावेनागमोऽन्यस्याशिष्टत्वा'दित्यत्र स्थितम् । तत्र च सदृशद्रव्यो-पादाने तत्र सोमावयवानामपि सत्त्वात् सोमशास्त्रस्याप्यनुग्रहाय सोमसदृशद्रव्यो-पादानमेव युक्तमिति 'सामान्यं तच्चिकीर्षा हि' इत्यत्र स्थापितम् । तत्र च बहुषु सोमसदृशद्रव्येषु सत्सु प्रतीकविधिर्नियमार्थः, यस्सोमलताया अभावेन सोमजाति-परिच्छिन्नान् सकलानवयवानुपादातुमशक्तस्तत्सदृशान् विकलानवयवानुपादि-त्सते सपूतीकानेवेति नियमार्थमिति निर्णीतम् । 'नियमार्थं पुनः श्रुतिः' इति तृतीयाध्यायाधिकरणे, 'वचनाच्चान्याय्यं भवे'दिति षष्ठाध्यायाधिकरणे चेति ; एवञ्च न्यायेनैव सदृशे तदवयवस्थितिर्निर्णेया, नतु श्रुत्या; अतो यथोक्त एवार्थः । अत एवावसरसादाह ( यद्वा त्रिवृत्करणेति ) ( उपजीव्यत्वाय तदुक्तिरिति ) अदृष्ट-

रजतांशो गृहीतोऽतो रजतार्थी प्रवर्त्तते ॥
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्त्तते ।
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ।
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥
नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ।

* श्रुतप्रकाशिका *

हि तत्र तदुक्तिः। (भूयस्त्वेन बाध्यबाधकभाव इति) शुक्तिभूयस्त्वेन तज्ज्ञानस्य बाधकत्वम्, तत एव रजतात्पत्वं सिद्धम्, तेन रजतज्ञानस्य बाध्यत्वमित्यर्थः। भूयस्त्वेनेत्युक्ते भ्रान्तिज्ञानस्य रजतभूयस्त्वाचेन शुक्तिज्ञानस्य बाध्यत्वशङ्काव्यावृत्त्यर्थं भूयस्त्वेन बाध्यबाधकत्वमुपपादयति (शुक्तीति) ननु साकल्ये सत्यपि वैकल्यं गृहीतं चेदन्यथाख्यातिरिति। नैवम्, नहि वैकल्यस्य ग्रहो वैकल्यग्रहः, किन्तु शुक्तिभूयस्त्ववैकल्येन ग्रहः, तद्विरहेण ग्रहः, तदग्रह इति फलितम्। भूयस्त्वसाकल्येन ग्रहः, तत्सहिततया ग्रहः, तयोर्ग्रहयोः रूपात् स्वभावात् तथाविधग्रहणात्मकत्वादित्यर्थः। बहुव्रीहिर्वा, भावप्रधानो निर्देशः। पूर्वोत्तरज्ञानयोस्तथा रूपत्वात् बाध्यबाधकभाव इत्यर्थः। ज्ञानस्य बाध्यत्वं न स्वरूपतः, नच विषयतः, किन्तु बाध्यप्रवृत्तिकत्वम्, उत्तरज्ञानस्य च बाधकत्वं पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम्, अन्यथाख्यातिवादेऽपि ज्ञानस्य स्वरूपेण बाध्यत्वमनभिमतम्, किन्तु विषयबाध्यत्वमेवाभिमतम्, अस्माकं तु ज्ञानफलभूतप्रवृत्तेर्वा बाध्यत्वमिति भिदा, प्रवृत्तेश्च बाधितत्वं प्रतिबद्धोत्पत्तिकत्वं विफलत्वं वा, (नात इति) मिथ्यार्थ-

* भावप्रकाशिका *

वशाच्चाम्बुनो ग्रहणमित्युक्तेरुपलक्षणत्वादिति भावः। (पूर्वोत्तरज्ञानयोस्तथारूपत्वादिति) विद्यमानशुक्त्यवयवभूयस्त्वाग्रहरूपस्य रजतज्ञानस्य बाध्यत्वं विद्यमानभूयस्त्वग्रहस्य शुक्तिज्ञानस्य बाधकत्वमिति भावः। नच विद्यमानभूयस्त्वप्रतियोगिभूतरजतावयवानां नेदं रजतम्, किन्तु शुक्तिरितिज्ञानकाले अप्रतीतेः कथं तत्प्रतियोगिकं भूयस्त्वं भासेतेति वाच्यम्, वस्तुतो यदवयवाः भूयांसस्तज्ज्ञानं

एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥

* श्रुतप्रकाशिका *

सत्यार्थशब्दाभ्यां पराभिमतमिथ्यात्वसत्यत्वे विवक्षिते । ( एवमिति ) सर्वस्य सर्वत्वेऽपि व्यवहारव्यवस्थितिः— हानोपादानादिनियमः । एवम्—भूयस्त्वसाकल्य-वैकल्याभ्यामित्यर्थः । साधारणाकारग्रहणभेदाग्रहदोषादृष्टानि सर्ववादिभिरभ्यु-पेतव्यानि , तावता प्रवृत्त्यादिसम्भवेऽपि अधिककल्पनायामन्येषां गौरवं स्यात्, तत्रेष्टरूपरूपिनिरन्तरभानात्प्रवृत्तिः, द्विष्टरूपरूपिनिरन्तरभानान्निवृत्तिः, रूप-रूपिणोर्धर्म्यन्तरनिष्ठत्वविरोधिधर्मान्तराश्रितत्वभानविरहेण भानम् निरन्तरभानम्; अत एव भेदाग्रहात्प्रवृत्तिश्चेत् ; रज्जुसर्पभेदाग्रहे निवृत्तिर्न स्यादित्यादीनि चोद्यानि नावकाशं लभन्ते , यः परमते ख्यात्यन्तरहेतुरभ्युपेतः स एवास्माकं प्रवृत्त्यादि-हेतुः । प्राभाकरैर्मन्त्रार्थवादार्थतात्पर्यानभ्युपगमात्केवलभेदाग्रहेणैव निर्वाहः कृतः । अत्र तु मन्त्रार्थवादयोः प्रतीयमानार्थे प्रामाण्याभ्युपगमादुपनिषद्भागा-वगतं त्रिवृत्करणं, तत्प्रदर्शितं पञ्चीकरणम्, ईश्वरकर्तृकं सर्गविशेषं, तथाप्रतिनिधि-न्यायं, भेदाग्रहमप्युपजीव्य निर्वाहः कृत इति वैषम्यम् । तत्र भूते भूतान्तरभ्रमस्य त्रिवृत्करणेन निर्वाहः स्फुटतरः, सदृशे सदृशान्तरभ्रमस्य तु प्रतिनिधिन्यायेनैव निर्वाहः , न तु त्रिवृत्करणेनोपयोग इति केचिदाचार्याः । त्रिवृत्करणमपि विजा-तीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तरभ्रमनिर्वाहौपयिकमिति च सम्प्र-

* भावप्रकाशिका *

बाधकम्, यदवयवा अल्पीयांसस्तज्ज्ञानं बाध्यम्, बाध्यत्वञ्च बाध्यप्रवृत्तिकत्वम्, विफलप्रवृत्तिकत्वमिति यावत् । अत एव प्रवृत्तेर्बाधितत्वं विफलत्वं वेति वक्ष्यति, अत एव क्वापि शुक्तौ शुक्तिज्ञानस्य रजतज्ञानेन बाधो न स्यात्, रजतज्ञानस्य वस्तु-तोऽल्पविषयत्वेन वास्तवभूतावयवविषयत्वाभावात्, इति शङ्का परास्ता । शुक्तौ शुक्तिज्ञानस्य विफलप्रवृत्तित्वाभावेन बाध्यत्वाभावादिति द्रष्टव्यम् । ( धर्म्यन्तर-निष्ठत्वेति ) रजतत्वादौ रूपे धर्म्यन्तरनिष्ठत्वभानविरहः , रूपिणि शुक्त्यादौ रज-तत्वविरोधिधर्मान्तराश्रितत्वभानविरहोप्यपेक्षित इत्यर्थः । ( अत एव भेदाग्रहा-दिति ) इष्टभेदाग्रहः प्रवर्तकः, अनिष्टभेदाग्रहो निवर्तक इत्यभ्युपगमेन भेदाग्रह-मात्रस्य प्रवर्तकत्वानभ्युपगमादिति भावः । ( अत्र त्विति ) सिद्धान्ते त्वित्यर्थः ।

* श्रुतप्रकाशिका *

दायः । श्रुतिस्मृतिभ्यः सर्वस्येत्यादिग्रन्थानां स्वारस्यात्तथावगम्यते, अतस्त्रिवृत्करणश्रवणपञ्चीकरणस्मरणाभ्यां प्रतिनिधिन्यायाच्च सदृशे सदृशान्तरबुद्धियाथार्थ्यं निरूप्यते । ननु कथं सदृशे सदृशान्तरभ्रमस्य त्रिवृत्करणेनोपयोगः, ! नहि त्रिवृत्करणात्पूर्वं रजताद्यवयवाः सन्ति , तथासति हि त्रिवृत्करणनिबन्धनं शुक्तौ रजतादिसम्मिश्रणं स्यात् , न च तदस्ति, त्रिवृत्करणस्याण्डसृष्टेः पूर्वभावित्वात् , उच्यते ; पाञ्चभौतिकेष्वपि पदार्थेषु किञ्चित्कार्यं केनचित्प्रचुरेण भूतेन परिणामविशेषवता आरब्धम् ; तत्र यादृशपरिणामयुक्तयद्भूतप्रचुरं यत्कार्यं तस्य तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविधतद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते । यद्यप्यवान्तराकारविशेषस्त्रिवृत्करणदशायां नास्ति, तथापि त्रिवृत्करणेन कार्यानुप्रविष्टस्य तस्य भूतस्य कार्यान्तरावयवसमानपरिणामसम्भवाद्भौतिकान्तरे भौतिकान्तरबुद्धेर्याथार्थ्यं घटते , तथा त्रिवृत्करणेन शुक्त्यावन्तर्गतस्य तेजोंशस्य शुक्लभास्वररूपेण परिणामवतो रजतसौसादृश्याद्रजतावयवत्वमुपपन्नम् , तादृशाकारयुक्ततत्तद्भूतविशेषवन्त एव हि सम्यग्रजतादयो निरीक्ष्यन्ते, अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यते । ननु कथं शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वम्, नहि ते रजतादिभ्य आनीय निवेशिताः । उच्यते ; सम्प्रतिपन्नरजताद्यवयवसुसदृशाकारत्वमेव तेषां रजताद्यवयवत्वम्, न तु रजतादिभ्य आनीय निवेशितत्वम् । यथा सम्प्रतिपन्नरजताद्यवयवानाम् , न ह्यापणस्थरजताद्यवयवाः कुतश्चिद्रजतान्तरादेरानीय निवेशिताः, एवमेव पूतीका-

* भावप्रकाशिका *

( विजातीयभूतारब्ध इति ) विजातीयभूतावयवप्रचुरारब्ध इत्यर्थः । ततश्च विजातीयपृथिव्यवयवप्रचुरारब्धे शुक्तिशकले तद्विजातीयतेजोवयवप्रचुरारब्धरजतभ्रमौपयिकमित्यर्थः । ( अण्डसृष्टेः पूर्वभावित्वादिति ) तदानीं रजतादेरप्रसक्तेर्येन तन्मिश्रणं स्यादिति भावः । ( पाञ्चभौतिकेष्वपीति ) सत्यरजतस्थले रजतपरिणामविशेषयोग्यतेजोंशसत्त्वेन रजतारम्भावयववत् शुक्त्यादावपि तादृशरजतपरिणामविशेषयोग्यतेजोंशसत्वात्तत्र रजतावयवारम्भसम्भवात् याथार्थ्यमुपपद्यत इति भावः । ( त्रिवृत्करणेन कार्यानुप्रविष्टस्येति ) मरीचि[illegible]रूपकार्यानुप्रविष्टस्य

* श्रुतप्रकाशिका *

दिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम सम्प्रतिपन्नसोमलताद्यवयवसुसदृशत्वमेव, तच्च स्फुटतरप्रतीतिसिद्धमबाधितञ्च, नहि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति। तेषामवयवानां विजातीयावयवप्राचुर्यादकार्यकरत्वम्, प्रचुरक्षीरनिविष्टाल्पसलिलस्येव प्रचुरकनकसंसृष्टाल्परजतस्येव च सम्भवति। नन्वेवं शुक्तितयाऽभिमतपुञ्जस्य शुक्तित्वमपुष्कलं स्यात्, विजातीयावयवसंसर्गात्, पुरुषमृगे पुरुषत्ववत्, पुरुषमृगत्वं नाम पुरुषत्वमृगत्वविलक्षणं जात्यन्तरम्, न तु विकलं पुरुषत्वं मृगत्वं चेति चेत्; तर्हि शुक्तितयाभिमतपुञ्जस्यापि शुक्तित्वरजतत्वविलक्षणजात्यन्तरत्वं स्यात्, ततश्च पुरुषमृगे पुरुषव्यवहारवत् शुक्तिव्यवहारो न मुख्यः स्यात्, विजातीयसंसृष्टायाः भ्रमाधिष्ठानभूतायाः शुक्तेः पुरुषेण पुरुषमृगस्येव शुक्त्यन्तरेण सौसादृश्याभावात्, सौसादृश्ये सति हि तद्व्यवहारस्य मुख्यत्वम्, तदभावाद्धि सिंहो देवदत्त इत्यस्यामुख्यत्वम्. शुक्त्यवयवप्राचुर्याच्छुक्तित्वं पुष्कलम्, तत एव तद्व्यवहारश्च मुख्य इति चेत्; तर्हि रजतांशस्याप्रचुरत्वादेव रजतत्वं नास्तीति रजतबुद्धेर्याथार्थ्यं न स्यात्। उच्यते; पुरुषत्ववत् शुक्तित्वस्यावयवसंहतिविशेषवृत्तित्वाभावादणुमात्रेऽपि शुक्तित्वं पुष्कलम्। पुरुषत्वस्य तु सङ्घातविशेषवृत्तितया सङ्घातवैकल्यात्तदपौष्कल्यं जात्यन्तरं वा तत्र स्यात्, शुक्तित्वं तु न तथेत्युक्तम्। अतः शुक्त्यवयवेषु शुक्तित्वतद्व्यवहारावुपपन्नौ, तत्र विरुद्धजात्यन्वयाभावात्, शुक्तितयाऽभिमतसङ्घाते तु शुक्त्यवयवप्राचुर्यादर्थक्रियाव्यवस्था शब्दव्यवस्था

❀ भावप्रकाशिका ❀

जलरूपस्य भूतस्य समुद्रादिरूपकार्यान्तरावयवजलसमानपरिणामसम्भवान्मरीचिकारूपभौतिकान्तरे समुद्रादिलक्षणभौतिकान्तरबुद्धियाथार्थ्यं यथा घटते तथेत्यर्थः। अतश्शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यत इति। ननु त्रिवृत्करणं शुक्तौ रजतसद्भावप्रयोजकं चेत्, त्रिवृत्कृततेजोंशस्य सर्वत्र पार्थिवे सत्त्वात् सर्वत्र रजतसादृश्यं स्यात्, तेजोऽवयवेषु तारतम्यासम्भवात् पार्थिवेषु सर्वेषु अष्टमांशस्य तेजसस्सर्वत्र सत्त्वात् सर्वत्र तद्भ्रमस्स्यादिति चेन्न, अदृष्टाधीनपरिणामविशेषस्य कार्यानुरोधेन क्वचिदेव कल्प्यत्वेनाक्षेपात्। ( अणुमात्रेऽपि शुक्तित्वं पुष्कलमिति )

* श्रुतप्रकाशिका *

चोपपद्यते । प्रचुरशुक्त्यभिभूतत्वेन रजतांशस्यागृहीतत्वात् गृहीतशुक्तिविवक्षया तद्विषयत्वेन प्रयुक्तश्शब्दो मुख्य इत्युपपन्नम् । नच भ्रमाधिष्ठानभूतायाः शुक्तेर्विजातीयावयवयोगितया शुक्त्यन्तरसौसादृश्यहानिः, शुक्त्यन्तरस्याप्यल्परजतांशमिश्रत्वाद्रजतांशाभिभवेन शुक्त्यन्तरसौसादृश्यप्रतीतिरुपपद्यते । शुक्त्यवयवानां तु परस्परसौसादृश्यमुपपन्नतरम्, उक्तरीत्या रजतांशस्य च रजतत्वं मुख्यम् । तस्मिन्नंशे विरुद्धजात्यन्वयाभावात् रजतान्तरावयवसौसादृश्यं च । भ्रमदशायां गृह्यमाणस्य तस्य प्रचुरशुक्तिग्रहणाभिभूतत्वाभावाद्रजतान्तरावयवसौसादृश्यप्रतीतिरुपपद्यते, अत एव रजतव्यवहारश्च मुख्यः, अतः शुक्त्यादौ रजतादिबुद्धेर्याथार्थ्यमुपपन्नम् । अल्पस्य रजतस्य प्रचुरतया ग्रहणेऽन्यथाख्यातिप्रसङ्ग इति चेन्न; प्राचुर्यग्रहणाभावात्, अल्पत्वाग्रहणमेव हि तत्र विद्यते, प्राचुर्यस्य प्रतियोग्यपेक्षत्वात्प्रतियोगिभूतशुक्त्यग्रहणात्तद्ग्रहणे प्रवृत्त्यसम्भवाच्च शुक्त्यपेक्षया रजतांशस्य प्राचुर्यं न गृहीतमिति नान्यथाख्यातिः । नन्वल्पत्वाग्रहणं नाम प्रचुरत्वग्रहणं स्यात्, भवन्मते हि भावान्तरमभावः, अतोऽन्यथाख्यातत्वमिति चेन्न, अल्पत्वाग्रहणं नाम न प्राचुर्यग्रहणम्, अपि तु अल्पत्वविषयज्ञानसङ्कोच इति अन्यथाग्रहाभावात्, नेदं रजतमित्यत्र नञर्थः कः इति चेत्; शुक्तित्वमेवेति ब्रूमः, यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः, स चाकारः प्रतियोगिसापेक्षैर्नेदं रजतमित्यादिशब्दैस्तदनपेक्षैः शुक्त्यादिशब्दैश्च व्यवह्रियते, एवम्भूते भूतान्तरसद्भावात् सदृशे सदृशान्तरसद्भावाच्च शुक्तिरूप्यादिबुद्धेर्याथार्थ्यमुपपादितम्, नहि

* भावप्रकाशिका *

रजतत्वसुवर्णत्वपृथिवीत्वादिवच्छुक्तित्वादिजातिरवयविनिष्ठा, नतु घटत्वपुरुषत्वादिवदवयविमात्रनिष्ठा, शुक्तिशकलेपि इयं शुक्तिरितिव्यवहारात् । यदि चात्र विप्रतिपत्तिः तर्हि शुक्तिपदं रजतभ्रमाधिष्ठानरज्ज्वादिपरम् । रज्जुत्वस्यावयवावयविनिष्ठत्वे अविवादात् । ननु पुरुषत्वादेरवयविमात्रनिष्ठत्वे स्थाणौ पुरुषत्वभ्रमः कथं निर्वोढव्यः ? पुरुषत्वस्य पाणिपादसङ्घातवृत्तितया पुरुषावयवेषु पुरुषत्वस्याभावे नान्यथाख्यात्यापत्तेः । किञ्च व्रीहित्वजातेरप्यवयवावयविनिष्ठत्वाभावात् व्रीहिभ्रमनिर्वाहानुपपत्तिश्च, नीवारादौ व्रीहित्वजातिसत्त्वे च मुख्यत्वमेव स्यात्, न प्रति-

स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते । तथाहि श्रुतिः स्वप्नविषया [1]"न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान् रथयोगान्

* श्रुतप्रकाशिका *

स्वप्नार्थानां सदृशे सदृशान्तरसद्भावो भूते भूतान्तरसद्भावो वा वक्तुं शक्यत इत्यत्राह ( स्वप्ने चेति ) कथं केचित्सुखरूपाः केचिद्दुःखरूपा इत्यत्राह ( पुण्यपापानुगुणमिति ) भगवतैव—जगत्स्रष्ट्रैव । तर्ह्यन्यैरप्युपलभ्येत, सदा चोपलभ्येतेत्यत्राह ( तत्तदिति ) कथं दृष्टविसजातीयाः इत्यत्राह ( तथाभूता इति ) श्रुतिं दर्शयति ( तथाहीति ) स्वप्नविषयत्वमस्य वाक्यस्य कथमिति शङ्कायां स्वप्नं पश्यतीति पूर्ववाक्यं स्मारयति ( स्वप्नविषयेति ) रथयोगाः—अश्वादयः । न

* भावप्रकाशिका *

निधित्वम् ; अत एव मीमांसकैरपि 'सामान्यं तच्चिकीर्षया हि' इत्यत्र व्रीहिसदृशनीवारद्रव्येषु न व्रीहित्वजातिः, नापि व्यक्तिः, नीवारत्वजातितद्व्यक्त्योर्व्रीहित्वजातितद्व्यक्त्यपेक्षया भिन्नत्वात्, तथापि सदृशद्रव्योपादाने व्रीहिशास्त्रस्य कियानप्यनुग्रहोऽस्ति, तथाहि; 'व्रीहिभिर्यजेत' इति व्रीहित्वजातेस्साधनत्वं बोध्यते. अमूर्तायाश्च जातेस्स्वतो हेतुत्वासम्भवात् व्यक्तिपरिच्छेदमुखेनेति वक्तव्यम्, व्यक्तेरपि पुरोडाशादिनिष्पत्तौ अवघातादिशास्त्रपर्यालोचनया च तदवयवद्वारा हेतुत्वं वक्तव्यम् ; ततश्च व्रीहित्वजातेर्व्रीहितदवयवपरिच्छेदमुखेनाङ्गत्वाद्व्रीहित्वजातेरिव व्यक्तितदवयवानामप्यङ्गत्वं सिद्धम् । ततश्च जातिव्यक्त्यवयवा व्रीहिशास्त्रार्थाः तत्र सदृशोपादाने जातिव्यक्त्योरशास्त्रार्थयोरलाभेऽपि तदवयवरूपशास्त्रार्थलाभेन व्रीहिशास्त्रार्थमपि किञ्चिदनुगृहीतं भवतीत्युक्तमिति चेन्न; यत्र जातिरवयवावयविवृत्तिस्तत्र तत्प्रतीतेर्याथार्थ्यमस्ति, इतरत्र तु प्राभाकरोक्तरीत्या अख्यातिः, यथा पञ्चलोहारब्धे कार्ये सर्वापि लोहप्रतीतिर्यथार्थेत्यत्रैव भाष्यकृतस्संरम्भः । ( स्वप्नं पश्यतीति पूर्ववाक्यमिति ) यद्यपि स यत्र स्वपिति अस्य लोकस्य सर्वावयवतो मात्रामुपादाय स्वयं

1. बृह. उप. ६-अ. ३-ब्रा. १०- वा.

पथस्सृजते । न तत्रानन्दा मुदः प्रमुदो भवन्ति । अथानन्दान्मुदः प्रमुदः सृजते । न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति । अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यस्सृजते । स हि कर्त्ता " इति । यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति । तथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति । स हि कर्त्ता । तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं

* श्रुतप्रकाशिका *

भवन्ति-दृष्टसजातीया न भवन्तीत्यर्थः । ( आनन्दा मुदः प्रमुद इति ) साधारणभोग्यदर्शनजा प्रीतिर्मुत्, असाधारणभोग्यत्वज्ञानजा प्रीतिः प्रमुत्, विनियोगजा प्रीतिरानन्दः । यद्वा विलक्षणविषयदर्शनजा प्रीतिर्मुत् , तस्य स्वविनियोगार्हत्वज्ञानजन्या प्रीतिः प्रमुत्, विनियोगजा प्रीतिरानन्द इति ; एतैः शब्दैर्विषया लक्ष्यन्ते । मुख्यार्थत्वे दृष्टविसजातीयत्वायोगात् ; वेशान्ताः– गृहाः । यद्वा वेशान्ताः– पल्वलानीत्यर्थः । कथमुपपद्यत इत्यत्राह ( स हि कर्त्तेति ) सर्वशक्तिर्हि कर्त्ता, किमनुपपन्नमिति भावः । तच्छब्दो न प्रकृतजीवपरः, अपि तु प्रसिद्धपरमात्मपरः । व्याघातपौनरुक्त्यशङ्कापरिहारार्थमस्याः श्रुतेरर्थमाह ( यद्यपि सकलेति ) सृजत इतिपदविरोधपरिहाराय न भवन्तीति निषेधस्य सङ्कोचो हि उत्सर्गापवादन्यायेन कृतः, अतः कालान्तरस्थायित्वपुरुषान्तरानुभाव्यत्वाकारविषयो निषेधः , नतु तत्कालतत्पुरुषमात्रानुभाव्यतया स्वरूपनिषेधः, अतो जाग्रदवस्थानुभूतवस्तुसजातीया अनेकपुरुषानुभाव्याः कालान्तरस्थायिनश्च न भवन्तीत्यर्थः। स हि कर्त्तेत्येतत्खण्डमुक्तार्थोपपादकत्वेन व्याचष्टे (तस्येति) स्वप्नार्थ-

* भावप्रकाशिका *

विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति 'अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति' 'न तत्र रथा' इत्येव श्रुत्याकारः, तथापीदं वाक्यं तत्समानार्थं लौकिकमुपात्तं द्रष्टव्यम् । ( मुख्यार्थत्व इति ) स्वाप्नानां मुदादीनां जाग्रत्सुखादिवैल-

कर्तृत्वं सम्भवतीत्यर्थः । [1]" य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चन" इति च । सूत्रकारोऽपि– [2] "सन्ध्ये सृष्टिराह हि" [3]"निर्मातारं चैके पुत्रादयश्च" इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य [4]"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादिना न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते । जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्, ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम् । "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति परमात्मैव तत्र स्रष्टेत्यवग-

* श्रुतप्रकाशिका *

सृष्टेरीश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरमाह ( य एषु सुप्तेष्विति ) स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्यापारमार्थ्यं सूत्रकारेण सिद्धान्तितमिति व्याख्यातृमतभेदेन अस्याः श्रुतेर्नायमर्थ इति शङ्काव्युदासार्थमुक्तार्थस्य सूत्रकाराभिमतत्वमाह ( सूत्रेति ) सूत्रार्थमाह ( स्वाप्नेष्विति ) जीवस्यापि स्वप्नदशायां सत्यसङ्कल्पत्वाद्याविर्भावः कल्प्यत इत्यत्राह ( तस्मिँल्लोका इति ) अनन्यथासिद्धस्यैव हि कल्पकत्वम्, परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परात्मनैवोपपन्नत्वान्न जीवस्य स्वरूपाविर्भावः कल्प्यत इत्यर्थः । कथमपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यमुपपद्यत

ॐ भावप्रकाशिका ॐ

लक्षणयायोगात्, विषयाणामेव विलक्षणत्वादित्यर्थः । ( व्याघातपौनरुक्त्येति ) न भवन्ति रथान् सृजत इति व्याघातः, सृजते स हि कर्तेत्यनयोः पौनरुक्त्यमिति

1 कठ. २-अ. ५-वल्ली. ८. | २-३-४. शारी. ३-अ. २-पा. १-२-३-सू.

म्यते– इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते ॥ पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसम्भिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते । तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते ; अतः सुवर्णानुलिप्तशङ्खवत् पीतः शङ्ख इति प्रतीयते । पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात् पार्श्वस्थैर्न गृह्यते । पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात्सूक्ष्ममपि गृह्यते । तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि

---

* श्रुतप्रकाशिका *

इत्यत्राह ( अपवरकादिष्विति ) स्वयमेव स्वदुःखावहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः कल्प्यत इति चार्थसिद्धम्, शिरश्छेदादय इत्युक्तत्वात्. सरूपे देहान्तरे शयानदेहव्यवहारो भेदाग्रहकृतः , न त्वन्यथाख्यातिकृतः । एवं स्वाप्नार्थेषु तत्तदेकपुरुषानुभाव्यत्वतत्तत्कालावसायित्वरूपभेदाग्रहात्प्रवृत्त्यादिर्भवति, पीतशङ्खादावीश्वरस्रष्टृत्वश्रुतिर्दर्शयितुं न शक्यत इत्यत्राह ( पीतेति ) पीतिमवच्छौक्ल्यमपि प्रतीयेतेत्यत्राह ( तत्रेति ) तर्हि पार्श्वस्थैरपि पित्तद्रव्यं ग्राह्यमित्यत्राह ( पित्तेति ) तर्हि सूक्ष्मत्वात्तेनापि न पित्तं ग्राह्यमित्यत्राह ( पित्तोपहतेन त्विति ) दूरस्थशङ्खस्यातिसामीप्याभावात्कथं तत्रस्थं पित्तद्रव्यं गृह्यत इत्यत्राह ( तद्ग्रहणेति ) यथा अतिदूरमुत्पतितः पतगो न द्रष्टुं शक्यते, तथापि सन्निकर्षोत्पतनकालादारभ्य निरन्तरमवेक्ष्यमाणस्तज्जनितसंस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते तद्वदित्यर्थः । प्राभाकरैः पित्तपीतिमशङ्खद्रव्यं च निरन्तरं गृह्येत इत्यु-

* भावप्रकाशिका *

भावः । ( शिरश्छेदादय इत्युक्तत्वादिति ) छेदः । ( दृष्टान्ते चायं भाव इति )

गृह्यते ॥ जपाकुसुमसमीपवर्त्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते । जपाकुसुमप्रभावितापि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम् । मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम् । अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते । चक्रप्रती-

* श्रुतप्रकाशिका *

क्तम्; अत्र तु रूपद्रव्ये चक्षुषः सामर्थ्यात् पित्तद्रव्यं गृह्यत इत्युक्तमिति विशेषः, सुवर्णानुलिप्तशङ्खवदिति दृष्टान्ते चायं भावः । ननु यदि पित्तद्रव्यशङ्खयोर्भेदाग्रहात् पीतशङ्खव्यवहारः, तर्हि पटे पीतव्यवहारः कथं न स्यात्? अन्यथाख्यातौ वा कथं पटे पीतव्यवहाराभावः? भ्रमे सति तन्मूलनिरूपणा कार्या । न तु सर्वत्र भ्रमेण भवितव्यमिति चेत्, तुल्यम्. जपाकुसुमस्फटिकादौ चाक्षुषदोषसंसर्गो दुर्वच इत्यत्राह (जपेति) जपाकुसुमस्फटिकमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरेण सम्बन्धात् यथार्था प्रतीतिरिति निर्वाहः । जपाकुसुमप्रभासम्बन्धाद्रक्तप्रतीतिश्चेत् तत्सम्बन्धात्पाषाणादिष्वपि तथा स्यादित्यत्राह (स्वच्छेति) (मरीचिकेति) अदृष्टस्य नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिरभ्युपेतव्यम्, अन्यथा सर्वेषां सर्वदा सर्वत्र सर्वविषयभ्रमप्रसङ्गात् कदाचिदपि भ्रमाभावप्रसङ्गाच्च (अलातेति) अन्तरालाग्रहणात्—पूर्वोत्तरकाल-

* भावप्रकाशिका *

तत्र पीतिमविशिष्टसुवर्णद्रव्यस्यापि ग्रहणमस्तीति भावः । (चाक्षुषदोषसंसर्गो दुर्वच इति) पित्तानुपहतनयनानामपि स्फटिके पीतत्वोपलब्धेरित्यर्थः । (अदृष्टस्य नियामकत्वमिति) ननु समीपस्थानां जलं नास्ति एतावन्तं कालमिदं जलतयाऽभ्राम्यम्, असदेव जलत्वमभादित्यादिपरीक्षितप्रत्यक्षाणां का गतिः? तेषा-

तावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव । क्वचिदन्तरालाभावादन्तरालाग्रहणम् , क्वचिच्छैघ्र्यादग्रहणमिति विशेषः, अतस्तदपि यथार्थम् । दर्पणादिषु निजमुखप्रतीतिरपि यथार्था । दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति । तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः ॥ दिङ्मोहेऽपि दिग-

* श्रुतप्रकाशिका *

भाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोरन्तरालाग्रहणात्, क्रमाग्रहणादित्यर्थः । अन्तरालाग्रहणे सति कथं याथार्थ्यमित्यत्राह ( चक्रेति ) चक्रप्रतीतिः—सम्यक् चक्रप्रतीतिः । को विशेष इत्यत्राह ( क्वचिदिति ) ( दर्पणादिष्विति ) सव्यदक्षिणविपर्यासः कथमिति चेत्. उच्यते , आपेक्षिको हि सव्यदक्षिणभावः, तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्य चान्तरालाग्रहणमेव, विपर्यासो दर्पणदेशगतः, तेनागृहीतान्तरालं मुखमिति अभिमुखस्य दर्पणस्य मुखस्य चान्तरालाग्रहणादाभिमुख्यप्रतीतेर्याथार्थ्यम् , एवं मलिनत्वाल्पत्वादिश्च ( दिङ्मोहेऽपीति ) सर्वदिक्सद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया. तत्र दिग-

* भावप्रकाशिका *

मसंसर्गाग्रहरूपत्वाभ्युपगमे मरीचिकाजलप्रत्यक्षाणामल्पीयसामेव तद्रूपत्वं किं न स्यादिति चेन्न; मरीचिकाजलप्रत्यक्षस्य त्रिवृत्करणशास्त्रानुगृहीतस्यासंसर्गाग्रहरूपत्वमनुचितमिति भाष्यकाराभिप्राय इति केचित्समाधत्ते ( आपेक्षिको हि सव्यदक्षिणभाव इति ) स्वाभिमुखे दर्पणे स्वापेक्षया विपर्यस्तसव्यदक्षिणभावस्सिध्यति, स्वाभिमुखवस्तुनस्स्वविरुद्धसव्यदक्षिणभावस्य सम्प्रतिपन्नत्वाच्चद्ग्रहणपूर्वकस्वमुखग्रहणे मुखस्य च दर्पणस्य चान्तरालरूपविप्रकर्षस्याग्रहणात् दर्पणस्थत्वासंसर्गाग्रहो भवति, ततश्च दर्पणस्थत्वस्वाभिमुखत्वविपर्यस्तसव्यदक्षिणभावप्रतीतीनां याथार्थ्यं सिध्यतीत्यर्थः । ननु , सोपाधिकभ्रमे अन्तरालाग्रहणमप्रयोजकम् दर्पणबिम्बयो-

न्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते। अतो दिगन्तरप्रतीतिर्यथार्थैव । द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किञ्चिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति ; अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिवि-

* श्रुतप्रकाशिका *

न्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम्, अतो यथार्थविषयत्वमिति । दिशां बहुत्वं च "पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यवगम्यते । ( द्विचन्द्रेति ) ततः किमित्यत्राह ( तत्रैकेति ) स्वतः ऋजुप्रसारिणोऽपि चाक्षुषतेजसो वक्रत्वं सम्भवति, दर्पणादिना तद्दर्शनात्. इहाप्यङ्गुल्यवष्टम्भाद्दृष्टादिना तदुपपत्तिः । ततः किमित्यत्राह ( अत इति ) चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुश्चन्द्रैकत्वाग्रहणम्,

* भावप्रकाशिका *

रन्तरालं पश्यतामपि पार्श्वस्थानां बिम्बे दर्पणस्थत्वभ्रान्तिदर्शनादिति चेत् । सत्यम्; उपाधिनिवृत्तिसहितान्तरालग्रहणे भ्रमादर्शनादुपाधिनिवृत्तिसहितान्तरालग्रहणस्याभावोऽपेक्षित इति तात्पर्यम् । ( दिगन्तरप्रतियोगिनो दिगन्तरस्य चेति ) यस्मिन् प्रदेशे प्रत्यक्त्वभ्रमो जायते तत्र प्रत्यक्त्वमवध्यन्तरापेक्षयास्त्येव, स्वाश्रयदेशापेक्षया परं नास्ति, ततश्चान्यावधिके प्रत्यक्त्वे स्वाश्रयदेशावधिकत्वासंसर्गाग्रह इत्यर्थः । ( चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुरिति ) एकस्य चन्द्रस्य द्वौ देशाविति प्रतीत्यभावहेतुरित्यर्थः । भाष्ये–युगपद्देशद्वयेत्यत्र यौगपद्योक्तिरशैघ्र्याभिप्राया । एकस्मिन् क्षणे ज्ञानद्वयासम्भवात् । भाष्ये–ग्रहणभेदेन ग्राह्याकार-

शेषः । देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य अगृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति । तत्र सामग्रीद्वित्वं पारमार्थिकम् । तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम् । ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम् । तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते । द्वयोः चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नचाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्, अपगते तु दोषे स्वदेशविशि-

---

* श्रुतप्रकाशिका *

देशान्तरगतस्य तद्विशेषणकत्वं कथमित्यत्राह (देशेति) ततः किं प्रतीतेर्याथार्थ्यस्येत्यत्राह (तत्र सामग्रीति) (तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकमिति) ग्रहणद्वयमतिशैघ्र्यादगृहीतक्रमम्, अत एवागृहीतपरस्परभेदं चेति भावः । विशेषणद्वयविशिष्टविषयग्रहणद्वयेऽपि विशेष्यैक्यं कथं न प्रतीयत इत्यत्राह (तत्रेति) न हि केवलं चक्षुरैक्यप्रतिपत्तिसमर्थं दृष्टं देवदत्तादिषु, अपि तु संस्कारसंस्कृतमेव समर्थं दृष्टम्, संस्कारस्य विलम्बितभावित्वान्न तदानीमैक्यप्रतिपत्तिरित्यर्थः । (चाक्षुषज्ञानं तथैवावतिष्ठत इति) अगृहीतैकत्वचन्द्रमात्रविषयमवतिष्ठत इत्यर्थः । तस्यैवेति पाठे चन्द्रमात्रस्यैव ग्राहकतया तिष्ठतीत्यर्थः । एकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत्राह (द्वयोश्चक्षुषोरिति) स्वतो निर्दोषस्येन्द्रियस्य सदोषत्वं हि कार्यकल्प्यम्, तथा सामग्रीद्वित्वमपीति भावः । तर्हि सदैव चन्द्रद्वित्वं गृह्येतेत्यत्राह (अपगते त्विति) कथं दोषापगमे ऐक्यप्रतिपत्तिरिति

* भावप्रकाशिका *

भेदादिति । ग्रहणभेदेनोल्लिख्यमानदेशरूपग्राह्याकारभेदादित्यर्थम्, नतु ग्रहणभेदायत्तं ग्राह्याकारद्वित्वमितिमन्तव्यम् । ग्राह्यरूपदेशद्वित्वस्य ग्रहणभेदानधीनत्वात्त-

ष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकचन्द्र इति भवति प्रत्ययः । दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम्; अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम् । ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते । अथवा किमनेन बहुनोपपादनप्रकारेण ? प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निर-

* श्रुतप्रकाशिका *

शङ्कायां द्वित्वप्रतिपत्तेरौपाधिकत्वमाह (दोषकृतमिति) (ग्राह्याकारद्वित्वमिति) स्वदेशविशिष्टस्यैक आकारः, अगृहीतान्तरालं प्रदेशान्तरमेक आकारः, तस्याकारत्वं विशेषणत्वम्, न चानाकारस्याकारत्वेनान्यथाख्यानम्, अगृहीतान्तरालत्वे सत्य-प्रधानतया भातस्यैव विशेषणत्वात्, नेत्रवृत्तिर्द्विर्धिगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णा-तीति प्राभाकराः । यथा संवित्सिद्धौ प्राभाकरमतोपन्यासे "नेत्रवृत्तिर्द्विधाभूता द्वे तु वित्ती वितन्वती । द्वित्वं चन्द्रं च युगपत् निर्भासयति तत्र न" इति देशगत-द्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति ततोऽत्र वैषम्यम् । चाक्षुषतेजोगतिभेदरूपसामग्री-द्वयजन्यगतिशैघ्र्यादगृहीतक्रममगृहीतभेदं च ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृ-हीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति; अतो द्विचन्द्रव्यवहार इत्यर्थः । इति निर-वद्यम्- यथार्थख्यातिसमर्थनमित्यर्थः । ख्यात्यन्तरदूषणानामन्योन्यमुक्तानां स्वाभिमतत्वात्तत्र यत्नाभावमाह (ख्यातीति) अथवा किमनेनेत्यादिपाठो बहुपु

७ भावप्रकाशिका ७

त्कृतं ग्राह्याकारद्वित्वञ्च पारमार्थिकम्—इति भाष्यस्याप्ययमेवार्थः । केचित्तु; तत्र सामग्रीद्वित्वग्रहणद्वित्वपारमार्थ्यसाधनसंरम्भात् ग्रहणद्वित्वेन ग्राह्याकारद्वित्वसम-र्थनसंरम्भाच्च ग्रहणगतद्वित्वस्य चन्द्रस्य चासंसर्गाग्रह एव, नतु देशगतद्वित्व-स्येति वदन्ति । तन्न; प्राभाकरमतप्रवेशापत्त्या प्राभाकरमतवैषम्यप्रदर्शकोत्तरटीका-ग्रन्थविरोधप्रसङ्गेन च तस्योपेक्षणीयत्वात् । (नेत्रवृत्तिर्द्विधाभूतेति) ननु श्लोक

स्तनिखिलदोषगन्धमनवधिकातिशयासङ्ख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति, किं नोपपद्यते ? भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वाय अखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः; केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथा तथानुभाव्याः सृज्यन्ते । तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम् ॥

( अविद्यापरत्वेन परोक्तश्रुतिनिर्वाहः )

यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति;

---

* श्रुतप्रकाशिका *

कोशेषु दृश्यते, व्याख्यातृभिर्व्याख्यातश्च ; तत्र परागर्थविषयापरोक्षभ्रमेष्वेकेनैवोत्तरेण परिहारः कृतो भवति । किं न सेत्स्यतीत्यनेन प्रमाणेऽस्तित्वमुक्तम् । किं नोपपद्यत इत्यनेन उपपत्तिरुक्ता । किं प्रमाणं कथमुपपत्तिरित्यत्राह ( भगवता हीति ) अखिलं जगत् सृजतेत्यनेनास्यार्थस्य श्रुतिमूलत्वं सूचितम्, कृत्स्नकार्यकारणत्वाद्ब्रह्मणः 'इदं सर्वमसृजत' इति हि श्रुतिः । प्रतीयमानत्वाविशेषादिदमपि तत्सृष्टमित्यर्थः । तर्हि बाध्यबाधकभावव्यवस्था कथमित्यत्राह ( तत्रेति ) नहि तत्तदेकपुरुषानुभाव्यानां तत्तत्कालावसायिनाञ्च सुखादीनां मिथ्यात्वमिति भावः ॥

अथ श्रुतिस्मृत्यर्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यानि योजयति ( यत्पुनरिति ) अनृतेनेत्यादिश्रुतिं व्याचष्टे ( अनृतेनेति ) पूर्व-

* भावप्रकाशिका *

द्वित्वं चन्द्रस्येति द्वित्वमात्रं प्रतीयते । वित्तिगतद्वित्वमिति कुतोऽवसीयते ? नेत्रवृत्तेर्वित्तिग्रहणसामर्थ्याभावेन वित्तिद्वित्वग्राहकत्वासम्भवादिति चेन्न; द्वे तु वित्ती वितन्वतीति वित्तिगतद्वित्वस्य प्रकृतत्वेन तस्यैव ग्रहणोपपत्तेः ॥ .... .... ....

तदसत्–[1]"अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात्। ऋतेतरविषयो ह्यनृतशब्दः। ऋतमिति कर्मवाचि, [2]"ऋतं पिबन्तौ" इति वचनात्। ऋतम्– कर्मफलाभिसन्धिरहितं परमपुरु-

* श्रुतप्रकाशिका *

निरस्तप्रकारेणानिर्वचनीयस्याप्रामाणिकत्वात्तत्र व्युत्पत्तिर्नास्तीति भावः। अनृतशब्दं व्याचष्टे ( ऋतेतरविषयो ह्यनृतशब्द इति ) हिशब्देन ऋतेतरविषयत्वसम्प्रतिपत्तिः सूचिता; ऋताभावस्य ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थस्त्वयापि वक्तव्य इतिभावः। अनृतशब्दार्थं निष्कष्टुम् ऋतशब्दार्थमाह ( ऋतमितीति ) कर्मवाचि– पुण्यकर्मवाचीत्यर्थः, नतु सत्यवाचीति भावः। कुत इत्यत्राह ( ऋतं पिबन्ताविति ) अस्मिन्वाक्ये सुकृतस्य लोक इति सुक्तमिति भावः। एवंविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता, "यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्युक्त्वा "एवमनृतादात्मानं जुगुप्सेत्" इति पुण्यप्रतियोगिन्यनृतशब्दः प्रयुक्तः, तस्मादनृतशब्दः पुण्यवाची। पुण्यमपि हि मोक्षविरोधि, तत्कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति ( ऋतं कर्मेति )

* भावप्रकाशिका *

( ऋताभावस्य ऋतविरोधिनश्चेति ) नच घटस्य घटाभावाश्रयत्ववत् ऋतस्य ऋताभावाश्रयत्वे को दोष इति वाच्यम्, भावाभावयोस्सामानाधिकरण्यासम्भववत् आधाराधेयभावस्याप्यसम्भवात्। नचैवं घटे घटाभावाभावे घटसत्त्वापत्तिरिति वाच्यम्; घटाभावे घटतदभावयोर्द्वयोरप्यभाववत् घटे घटतदभावयोर्द्वयोरप्यभावोपपत्तेः, अत एव प्रपञ्चाभावरूपस्य ब्रह्मणः प्रपञ्चाधिकरणत्वायोग्यतया ब्रह्माश्रितस्य प्रपञ्चस्य स्वाधिकरणत्वायोग्याधिकरणत्वरूपं मिथ्यात्वमिति परे वदन्ति; अत एव रूपविरोधिनो रूपत्वस्य रूपाश्रितत्वादित्यपि शङ्का परास्ता। अत्र विनाश्यविनाशकभावलक्षणविरोधित्वस्य विवक्षितत्वात्. तन्मते च ज्ञान-

१. छा. ८-प्र. ३-ख. २. वा | २. कठ. १-अ. ३-वल्ली. १- वा.

षाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि । [1]"एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" इति वचनात् ॥ [2]"नासदासीन्नो सदासीत्तदानीम्" इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ । उत्पत्तिवेलायां

* श्रुतप्रकाशिका *

मुमुक्षोः सुकृतं दुष्कृतमुभयं हि विरोधीत्यतस्तद्द्वयं पापम्, अतो नञ्समासान्तर्गतऋतशब्दोऽनभिसंहितफलकर्मपर इत्यर्थः । परमपुरुषाराधनवेषं तत्प्राप्तिफलमित्यनेन "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्येतत्सूचितम् । अनृतशब्दस्य ब्रह्मप्राप्तिविरोधिपरत्वे सति ऋतशब्दस्य बन्धकेतरकर्मवाचित्वसिद्धिरिति तदर्थं तत्पूर्ववाक्येनोपपादयति ( एतमिति ) ऋतानृतशब्दयोः 'एवमनृतादात्मानं जुगुप्सेत्' इत्यादिषु श्रुतिषु पुण्यपापपरत्वेन प्रसिद्धत्वात् "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' 'क्षीयन्ते चास्य कर्माणि' इत्यादिषु सुकृतदुष्कृतयोरुभयोरपि मोक्षविरोधित्वश्रवणान्मोक्षप्रकरणेषु मुमुक्षोस्संसाराख्यानिष्टफलप्रदत्वेनोभयोरपि पापशब्दाभिधेयत्वादस्यानृतशब्दस्यास्मिन् वाक्य एव ब्रह्मप्राप्तिविरोधित्वश्रवणात् 'तस्यान्तरायो मैत्रेय' इत्यादिषु पुण्यपापकर्मणोः मोक्षविरोधिफलत्वश्रवणादनृतशब्दस्यानिर्वचनीयवाचित्वेन व्युत्पत्त्यभावाच्चानृतशब्दस्तदन्यव्युत्पत्त्या मोक्षविरोधिकर्मपर इत्यर्थः । ( नासदासीदित्यादि ) अत्र "अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" इति ब्रह्मशब्दवाच्यशुद्धात्मस्वरूपविषयः सदसच्छब्दप्रयोगः प्रतिबन्दीत्वेनानुसन्धेयः । सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयत्वमुपपादयति ( उत्पत्तीति ) उत्पन्नस्य हि प्रलयः, उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा ;

* भावप्रकाशिका *

रूपब्रह्मणोऽज्ञाननाशकत्वादिति भावः । शङ्कते ( पुण्यमपि हीति ) ( प्रतिबन्दीत्वेनानुसन्धेय इति ) यदि 'नासदासीन्नो सदासीत्तदानीम्' इति श्रुतिबलात् तमश्शब्दितप्रकृतेरनिर्वचनीयत्वम्, तर्हि 'अनादिमत्परं ब्रह्म न सत्तन्नासदु-

1. छा. ८-प्र. ३-ख. १. वा. | 2. यजु. २-अष्ट. ८- प्र. ९- अनु.

सत्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्यय-काले अचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलय-प्रतिपादनपरत्वादस्य वाक्यस्य । नात्र कस्यचित्सद-सदनिर्वचनीयतोच्यते ; सदसतोः कालविशेषे अस-द्भावमात्रवचनात् . अत्र तमश्शब्दाभिहितस्याचित्स-मष्टित्वं श्रुत्यन्तरादवगम्यते–[1] "अव्यक्तमक्षरे लीयते ।

* श्रुतप्रकाशिका *

अतस्तयोरत्र प्रलय उच्यत इत्यर्थः । सत्यच्छब्दाभ्यां 'सच्च त्यच्चाभवत्' इति वाक्यं सारितम् । कार्यावस्थचेतनस्य सच्छब्दोक्तत्वादिह सच्छब्देन तदन्यवाचकेना-सच्छब्देन च कार्यावस्थचेतनाचेतननिषेधः कृतः, वाक्यान्तरैकार्थ्यादित्यर्थः । 'तम आसीत्तमसा गूढम्' इति तदनन्तरवाक्याभिप्रायेणाचित्समष्टिभूते तमश्शब्दा-भिधेये वस्तुनीत्युक्तम् । हेत्वन्तरं चाह (सदसतोरिति) नहि कालविशेषे अनिर्वचनीयमभ्युपगम्यते, अचित्समष्टेस्तमःशब्दवाच्यत्वमुपपादयति (अत्रेति) "तम आसीत्' 'मायां तु प्रकृतिम्" इत्यनयोर्वाक्ययोः पूर्वं क्रमेणोपादान-

* भावप्रकाशिका *

च्यते' इति प्रमाणबलात् ब्रह्मणोपि सदसद्विलक्षणत्वप्रसङ्ग इत्यर्थः । भाष्ये– अचित्समष्टिभूते तमश्शब्दाभिधेय इति । ननु कथं सदसच्छब्दितयोश्चिदचिद्व्य-ष्ट्योरचित्समष्टौ लय इति चेन्न, योग्यतावशेन सूक्ष्मचिदचिच्छरीरके लय इत्यर्थ-कत्वेनादोषात् । भाष्ये –सत्यं तमश्शब्देनेति । ननु तमश्शब्देनाभिहितस्या-चित्समष्टित्वमिति सिद्धान्तिनोक्ते सत्यमित्यादिना अचित्समष्टिभूतायाः प्रकृतेस्सू-क्ष्मावस्थोच्यत इति कथमनूद्यते ? पूर्वत्र तम एवाचित्समष्टिकथनेन प्रकृतेरचित्स-मष्टित्वस्य वा तमसः तत्सूक्ष्मावस्थात्वस्य वा अकथनादिति चेन्न; उभयोरपि विरोधाभावेन तथानुवादोपपत्तेः । (क्रमेणोपादानविवक्षामिति) पूर्वपक्षोपन्यास-दशायां 'तम आसी'दितिवाक्यानन्तरन्तु 'मायां तु प्रकृति'मितिवाक्यमुपाददानस्य पूर्वपक्षिणो विवक्षामित्यर्थः । तमश्शब्दात् साङ्ख्याभिमतप्रकृतिरुच्यत इति

१. सुबाल. २. ख.

अक्षरं तमसि लीयते" इति । सत्यम्; तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते । तस्यास्तु [1]"मायां तु प्रकृतिं विद्यात्" इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत् - नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति । मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयत्वमिति चेत्; तदपि नास्ति; नहि सर्वत्र मायाशब्दो मिथ्याविषयः । असुरराक्षसशस्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात् । यथोक्तम्—

---

* श्रुतप्रकाशिका *

विवक्षां चोद्यरूपेण दर्शयति (सत्यमिति) प्रकृतिशब्दवाच्या मायेत्यभिप्रायः। परिहरति (नैतदेवमिति) कुत इत्यत्राह (मायेति) इतिर्हेतौ । मायाशब्दवाच्या प्रकृतिरित्यभिप्रायः । ऐन्द्रजालिकादिषु मायावित्वप्रयोगदर्शनान्मायामिथ्याशब्दयोः पर्यायत्वादनिर्वाच्यस्य च मिथ्यात्वाच्च मायाशब्दवाच्यत्वमित्यभिप्रायेण शङ्कते (मायेति) परिहरति (तदपि नास्तीति) मायाशब्दस्य मिथ्यापर्यायत्वमेव नास्ति, तथाऽभ्युपगमेऽपि अन्यथाख्यातिभेदाग्रहयोरन्यतरेणैवोपपन्नत्वान्न तद्विषयत्वं युक्तमित्यनिर्वचनीयवाचित्वं नास्तीति भावः । तदुपपादयति (नहीति) मायाशब्दप्रयोगविषयेषु सर्वेषु मिथ्यात्वाननुवृत्तेरित्यर्थः । सत्येषु मायाशब्दप्रयोगं दर्शयति (यथोक्तमिति) नहि ज्ञानबाध्यानामेकैकशः

* भावप्रकाशिका *

शङ्काव्यावृत्त्यर्थं हि प्रकृतिं विद्यादितिवाक्यं तदनन्तरमेवोपात्तमिति भावः । ननु 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इति वाक्यप्राप्तमायानुवादेन 'मायान्तु प्रकृतिं विद्या' दितिवाक्येन प्रकृतिशब्दितमुपादानत्वं विधीयते । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा' दित्यादौ प्रकृतिशब्दस्योपादान एव प्रसिद्धेः,

---

1. श्वेताश्वतरः. ४. अ. १०.

[1]"तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमेकैकश्येन सूदितम् ॥" इति ।
अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी ।
प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव
[2]"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया
सन्निरुद्धः" इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थ-
सर्गकरत्वं दर्शयति । परमपुरुषस्य च तद्वत्तामात्रेण

---

* श्रुतप्रकाशिका *

शस्त्रच्छेद्यत्वमस्ति, तस्मादेकैकशो मायानां छेद्यत्ववचनान्मायाशब्दस्य सत्यपरत्वमिति. अनुयायिन एव प्रवृत्तिनिमित्तत्वान्मायाशब्दप्रयोगविषयेषु सर्वेष्वनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तमित्याह ( अत इति ) आश्चर्यत्वम् विस्मयनीयत्वम् । तच्च विचित्रार्थसर्गकरत्वात् । विचित्रशब्दो नानाविधवाची, नानाविधकार्यकरत्वात्प्रकृतेर्विस्मयनीयत्वम् । मायाशब्दो ह्याश्चर्यवाचीति वक्ष्यते, तस्मादाश्चर्यत्वमेव प्रवृत्तिनिमित्तम् । असत्येषु सत्येष्वपि मायाशब्दप्रयोगविषयेष्वाश्चर्यत्वं विद्यते, प्रकृतेराश्चर्यत्वमेव मायाशब्दाभिधेयत्वनिबन्धनमित्याह ( प्रकृतेरिति ) तदुपपादयति ( अस्मादिति ) विचित्रकार्यकरत्वात्प्रकृतेराश्चर्यरूपत्वमिति न मायामात्रसूत्रविषयभाष्यविरोधः । एवं मायाशब्दार्थ उक्तः । अथ भगवतो मायासम्बन्धश्रवणात्तद्वश्यत्वशङ्काव्युदासाय मायीतिपदगतमत्वर्थीयप्रत्ययार्थमाह ( परमपुरुषस्य चेति ) मायीतिपदोक्तो मायासम्बन्धो न तत्तिरोभाव्यत्वम्, अपि तु

* भावप्रकाशिका *

परैरपि तथा व्याख्यातत्वाच्च, तत एवोपादानमिथ्यात्वस्यापि सिद्धेर्मायानुवादेन प्रकृतित्वं विधीयत इत्येव परेण सुवचमिति चेन्न; प्रकृतिशब्दस्योपादानपरत्वादपि प्रसिद्धिप्राचुर्येणाचित्समष्टिप्रकृतेरेवोपस्थित्या तस्या मायास्वरूपानिर्वचनीयत्वविधानस्यैव तन्मतेप्युचितत्वादिति भावः । ( न मायामात्रसूत्रेति ) 'मायामात्रन्तु

---

[1]. वि-पु. १.अं. १९ अ. २०-श्लो. | २. श्वेताश्वतर. ४-अ. ९.

मायित्वमुच्यते; नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते "तस्मिंश्चान्यो मायया सन्निरुद्धः" इति। [1]"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इति च। [2]"इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते; अत एव हि [3]"भूरित्वष्टेव राजति" इत्युच्यते। नहि मिथ्याभिभूतः कश्चिद्विराजते। [4]"मम माया दुरत्यया" इत्यत्रापि गुणमयीतिवचनात् सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ॥

नाप्यैक्योपदेशानुपपत्त्या, नहि [5]"तत्त्वमसि" इति

* श्रुतप्रकाशिका *

तच्छेपित्वम्. जीवस्यैव तु तत्तिरोधेयत्वम्, तस्यैव तथात्वश्रवणादित्यर्थः। मायाभिभवो जीवस्यैवेत्येतस्मिन्नर्थे परोक्तमेव वचनमाह (अनादीति) 'इन्द्रो मायाभि'रित्यत्र अनेकविचित्रशक्त्यभिधायित्वं बहुवचनादवगम्यते (ममेति) स्पष्टम्। निगमयति (इतीति) मायाशब्दस्य मिथ्याभूतविषयेषु प्रयोगो दृश्यते चेत्, तत्र लाक्षणिकः स्यात्, अर्थस्य सत्यत्वाभावेन तस्याश्चर्यत्वाभावात्, प्रतिभासस्तु द्वित्वादिविषयत्वादाश्चर्यरूपः, मन्त्रौषधादिश्चाश्चर्यरूप इति तत्सम्बन्धाल्लाक्षणिकत्वम्। अथ श्रुत्यर्थापत्त्या अनिर्वचनीयसिद्धिं दूषयति (नापीति) प्रतिज्ञातमुपपादयति (नहीति) अज्ञानापरिकल्पने अनुपपत्तिर्नास्ति, तत्कल्पन एवानुपपत्तिः, विरुद्धधर्म-

* भावप्रकाशिका *

कार्त्स्न्येन' इत्यादिसूत्रे मायाशब्दस्याश्चर्यार्थकत्वप्रतिपादकभाष्येण विचित्रार्थसर्गकारित्वप्रतिपादकस्यास्य भाष्यस्य न विरोध इत्यर्थः। (बहुवचनादवगम्यत इति)

---

१. माण्डूक्योपनिषत्. २-ख. २१.
२. बृहदारण्यक. ४-अ. ६-ब्रा- १९.
३.
४. गीता. ७-अ. १४. श्लो.
५. छा. ६-प्र. ८-ख. ७-वा.

जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकल-जगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः । [1]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् ; अतो न ब्रह्माज्ञानपरिकल्पनम् ॥

—( स्मृतिपुराणानामविद्यापरत्वनिरासः )—

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ननु [1]"ज्योतींषि विष्णु"रिति ब्रह्मैकमेव

* श्रुतप्रकाशिका *

श्रवणादित्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि, समानविभक्तिश्रुतिसिद्धतया ह्यैक्यापरित्यागः, तथा श्रुतहानस्यान्याय्यत्वात्तच्छब्दावगतविशेषाः स्वीकार्या इति भावः । ऐक्योपदेशानुपपत्तिरिति चेत् तत्राह ( ऐक्येति ) जीवपरयोर्हेयसम्बन्धतदनर्हत्वाभ्यां ह्यैक्यविरोधः, जीवशरीरकस्य परमात्मन ऐक्याभिधाने हेयसम्बन्धस्य जीवद्वारकतया विरोधः परिहृत इत्यर्थः । उपपन्नतरः—मुख्यतयोपपन्न इति भावः । जीववाचिशब्देन तच्छरीरकपरब्रह्माभिधानममुख्यमिति चेत् तत्राह ( अनेनेति ) श्रुत्यर्थोपष्टम्भसिद्धिं निगमयति ( अत इति ) ॥ .... ....

इतिहासपुराणयोर्ब्रह्माज्ञानपरत्वाभावं प्रतिजानीते ( इतिहासेति ) ( नन्वित्यादि ) ( ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञायेति ) जडाजडयोः स्वरूपैक्यायोगेन

ॐ भावप्रकाशिका ॐ

त्वदभिमताविद्याया एकत्वादिति भावः । ( प्रतिभासस्तु द्वित्वादिविषयत्वादिति ) अविद्यमानचन्द्रद्वित्वादिविषयत्वादित्यर्थः ॥ .... .... .... .... ....

1. छा. ६-प्र. ३-ख. २-वा. | 1. वि-पु. अं. २-अ. १२. श्लो. ३७

तत्त्वमिति प्रतिज्ञाय [1] "ज्ञानस्वरूपो भगवान् यतोऽसौ", इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय [2] "यदा तु शुद्धं निजरूपि", इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भित-

* श्रुतप्रकाशिका *

सामानाधिकरण्यस्य बाधार्थत्वात् उत्तरश्लोकेषु तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्चेत्यभिप्रायः । विज्ञानविजृम्भितानि—विविधं ज्ञायते येन विपरीतं ज्ञायते येनेति वा करणे व्युत्पत्तिः , विज्ञानमविद्या । 'यदा तु शुद्ध'मित्यादिना तस्य हि व्यतिरेको वक्ष्यते, विज्ञानेन विजृम्भितानीति योजना त्वयुक्ता , अस्वारस्यात्, विजृम्भितानीति नपुंसकान्तपदस्य पुल्लिङ्गभेदशब्दविशेषणत्वायोगेन विजृम्भितशब्दस्य भावार्थप्रत्ययान्तत्वस्य युक्तत्वेन षष्ठीसमासस्य युक्तत्वाच्च । ब्रह्मव्यतिरिक्तस्याविद्यापरिकल्पितत्वं व्यतिरेकमुखेन स्थिरीकरोतीत्याह ( यदा त्विति ) शुद्धम्— अविद्या-

ఛ భावप्रकाशिका ఛ

विशब्दस्य वैविध्यवैपरीत्यरूपार्थद्वयपरत्वसम्भवमभिप्रयन्नाह ( विविधं ज्ञायते येन विपरीतं ज्ञायते येनेति वा करणे व्युत्पत्तिरिति ) 'करणाधिकरणयोश्चे'ति ल्युट् । विज्ञानमविद्येत्यत्र प्रमाणमाह ( यदा तु शुद्धमित्यादिना ) ( तस्य हि व्यतिरेको वक्ष्यत इति ) विज्ञानशब्दस्य 'विज्ञानमेकं निजकर्म भेद' इत्यत्रैव ब्रह्मस्वरूपज्ञानपरत्वे तद्व्यतिरेकप्रपञ्चव्यतिरेकप्रतिपादकस्य 'यदा तु शुद्ध' मित्यस्य श्लोकस्यासामञ्जस्यप्रसङ्गादिति भावः । ननु, विज्ञाने ब्रह्मणि विजृम्भितानि कल्पितानीत्यस्य वक्तुं शक्यत्वात् , श्रीधरेण तथा व्याख्यातत्वाच्च कथं विज्ञानशब्दस्याविद्यार्थकत्वनिर्णय इत्याशङ्क्याह ( विज्ञानेन विजृम्भितानीतीति ) (अस्वारस्यादिति) सप्तमीतियोगविभागाश्रयणेन सप्तमीसमासस्य क्लिष्टत्वादिति भावः । नपुंसकस्येति पाठः । नपुंसकान्तपदस्येतिपाठे नपुंसकत्वद्योतकविभक्त्यन्तपदस्येत्यर्थः । ( पुल्लिङ्गभेदशब्दविशेषणत्वायोगेनेति ) 'जृम्भिगात्रविनामे' इत्यस्याकर्मकतया 'गत्य-

---

१×८वि. पु. अं. २-अ.१२-श्लो. ३८-३९-४०-४१-४२-४३-४४-४५.

त्वमेव स्थिरीकृत्य [३] "वस्त्वस्ति किम्' [४] 'मही घटत्वम्' इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदाना-

* श्रुतप्रकाशिका *

रहितम्। निजरूपि--तत्कृतभेददर्शनरहितम् । अपास्तदोषम्— रागादिदोषरहितम् । सङ्कल्पतरोः—समन्तात्कल्प्यतेऽनेनेति सङ्कल्पः, दोषः वस्तुषु वस्तुभेदा इत्यत्र वस्तुष्विति बहुवचनेन तात्पर्यम् , जडोपलक्षिते वस्तुनि जडगतभेदा न सम्भवन्तीत्यर्थः । यद्वा एको वस्तुशब्द आकारपरः, जडगताकारभेदा न भवन्तीत्यर्थः । 'वस्त्वस्ति किम्' 'महीघटत्व'मिति श्लोकद्वये प्रथमेनार्थस्वभाव उक्तः । द्वितीयेनोदाहरणं दर्शितमिति भिदा, तत्र, कुतो हि तत्त्वम्— एवं सति कुतः परमार्थ इत्यर्थः । कृत्स्नमपरमार्थत्वेनोपलब्धं चेत्कथं तत्र प्रामाण्यमिति शङ्कायामुच्यते , स्वकर्मक्षितिमितात्मनिश्चयैरिति , तत्त्वार्थनिश्चयविरोधिकर्मवशादित्यर्थः । यद्वा, न केवलमात्मविद्भिरेव असत्यत्वमुपलभ्यते, अपि त्वज्ञैरपीति भावः । न केवलं शास्त्र-

* भावप्रकाशिका *

र्थाकर्मके'ति कर्तरि क्तान्तस्य वा ण्यन्तात् कर्मणि क्तान्तस्य वा विजृम्भितशब्दस्याश्रयणे विशेष्यनिघ्नताप्रसङ्गान्नपुंसके 'भावे क्त' इति भावक्तान्तत्वपक्ष एव नपुंसकत्वस्य युक्तत्वाच्च भावप्रत्ययान्त एव विजृम्भितशब्दः । नच भेदानां कथं विजृम्भणरूपधात्वर्थत्वमिति वाच्यम् ; उपचारेण तथा प्रयोगोपपत्तेः । ततश्च भावप्रत्ययान्तत्वे सिद्धे विजृम्भणरूपस्य भावस्य कर्त्राकाङ्क्षाया एवोत्कटत्वादधिकरणाकाङ्क्षाया अतथात्वात् षष्ठीसमास एव युक्त इति भावः । ( बहुवचनेन तात्पर्यमिति ) प्रत्यक्षादिसिद्धबहुत्वानुवादितत्वादिति भावः । ( जडोपलक्षित इति ) देहान्तःकरणादिभिः परस्परव्यावृत्ततया प्रतीते एकस्मिन्नात्मवस्तुनीत्यर्थः । ( जडगतभेदा न सम्भवन्तीत्यर्थ इति ) अन्तःकरणाद्युपाधिप्रयुक्तभेदो न भवतीत्यर्थः । वस्तुभेदशब्दयोः कर्मधारयमभिप्रयन्नाह ( यद्वा एको वस्तुशब्द आकारपर इति ) प्रथमो वस्तुशब्दो जडपर इत्यभिप्रायः । अस्मिन् पक्षे कर्मप्रतिबन्धात्मनिश्चयैरसत्यत्वेनालक्ष्यत इत्यस्य वक्तव्यतया सत्यत्वेनेत्यंशस्याध्याहारप्रसङ्गादुत्तरार्धस्य पूर्वार्धैकवाक्यत्वाभावाच्चापिशब्दमात्रमध्याहृत्य व्याचष्टे ( यद्वा न केवल-

मसत्यत्वमुपपाद्य [५] "तस्मान्न विज्ञानमृते" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य [६] 'विज्ञानमेकम्' इति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य [७] 'ज्ञानं विशुद्धम्'

* श्रुतप्रकाशिका *

प्रमाणेन, लौकिकजडग्राहिप्रमाणेनापि तस्य मिथ्यात्वं सिध्यतीत्युक्तं भवति। 'तस्मान्न विज्ञानमृते' इति श्लोकार्द्धमनात्मभूतविजातीयभेदनिषेधमुपसंहरतीत्याह (तस्मादिति) 'विज्ञानमेक'मित्यर्द्धं सजातीयरूपात्मभेदनिषेधपरम्। (भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेतीति) भेददर्शनम्— सजातीयभेददर्शनम्। तदुत्तरोत्तरभाविकार्याज्ञानहेतुः, तस्यापि पूर्वकर्मैवेत्यर्थः। यो देवादिशरीरभेदहेतुस्स एवेत्येवकाराभिप्रायः। यद्वा, देवादिशरीरभेदप्रतीतिहेतुकाज्ञानमात्मनि देवत्वाद्याकारारोपणरूपं तस्य हेतुः कर्मैवेत्यर्थः। अनात्मन्यात्मबुद्धेरप्यज्ञानशब्दवाच्यत्वं युक्तम्, तस्या अपि मूलाज्ञानकार्यत्वात् "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या" इति तस्या अज्ञानपर्यायाविद्याशब्दवाच्यत्वाच्च. 'ज्ञानं विशुद्ध'मिति स्वगतभेदनिषेधः। विशुद्धं विमलमिति— अविद्यातत्कृतभेददर्शनरहितमित्यर्थः। तत्कृतशोकादिरहितमित्याह— विशोकमिति। एकं सदैकमिति सजातीयविजातीयभेदविरहानुवादः। यद्वा एकमिति सजातीयभेदनिषेधानुवादः, सदैक-

* भावप्रकाशिका *

मिति) (तदुत्तरोत्तरभावीति) अनेन भाष्ये भेददर्शनं निमित्तं यस्याज्ञानस्येति बहुव्रीहिरभिप्रेत इति भावः। अस्मिन् पक्षे कार्याज्ञानं भगकाररागद्वेषादि। (तस्यापि पूर्वकर्मैवेत्यर्थ इति) नच भेददर्शननिमित्तकाज्ञाने भेददर्शनस्यैव हेतुत्वात् कथं कर्मणो हेतुत्वमिति वाच्यम्; मूलकारणं कर्मैवेत्यर्थः। अस्मिन् पक्षे निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतमित्यस्यायमर्थः,— निजकर्मभेदेन विभिन्नचित्तैस्सजातीयभेददर्शनैः, चित्तशब्दो बुद्धिपरः। बहुधाभ्युपेतं कार्याज्ञानयुक्तमिति। अस्मिन् पक्षे बहुधाभ्युपेतमित्यस्यातिक्लिष्टत्वात्पक्षान्तरमाह (यद्वा देवादिशरीरभेदेति) (सजातीयविजातीयभेदविरहानुवाद इति) 'विज्ञानमेक'मित्य-

इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य "सद्भाव एवं भवतो मयोक्तः" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं नान्यस्य; अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमिति ह्युपदेशो दृश्यते ॥ नैतदेवम्; अत्र भुवनकोशस्य

* श्रुतप्रकाशिका *

मित्युक्तप्रकारेण स्वगतभेदराहित्यमुच्यते, परमपरेशादिशब्दवाच्यं चिन्मात्रमेवेत्याह परम इति। नेदं परमतं तत्त्वमेवोक्तमित्याह ( सद्भाव इति ) संव्यवहारभूतम्—समन्ताद्व्यवहारार्हभेदम्। भुवनाश्रितम्— भुवनेनाधिष्ठानतया श्रितमेवैतद्दर्शते; तत्रापि हेतुरज्ञानमेवोक्तमित्यर्थः। यद्वा, भुवनाश्रितम्— भुवनमाश्रितम्, संव्यवहारभूतम्—व्यावहारिकम्, एतत्—लोकसिद्धं सत्यत्वं यत्, तत्रापि कारणमविद्येत्युक्तमित्यर्थः। एतदभिप्रायेण हि तस्य भुवनादेः सत्यत्वं व्यावहारिकमितीत्युक्तम्। ( इति ह्युपदेशो दृश्यत इति ) तस्मादितिहासपुराणयोर्ब्रह्माज्ञानवादो दृश्यत इति वक्तुं न शक्यमित्यर्थः। एतत्प्रतिक्षिपति ( नैतदेवमित्यादिना ) नैतत्— चिन्मात्रब्रह्मणोऽविद्यासम्बन्धित्वमविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तं न तत्प्रामाणिकमित्यर्थः। तथासत्यर्थविरोधात् प्रकरणविरोधाच्छास्त्रतात्पर्यविरोधात् अशेषमूर्त्तिर्भगवानित्यादिपदानां लाक्षणिकत्वात् प्रपञ्चधर्मिग्राहकप्रमाणविरोधात् श्रुतेः सविशेषवस्तुपरत्वोपपादनेन स्मृतेस्तद्विरुद्धार्थपरत्वापातात् पूर्वोक्ततर्कविरोधाच्च तदभावः। अत्रार्थविरोधो नाम—सर्वज्ञत्वादिगुणकस्याज्ञानादिप्रसक्तिविरोधः। अविद्याया आश्रयतिरोधानाद्यनुपपत्तिश्च प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यं प्रकरणविरोधः, अन्यत्तु स्पष्टम्। दशश्लोक्यामस्तिनास्तिसत्या-

* भावप्रकाशिका *

र्थेन सजातीयात्मभेदस्य 'तस्मान्न विज्ञान' मित्यर्थेन नानात्मभूतविजातीयभेदस्य च निषिद्धतया तन्निषेधानुवाद इत्यर्थः। ( स्वगतभेदराहित्यमुच्यत इति ) तद्वदेव पूर्वार्धप्रतिपन्नमनूद्य। इत्यर्थः। द्वितीयपक्षे भाष्यानुगुण्यमाह ( एतदभिप्रायेण हीति ) ( दशश्लोक्यामिति ) श्रीविष्णुपुराणे द्वितीयांशे द्वादशाध्याये—"इत्येष

* श्रुतप्रकाशिका *

सत्यज्ञानाज्ञानादिशब्दा आत्मानात्मविषया इति नात्र विगानम्. तत्र नास्त्यसत्यशब्दयोः किं ज्ञानबाध्यत्वं प्रवृत्तिनिमित्तम् ? उत परिणामित्वम् ? इति विचारे परिणामित्वपक्षे स्वारस्यमस्ति 'मही घटत्व'मित्युपपादनात् । अज्ञानशब्दस्य च नानिर्वचनीयपरत्वम्, अपि तु कर्मपरत्वमेव । 'यज्ञः पशु'रित्यादिस्वारस्यात् । अन्यत्र "शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' 'अविद्याकर्मसंज्ञाऽन्या' 'वाद्यकर्मवृतिप्रजः" इत्यादिवचनाच्च । चिदचिद्विवेकोऽत्र क्रियत इत्यभिप्रेत्य तदनुगुणसङ्गतिमाह ( अत्रेति ) अत्र– अस्मिन् द्वितीयांशे । विस्तीर्णमिति स्वरूपविशेषणम् ।

* भावप्रकाशिका *

सन्निवेशोऽयं पृथिव्या ज्योतिषां तथा । द्वीपानामुदधीनाञ्च पर्वतानाञ्च कीर्तनम् ॥ वर्षाणाञ्च नदीनाञ्च ये च तेषु वसन्ति वै । तेषां स्वरूपमाख्यातं सङ्क्षेपः श्रूयतां पुनः ॥" इत्युपक्षिप्य–"यदम्बु वैष्णवः कायः ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥ ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदा हि शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् । तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥ वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥ मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः । जनैस्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥ तस्मान्न विज्ञानमृतेस्ति किञ्चित् क्वचित् कदाचिद्द्विजवस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषदोषादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥ यज्ञः पशुर्वह्निरशेषऋत्विक् सोमस्सुरास्स्वर्गमयश्च कामः । इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभेदाश्च फलानि तेषाम्" इतिदशश्लोकी पठिता । ( नात्र विगानमिति ) यद्यपि यदस्ति यन्नास्ति च विप्रवर्येत्यत्र अस्तिनास्तिशब्दयोर्भाव-

विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः [1]"श्रूयताम्" इत्यारभ्याभिधीयते । चिदचिन्मिश्रे

* श्रुतप्रकाशिका *

विस्तीर्णशब्देन स्थौल्यं विवक्षितम् । संसृष्टस्थूलरूपमुक्त्वा वियुक्तं सूक्ष्मरूपमुच्यत इति भावः । यद्वा, विस्तीर्णमिति क्रियाविशेषणम्, उत्तरत्र मिथ्यात्वं विवक्षितं चेत् पूर्वं विस्तरेण कथनमनुपपन्नम्, नहि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यम् । तस्मात्पूर्वं विस्तरेण भुवनकोशस्य कथितत्वान्न मिथ्यात्वं वक्ष्यत इति भावः । वक्ष्यमाणमादिभरतचरितं ह्रस्वं विस्तररूपम्, तत्सङ्क्षेपश्चायम्. वक्ष्यमाणसङ्क्षेप उक्तसंक्षेपश्च दृश्यते, अत उक्तसंक्षेपशङ्काव्यावृत्त्यर्थमाह (अनुक्तमिति) अनुक्तं संसृष्टरूपान्तरं कथ्यत इति शङ्काव्यावृत्त्यर्थमाह (रूपान्तरमिति) वियुक्तमित्यर्थः । मिथ्यात्वव्यतिरेकेण वक्तव्यं रूपान्तरं सकलमुक्तम्, तस्मादनुक्तं वक्तव्यं रूपान्तरं नाम मिथ्यात्वम्, नान्यदिति शङ्कायां मिथ्यात्वं विनाऽनुक्तं रूपान्तरमाह (चिदचिन्मिश्र इति) चिदचिन्मिश्रे जगतीत्यनेन 'सङ्क्षेपः श्रूयतां पुन'रित्यत्र पुनःशब्दो व्याख्यातो भवति । चिदचिदात्मके जगति स्थूलरूपत्व-

* भावप्रकाशिका *

भावरूपेण प्रतिपन्नवस्तुपरतया योजयितुं शक्यत्वात् अस्तिशब्दस्यात्मपरत्वे विगानं सम्भवति, तथापि नास्त्यस्तिशब्दयोरचेतनपरत्वेन विवाद इत्यत्र तात्पर्यम् । (अपितु कर्मपरत्वमेवेति) कर्ममूलवैविध्यानुसन्धानपरत्वमेवेत्यर्थः । उत्तरत्र तथाभिधास्यमानत्वात् । (वियुक्तं सूक्ष्मरूपमिति) परस्परमुपकरणोपकरणिभाववियुक्तं प्रकृतिपुरुषयोस्सूक्ष्मं रूपमुच्यत इत्यर्थः । (आदिभरतचरितं ह्रस्वमिति) 'मैत्रेयस्य चरितं कथयिष्यामि ते पुनः" इति प्रथमाध्याये उपक्षिप्तत्वादिदानीं ह्रस्वमिति भावः । ननु सङ्क्षेपशब्दस्य सकलशास्त्रार्थसङ्क्षेपपरत्वसम्भवे प्रथमाध्यायोक्तप्रतिज्ञावशेनादिभरतचरितस्य बुद्धिस्थत्वं परिकल्प्य एतस्य तत्सङ्क्षेपत्वकल्पनमक्लिष्टम् । किञ्च तत्सङ्क्षेपरूपत्वं प्रतिज्ञातं चेत् विस्तरकथनस्य स्वतः प्राप्ततया 'भगवन् सर्वमाख्यात'मिति मैत्रेयस्यादिभरतचरितप्रश्नो न युक्त इति

1 वि. पु. अं. २-अ १६-श्लो. ३६.

जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्तिशब्दवाच्यः । अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः । उभयन्तु पर-

* श्रुतप्रकाशिका *

मुक्तम् तत्रैव जगतीदमपि रूपान्तरं पुनरुच्यत इति तस्यार्थः । 'सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यम्' इत्यादिवाक्योक्तं विशेषणमाह ( चिदंशो वाङ्मनसेति ) द्वैतिनोऽतथ्यदर्शिनः, इत्यादिवाक्यानां भेदनिषेधपराणामर्थं हृदि निधायाह ( अस्पृष्टेति ) यदि चिदंशस्य ज्ञानैकाकारत्वमचिदंशस्य परिणामास्पदत्वं च विवक्षितम्, तर्ह्यस्तिनास्तिसत्यासत्यादिशब्दप्रवृत्तिनिमित्तत्वेन किमर्थमुच्यत इति चेत्. उच्यते ; शाखाविशेषे "सच्च त्यच्चाभवत्' 'विज्ञानं चाविज्ञानं च' सत्यं चानृतं च सत्यमभवत्" इत्यादिवाक्येषु अस्तिनास्तिसत्यासत्यादिशब्दानां श्रूयमाणानामनधीतशाखागतानां च किं ज्ञानबाध्यत्वाबाध्यत्वे प्रवृत्तिनिमित्तभूते? उत परिणामित्वापरिणामित्वे? इति शङ्कां निराकर्तुं परिणामित्वापरिणामित्वे एव नास्त्यसत्यादिशब्दार्थः, न तु ज्ञानबाध्यत्वाबाध्यत्वे इत्यधीतानधीतशाखार्थज्ञापनार्थमिति । पृथिव्यादितत्त्वानां सङ्घातविशेषावस्थायामेव जीवं प्रति शरीरत्वं दृष्टम्, नत्वेकैकस्य. मनुष्यादेशरीराणामपि तादृशपिण्डावस्थायामेव शरीरत्वं दृष्टम्, न गर्भाद्यवस्थायामिति चिदचितोः प्रत्येकमवस्थाविशेषेषु भगवच्छरीरत्वाभावशङ्काव्यावृत्त्यर्थमाह ( उभयमिति ) चिदचिद्रूपमन्योन्यसंसृष्टं च भगवच्छरीरमित्यर्थः । निष्कृष्टस्य भगवच्छरीरत्वप्रतिपादनात् भगवन्तं प्रति शरीरत्वस्य निरुपाधिकतया स्वरूपप्रयुक्तत्वं फलितमिति मुक्तावस्थाया-

* भावप्रकाशिका *

चेन्न ; सकलसङ्कोचरूपत्वे वक्ष्यमाणसङ्कोचरूपत्वमपि सम्भवतीत्यत्र तात्पर्यात् । ( सत्तामात्रमगोचरमिति ) यद्यपि नैतानि वाक्यान्येतत्प्रकरणस्थानि, तथापि 'ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यादीनामेतत्प्रकरणस्थानां तत्समानार्थत्वं वक्तव्यमित्यभिप्रायेण तथोक्तमिति द्रष्टव्यम् ( अधीतानधीतशाखार्थज्ञापनार्थमितीति ) अत्र इतिस्समासौ । विष्णुरात्मेतीत्यस्य वाक्यस्य व्यवहितेनापि शरीरात्मभाव इत्यनेना-

ब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपे-
णात्राभिहितम् । तथा हि —

[1]"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा ।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥"

इत्यम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्ड-
मपि विष्णोः कायः, तस्य च विष्णुरात्मेति सकल-
श्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिक-

* श्रुतप्रकाशिका *

मपि जीवस्य भगवच्छरीरत्वसिद्धिः । एतद्रूपम्—अयमाकार इत्यर्थः । एतदुपपादयति (तथाहीत्यादिना) दशश्लोक्यां न भगवदात्मकत्वमसाधारणं प्रतिपाद्यम्, तत्तु सर्व-प्रकरणसाधारणम्, असाधारणप्रतिपाद्यं तु प्रकृतिपुरुषविवेक एव । शास्त्रस्योपनिष-दर्थोपबृंहणपरत्वात्साङ्ख्यादिमतव्यावृत्त्यर्थं सर्वप्रकरणेषु भगवदात्मकत्वमुच्यते, अत्रासाधारणप्रतिपाद्यः प्रकृतिपुरुषविवेक एवेत्यभिप्रायेण हि पूर्वमनुक्तं रूपान्तरमित्युक्तम् । भगवदात्मकत्वस्य सर्वप्रकरणसाधारण्यं हि, पूर्वमप्येतदसकृदुक्त-मिति उत्तरत्र च वक्ष्यते, दशश्लोकीस्थसामानाधिकरण्यं शरीरात्मभावनिबन्धन-मिति ज्ञापयितुं पूर्वश्लोकमुपादत्ते (यदम्ब्विति) ऋषिणाभिप्रेतं फलितमर्थ-माह (अम्बुनो विष्णोरिति) न हि बाल्यावस्थायां शरीरभूतस्य वस्तुनोऽवस्था-न्तरे चेतनेन स्वरूपैक्यमस्ति, अपि तु सर्वावस्थामपि तद्वस्तु शरीरमेवेति भावः । (तस्य च विष्णुरात्मेतीति) अभिप्रेत्यर्थः । एवंरूपशरीरात्मभाव इति वार्थः । (सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येति) अनधीतशाखास्वपि तादात्म्यो-

* भावप्रकाशिका *

न्वयसम्भवेऽभिप्रेत्येत्यध्याहारोऽनुचित इत्यभिप्रेत्याह (शरीरात्मभाव इति वा अर्थ इति) सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येत्यत्र सकलपदमनधीतशाखा-परम्, तस्याश्चोपबृंहणं तद्विरुद्धार्थवाक्यासत्त्वप्रतिपादनमिति द्वेधार्थसम्भवमभिप्रेत्य व्याचष्टे (अनधीतशाखास्वपीति) (तादात्म्योपदेशोऽस्तीति) य इति शेषः ।

१ वि. पु. अं. २-अ. १२-श्लो. ३७.

रण्यस्य 'ज्योतींषि विष्णुः' इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह । अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम् [1] "तानि सर्वाणि तद्वपुः" [2] "तत्सर्वं वै हरेस्तनुः" [3] "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति । तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते

* श्रुतप्रकाशिका *

पदेशोऽस्ति, तस्यायमेवार्थ इति ज्ञापनं तादात्म्योपदेशस्योपबृंहणम् । यद्वा, प्रत्यक्षसकलश्रुतिगततादात्म्योपदेशोपबृंहणं नाम अनधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम्, अत्र इतिशब्दत्रयस्य अनेन श्लोकेन भगवानिममर्थमभिप्रेत्यायमर्थ इत्याहेत्यन्वयप्रकारः । न केवलमत्र समष्टिसृष्टिश्लोकगतव्यधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति ज्ञायते, अपि तु प्रदेशान्तरेषु व्यष्ट्यवस्थानां भगवन्तं प्रति शरीरत्वं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत्कण्ठोक्तमित्याह (अस्मिन्निति) शरीरात्मभावस्य सामानाधिकरण्यहेतुत्वं कण्ठोक्तं "विश्वरूपो यतोऽव्ययः" इति । तथा

* भावप्रकाशिका *

इतरत्र तस्यायमेवार्थ इति तच्छब्दश्रवणात् (अत्र इतिशब्दत्रयस्येति) एवमिहान्वयक्रमः,-'यदम्बु वैष्णवः कायः' इतिश्लोकेन सकलश्रुतिगततादात्म्योपबृंहणरूपस्य सामानाधिकरण्योपदेशस्य 'ज्योतींषि विष्णु' रित्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्यभिप्रेत्याम्बुनो विष्णोः कार्यत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोश्शरीरमित्याहेत्यन्वयः । नच विष्णुरात्मेत्यभिप्रेत्येति पूर्वग्रन्थविरोध इति वाच्यम्, तस्य व्याख्यानान्तरत्वेनादोषात् । केचित्तु अनेन श्लोकेन तस्य विष्णुरात्मेत्यभिप्रेत्य शरीरात्मभाव एव सामानाधिकरण्ये निबन्धनमिति तात्पर्यत आहेति योजयन्ति (विश्वरूपो यतोऽव्यय इतीति) 'सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् । स एव' इति सामानाधिकरण्येन निर्दिश्य कथमिदं

---

१-२. वि. पु. अं. २-अ २१-श्लो. ८६-३८- | ३. वि. पु.अं. १-अ.२- श्लो. ६९

"ज्योतींषि विष्णुः" इति । अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् । इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्,

* श्रुतप्रकाशिका *

अन्यत्रापि "सर्वगत्वादनन्तस्य स एवाहम्" "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादि द्रष्टव्यम् । तदिदमित्यादिना ज्योतींषीत्यादिश्लोके पादत्रयस्यार्थ उच्यते, संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः । प्रधानादिविशेषान्तं चेतनाचेतनात्मकमित्युक्तत्वात् ज्योगिरित्यादिशब्दाः संसृष्टजीववाचिनः । अथ उत्तरश्लोकसङ्गत्यर्थं विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति ( अत्रास्त्यात्मकमिति ) 'यदम्बु' इत्यादिश्लोकेन वैयधिकरण्येन समष्टयवस्थचिदचितोर्भगवदात्मकत्वमुक्तम् । व्यष्ट्यवस्थयोरसंसृष्टयोस्संसृष्टयोरपि तयोः सामानाधिकरण्येन भगवदात्मकत्वमुच्यते ज्योतींषीत्यादिना श्लोकेन, तत्र पादत्रयेण व्यष्ट्यवस्थयोः संसृष्टयोस्तदात्मकत्वमुक्तम्, चतुर्थपादेन तु निष्कृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः । अनन्तरश्लोकमवतारयति ( इदमिति ) अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः, अचिदंशस्य हि मिथ्यात्वशङ्का व्युदसनीया ; अतस्तस्य परिणामित्वान्नास्त्यात्मकत्व एव तात्पर्यम्, चिदंशस्य त्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्राये-

* भावप्रकाशिका *

भिन्नयोस्सामानाधिकरण्यमित्यपेक्षायां 'सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' इति शरीरात्मभावस्य यत इति पञ्चम्या कण्ठतो हेतुतयोक्तेरित्यर्थः । इदञ्च वेदार्थसङ्ग्रहे भाष्यकृता सुव्यक्तमुक्तम् । ( पादत्रयस्यार्थ उच्यत इति ) 'यदस्ति यन्नास्ति च विप्रवर्य' इति चतुर्थपादार्थस्यात्रास्त्यात्मकं चेत्यादिभाष्यग्रन्थेनानुवादमुखेन स्फुटीकरिष्यमाणत्वात् पादत्रयस्यार्थ उच्यत इत्युक्तम् । केचित्तु अपशब्देन पादचतुष्टयस्याप्यर्थ उच्यते श्लोकमात्रस्य शरीरात्मभावायत्ततादात्म्योपदेशपरत्वे विप्रतिपत्त्यभावात्. इयांस्तु विशेषः,—पादत्रयगतानां ज्योतिरादिपदानां निर्णीतार्थतया न जिज्ञासा, चतुर्थपादगतास्तिनास्तिशब्दयोरनिर्णीतार्थकतया तत्र जिज्ञासया तत्पदार्थमात्रस्यानुवादोपपत्तेरिति वदन्ति ( विशिष्टवाक्यार्थानुवादेनेति ) पर्यवस-

अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह "ज्ञानस्वरूपो भगवान् यतोऽसौ" इति । अशेषक्षेत्रज्ञात्मनाऽवस्थि-

* श्रुतप्रकाशिका *

णास्य च नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तम् । व्याख्येये प्रतीकमुपादत्ते (ज्ञानस्वरूप इति) अत्र ज्ञानस्वरूपो भगवानिति सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं न केवलं पूर्वश्लोके 'यदम्बु वैष्णवः कायः' इत्युक्तत्वादवगम्यते, अस्मिन्नपि श्लोके अशेषमूर्त्तिरित्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे (अशेषेति) अशेषशब्देनाचितोऽपि विवक्षितत्वे भगवन्तं प्रति तस्य मूर्त्तित्वं विहितं

* भावप्रकाशिका *

न्नवाक्यार्थानुवादेनेत्यर्थः । (नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तमिति) न त्वस्यास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तमित्यर्थः । 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इत्यंशेन 'इदमस्त्यात्मकम् इदं नास्त्यात्मकम् अस्य च नास्त्यात्मकत्वे हेतुरयमित्यप्रतिपादनादाह (प्रतीकमुपादत्त इति) ननु भाष्ये– अशेषक्षेत्रज्ञात्मनावस्थितस्य इति कथं लभ्यते ? क्षेत्रज्ञस्य प्रागनिर्दिष्टत्वात् । नच यदस्ति यन्नास्ति च विप्रवर्येत्यनेनास्तिशब्देन क्षेत्रज्ञस्योपस्थापनमस्तीति वाच्यम्; इदमस्त्यात्मकम् इदं नास्त्यात्मकमिति विभागानभिज्ञं मैत्रेयं प्रति अस्तिशब्दस्य क्षेत्रज्ञोपस्थापकत्वाभावेनाशेषमूर्त्तिशब्देन क्षेत्रज्ञात्मनावस्थितस्य भगवत उपस्थापने प्रमाणाभावादित्याशङ्क्य अस्तिनास्तिशब्दाभ्यामुपस्थापनेपि ज्योतिरादिशब्दैस्संसृष्टत्वचनैश्चेतनाचेतनयोरुपस्थितिसम्भवात्, तत्र चाचिच्छरीरके ज्ञानस्वरूपशरीरकत्वोपदेशस्य वा न वस्तुभूत इति देवादिशरीरकत्वनिषेधस्य वा असम्भवात् । क्षेत्रज्ञशरीरक एव योग्यतावशेनाशेषमूर्त्तिशब्देन परामृश्यते, ततश्च क्षेत्रज्ञशरीरको भगवान् ज्ञानस्वरूपः ज्ञानशरीरको भवति । स्वरूपशब्दः शरीरपरः । वस्तुस्वरूपदेवादिशरीरको न भवतीत्युक्ते क्षेत्रज्ञस्य ज्ञानस्वरूपत्वमस्ति, अर्थस्वरूपदेवादिशरीरत्वञ्च नास्तीति फलति । ततश्च देहात्मविवेकोपि फलितो भवति । यथा अङ्गुलीयकवानसौ रजतवानसुवर्णवानित्युक्ते अङ्गुलीयकं रजतरूपं न सुवर्णरूपमिति, तद्वदित्यभिप्रयन्नाह (अशेषशब्देनाचितोपीति) (वस्तुभावनिषेधोऽनुपपन्न इति)

तस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम् । न देवमनुष्यादिवस्तुरूपम् । यत एवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः, तस्य

* श्रुतप्रकाशिका *

स्यात्, अप्रामाण्यात्; ततश्च 'न तु वस्तुभूत' इति देवमनुष्यशैलाब्धिधरादिवस्तुभावनिषेधोऽनुपपन्नः, अतोऽशेषशब्दः क्षेत्रज्ञविषय इत्यभिप्रायेणाशेषक्षेत्रज्ञात्मनेत्युक्तम् । अत्र ज्ञानस्वरूपादिशब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि विशेषणविशेषयो वाक्यस्य तात्पर्यम्, अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते. यथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्र विशेषणगतं लौहित्यमेव विधेयं परम्परा ऋत्विक्प्रचारकर्मविशेषणं तद्वत्. "काठिन्यवान् यो बिभर्ति' 'नृसिंहमूर्तिर्भगवान् श्वेतः" इत्युदाहरणं द्रष्टव्यम् । ज्ञानस्वरूप इत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्वमुच्यत इति शङ्कनीयम् ' सर्वकर्मक्षये ज्ञानमपास्तदोषम्' इति विवरणानुपपत्तेः । नहि दिव्यात्मस्वरूपस्य कर्मतत्कृतरागद्वेषादिहेयसम्बन्धप्रसङ्गः । न तु वस्तुभूत इत्यस्यार्थमाह ( न देवमनुष्यादीति ) शैलादिस्थावरोक्तिः सर्वशरीराणामुपलक्षणमिति ज्ञापनार्थो देवमनुष्यादिशब्दः । उत्तरार्द्धं व्याचष्टे ( यत एवमिति ) शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीहीत्यनेन फलितं हेतुहेतुमद्भावं विवृणोति ( तद्विज्ञानेत्यादिना ) विज्ञानशब्दं व्याचष्टे ( तस्येति ) विज्ञानम्— विविधज्ञानम् । कथं शैलाब्धिधरादिभेदस्य

७ भावप्रकाशिका ७

अचिच्छरीरकस्य भगवतो ननु वस्तुभूत इति देवमनुष्यशैलाब्धिधरादिवस्तुशरीरकत्वनिषेधस्य शरीरभूते चिदंशे देवमनुष्यादिभावनिषेधपर्यवसितत्वादित्यभिप्रायः । ( ऋत्विक्प्रचारकर्मविशेषणमिति ) यथा परम्परया प्रचारविशेषणगतमुष्णीषलौहित्यं परम्परयेत्यस्य प्रचारे ऋत्विजां विशेषणत्वम्, तत्र चोष्णीषस्य तत्र च लौहित्यस्येत्यभिप्रायः । 'काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इत्यत्रात्मस्वरूपे भूमिद्वारा काठिन्यवदितीति भावः । भाष्ये—यत एवं तत एवेति । ननु क्षेत्रज्ञस्य ज्ञानस्वरूपत्वेन देवादिरूपत्वाभावेपि देवादिभेदस्य तद्विज्ञानविजृम्भि-

ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलाः, देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयम् , इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति। तदेव विवृणोति "यदा तु शुद्धं

* श्रुतप्रकाशिका *

वैविध्यानुसन्धानमूलत्वम् ? "निजकर्मभेदविभिन्नचित्तैः" 'सर्वकर्मक्षये' इति कर्ममूलत्वेन वक्ष्यमाणत्वात् कर्मैव हि मूलमित्यत्राह (देवादीति) वैविध्यानुसन्धानस्य देवादिभेदहेतुत्वं सद्वारकम् , उपरितनग्रन्थैकार्थ्यात् 'अविद्यासञ्चितं कर्म' 'वाह्यकर्मप्रवृत्तिप्रजः 'भूपैते कर्मयोनयः" इत्यादिवचनान्तराच्चेत्यर्थः । पूर्वमिदमस्त्यात्मकमित्यादिनोक्तश्लोकवाक्यार्थः कथं घटत इत्यत्राह (यतश्चेति) ज्ञानस्वरूपः विज्ञानविजृम्भितानीत्यनेन तथा फलितमित्यर्थः । (तदेवेति)

* भावप्रकाशिका *

तत्त्वमनावश्यकम् । क्षेत्रज्ञभिन्नत्वमात्रेण तद्विज्ञानविजृम्भितत्वस्यानावश्यकत्वात् , इतरथा परमात्मनित्यविभूत्यादेरपि तथात्वप्रसङ्गात् । नच जीवभिन्नस्यानित्यत्वेन सिद्धस्य देवादेस्तद्विज्ञानविजृम्भितत्वमावश्यकमिति वाच्यम् , देवादिभेदस्याद्याप्यनित्यत्वानिश्चयात् । निश्चये वा तस्यासत्यशब्दितत्वोपयुक्तानित्यत्वस्य सिद्धतया कर्मपरिणामरूपतयाऽनित्यत्वप्रतिपादनार्थं प्रवृत्तस्य 'ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि' इत्यस्य वैयर्थ्यप्रसङ्गात् । किञ्च क्षेत्रज्ञात्मनावस्थितस्य देवादिभूतस्याभावेन देवादिस्वरूपस्य विज्ञानविजृम्भितत्वे देवाद्यात्मनावस्थितस्य ज्ञानस्वरूपक्षेत्रज्ञत्वाभावेन क्षेत्रज्ञस्यापि विज्ञानविजृम्भितत्वप्रसङ्ग इति चेन्न; नतु वस्तुभूत इति देवादिस्वरूपस्य क्षेत्रज्ञरूपावस्थितपरमात्मस्वाभाविकरूपत्वे प्रत्याख्याते पुनः किंरूप इत्यपेक्षायां विज्ञानविजृम्भितानीति आगन्तुकरूपत्वमुच्यत इत्यदोषात् । अत एव भाष्ये—ज्ञानमेव स्वाभाविकं रूपम् इति स्वाभाविकपदं प्रयुक्तम् (देवादिभेदहेतुत्वं सद्वारकमिति) पूर्वपूर्ववैविध्यानुसन्धानेन कर्मणा च देवादिभेदा इत्यर्थः । कर्माविद्ययोर्बीजाङ्कुरवत् परस्परहेतुत्वसम्भवात् हेतुहेतुमद्भाव-

निजरूपि" इति । यदैतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्थाः

---

* श्रुतप्रकाशिका *

पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन सिद्धान्तयोजना क्रियते, विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः । पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसन्धानमूलत्वं सद्वारकमिति व्याख्यानमनन्तरश्लोके व्यतिरेकमुखेन विवरणे कर्महेतुत्वश्रवणनिबन्धनमिति स्पष्टयन्नाह (देवाद्याकारेणेति) निर्दोषमित्यादिपदानामर्थविभागः 'ज्ञानं विशुद्ध'मित्यादिश्लोकव्याख्याने विशदयिष्यत इति ग्रन्थलाघवार्थमत्र न विस्तृतः । निर्दोषम्— शरीरसम्बन्धरहितम् । परिशुद्धम्— तत्कृतरागद्वेषसुखदुःखादिरहितम् । निजरूपि— आविर्भूतस्वरूपम् । सङ्कल्पशब्दं व्याचष्टे (एकीकृत्यात्मकल्पनाशब्देन) 'समित्येकीकारे' इति हि शाब्दाः । पूर्ववत्सद्वारकमिति व्याचष्टे (आत्मकल्पनामूलकर्मफलभूता इति) देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानम्, तयोरेकैकं विज्ञान-

* भावप्रकाशिका *

व्यत्यासशङ्का न कार्या । (ज्ञानस्वरूपः विज्ञानविजृम्भितानीत्यनेन तथा फलितमिति) ज्ञानस्वरूप इत्यनेन ज्ञानस्वरूपस्योक्ततया परिणामशून्यत्वावगमात् सत्यत्वम्, विज्ञानविजृम्भितानीत्यनेन परिणामित्वञ्च फलितम् । अत एव निजसिद्धज्ञानैकरूपत्वेनेति भाष्यमिति भावः । ननु यदा तु शुद्धमित्यस्य पूर्वोक्तविवरणरूपत्वस्य पूर्वपक्षिसम्मतस्य कथं तदेव विवृणोतीति भाष्यकृताप्यभ्युपगम इत्याशङ्क्याविरुद्धांशे तदुपजीवनं न दोषायेत्याह (पूर्वपक्षयोजनायामिति) (निर्दोषमित्यादिपदानामर्थविभाग इति) अपास्तदोषमित्यादिपदानामिति वक्तव्ये लाघवार्थं निर्दोषपदमुपात्तमिति द्रष्टव्यम् । यद्वा निर्दोषमित्यादीतिच्छेदः । (पदानामिति) श्लोकस्थपदानामित्यर्थः । (आत्मकल्पनामूलकर्मफलभूता इतीति) आत्मकल्पनं मूलं यस्येति बहुव्रीहिः, व्यक्तिभेदेन बीजाङ्कुरन्याये दोषाभावात् (विज्ञान-

वस्तुषु वस्तुभेदा न भवन्ति । ये देवादिषु वस्तुष्वात्मतयाभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादि-

* श्रुतप्रकाशिका *

शब्दे सङ्कल्पशब्देऽप्यर्थसिद्धम् । सुखदुःखे हि कर्मफलम्, तत्कथं वस्तुभेदस्य कर्मफलत्वमिति शङ्कायां तद्भोगार्था इत्युक्तम् । सुखादिभोगद्वारीभूतत्वाद्देवादिभेदः कर्मफलमित्यर्थः । "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादिषु भोग्यशब्दार्थः स्पष्टीकृतो भवति तद्भोगार्था इत्यनेन । भोगस्थानभोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वमित्यर्थः । सप्तम्यन्तवस्तुशब्दो जीवपर्यन्तदेहपरः, द्वितीयवस्तुशब्दो देवादिशरीरमात्रपरः । वस्तुभेदाः— देवादिशरीरभेदाः । अत्र वस्तुभेदशब्देन भेदस्य वस्तुरूपत्वात् पारमार्थ्यमपि फलितम् । अत्रान्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह ( ये देवाष्विति ) ( देवादिषु वस्तुषु आत्मतयाभिमतेषु ) प्रथमवस्तुशब्दो जीवपर्यन्तदेहपर एवेत्यभिप्रायः । संसृष्टाकारे ह्यात्माभिमानः । तद्भोगार्था इति पूर्वोक्तस्य पदस्य व्याख्येयं पदमुदाहरति ( भोग्यभूता इति ) भोग्यभूता इत्यनेन वस्तुभेदा इतिपदस्याचिदंशमात्रपरत्वमुक्तम्, ' न तु वस्तुभूत' इत्युक्तत्वात् । पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह ( देवमनुष्येति ) कारणाभावात्कार्याभावो हि व्यतिरेकः, तं स्पष्टयति

* भावप्रकाशिका *

शब्दे सङ्कल्पशब्दे चेति ) वैविध्यानुसन्धानस्य विज्ञानशब्दार्थस्य एकीकृत्यानुसन्धानस्य सङ्कल्पशब्दार्थस्य च हेतुहेतुमद्भावेन कारणत्वसम्भवात्, विज्ञानविजृम्भितानि सङ्कल्पतरोः फलानीत्युक्त्योर्न विरोधः । अन्यतरोक्त्यान्यतरस्यार्थसिद्धत्वादिति भावः । ( भोग्यशब्दार्थस्स्पष्टीकृतो भवतीति ) भोग्यार्था इत्युपक्षिप्तानामेव वस्तुभेदानामित्युत्तरवाक्ये भोग्यभूता इति परामर्शादित्यर्थः । ( भोगसिद्धिप्रयोजकत्वमेवेति ) तस्य निमित्तं संयोगोत्पाताविस्यस्मिन्नर्थे "गोद्व्यचः' इति भोगशब्दाद्यत्प्रत्ययः । नतु 'ऋहलोर्ण्यत्' इतिण्यदन्तम् । तथात्वे भोगस्थानादीनां भोग्यशब्देन परिग्रहानापत्तेरिति भावः । ( व्याख्येयपदव्याख्यानार्थमिति ) वस्तुष्वित्यादिपदस्याव्याख्यातत्वात्तदर्थमित्यर्थः । ( व्याख्येयं पदमुदा-

वस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेन अस्तिशब्दाभिधेयत्वमित्यर्थः। प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह 'वस्त्वस्ति किम्' इति। अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनस्सततैकरूपः पदार्थः, तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात्। अचिद्वस्तु किञ्चित् क्वचिदपि तथाभूतं न दृष्ट-

* श्रुतप्रकाशिका *

(तन्मूलभूतेति) परमप्रकृतार्थस्य फलितत्वमाह (इत्यचिद्वस्तुन इति) पूर्वश्लोकफलितार्थकथने आत्मनोऽस्तिशब्दवाच्यत्वे हेतुरनुक्तः, अत्र तु तस्यापि फलितत्वमाह (इतरस्येति) जगदुपलब्धिप्रकारेणापि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन। तत्र प्रथमस्य वाक्यार्थमाह (प्रतिक्षणमिति) श्लोकस्य नास्तिशब्दाभिधेयतापरत्वं 'यदस्ति यन्नास्तीत्युपक्रमावगतम्, अस्मिन् श्लोके प्रयोजकशिक्षा। वस्त्वस्ति किमित्यर्थयोजनौपयिकतयात्राभिधेयं यदस्ति यन्नास्तीत्युपक्रमवशात्सिद्धमर्थमाह (अस्तिशब्देति) सततैकरूपतया अस्तिशब्दवाच्यत्वे सति हि पूर्वार्द्धोक्तस्य तदभावस्य नास्तिशब्दाभिधेयताहेतुत्वसिद्धिः। पूर्वार्धं व्याचष्टे (अचिद्वस्त्विति) किमनेन नास्तिशब्दाभिधेयत्वस्येति शङ्कायामुत्तरार्द्ध-

* भावप्रकाशिका *

हरतीति) भोक्ता भोग्यमितिश्रुतिगतभोग्यपदमित्यर्थः। (हेतुरनुक्त इति) यद्यपि ज्ञानस्वरूप इत्यनेनैवास्तिशब्दवाच्यत्वे हेतुरुक्तः, तथापि भाष्ये नोक्तः, अत एव पूर्वश्लोकव्याख्याने इतरदस्तिशब्दाभिधेयमित्युक्तम्, न तु तत्र हेतुरुपन्यस्त इति भावः। (प्रयोजकशिक्षेति) अस्तिनास्तिपदप्रवृत्तिनिमित्तशिक्षेत्यर्थः। (अत्राभिधेयमिति) अस्मिन् श्लोके अस्तिशब्दस्य अस्तिशब्दाभिधेय एवार्थ इत्यर्थः।

चरम् । ततः किमित्यत्राह "यच्चान्यथात्वम्" इति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति ; तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति ; अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव । तथा ह्युपलभ्यत इत्याह— "मही घटत्वम्" इति । स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणम-

* श्रुतप्रकाशिका *

मवतारयति ( ततः किमित्यत्राहेति ) यातीति वर्तमाननिर्देशस्याभिप्रायमाह ( प्रतिक्षणमिति ) भूयो न तत्तथेत्यस्यार्थमाह ( तदिति ) उत्तरोत्तरावस्थाप्राप्त्येति भूयश्शब्दार्थः । न तत्तथेत्यस्यार्थमाह ( पूर्वावस्थां जहातीति ) तत्रेत्यस्यार्थमाह ( पूर्वावस्थस्योत्तरावस्थायामिति ) कुतस्तत्त्वमित्यस्यार्थमाह ( न प्रतिसन्धानमिति ) तत्त्वम्— तस्य भावः , तदिदमिति प्रतिसन्धानानर्हत्वं फलितमित्यर्थः । ननु तत्त्वं कुतः पूर्वावस्थत्वं कुत इत्युक्तम्, कथं प्रतिसन्धाननिषेधः ? उच्यते ; कुतश्शब्दः प्रमाणप्रतिक्षेपपरः , पर्वतोऽग्निमानित्युक्ते कुत इति प्रमाणाकाङ्क्षा हि द्योत्यते , अतः प्रतिक्षेपपरः कुतश्शब्दोऽपि प्रमाणप्रतिक्षेपपरः , कुतः प्रमाणादित्यर्थः । पूर्वावस्थस्य भूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा, अतः प्रमाणे प्रतिक्षिप्ते प्रतिसन्धानं निषिद्धं भवतीति भावः । अन्यथा न तत्तथेत्यनेन पौनरुक्त्यं स्यात् । हिशब्देन फलितमर्थमाह ( अत इति ) नास्तिशब्दवाच्यत्वे प्रयोजकशिक्षा कृता , शिक्षितमर्थमुदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह ( तथा हीति ) मही घटत्वमितिश्लोकं व्याचष्टे ( स्वकर्मणेत्यादिना ) मही घटत्वमित्यत्र यातीति पूर्वश्लोकादनुषङ्गः । कर्मण आत्मनिश्चयविरोधित्वं सद्वारकमित्याह ( देवमनुष्यादिभावेनेति ) देवादिदेहसंसर्गेणेत्यर्थः । स्तिमितम्— प्रतिबद्धम् . अस्थिरे भोग्यत्वबुद्धिः

* भावप्रकाशिका *

'स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यत' इति भाष्ये प्रतिक्षणमन्यथाभूतं वस्तु भोग्यत्वेनालक्ष्यते, भोग्यमचिद्वस्तु प्रतिक्षणमन्यथात्वेनालक्ष्यत इत्यु-

न्यथाभूतमालक्ष्यते— अनुभूयत इत्यर्थः। एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैक-

* श्रुतप्रकाशिका *

स्थिरतरसुखरूपात्मनिश्चयस्तैर्गित्यादिति भावः। यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत इत्याह—तथाहीति। आलक्ष्यत इति चाक्षुषज्ञाने प्रयोगप्राचुर्यात्तद्व्यावृत्त्यर्थमनुभूयत इत्युक्तम्। श्लोकव्याख्यानपरिसमाप्तिं द्योतयति ( इत्यर्थ इति ) ब्रूहीत्यादेरर्थमाह ( एवं सतीति ) अनेन अत्रेतिपदं व्याख्यातम्। अचिद्वस्त्वितिपदेन श्लोकस्थवस्तुशब्दो व्याख्यातः। अस्तिशब्दार्हमित्यादिविशेषणं सामर्थ्यसिद्धतयोक्तम्। अथवा श्लोकद्वयाभिप्रायमाह— एवं सतीति। 'न तु वस्तुभूतः, इति पुराणग्रन्थे, किमप्यचिद्वस्तु—अचिद्वस्तु किञ्चिदिति भाष्ये च अचिद्विषयवस्तुशब्दप्रयोगात् 'तद्वस्तु नृप तच्च कि'मितिग्रन्थस्थवस्तुशब्दतुल्यत्वं न

* भावप्रकाशिका *

द्देश्यविधेयभावभेदेनार्थद्वयसम्भवमभिप्रेत्य द्वेधापि व्याचष्टे ( अस्थिरं इत्यादिना ) ( चाक्षुषज्ञाने प्रयोगप्राचुर्यादिति ) यद्यपि चक्षुषा प्रत्यक्षेणोपलक्ष्यते इत्युक्तावपि न दोषः, तथापि चाक्षुषज्ञानातिरिक्तप्रमाणान्तरसङ्ग्रहायानुभूयत इति व्याख्यातमिति द्रष्टव्यम्। ( श्लोकव्याख्यानपरिसमाप्तिमिति ) अस्यां योजनायामिति शेषः। अयं भावः,—आलक्ष्यते भुज्यत इति वा भोग्यत्वेनालक्ष्यत इति वा पूर्वयोजनायामेतादृशाप्रसिद्धार्थप्रदर्शनपरतया इत्यर्थ इत्यस्य साफल्यं सम्भवेत्। अस्यान्तु योजनायामालक्ष्यत इत्यस्यानुभूयत इत्यर्थे प्रसिद्धिस्त्वेन इत्यर्थ इत्यस्य वैयर्थ्यात्समाप्तिद्योतकत्वमेव। अस्मिंश्च पक्षे एवं सतीत्युत्तरभाष्यं श्लोकद्वयाभिप्रायकथनपरम्। एतदेवाभिप्रेत्य वक्ष्यति, अथवा श्लोकद्वयाभिप्रायमाहेति। पूर्वयोजनायान्तु इत्यर्थ इत्यस्य समाप्तिद्योतकत्वाभावात् एवं सतीत्युत्तरभाष्यं ब्रूहीत्यादिपदार्थकथनपरम्, एतत्पक्षाभिप्रायेण ब्रूहीत्यादेरर्थमाहेत्यादिग्रन्थ इति, अतः श्लोकव्याख्यानसमाप्तौ ब्रूहीत्याद्यर्थकथनं विरुद्धमिति न चोदनीयम्, अस्तिशब्दार्हमित्यादिविशेषणम्। ( सामर्थ्यसिद्धतयेति ) ननु वस्त्वस्ति किमितिशब्दाभिधेयतया तत्रास्तिशब्दस्य भवत्यर्थकत्वादिति भावः ( वस्तुशब्दतुल्यत्वं न शङ्क-

रूपमालाञ्छितमस्ति किम्? न ह्यस्तीत्यभिप्रायः। यस्मादेवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित् क्वचित् केवलास्तिशब्दवाच्यं न भवतीत्याह—'तस्मान्न विज्ञानमृते' इति। आत्मा तु सर्वत्र ज्ञानैका-

* श्रुतप्रकाशिका *

शङ्कनीयम् । अस्ति किमित्यनेन श्लोकस्थस्यास्तिशब्दस्य भवत्यर्थत्वमुक्तम् , अत एव यदस्तीत्यस्तिशब्दवन्नात्मस्वरूपपरत्वं शङ्कनीयम् । फलितमाह ( न हीति ) अस्ति किं न ह्यस्ति—इति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्यास्ति किमितिवाक्यस्य प्रत्यभिज्ञातस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते । यद्वा, अस्तिशब्दाभिधेये इत्यनेन वस्त्वस्ति किमित्यत्रास्तिशब्दो व्याख्यातः। 'यदस्ति' तस्मान्न विज्ञानमृतेऽस्ति'इत्यादिनैकरूप्यात् , एवं वस्त्वस्ति किम् ' मही घटत्व'मिति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः पूर्वपक्षयोजनायामुपजीव्यः । उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे ( यस्मादिति ) ( यस्मादेवं तस्मात् ) परिणामित्वादेव , नतु ज्ञानबाध्यत्वादित्यर्थः । अचिद्वस्तुशब्देन वस्तुजातशब्दार्थ उक्तः । जातशब्दशिरस्को वस्तुशब्दो न नित्यवाचीति भावः । ( केवलास्तिशब्दवाच्यमिति ) एतच्छ्लोकस्थास्तिशब्दो न भवत्यर्थः, ज्ञानव्यतिरिक्तस्य 'तदेतदक्षयं नित्यम्' इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात् , यदस्तीत्युपक्रान्तस्योपसंहारौचित्याच्चेति भावः ॥ प्रागभावप्रध्वंसाभाववतोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वगवच्छिन्नास्तिशब्दवाच्यत्वं चेति तद्व्यावृत्त्यर्थं केवलशब्दः , एवमात्मव्यतिरिक्तवस्तुनो नास्तिशब्दाभिधेयत्वमुपसंहृतम् । विज्ञानमित्यादि व्याचष्टे ( आत्मा त्विति ) तुशब्दोऽचिद्वै-

* भावप्रकाशिका *

नीय'मिति ) वस्त्वस्ति किमित्यत्र वस्तुशब्दस्येत्यर्थः । ( यद्वा अस्तिशब्दाभिधेय इत्यनेनेति ) पूर्वयोजनायामस्तिशब्दार्हमित्यध्याहारः । अस्मिन् पक्षे तु भवत्यर्थकास्तिशब्दाध्याहार इति विशेषः । ( पूर्वपक्षयोजनायामिति ) अतश्च पूर्वपक्षे विभज्य श्लोकद्वयार्थोक्तिर्न दोषायेति भावः । ( अवच्छिन्नास्तिशब्दवाच्यत्वं चेति ) तदानीमस्ति इदानीमस्तीतिपदान्तरसहितास्तिशब्दवाच्यत्वं चेत्यर्थः ।

कारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह "विज्ञानमेकम्"

* श्रुतप्रकाशिका *

पर्यपरः। सर्वत्र—सर्वशरीरेषु। एकशब्दं व्याचष्टे (ज्ञानैकाकारतयेति) एको व्रीहिस्सुनिष्पन्नस्सुपुष्टं कुरुते प्रजाः" इतिवदयमेकशब्द आकारैक्यपरः, स चाकारो विज्ञानशब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तं ज्ञानैकाकारतयेति। भावप्रधानो निर्देशः, ज्ञानत्वैकाकारतयेत्यर्थः। स्वरूपतो धर्मतश्चाविशेषेण ज्ञानत्वं सद्वारकमद्वारकं चाकारो हि भवति. ज्ञानैकाकारतयेत्यत्र एकशब्देन सङ्कोचविकासदुःखरूपत्वादिव्युदासश्च (देवादिभेदप्रत्यनीकस्वरूपोऽपीति) एकरूपत्वाद्भेदप्रत्यनीकम्। निजकर्मादिपदं व्याचष्टे (देवादीति) भेदशब्दार्थमाह (विविधेति) बुद्धिशब्देन चित्तशब्दार्थ उक्तः। बुद्धेर्भेदश्च आत्मन्यारोप्यमाणदेवाद्याकाररूपविषयभेदात्। बहुधा— देवत्वादिबहुप्रकारविशिष्टतयाऽभ्युपेतमित्यर्थः। बहुधाशब्देन एकशब्दस्याकारैक्यपरत्वं स्पष्टम् फलितमर्थमाह (नात्मस्वरूपप्रयुक्तमिति) औपाधिकमित्यर्थः। उपाधिविमोक्षे कीदृशं स्वरूप-

* भावप्रकाशिका *

(प्रकारैक्यपरत्वं स्पष्टमिति) 'सङ्ख्याया विधार्थे धा' इति विधार्थभूतप्रकारे धाप्रत्ययविधानात् बहुधेत्यस्य बहुप्रकारमित्यर्थो वर्णनीयः। ततश्च तत्प्रतियोगिन एकशब्दस्यापि प्रकारैक्यमेवार्थः। नच एकं राशिं पञ्चधा कुरु इत्यत्रेव 'अधिकरणविचाले च' इति धाप्रत्ययोऽस्त्विति वाच्यम्. अधिकरणविचालनं हि एकस्य वस्तुनोऽनेकधाकरणम्, सङ्ख्यान्तरापादनमित्यर्थः। नहि विज्ञानस्य सङ्ख्यान्तरापादनं स्वरसम्, तस्माद्विधार्थ एव धाप्रत्यय इति प्रकारैक्यमेव एकशब्दस्याभ्युपेयमित्यर्थः। ननु बहुधाभ्युपेतमिति विधार्थे धाप्रत्ययश्रवणे पञ्चधा भुङ्क्त इत्यत्रेव क्रियागतं प्रकारबहुत्वं प्रतीयत इति वक्तव्यम्, नतु विज्ञानगतं क्रियाप्रकारबहुत्वस्य धाप्रत्ययार्थत्वात्. ततश्च बहुधाभ्युपेतमित्यत्राभ्युपगमक्रियागतप्रकारबहुत्वं

इति ॥ आत्मस्वरूपं तु कर्मरहितम्, तत एव मल-रूपप्रकृतिस्पर्शरहितम् । ततश्च तत्प्रयुक्तशोकमोहलो-

* श्रुतप्रकाशिका *

मित्यत्र अनन्तरश्लोकं व्याचष्टे (आत्मेति) विशुद्धपदं व्याचष्टे (कर्मरहितमिति) विमलपदं व्याचष्टे (तत एवेति) विमलपदव्याख्यानमिति स्पष्टीकर्तुं मलरूप-शब्दः । मलरूपप्रकृतिस्पर्शरहितमित्यनेन 'सर्वकर्मक्षये ज्ञानमपास्तदोषम्' इत्य-स्यार्थोऽवगतः । कर्मक्षयवाचिपदानन्तरपदस्य शरीरसम्बन्धरहितपरत्वेन व्याख्या-तत्वात्. तथा च श्रुतिः "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि" इति । अत्र हि पापं विधूयेत्युक्त्वा धूत्वा शरीरमित्युक्तम् । उपरितनपदानि व्याचष्टे (ततश्चेति) तत एवेत्यर्थः । हेतोर्नैरपेक्ष्यसूचकश्चशब्दः, निरस्ताशेषलोभादि-

* भावप्रकाशिका *

पर्यवस्येत्, नतु ज्ञानप्रकारबहुत्वम् । ततश्च विज्ञानमेकमित्यत्र विज्ञानप्रकारैक्यं कथं सिध्येत्? तद्बोधकाभावात् । एकत्वबहुत्वयोर्हि भिन्नविषयत्वादिति चेन्न; अभ्युपगम-क्रियाबहुत्वस्याभ्युपगम्यमानविज्ञानबहुत्वपर्यवसिततया एकत्वबहुत्वयोः समान-विषयत्वादितिभावः । चिदचित्साधारणाविति चिदचिद्विवेकपरत्वादिति भावः । (औपाधिकमित्यर्थ इति) ननु देवाद्यनुसन्धानस्य औपाधिकत्वे किं प्रयोजनम्? 'यदम्बु वैष्णवः कायः' इति श्लोकद्वयेनोक्तचिदचिदात्मकस्य जगतस्संसृष्टत्वावस्थायां वियुक्तत्वावस्थायां च भगवच्छरीरत्वमापादितम् । 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इत्यादिश्लोकद्वयेन चिद्विवेकमचितस्सत्यशब्दवाच्यत्वमचितोऽन्वयव्यतिरे-काभ्यां कर्मपरिणामतया असत्यशब्दवाच्यत्वञ्चोपपादितम् । तदेवाचितोऽसच्छ-ब्दवाच्यत्वं जगदुपलब्धिप्रकारेणापि वस्त्वस्ति किमित्यादिश्लोकद्वयेनापि दृढीकृत्य-तस्मात्तु विज्ञानमितिश्लोकार्धेन चित एव सच्छब्दवाच्यत्वं नाचित इत्युपसंहृतमेवेति, समर्थनीयान्तराभावाद्विज्ञानमेकमितिश्लोकार्धोपन्यासहेतुभूतशिष्यजिज्ञासाविषयभूतं किमपि न दृश्यत इति चेत्. सत्यम्; अचिद्वस्तुनः असत्यशब्दप्रवृत्तिनिमित्त-भूतपरिणामित्वोपपादककर्महेतुत्वोपसंहाररूपतया सार्थक्यात् ( कर्मक्षयवाचिपदा-

भावशेषहेयगुणासङ्गि, उपचयापचयानर्हतयैकम्, तत एव सदैकरूपम्। तच्च वासुदेवशरीरमिति तदात्मकम्; अतदात्मकस्य कस्यचिदप्यभावादित्याह 'ज्ञानं विशुद्धम्' इति। चिदंशस्सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः। अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः। एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति

* श्रुतप्रकाशिका *

सङ्गीत्यर्थः। एकमितिपदं व्याचष्टे (उपचयापचयानर्हतयैकमिति) उपचयापचयौ—वृद्धिक्षयौ, तदर्हत्वम् सावयवत्वम्; सावयवत्वाभावादेव एकशब्दवाच्यत्वम्. निरवयवत्वमेकत्वमित्यर्थः। (तत एव सदैकरूपमिति) निरवयवत्वात्सावयवत्वप्रयुक्तवृद्धिक्षयरहितमित्यर्थः। सामानाधिकरण्यं व्याचष्टे (तच्चेति) "यदम्बु वैष्णवः कायः" 'अशेषमूर्ति'रित्युक्तत्वादयमेवार्थः। न यतोऽन्यदस्तीत्येतद्व्याचष्टे (अतदिति) यतः— यस्माद्वासुदेवात्। अन्यत्— स्वपर्यवसितं वस्तु, नास्तीत्यर्थः। यद्वा वासुदेवादितिपदमध्याहृत्य योजना, वासुदेवादन्यन्नास्तीति यतः तत इत्यर्थः। अस्यां योजनायां तच्छब्दः प्रसिद्धपरामर्शी, अतोऽपि पूर्वयोजना साधीयसी, तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात् पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च। ज्ञानस्वरूपो यदा स्थितिश्लोकौ चिदचित्साधारणौ, वस्त्वस्तीत्यादिसार्धश्लोकद्वयमचित्साधारणम्, विज्ञानमित्यादिसार्धश्लोकश्चिदसाधारण इति विभागः। न परमतमुक्तम्, तत्त्वमेवोक्तमित्यभिप्रायेण सद्भाव इत्याद्यर्थमुक्तम्। तत्र यथाशब्दार्थमाह (चिदंश इति) यथा—येन केन प्रकारेण। परिणामित्वापरिणामित्वरूपेण— न ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः। (एवंरूपेति) शरीरशरीरिभावरूपेण येन प्रकारेण भगवदात्मकत्वम्, न तु

* भावप्रकाशिका *

नन्तरपदस्येति) कर्मक्षयवाचिपदं विशुद्धमितिपदं तदनन्तरपदं विमलमितिपदम्। (शरीरसम्बन्धरहितपरत्वेनेति) प्रकृतिस्पर्शरहितमित्यस्य शरीरसम्बन्धरहितस्य च

जगद्याथात्म्यं सम्यगुक्तमित्याह "सद्भाव एवम्" इति । अत्र सत्यमसत्यमिति 'यदस्ति यन्नास्ति' इति प्रक्रान्तस्योपसंहारः । एतत् ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्त्तते तत्र हेतुः कर्मैवेत्युक्तमित्याह [1] "एतत्तु यत्" इति। तदेव विवृणोति

* श्रुतप्रकाशिका *

स्वरूपैक्येनेत्यर्थः । श्लोके यथाशब्दप्रतियोग्येवंशब्दः, सत्यं ज्ञानमसत्यमन्यच्च यथावस्थितम्, एवं सद्भाव उक्त इत्यन्वयोऽभिप्रेतः, अतस्सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणामित्वपरिणामित्वे भगवदात्मकत्वञ्च यथाशब्दविवक्षितं भवति । अन्यदुपक्रान्तमन्यदुपसंहृतं भवति । अस्तिनास्तिशब्देनोपक्रम्य सत्यासत्यशब्देनोपसंहारादित्यत्राह ( अत्रेति ) उपक्रमोपसंहारयोः शब्दान्तरनिर्देशस्यायमभिप्रायः । अन्येष्वपि शब्देषु क्वचिदेवं श्रुतेषु तेषामपि प्रवृत्तिनिमित्तमिदमेवेति । उत्तरार्द्धस्यार्थमाह ( एतदिति ) "प्रत्यस्तमितभेदम्' अगोचरं वचसामित्यनयोरर्थमभिप्रेत्याह ( ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमिति ) एवकारेण विरोधस्सूचितः । भुवनाश्रितत्वस्य घटकं पदमाह ( अचिन्मिश्रमिति ) भुवनाश्रितम्—अण्डान्तर्गतम्, भोगस्थानगतमित्यर्थः । संव्यवहारशब्दं व्याचष्टे ( सम्यग्व्यवहारार्हभेदमिति ) सम्यक्छब्दः स्पष्टत्वपरः । तत्कर्म किमित्याकाङ्क्षायामुत्तरश्लोकस्य तद्विवरणपरत्वमाह ( तदेव विवृणोतीति ) स्वर्गमयश्च कामः स्वर्गविषयेच्छेत्यर्थः । फलस्य वक्ष्यमाणत्वात् देवतायाः फलस्य च

* भावप्रकाशिका *

समानार्थत्वादिति भावः । ( अन्येष्वपि शब्देष्विति ) सदसदादिशब्देष्वित्यर्थः । ननु, स्वर्गमयश्च काम इत्यस्य काम्यमानस्वर्गपरत्वमेव किं न स्यादित्याशङ्क्य 'भूरादि भोगाश्च फलानि तेषाम्' इति फलस्य वक्ष्यमाणत्वात् स्वर्गेच्छापरत्वमेव युक्तमित्याह ( फलस्य वक्ष्यमाणत्वादिति ) ननु 'यज्ञः पशुः' इत्यादिश्लोकस्य

1 वि. पु. अं २-अ. १२-श्लो. ४५.

[1]"यज्ञः पशुः" इति । जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह [2]"यच्चैतत्" इति । अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वानुगुणं किञ्चिदपि पदं

* श्रुतप्रकाशिका *

यष्टव्यत्वेन साध्यत्वेन च कर्मान्तर्भावः । इत्यादिशब्देन दानहोमादिकं च पापं चोक्तं भवति । भूरादिशब्देन पापफलमप्युक्तं भवति , पश्वादिपरिकरयुक्तो यज्ञ एवं कर्म , एवंविधयज्ञात्मकं दानहोमाद्यात्मकं च कर्म तत्र हेतुः, आश्रितमार्गेदृष्टम् तैस्तैराश्रिता मार्गा वर्णाश्रमाः तेषु दृष्टमित्यर्थः । अनन्तरश्लोकार्थमाह ( जगदिति ) कर्मवश्यस्सर्वत्र व्रजति हि । यद्वा, कर्मवश्यो हि सर्वत्र व्रजति, तस्मादेवं कुर्यादित्यर्थः । निगलित एव हि सर्वत्र कारागृहे चरति, अतस्तन्मोचनाय यतत इति भावः । ध्रुवमचलं सदैकरूपम्– स्वरूपतो रूपतो गुणतश्च एकरूपमित्यर्थः । यद्वा, स्वरूपतो गुणतो रूपतश्च एकरूपमित्यर्थः । तस्मान्नैतदेवमिति पूर्वेणान्वयः । एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य परोक्तार्थाननुगुणत्वमुपपादयति ( अत्रेत्यादिना ) किञ्चिदपि पदं न दृश्यत इति न वाच्यम् , नास्त्यादिशब्दाः

❁ भावप्रकाशिका ❁

कथं कर्मस्वरूपप्रतिपादनपरत्वम् ? पश्वादीनां यज्ञशेषतया तदनुप्रविष्टत्वेपि वह्निशब्दनिर्दिष्टदेवतायाः भूरादिभोगानाञ्च फलभूतानामेतच्छेषभूतानां कर्मत्वासम्भवादित्याशङ्क्याह ( देवतायाः फलस्य चेति ) ( सर्वत्र व्रजति हीति ) व्रजत्येवेत्यर्थः । ( कर्मवश्यो हीति ) कर्मवश्य एवेत्यर्थः । ( ध्रुवमचलं सदैकरूपमिति ) "यच्चैतद्भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः । ज्ञास्यैतद्ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवम्" इति श्लोकस्थैः ध्रुवमचलं सदैकरूपमितिपदैः क्रमेण स्वरूपतो गुणतश्चैकरूप्यमुच्यत इत्यर्थः । सदैकरूपमित्यत्र रूपत ऐक्यरूप्यस्योचितत्वमभिप्रयन्नाह ( यद्वा स्वरूपतो गुणतो रूपतश्चेति ) ( पूर्वेणान्वय इति ) सिद्धान्तोपक्रमगतप्रतिज्ञावाक्येन नैतदेवमित्यनेना-

१. वि. पु.अं. २-अ. १२-श्लो.४७ | २. वि. पु. अं. २-अ. १२-श्लो४५.

न दृश्यते । अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम् । ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवेऽचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधिक्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ, अतश्च ताभ्यामसत्त्वं हि प्रतीयते; नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ, अपि तु

* श्रुतप्रकाशिका *

सामानाधिकरण्यमज्ञानवाचिपदजातं चानुगुणमिति चेत् तत्राह ( अस्तीति ) ( परमस्येत्यादि ) परमपरेशादिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः । हेत्वन्तरं चाह ( अस्तिनास्तिसत्यासत्येति ) प्रथमश्चशब्दस्त्वर्थः । स्वोक्तयोजनायामनुगुणस्य शब्दस्य परपक्षाननुगुणत्वरूपं वैषम्यमस्तीति भावः । अस्तिसत्यशब्दौ दृष्टान्तार्थौ, यथा अस्तिसत्यशब्दौ न सद्विलक्षणपरौ, तथा नास्त्यसत्यशब्दावपि नासद्विलक्षणपरावित्यर्थः । कथमनिर्वचनीयवस्त्वभिधानासामर्थ्यमित्यत्राह ( नास्तीति ) अर्थद्वारको विरोधः । ततः किमित्यत्राह ( अतश्चेति ) यद्वा अनिर्वचनीयवस्त्वभिधानासामर्थ्यादिति व्युत्पत्त्यभाव उक्तः, परस्परविरुद्धार्थत्वमत्र हेत्वन्तरतयोक्तम्, चः समुच्चये । तथापि सत्त्वाभावात्तुच्छत्वं मिथ्यात्वं वोक्तं भवतीति

* भावप्रकाशिका *

न्वय इत्यर्थः । ( नासद्विलक्षणपरावित्यर्थ इति ) यथा ब्रह्मणि प्रयुज्यमानावस्तिसत्यशब्दौ न सदसद्विलक्षणपरौ, एवं प्रपञ्चे प्रयुज्यमानौ नास्त्यसत्यशब्दौ न सदसद्वैलक्षण्यपरावित्यर्थः । ( अर्थद्वारको विरोध इति ) यद्यपि

विनाशित्वपरौ । 'वस्त्वस्ति किम्' 'मही घटत्वम्' इत्यत्र विनाशित्वमेव ह्युपपादितम्; न निष्प्रमाणकत्वं, ज्ञानबाध्यत्वं वा, एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वम् । बाधोऽपि यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धम्; तस्य तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः, न तु कालान्तरे अनुभूतस्य कालान्तरे

* श्रुतप्रकाशिका *

चेत्तत्राह ( अत्रेति ) कथं विनाशित्वपरावित्यत्राह ( वस्त्विति ) विनाशित्वमेव हि मिथ्यात्वमिति शङ्कायां विनाशित्वस्वरूपं शोधयति ( एकेनेति ) एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु, ततः कथं विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमितिशङ्कायां तुच्छत्वादिस्वरूपं शोधयति ( तुच्छत्वं हीति )

* भावप्रकाशिका *

सदसद्विलक्षणत्वमपि सत्त्वविरुद्धं भवति, तथापि सत्त्वाभावमेवासच्छब्दो वदेत्, नातिरिक्तमिति भावः । ( विनाशित्वमेव मिथ्यात्वमिति शङ्कायामिति ) तटस्थशङ्कायामित्यर्थः । मृषावादिनस्तादृश्याशङ्काया अनुत्थानात्, तथा सति विवादपर्यवसानात् ( विनाशित्वस्वरूपं शोधयतीति ) एकेनाकारेणैकस्मिन् काले अनुभूतस्य कालान्तरे परिणामविशेषेण नास्तित्वोपपादनादिति भाष्यस्य परिणामविशेषेणान्यथोपलब्धिर्हि विनाशित्वमित्यभिप्रायं मत्वा विनाशित्वस्वरूपं शोधयतीत्यवतारिका रचिता । केचित्तु एकेनाकारेणेत्यादिभाष्यमेवावतारयन्ति,— ननु वस्त्वस्ति किं मही घटत्वमित्यत्र नाशित्वमभ्युपपादितम् । न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वेत्युक्तम्, नात्र विनिगमकं पश्याम इत्याशङ्क्य वस्त्वस्ति किमित्यादिश्लोकद्वयेन कालान्तरे अन्यथोपलब्धस्य कालान्तरे अन्यथोपलम्भेन उपपाद्यमानस्य नास्तित्वस्य प्रमाणसम्बन्धानर्हत्वलक्षणतुच्छत्वरूपेण प्रतिपन्नदेशकालोपाधौ

परिणामादिना नास्तीत्युपलब्धिः कालभेदेन विरोधाभावात्, अतो न मिथ्यात्वम् ॥ एतदुक्तं भवति अज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदास्तिशब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयम्

---

* श्रुतप्रकाशिका *

( परिणामादिनेति ) परिणामशब्दः परिणामसामान्यपरः तद्विशेषपरश्च, यथा वादशब्दस्सर्वकथासाधारणो वीतरागकथामात्रपरश्च तद्वत्, अत्रायं परिणामशब्दो वर्धमानावस्थावाची 'परिणामर्द्धि जन्मभि'रिति प्रयोगात् । "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूता'मिति वक्ष्यमाणवचनकटाक्षेणैवमुक्तम् । परिणामशब्दस्य विकारमात्रपरत्वे आदिशब्दः प्रदेशान्तरगमनपरः । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाध इत्यत्राह ( कालभेदेनेति ) विरोधे हि बाधः, बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायेणाह ( अत इति ) परिणामित्वापरिणामित्वयोरर्थयोर्न हि नास्त्यसत्यादिशब्दाः पारिभाषिकाः, तत्कथं तदभिधानप्रकारः ? परिणामास्पदस्यापि वस्तुनो नित्यत्वान्नास्तिशब्दाभिधेयत्वं चानुपपन्नमित्यत्राह ( एतदुक्तं भवतीति ) सदैकरूपत्वमस्तिशब्दप्रवृत्तिनिमित्तम्, विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थः । घटावस्थायां पिण्डो नास्ति, कपालावस्थायां घटो नास्ति, चूर्णावस्थायां न कपालश्चेति सदा नाशगर्भत्वम्,

* भावप्रकाशिका *

निषेधप्रतियोगित्वलक्षणमिथ्यात्वरूपे वा पर्यवसानासम्भवेन विनाशित्व एव पर्यवसानस्योचितत्वमभिप्रयन्नाह— एकेनाकारेणैकस्मिन् काल इति । अस्मिन् पक्षे विनाशित्वमेव मिथ्यात्वमिति शङ्कायाः कथं विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमितिशङ्कायाश्च तटस्थशङ्कात्वाश्रयणक्लेशो नास्तीति च वदन्ति । ( विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थ इति ) नश्वरत्वं नास्तिशब्दप्रवृत्तिनिमित्तमिति नास्त्यर्थत्वं नश्वरत्वस्य, अतश्चाचेतनम्, सर्वदा नास्त्य-

इति। यथोक्तम्—

[1]"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥"

[2]"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते।
तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम्॥" इति।

देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि

* श्रुतप्रकाशिका *

उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः, तदवस्थस्य सैवोत्पत्तिः, तस्मान्नास्तिशब्दाभिधेयत्वमचिद्वस्तुनः। चिद्वस्तुनस्तु अवस्थान्तरापत्त्याऽवस्थान्तरप्रहाणाभावेनैकरूपत्वान्न विनाशगर्भत्वम्, अतस्तदस्तिशब्दवाच्यमेव। यत्सदाऽस्त्येव तदस्तिशब्दवाच्यम् "सिद्धे शब्दार्थसम्बन्धे" इत्यत्र सिद्धशब्दवदवधारणगर्भोऽयंशब्दः तत्र हि सिद्ध एवेति व्याख्यातम् 'अब्भक्षो वायुभक्ष' इत्यादि दृष्टान्तीकृत्य, तथा अत्रापीत्यर्थः। अस्तिनास्तीतिशब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह (यथोक्तमिति) असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिसारस्यमस्तीति शङ्कायां मिथ्यागर्भितत्वमपि दर्शयति (देशेति) (कर्मविशेषापेक्षयेति) पालनरञ्जनादिसद्भावासद्भावाभ्यां राजत्वपितृत्वादिरूपेण अस्तित्वं नास्तित्वं च कर्मापेक्षम्, औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वं न परमार्थ इत्यर्थः। अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादचितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम्। आत्मनः स्वाभाविकास्तित्वयोगात् तत्र

* भावप्रकाशिका *

र्थगर्भमिति भाष्यस्य सर्वदा नाशगर्भमित्यर्थ इति भावः (स्वाभाविकास्तित्वबुद्धियोगिविषयत्वमिति) स्वाभाविकास्तित्वमपारमार्थ इत्यर्थः। अपरमार्थभूतस्वाभाविकास्तित्वयोगात् अचिद्वस्तुनोप्यपरमार्थत्वमिति भावः। न चापरमार्थस्वाभाविकसत्यत्वस्याचिद्रूपेऽभावात् कथं तद्योगेनाचेतने अपरपार्थत्वव्यवहार इति वाच्यम्, अचेतनमसत्सत्यत्वकमिति प्रतीत्या कस्यचित्सम्बन्धस्य बहुव्रीह्यर्थस्य वक्तव्य-

१. वि-पु. अं. १-अ. १३- श्लो. १००. | २. वि. पु. अं. २-अ. १४. श्लो. २४.

वस्तुनि केवलास्तित्वबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तित्वबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य–

[1]"विष्ण्वाधारं यथा चैतत्त्रैलोक्यं समवस्थितम् ।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥"

इत्यनुभाषणाच्च, 'ज्योतींषि विष्णु'रित्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनम् । चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविकरूपत्वेन प्राधान्यम्; अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते ॥

* श्रुतप्रकाशिका *

तद्धीविषयत्वं परमार्थ इत्याह (आत्मन एवेति) पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति (श्रोतुश्चेति) प्रधानतः 'द्वचेकयो'रितिवद्भावप्रधानो निर्देशः, प्राधान्येनेत्यर्थः । प्राधान्यम् उत्कर्षः । अनुभाषणश्लोकपूर्वार्द्धफलितमर्थमाह (ज्योतींषीति) तदेकधार्यद्रव्यत्वं हि शरीरलक्षणम्, अतो विष्ण्वाधारमित्यनेनात्मशरीरभावस्सिद्धः । उत्तरार्धफलितमर्थमाह (चिदचिदिति) ज्ञानप्राधान्यं कण्ठोक्तम्, तेनाचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह (अचिद्वस्तुनश्चेति) प्राधान्याप्राधान्ये–उत्कर्षापकर्षौ, तौ चापरिणामित्वपरिणामित्वलक्षणौ, नामिथ्यात्वमिथ्यात्वलक्षणौ, धर्मिणि सति हि प्राधान्याप्राधान्ये, प्रतीतिमात्रसिद्धं हि मिथ्या; अतो न तत्राप्राधान्यशब्दः स्वरस इत्यभिप्रायः ॥ .... .... ....

* भावप्रकाशिका *

त्वात् (अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादिति) अपरमार्थस्वाभाविकसत्यत्वोपेतत्वादित्यर्थः ॥ .... .... .... .... .... .... .... ....

---

१. वि.पु. अं. २ अ. २. श्लो. २.

—०( निवर्तकानुपपत्तिः )०—

यदुक्तम्— निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति। तदसत्,–[1] "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय [2] " सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' [3] "न तस्येशे कश्चन तस्य नाम महद्यशः" [4] "य एनं विदुरमृतास्ते

* श्रुतप्रकाशिका *

अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनाम् अतदर्थत्वं वक्तुं परोक्तमनुवदति ( यदुक्तमिति ) परिहरति ( तदसदिति ) तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युदसितुमुपादत्ते ( वेदाहमिति ) अनेन विग्रहादिविशिष्टविषयज्ञानमेवोपायः, नान्य इत्युक्तम्। एतत्समानार्थत्वादाह ( सर्वे निमेषा इति ) तत्र हि 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति प्रतीकोपादानं कृतम्, अनेन विद्युच्छब्दश्च व्याख्यातो भवति, विद्युतः–विद्युद्वर्णादित्यर्थः। 'आदित्यवर्णं' मित्येनेनैकार्थ्यात् 'न तस्येशे क' इत्यनेन उपायभूतं ज्ञानान्तरं नास्तीति फलितम्, अधिकज्ञेयान्तराभावात्। उक्ताकारविशिष्टपुरुषवेदनस्योपायत्वं दर्शयति ( य एनं विदुरिति ) एषामन्येषामप्यादिशब्दगृहीतानाञ्च वाक्यानामुपादानम् अनेकवाक्यविरोधप्रदर्शनाय। ननु 'सदेवैकमेव' इत्यादिकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात्तज्ज्ञानमेव साक्षान्मोक्षोपाय इति सगुणज्ञानस्योपायत्वं

* भावप्रकाशिका *

( तेनात्मैक्यविषयत्वञ्चेति ) तेन– निर्विशेषवस्तुनेत्यर्थः। यद्वा निर्विशेषवस्तुविषयत्वेनेत्यर्थः। ( तत्र हि 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति प्रतीकोपादानं कृतमिति ) ततश्च अद्भ्यस्सम्भूत इत्युत्तरानुवाकपठितेन 'वेदाहमेतं

1. तैत्तरीयारण्यके अश्वमेधे पुरुषसूक्तम् ३-१२-१३- महानारायणोपनिषदि च ४-अ.

२-३-४. तैत्तरीयारण्यके ६. प्रश्ने नारायणानुवाके १. अनु. ८-९-१०.

भवन्ति” इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति । शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम् ॥

—:( तत्त्वमसिवाक्यार्थविचारः ):—

तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्, तत्त्वम्पदयोः सविशेषब्रह्माभिधायि-

* श्रुतप्रकाशिका *

तद्व्यवधानेन स्यात् । यद्वा सगुणज्ञानोपायत्वपरवाक्येऽपि न सगुणत्वे तात्पर्यम् । वस्तुमात्रमेव लक्ष्यत इति चेत् तत्राह ( ब्रह्मण इति ) सद्विद्यादिष्वपि सगुणविषयत्वोपपादनाद्यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात् तान्यपि सविशेषज्ञानोपायत्वपराणीत्यर्थः । तर्हि शोधकवाक्यैर्विरोध इत्यत्राह ( शोधकेति ) एवं ज्ञानस्य निर्विशेषविषयत्वं तद्विरुद्धवचनोदाहरणेन प्रक्षिप्तम् ॥ .... ....

अथ तत्त्वमस्यादिसामानाधिकरण्यान्यथानुपपत्त्या निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरैक्यविषयत्वं व्युदस्यति ( तत्त्वमस्यादीति ) शोधकवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम्. “तत्त्वमस्यादिषु जीवब्रह्मणोस्सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्, अचिद्ब्रह्मणोस्तु ‘सर्वं खल्विदं ब्रह्म’ इत्यादावतात्त्विकरूपारोपणेन सामानाधिकरण्यम् ‘ज्योतींषि विष्णु’रित्यादौ बाधार्थम्” इति चतुर्धा हि परैस्सामानाधिकरण्यं तत्र तत्राभ्युपेतम् । तत्र तत्त्वमस्यादिवाक्ये अन्वयमुखेन वस्तुमात्रपरत्वं गत्यभावे बाधार्थत्वं चाशङ्क्य निराक्रियते, तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह ( न निर्विशेषवस्त्वैक्यपरमिति ) कुत इत्यत्राह ( तत्त्व-

* भावप्रकाशिका *

पुरुषं महान्तमादित्यवर्णम्’ इत्यनेन ‘सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ’ इत्यस्य ‘अम्भस्यपारे ’ इत्यनुवाकगतस्य एकवाक्यत्वं वक्तव्यमिति भावः ॥

( चतुर्धा हि परैस्सामानाधिकरण्यमिति ) व्यासैश्च समञ्जसमित्यत्र शाङ्करभाष्ये सामानाधिकरण्ये अध्यासापवादैकत्वविशेषणानीति चत्वारः पक्षा उपन्यस्ताः ।

त्वात्। तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति "तदैक्षत बहु स्याम्" इत्यादिषु तस्यैव प्रकृ-

* श्रुतप्रकाशिका *

मिति ) तच्च कथमित्यत्राह ( तत्पदं हीति ) हिर्हेतौ। सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह ( तदैक्षतेति ) तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धम्, यथा शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेति। ननु गौस्तिष्ठति तामानयेत्यादौ आनयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते, तच्च मुख्यम्। नैवम्, आनयनसमकालान्वययोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात्, अन्यथा धावतोऽपि गोपिण्डस्यानयनादिप्रसङ्गः, विशेषणं विशेष्यवस्तुनि यथान्वयार्हं तथान्वितस्य

* भावप्रकाशिका *

तत्राध्यासो नाम द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते, यथा नाम्नि ब्रह्मत्वबुद्धावध्यस्तायामपि अनुवर्तत एव नामबुद्धिः, न ब्रह्मबुध्या निवर्तते, यथा प्रतिमादिषु विष्णवादिबुद्धिरध्यासः, अपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां निश्चितायां मिथ्यात्वबुद्धौ पश्चादुपजायमाना यथार्थबुद्धिः पूर्वनिविष्टाया मिथ्यात्वबुद्धेर्निवर्तिका भवति, यथा देहेन्द्रियसङ्घाते आत्मबुद्धिः आत्मन्येवात्मबुध्या पश्चाद्भाविन्या तत्त्वमसीत्यनया यथार्थबुद्ध्या निवर्तते। यथा- दिग्भ्रान्तिर्दिग्याथार्थ्यबुध्या निवर्तते, एकत्वञ्च समानाधिकृतयोश्शब्दयोर्द्वयोरनतिरिक्तार्थवृत्तित्वम्, तद्यथा सिन्धुरः करी कोकिलः पिकः विशेषणविशेष्यभावे नीलमुत्पलमित्युपन्यस्तम्, तस्यापीदमुपलक्षणमिति द्रष्टव्यम्। ( सर्वं खल्विदं ब्रह्मेत्यादाविति ) ननु शमविधिपरत्वेन नामब्रह्मेत्यादाविव सर्वस्मिन् ब्रह्मदृष्टिविधिपरत्वाभावेनाध्यासे सामानाधिकरण्यमिति परैर्न व्यवहृतम्, कथमेवमुच्यत इति चेन्न, यदि न व्यवहृतं तर्हि नोदाहरणमुदाहर्तव्यमिति न्यायेन सम्प्रतिपन्नमुदाहरणान्तरं द्रष्टव्यम्। ( स्थित्यादिविशेषणविधुरेति ) तिष्ठतिक्रियाया आनयनदशायामसम्भवादिति भावः। ( स्थित्यादिविशेषणेनेति ) यस्मात्याप्यव्यावृत्तिमत्तया ज्ञाते तात्पर्यविषयेतरविशेषणान्वयधीः तत्त्वस्यैव विशेषणस्वरूपत्वम्, ननु विधेयान्वयि-

* श्रुतप्रकाशिका *

तस्यापरित्यागो हि विवक्षितत्वम् । प्रकृतसर्वविशेषणेषु एकस्यापि परित्यागे प्रकृतत्वमेव हीयेत, शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात्; अतस्सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितम् । न च प्रकृतसर्वविशेषणपरित्यागेऽपि धर्म्यैक्येन प्रकृतत्वसिद्धिः, सर्वाकारप्रहाणे प्रतिसन्धानानर्हत्वात्. न ह्यपवरके घटोऽस्ति तमानयेत्युक्ते घटत्वाविवक्षायां मृण्मात्रस्य सिद्धिः प्रकृतत्वासिद्धिः, कथमेकाकारपरित्यागेऽप्यसम्भवत्प्रकृतत्वं सर्वाकारपरित्यागे सम्भवति. अङ्गुलीयकत्वप्रहाणेऽपि कनकं प्रतिसन्धीयत इति चेत्. सत्यम्, प्रत्यक्षेण. तच्छब्दस्तु प्रकृताकारप्रहाणे प्रतिसन्धानमेव जनयितुं न शक्नोति, अत एव हि यदङ्गुलीयकं तदानयेत्युक्ते कनकमात्रं नानीयते, अतः प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात् । तत्पदोपस्थापितसार्वज्ञ्यादीनां त्वम्पदोपस्थापिताज्ञत्वादीनां च

* भावप्रकाशिका *

रूपत्वमिति भावः । (यथान्वयार्हमिति) विधेयसमकालतया विधेयभिन्नकालतया वा यथान्वयार्हमित्यर्थः । अत एव सोयं देवदत्त इत्यादौ देशकालदीनामपि विशेषणत्वमिति भावः । (एकस्यापि परित्यागे इति) अत एव 'सम्बन्धादेवमन्यत्रापि' इत्यधिकरणे व्याहृतिविद्यायां 'तस्योपनिषदहमित्यध्यात्म'मित्यत्र तच्छब्दस्य पूर्वप्रकृतस्थानविशेषविशिष्टवचनत्वात्तत्रत्यो व्यवस्थितिः, नतु विशेष्यमात्रवचनतया व्यवस्थितत्वमिति समर्थितमिति भावः । (प्रकृतत्वं दूरोत्सारितमिति) अत एव निर्विशेषप्रतीतिः तत्पदेन लक्षणयैवेति परैरपीष्यत इति भावः । (प्रतिसन्धानानर्हत्वादिति) तत्पदजन्यप्रतिसन्धानानर्हत्वादित्यर्थः । (कनकं प्रतिसन्धीयत इतीति) नच तच्छब्दानुविद्धतया तदिति प्रात्यक्षिकप्रतिसन्धाने सत्यपि तत्पदजन्यप्रतिसन्धानविषयत्वस्यानुपादितत्वात् कथमयमाक्षेप इति वाच्यम्; तच्छब्दानुविद्धप्रतिसन्धानानर्हस्य तत्पदजन्यप्रतिसन्धानानर्हत्वमपि सम्भवतीति तदभिप्रायात् (तच्छब्दस्त्विति) वस्तुतस्तु प्रत्यक्षेण यत्र अङ्गुलीयकत्वप्रहाणेन तदिति कनकं प्रतिसन्धीयते, तत्रापि संस्कारसाचिव्यात् अङ्गुलीय-

तत्वात् तत्समानाधिकरणं त्वम्पदञ्च अचिद्विशिष्ट-जीवशरीरकं ब्रह्म प्रतिपादयति, प्रकारद्वयावस्थितैक-वस्तुपरत्वात्सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परि-त्यक्तं स्यात्; द्वयोः पदयोर्लक्षणा च । 'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा, भूतवर्तमानकालसम्बन्धितयैक्य-

---

* श्रुतप्रकाशिका *

विरोधान्निर्विशेषपरत्वमिमि चेत् तत्राह ( तत्समानाधिकरणमिति ) घटस्य शुक्ल इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्तत्वाभावात् तद्व्यावृत्त्यर्थं तत्समा-नाधिकरणमित्युक्तम् । ( अचिद्विशिष्टजीवशरीरकमिति ) अज्ञत्वादिगुणानां सर्वज्ञत्वा-दिगुणके परमात्मनि विरोधस्सद्वारकतया परिहृत इत्यर्थः । त्वम्पदप्रवृत्तिनिमित्तसम्बो-धनीयार्थस्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेण अचिद्विशिष्टजीवेत्युक्तम्, समानाधिकरणत्वे सति कथं त्वम्पदं जीवविशिष्टब्रह्मपरमित्यत्राह ( प्रकारद्वयेति ) प्रकारद्वयावस्थितम्— प्रकारद्वयविशिष्टम् . प्रकृततत्त्वम्पदप्रवृत्तिनिमित्तपरः प्रकार-द्वयशब्दो न्यूनत्वनिवर्तकः, न तु प्रकारत्रित्वादिव्यवच्छेदपरः । तदुपपादयति ( प्रकारद्वयपरित्याग इति ) दूषणान्तरमाह ( द्वयोरिति ) अविरोधेन मुख्यतया निर्वाहे सम्भवत्येकस्यापि पदस्य लक्षणा न युक्ता, विरोधे सत्यप्येकपद-लक्षणयैव अविरोधस्सिध्यतीति पदद्वयलक्षणाऽनुपपन्नेत्यर्थः । ननु पदद्वयलक्षणा न दूषणम्, सोऽयं देवदत्त इत्यादिषु दृष्टत्वात्, तत्र हि देशकालविशिष्टाकारे देश-कालान्तरान्वयविरोधाल्लाक्षणिकमेव पदद्वयं तत्राह ( सोऽयमिति ) किमेकस्य देशद्वयसम्बन्धे विरोधः ? उत कालद्वयसम्बन्धः ? इति विकल्पमभिप्रेत्याह ( भूतेति ) न विशिष्टाकारे विशेषणान्तरान्वयः, अपि तु विशेष्यमात्रे ; अतः कालद्वयसम्बन्धो न विरुद्धः । यदि विरुद्धः तर्हि बौद्धोक्तं क्षणिकत्वमेवापद्येत, अनेककालसाध्यधर्म-

ॐ भावप्रकाशिका ॐ

कत्वविशिष्टमेव प्रतिसन्धीयते, ततश्च तच्छब्दशानुविद्धप्रत्ययस्थले सर्वत्रापि प्रकृता-कारविशिष्टस्यैव परामर्श इत्युक्तावपि न दोषः । ( प्रयोजकोपलक्षणाभिप्रायेणेति )

प्रतीत्यविरोधात् । देशभेदविरोधश्च कालभेदेन परिहृतः । 'तदैक्षत बहु स्याम्' इत्युपक्रमविरोधश्च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते । ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्म-

* श्रुतप्रकाशिका *

विधानं फलप्राप्तिश्च नोपपद्येयातामिति भावः । ( देशभेदेति ) यद्यप्येकस्य देशद्वयसम्बन्धविरोधः तर्हि विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते प्रत्यभिज्ञाविरोधश्चेति भावः । यौगपद्यं कथं सम्भवतीति चेदुच्यते , देशद्वयसम्बन्धस्य कालद्वयसम्बन्धस्य वा न युगपद्भावः , तत्प्रतिपत्तेरेव हि यौगपद्यम् , प्रतिपत्तिस्तु देशद्वयकालद्वयसम्बन्धं क्रमभाविनमेव दर्शयति ; अतो न विरोधः । अन्यथातीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसज्येतेति । दूषणान्तरमप्याह ( तदैक्षतेति ) उपक्रमाधिकरणे ह्युपक्रमप्राबल्यमुक्तमिति भावः । उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वान्नोपक्रमविरोधः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं हि 'तदैक्षत बहु स्याम्' इतिवाक्यात्पूर्वमित्यत्राह ( एकविज्ञानेनेति ) तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्त्यादिगुणसिद्धेरित्यर्थः । विशिष्टमेव कारणं तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरस्याभावात्कारणज्ञानेन कार्यज्ञानमुपपद्यते । मृषावादिनस्तु कारणज्ञाने कार्यस्य विषयतयान्तर्भावोऽभिमतश्चेद्विरोधः, सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात् . मिथ्यात्वेनेत्यध्याहारश्च स्यात् । अनन्तर्भावे त्वज्ञाते ज्ञातत्वव्यवहारो न मुख्यः स्यात्, अतोऽसत्पक्ष एव प्रतिज्ञावाक्यं स्वरसम् । श्रुत्यन्तरविरोधमाह ( ज्ञानस्वरूपस्येति ) ज्ञानस्वरूपस्य सर्वज्ञस्येत्यनेन धर्मिधर्मभूतज्ञाने विवक्षिते । सर्वज्ञस्याज्ञत्वं निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य अनन्तपुरुषार्थाश्रयत्वमिति विरोधः,ज्ञानस्वरूपस्येत्यनेन तिरोधानानुपपत्तिश्च सूचिता ; इत्थं सामानाधिकरण्यस्य

७ भावप्रकाशिका ७

ततश्च किञ्चिज्ज्ञत्वादिरूपमाभिमुख्यप्रयोजकमचिद्विशिष्टेत्यनेन सङ्गृहीतमिति भावः । ( अन्यथातीतानागतेति ) प्रतीतियौगपद्यमादाय विषययौगपद्याभ्युपगमे प्रत्येतव्यस्य

कस्याज्ञानं तत्कार्य्यानन्तापुरुषार्थाश्रयत्वञ्च भवति। बाधार्थत्वे च सामानाधिकरण्यस्य त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः॥ इयांस्तु विशेषः—नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम्; तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च। अधि-

* श्रुतप्रकाशिका *

निर्विशेषवस्त्वैक्यपरत्वं दूषितम्। अथ बाधार्थत्वं दूषयति (बाधार्थत्वे चेति) रज्जुः सर्प इत्येवंरूपं बाधार्थं सामानाधिकरण्यमेव नास्ति, सामानाधिकरण्यस्य एकस्मिन् विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरोधात्, अतः पदद्वयमुख्यार्थत्वेऽभिमते बाधार्थं सामानाधिकरण्यं न सिध्येत्। सर्पशब्देन नञर्थं लक्षयित्वा असर्पो रज्जुरिति निर्वाहं दृष्टान्तवाक्यस्याशङ्क्य दार्ष्टान्तिकवाक्यस्य ततोऽप्यधिकं दूषणमाह— बाधार्थत्वे चेति। त्वंतत्पदयोरित्यत्र न क्रमविवक्षा, तत्पदमधिष्ठानमात्रं लक्षयति, त्वम्पदं जीवभावनिवृत्तिं लक्षयति। यद्वा, त्वम्पदेनाधिष्ठानलक्षणा, तत्पदेन निवृत्तिलक्षणा, आदिशब्देन सामानाधिकरण्यलक्षणाद्यनिरूपकमविरोधः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि। उक्तदृष्टान्तादुपलक्ष्यसामानाधिकरण्याच्च दूषणमत्राधिकमित्याह (इयांस्तु विशेष इति) बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः, अपि तु तैस्सह वक्ष्यमाणाधिकदूषणद्वयापात एव विशेष इत्यर्थः। अधिकं दूषणमाह (नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनमिति) शुक्तिरेव रजतमित्यत्र प्रमाणान्तरेण नेदं रजतमिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनम्, अत्र बाधस्याप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः। (तत्पदेना-

* भावप्रकाशिका *

प्रतीतिसमकालत्वमिति नियमोऽभ्युपगतस्स्यात्. ततश्चातीतानागतविषयेपि विषयविषयिणोस्समकालत्वनिर्वाहाय विषयिणो वातीतत्वं विषयस्य वा विद्यमानत्वं स्यादिति भावः (उक्तदृष्टान्तादिति) शुक्तिरेव रजतमिति दृष्टान्तादित्यर्थः। (उपलक्ष्य-

ष्ठानन्तु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनो-
पस्थाप्यत इति चेन्न, प्रागधिष्ठानाप्रकाशे तदाश्रय-
भ्रमबाधयोरसम्भवात् । भ्रमाश्रयमधिष्ठानमतिरोहित-

* श्रुतप्रकाशिका *

धिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति ) शुक्तिरेव रजतमित्यत्र शुक्तिस्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयति, अतस्तत्र बाधकल्पनम्. अत्र त्वधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववद्विरुद्धधर्मानुपस्थापनात् बाधकल्पनमनुपपन्नमित्यर्थः । विरोधपरिहारार्थं लक्षणा चेदन्यतरपदलक्षणैव विरोधपरिहारायालम्, तद्वा स्वविशेषत्वप्रसङ्ग इति चार्थसिद्धम्. प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वाच्छब्देन विरुद्धधर्मोपस्थापनाच्च बाधकल्पनम्; अत्र तूभयाभावात्तदनुपपन्नमित्युक्तम् । तत्र विरुद्धाकारोपस्थापनं शङ्कते ( अधिष्ठानन्त्विति ) तदधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम्. अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनम्, न तु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति, अतस्तत्पदेन प्रागप्रकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनाद्बाधकल्पनमित्यर्थः । अत्राह ( नेति ) किं विरोधिरूपमधिष्ठानं प्रकाशते ? उत न ? इति विकल्प्य अप्रकाशपक्षे दूषणमाह ( अधिष्ठानेति ) तदाश्रयेत्याश्रयशब्दो विषयपरः । यद्वा, तदधिष्ठानकभ्रमबाधयोरित्यर्थः । प्रकाशपक्षं शङ्कते ( भ्रमेति ) भ्रमाश्रयमधिष्ठानमित्यत्र पाठो निरीक्षणीयः । आश्रयशब्दो विषयपरः । भ्रमाश्रयमित्यत्र भ्रमस्याश्रयणं विषयीकरणम् अत्रेति वैयधिकरण्येन वा, भ्रम आश्रयः आश्रयणीयस्सम्बन्धनीयो येनेति सामानाधिकरण्येन वा कथञ्चिद्बहुव्रीहित्वमपि निर्वोढुं शक्यम्, आरोप्याकाराधिकरणभूतमधिष्ठानमिति वार्थः । भ्रमाश्रयत्वायातिरोहितमिति चेदित्यर्थः ।

* भावप्रकाशिका *

सामानाधिकरण्यादिति ) अन्वयमुखेनोपलक्षितवस्त्वैक्यपरमिति, प्रतिपादितादुपलक्ष्यसामानाधिकरण्यादित्यर्थः । ( पाठो निरीक्षणीय इति ) आश्रयशब्दस्य नित्यपुल्लिङ्गत्वादिति भावः । ( आश्रयशब्दो विषयपर इति ) विषयीकरणपर इत्यर्थः । स्वसिद्धान्तमाह ( आरोप्याकाराधिकरणभूतमधिष्ठानमिति

मिति चेत्; तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ, अतोऽधिष्ठाना-

* श्रुतप्रकाशिका *

दूषयति ( तदेवेति ) किमिदमधिष्ठानं विरोधिरूपम् ? उताविरोधि ? इतिविकल्पाभिप्रायेण विरोधीतिपक्षे दूषणमुक्तम् । अविरोधित्वपक्षे बाधकल्पनानुपपत्तिर्भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति न तदुक्तम् ( अत इति ) पारमार्थिकशब्दस्यायमभिप्रायः, भ्रमविरोध्याकारस्य अपारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात्, यथा शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं भवतीति । यदिदं चोद्यम्, विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते, यथा पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य वृन्तविषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयदावभ्रमो वृन्तविषयभ्रमरभ्रमश्च निवृत्त इति । 'भ्रमरी भ्रमरभ्रमेण वृन्ते यद्दावभ्रममाश्लिपत्पलाशम्' इति । तदयुक्तम्, तत्रापि परमार्थविरोध्याकारेणैव भ्रमविषयनिवृत्तेः, दावत्वविरोधिपलाशपुष्पत्वाकारः परमार्थः, भ्रमरत्वविरोधिवृन्त-

* भावप्रकाशिका *

वार्थ इति ) भ्रम्यत इति भ्रमः । आरोप्याकारो रजतादिरेव तस्याश्रयम् आश्रीयत इत्याश्रयम् 'अकर्तरि च कारके' इत्यधिकारे कर्मणि एरजित्यच्प्रत्ययः न च 'घञजबन्ताः पुंसी'ति पुल्लिङ्गत्वमजन्तत्वे स्यात् । "क्तल्युटौ नपुंसके भावे स्त्रियां क्तिन्नादयो यतः । अतो घञाद्याः पुंस्येव यथा पाकश्चयो लयः ॥" इति वाच्यम्, तस्य भावार्थघञादिविषयत्वात्, यथोक्तम्—"भावे घञाद्याः पुंस्येव कर्त्रभिन्ने तु कारके । पुन्नपुंसकयोरेव न कथञ्चित्स्त्रियां क्वचित्" इति । तेन कर्मादिषु कारकेषु पुन्नपुंसकत्वमस्तीतिविशेष्यस्य नपुंसकत्वान्नपुंसकत्वमिति द्रष्टव्यम् । ( यथा पलाशपुष्पविषयेति ) यद्यपि श्लोके भ्रमर्या वृन्ते भ्रमरभ्रमेण पलाशपुष्पविषयदावभ्रमे निवृत्ते पलाशपुष्पाश्लेषमात्रं प्रतीयते, भ्रमरभ्रमेणेत्यस्य दावभ्रममित्यनेनान्वितत्वेन आश्लिपदित्यनेनानन्वितत्वाभावात् तावन्मात्रस्यैव प्रकृतोपयुक्तत्वाच्च, तथापि भ्रमरज्ञानस्य भ्रान्तित्वस्पष्टीकरणार्थं पलाशपुष्पाश्लेपस्य भ्रमरभ्रमनिवर्तकत्वमप्युपन्यस्तमिति द्रष्टव्यम् । ( भ्रमविषयनिवृत्तेरिति ) निवृत्तिरपहारः,

तिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्ति-

* श्रुतप्रकाशिका *

त्वाकारश्च परमार्थः, अपरमार्थत्वे दावत्वं भ्रमरत्वं च सत्यं स्यात्, शुक्तित्वे अपरमार्थे रजतत्वमिव । वृन्तविपयभ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति चेत्, ततः किम्? दावत्वबुद्धिनिवृत्तिर्भ्रमरत्वस्य सत्यत्वप्रतिपत्तिकृता; ततश्चासत्ये सत्यत्वविपयभ्रमा-न्तरं तिष्ठति, तन्निवृत्तिरप्यसत्यविपयसत्यत्वभ्रमान्तरेणेति भ्रमपरम्परया निश्शेषा-विद्यानिवृत्त्यनुपपत्तिः । किञ्च दावत्वविपयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमर-भ्रमेण, अपि तु परमार्थपुष्पत्वाकारेणैव, अन्यथा परमार्थरजते अपरमार्थशुक्ति-त्वबुद्ध्या रजतधीनिवृत्त्या रजतस्यापि शुक्तित्वप्रसङ्गात्, भ्रमान्तरेण भ्रमान्तर-निवृत्तावनवस्था च स्यात्, निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात्, यथा रज्जुविपयसर्पभूदलनाम्बुधाराभ्रमपरम्परायाः । किञ्च भ्रमरभ्रमनिवृत्त्यनन्तरं निव-

* भावप्रकाशिका *

असत्त्वमिति यावत् । पारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादा-विति हि भाष्यम् । तत्र बाधो हि विपयापहारः, विपयासत्त्वमिति यावत् । ततश्च भ्रान्त्यन्तरं निवर्तताम्, मा वा दावत्वरूपविपयस्यासत्त्वरूपो बाधः पारमार्थिक-पलाशपुष्पत्वकृतः, विरोधिधर्मपारमार्थ्यायत्तत्वात्; तद्विरोधिधर्मासत्त्वस्ये-तिभावः । भ्रान्तिबाधो नाम भ्रान्तिविनाश एवेत्यभिप्रेत्याशङ्कते (भ्रमरभ्रमेण दावत्वबुद्धिर्निवृत्तेति चेदिति) (असत्ये सत्यत्वविपयभ्रमान्तरमिति) ननु तन्नि-वृत्तिरपि भ्रमान्तरेण, तन्निवृत्तिरपि भ्रमान्तरेणेत्याश्रयणे भ्रमपरम्परया निश्शेषावि-द्यानिवृत्त्यनुपपत्तिरित्येतावतैव ग्रन्थेन विवक्षितार्थस्सिध्यतीति, ततः किम्? दावत्व-बुद्धिरित्यादिग्रन्थस्य नातीव प्रयोजनं पश्यामः । किञ्च अभ्रमरे भ्रमरत्वविपयत्वे-नैव भ्रमत्वोपपादनसम्भवे सत्यत्वविपयत्वपर्यन्तोपपादनस्यापि न प्रयोजनमिति चेन्न; विरुद्धाकारसत्यत्वावगाहिज्ञानस्यैव बलवत्त्वेन बाधकत्वमिति शिक्षणार्थत्वे-नास्य ग्रन्थस्योपपत्तेः (निश्शेषाविद्यानिवृत्त्यनुपपत्तिरिति) भ्रमेण भ्रमनिवृत्तिमात्र-दर्शनेपि मोक्षे निश्शेषाविद्यानिवृत्तिमभिलषता सुदूरमपि गत्वा पारमार्थिको धर्मः स्वीकरणीय इति भावः । (किञ्च भ्रमरभ्रमनिवृत्त्यनन्तरमिति) वृन्तत्वज्ञानेन भ्रमरत्वव्यतिरेकनिश्चये निवर्तकीभूतभ्रमरत्वबुद्धेरपारमार्थ्यनिश्चयेन दावत्वबुद्धेः

वाधौ दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे

* श्रुतप्रकाशिका *

चेकापारमार्थ्यज्ञानादापतद्दावभ्रमः परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्तः, अतो निश्शेषाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरम्परापर्यवसानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः, रज्जुत्ववत् । चरमभ्रमः स्वयमेव न स्यादिति चेन्न, स्वयं स्वबाधकर्मत्वे कर्मकर्तृविरोधप्रसङ्गात् । किञ्च बाधकस्य सत्यात्मकत्वात् बाध्यस्य मिथ्यात्वात् एकस्यैव निवर्त्यनिवर्तकत्वाभ्युपगमे तस्यैव मिथ्यात्वं सत्यत्वं चेति विरोधः स्यात् । किञ्च प्रपञ्चोऽपि बाधकानपेक्षः स्वयमेव स्वात्मानं निवर्तयेत्. स्वयं नाशे विनाशस्यावस्थान्तररूपत्वादविद्या सूक्ष्मरूपेण स्थिता स्यात् । नाशकल्पकाविद्यान्तरं च स्यात् । परमार्थविरुद्धधर्मतत्तिरोधानाभावे भ्रमबाधासम्भवं दृष्टान्तेनोपपादयति ( अधिष्ठाने हीति ) अत्र राजकुमारसमाधिर्भगवतो

* भावप्रकाशिका *

पारमार्थ्यबुद्धेरवर्जनीयत्वादिति भावः । ( परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्त इति ) यद्यपि दावत्वभ्रमस्य वृन्ते भ्रमरत्वपारमार्थ्यभ्रममात्रेणापि तद्बाधकज्ञानानुत्पत्तिस्थले निवृत्तिस्सम्भवति । तथापि भ्रमर्या पलाशपुष्पत्वज्ञानादेव सम्भ्रान्तिर्यत्र निवृत्ता तदभिप्रायेण तथोक्तमिति द्रष्टव्यम् । ( न स्यादिति चेदिति ) नश्येदिति चेदित्यर्थः । ननु न तस्यैव मिथ्यात्वमसत्यत्वञ्च प्रसज्यते, विनाश्यविनाशकभावलक्षणबाध्यबाधकभावस्य मिथ्यात्वसत्यत्वनिरपेक्षत्वात्, तुल्यसत्ताकयोरेव पूर्वोक्तज्ञानयोर्विनाश्यविनाशकत्वलक्षणबाध्यबाधकत्वदर्शनात् । नच बाधकमानविषयस्य सत्यत्वं बाध्यज्ञानस्य मिथ्यात्वञ्चापेक्षितमिति । चरमज्ञानविषयमिथ्यात्वसत्यत्वे स्यातामिति वाच्यम्, तस्याद्याप्यसिद्धेरित्यस्वरसादाह ( किञ्च प्रपञ्चोपीति ) ( स्वयं नाशे विनाशस्यावस्थान्तररूपत्वादिति ) नच परतो नाशेपि नाशस्यावस्थान्तररूपत्वादिति सुवचमिति वाच्यम्, ज्ञानेन निवृत्तिस्थले मूलभूताविद्याया एव निवृत्तिरिति नानवस्थान्तरापत्तिलक्षणो विनाश इत्यत्र तात्पर्यात् । अत एव यत्र मुद्गरप्रहारेण घटनाशस्तत्र स्वकारणे विलयमात्रमेव, नतु घटस्यात्यन्तनिवृत्तिः । यत्र तु शुक्तिज्ञानेन रजतनिवृत्तिस्तत्र स्वोपादानेन सह निश्शेषनिवृत्तिः, नतु स्वकारणे विलय इति पराभ्युपगम इति

प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः । राजत्वोपदेशेन च तन्निवृत्तिर्भवति ; नाधिष्ठानमात्रोपदेशेन ; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् भ्रमानुपमर्दित्वाच्च ॥ जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् ; निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति, उपक्रमानुकूलता च , एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च ; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् . [1]"तमीश्वराणां परमं महेश्वरम्" [2]"पराऽस्य शक्ति-

* श्रुतप्रकाशिका *

भाष्यकारस्य , एवं बाधार्थत्वं दूषितम् ॥ अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह ( जीवशरीरकेति ) मुख्यवृत्तमित्यनेन लक्षणाहानिरुक्ता । ( प्रकारद्वयेति ) अनेन सामानाधिकरण्यसिद्धिः , निरस्तनिखिलदोषस्येत्यादिना तत्पदोक्तगुणाविरोधः ( उपक्रमानुकूलता चेति ) "सदेव सोम्येदम्" 'तदैक्षत' इत्युपक्रमाविरोध उक्तः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः कथमित्यत्राह (सूक्ष्मेति)विशिष्टं कारणम्— तदेव कार्यमिति प्रतिज्ञोपपत्तिरित्यर्थः । श्रुत्यन्तराविरोधमाह ( तमीश्वराणामिति )वाक्यं चेदुद्देश्योपादेयविभागवत् . उद्देश्यं स्वगतम् ,

७ भावप्रकाशिका ७

भावः । ( राजकुमारसमाधिरिति ) समन्वयाधिकरणभाष्ये 'कश्चिद्राजकुमारः' इत्यादिना स्पष्टयिष्यते । उक्तञ्च परैरपि—'राजसूनोः स्मृतिप्राप्तौ व्याधभावो निव-

१–२.श्वे. ६-अ. ७-८-वा.

विंद्विश्वैव श्रूयते" १ "अपहतपाप्मा सत्यकामः सत्यसङ्कल्पः" इत्यादिश्रुत्यन्तराविरोधश्च ॥ तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् ; नात्र किञ्चिदुद्दिश्य किमपि विधीयते ; २"ऐतदात्म्यमिदं सर्वम्" इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् ।

* श्रुतप्रकाशिका *

उपादेयं विधेयमनवगतम् । अत्र तत्पदं नोद्देश्यसमर्पणपरम्, सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात् . त्वंशब्दस्य चान्तर्यामिपरत्वे सत्युद्देश्यसमर्पकत्वमनुपपन्नम्, अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात् ; तस्मात् त्वंशब्देन जीवमात्रमुद्दिश्य तस्य तत्पदेन ब्रह्मभावो विधीयत इत्यभ्युपगन्तव्यम् । तत्र विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं सम्भवतीत्यभिप्रायेण चोदयति (तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेदिति) परिहरति (नात्रेति) प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायां न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यमनुवादकम्, अपितु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकमित्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्शयति (ऐतदात्म्यमिति) अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः । ततः किमित्यत्राह (अप्राप्ते हीति) अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूप-

❀ भावप्रकाशिका ❀

र्तते । यथैवात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥" इति । (सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वादिति) यद्यपि पूर्वसन्दर्भप्रतिपन्नस्य सार्वज्ञ्यादिगुणकस्योद्देश्यत्वं सम्भवति, तथापि तत्पक्षे असीतिमध्यमपुरुषानुपपत्तिरिति दूषणं द्रष्टव्यम् । (अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वादिति) यदि चान्तर्यामी पूर्वप्राप्तस्तदोपदेशे वैयर्थ्यमपि द्रष्टव्यम् । ननु ऐतदात्म्यमित्यनेन शरीरशरीरिभावस्य प्राप्तत्वेपि त्वंशब्दतदर्थबुद्धीनां परमात्मपर्यन्तत्वरूपस्य तत्त्वमसीतिवाक्यप्रतिपाद्यार्थस्याप्राप्तत्वादुद्देश्योपादेयसिद्धिरित्याशङ्क्य तस्यापि प्राप्तिमुपपादयति (अस्मिन्नेव

१. छा. ८-प्र १-ख. ६-वा. | २. छा. ६-प्र. ८-ख. ७ वा.

* श्रुतप्रकाशिका *

प्रयोजनवदित्यर्थः । अतः तदुद्देश्योपादेयविभागवत्, न तु प्रकृतनिगमनरूपं वाक्यम्, अतोऽस्य निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमित्यर्थः । ननु निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते, यथा तस्माच्छब्दोऽनित्यः तस्मादयमग्निमानिति । अत्र शब्दपर्वताद्युद्देशेन अनित्यत्वाग्निमत्त्वादिकं हि विधेयतया प्रतीयते । नैतद्युक्तम्, प्रतिपादितार्थविषयस्य निगमनवाक्यस्याप्रतिपन्नार्थविषयत्वव्याघातात् । प्रतीतिस्तु विधायकवाक्यस्योद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानान्निर्देशे प्रथमचरमभावादिसारूप्याच्चोद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव, "यद्वृत्तयोगः प्राथम्यम्" इत्याद्युद्देश्यलक्षणमिति हि नीतिविदः । ननु सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिः, अत एव हि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन परस्परसामानाधिकरण्येन च प्रयोगेषूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते "त्वं भूतानामधिपतिरसि' 'अहमस्मि प्रथमजा ऋतस्य" तथा "यदग्ने स्यामहं त्वं त्वं वा स्या अहं स्युष्टे सत्या इहाशिषः" इत्यादिषु । अग्ने अहं त्वं यदि स्याम्—त्वमिव देवता स्याम् त्वमहं यदि स्याः- अहमिवार्थी स्याः, तदा ते तवाशिषस्सत्याः स्युरित्यर्थः । तस्मात्तत्त्वमसीत्यत्रापि मध्यमपदप्रयोगात् त्वंपदस्योद्देश्यसमर्पकत्वं तत्पदस्य चोपादेयसमर्पकत्वमकामेनापि स्वीकार्यम् । नैवम्; पदद्वयावगतार्थस्य पूर्ववाक्यप्राप्तत्वादेव; तर्हि मध्यमनिर्देशः कथमिति चेत् . उच्यते, तत्त्वम्पदयोरुभयोरपि प्रयुक्तत्वादुद्देश्योपादेयविभागाभावाच्च प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ, निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात्तत्र च इदं सर्वमितिनिर्दिष्टजगदन्तर्गतचिद्विशेष-

❀ भावप्रकाशिका ❀

प्रकरण इति ) इदञ्च त्वमादिशब्दानां परमात्मपर्यन्तत्वमिति तत्त्वमसीत्यस्यार्थ इत्यभ्युपगम्योक्तमिति द्रष्टव्यम् । ( उद्देश्योपादेयविभागत्वभ्रान्तिरेवेति ) ननु 'अग्निर्हिमस्य भेषजम्' इत्यादौ प्राप्त्यप्राप्तिनिबन्धनानुवाद्यत्वविधेयत्वाभावेपि निर्देशगतस्वातन्त्र्यपारतन्त्र्यरूपोद्देश्योपादेयविभागवत्त्वेन दोषः । नचानुवाद्यत्वविधेयत्वे एवोद्देश्यत्वोपादेयत्वे इति वक्तुं शक्यम् । 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ अनुपादेयस्यापि कालस्य विधेयत्वदर्शनादिति चेन्न; अग्निर्हिमस्य भेषजमित्यादिवाक्ये उद्देश्योपादेयभावव्यवहारस्याभियुक्तेष्वदर्शना-

इदं सर्वमिति सजीवं जगन्निर्दिश्य ऐतदात्म्यमिति तस्यैष आत्मेति तत्र प्रतिपादितम् । तत्र च हेतुरुक्तः

* श्रुतप्रकाशिका *

विशिष्टपरमात्मवाचिनस्त्वम्पदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकदेशविषयत्वात्तदनुरोधेन मध्यमनिर्देश इति । ननु 'ऐतदात्म्यमिदं सर्वम्' इत्यचेतने ब्रह्मानुप्रवेशमुक्त्वा तत्त्वमसीति जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह ( इदं सर्वमिति सजीवं जगन्निर्दिश्येति ) सर्वशब्दो नाचेतनमात्रपरः । सङ्कोचकाभावेऽपि स्वारस्यभङ्गायोगात् 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः' इति पूर्ववाक्ये सर्वशब्देन प्रजानां विशेषितत्वात् , प्रजाशब्दस्याचित्संसृष्टचेतनविशेषपरत्वात्, 'इदं सर्वमसृजत' इत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्चेति भावः । ऐतदात्म्यमितिपदं व्याचष्टे ( तस्यैष आत्मेति ) इदं सर्वमिति पदद्वयमुद्देश्यसमर्पकम् । ऐतदात्म्यम्—एतदात्मकत्वं विधेयम् , विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वेपि एतच्छब्दः चिदचिद्विलक्षणविशेष्यांशपरः, अर्थवशात्. तदात्मकत्वं मृदात्मको घट इतिवत् स्वरूपैक्यकृतं स्यादित्यत्राह ( तत्र च हेतुरुक्त इति ) सदायतना इत्यनेन आधा-

* भावप्रकाशिका *

दिति भावः । केचित्तु उद्देश्योपादेयशब्दौ अनुवाद्यत्वविधेयत्वपराविति वदन्ति । ( प्रापकवाक्यस्थोद्देश्यवाचीति ) यद्यपि त्वंशब्दस्य ऐतदात्म्यमिति प्रापकवाक्यस्थविधेयवाचकैतदात्म्यशब्दवाच्यपरमात्मपर्यन्ततया विधेयवाचित्वमपीति न विनिगमकमस्ति. तथाप्यसति विनिगमके द्वयोरपि प्रयोगार्हत्वात् मध्यमपुरुषः प्रयुक्त इति भावः । ( तदनुरोधेन मध्यमनिर्देश इति ) यद्यपि मानान्तरसिद्धत्वेपि त्वंशब्दार्थस्य तच्छब्दार्थप्रकृतित्वविवक्षायां प्रकृतेरेवासिक्रियाकर्तृत्वान्मध्यमपुरुषो भवति । अत एव 'यदग्ने स्यामहं त्वं त्वं वा स्या अहम्' इतिमन्त्रे अहं त्वं स्यां त्वं वा अहं स्या इति प्रकृत्याश्रयपुरुषो भवतीति 'युष्मद्युपपद' इति सूत्रे प्रतिपादितम् । ततश्च त्वदात्मक एव सर्वज्ञत्वादिगुणको जगत्कर्तेत्ययमर्थः पर्यवस्यति । विवक्षानुसारित्वाच्छब्दप्रवृत्तेर्मानान्तरसदसद्भावयोरप्रयोजकत्वात् ,

[1] "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" इति ; [2] "सर्वं खल्विदं ब्रह्म तज्जलानिति

* श्रुतप्रकाशिका *

राधेयभाव उक्तः , अनेन शरीरशरीरिभावस्सिद्धः , चेतनेन यावदात्मभावितया धार्यद्रव्यं हि शरीरम् । अस्मिन्वाक्ये हेतुत्वमप्रकटमिति तद्दैशयायाह ( सर्वं खल्विति ) अत्रापि प्राणेनेन सदायतनत्वं फलितम् , सन्मूला इत्यादिवाक्यैनैकार्थ्यात् । तत्र सन्मूल इति तज्जत्वम्, सत्प्रतिष्ठा इति तल्लत्वम् , सदायतना इति तदनत्वं चोच्यते , तच्चान्तःप्रविश्य प्रशासनेन धारकतया स्थितिहेतुत्वम् . "अन्तःप्रविष्टः शास्ता जनानाम्' "एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठति" इत्यादिश्रुतेः । एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्वलयस्थानत्वायोगात् सर्वस्य तदनत्वोक्त्या च चिदचिच्छरीरकत्वं सिद्धम् । अतः सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः, ब्रह्मशब्दस्य चासङ्कोचेन स्वरूपरूपगुणैर्निरवधिकबृहत्ववाचित्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः , एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्यकारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थः , चिदचित्प्रकारित्वं प्रातिपदिकबोध्यम् । अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः , अतो यथोक्त एवार्थः ।

* भावप्रकाशिका *

अत एव हि 'आत्मेति तूपगच्छन्ति' इत्यधिकरणे आचार्यास्स्वयमेव वक्ष्यन्ति ; तथाप्यत्रोपायान्तरमुपन्यस्तमिति द्रष्टव्यम् । ( सदायतना इत्यनेनाधाराधेयभाव उक्त इति ) सन्मूलास्सत्प्रतिष्ठा इत्यत्र सच्छब्दो विशिष्टपरः, प्रजाशब्दोपि कार्यावस्थब्रह्मपरः केवलस्योपादानत्वासम्भवात्, सदायतना इत्यत्र तु सच्छब्दो विशेष्यस्वरूपमात्रपरः । प्रजाशब्दोपि न ब्रह्मपर्यन्तः, अपित्वचिद्विशिष्टजीवमात्रपरः, वैरूप्यमपि प्रामाणिकत्वादभ्युपेयम् , अथवा प्रजाशब्दस्सर्वत्र विशेषणमात्रपरः, अस्मिन्नपि पक्षे उपपत्तिः प्रागेव दर्शिता । ( सन्मूला इत्यादिवाक्यैकार्थ्यादिति )

१. छा. ६-प्र. ८-ख. ४-वा. | २. छा. ३-प्र. १४-ख. १-वा.

शान्तः" इतिवत्॥ तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति [1] "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" [2] "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः" [3] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं

* श्रुतप्रकाशिका *

अथ सर्वं खल्विति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन च विशदयितुं श्रुतिवाक्यानि दर्शयति (तथेति) 'अन्तःप्रविष्टश्शास्ता' इत्येतत्सर्वात्मशब्दव्याख्यानरूपम् । अनेन शरीरात्मभावः फलितः [उक्तः] । अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वम्, तत्स्पष्टीकरणार्थमुदाहरति (यः पृथिव्यामिति) 'यः पृथिव्याम्' 'य आत्मनि' इति पर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रति शरीरत्वमुक्तम् । आत्मनि तिष्ठन्नित्युक्ते वेश्मनि तिष्ठति तिले तैलं तिष्ठतीतिवद्बहिरबहिः स्थितिसाधारण्यं स्यात्, तद्व्युदासार्थमाह (आत्मनोऽनन्तर इति) अन्तरो यमयतीत्यनेन शरीरलक्षणमुक्तम्. तस्माच्चनियाम्यं सच्छरीरमित्यर्थः । न च शिलापुत्रकस्य शरीरमितिवदयं निर्देशः,

७ भावप्रकाशिका ७

सर्वं खल्विति वाक्ये इतिकरणेन हेतुत्वं स्पष्टम्, अनित्यस्य शरीरशरीरिभावार्थत्वमस्पष्टम् । सदायतना इत्यत्र शरीरशरीरिभावः स्पष्टः, हेतुत्वमस्पष्टम्, ततश्च नष्टाश्वदग्धरथन्यायेनोभयोरपि परस्पराकाङ्क्षतयार्थनिर्णायकत्वमिति भावः । (शरीरात्मभावः फलित इति) आत्मत्वप्रतिपादनेन शरीरत्वमपि फलितमिति भावः । (साधारण्यं स्यादिति) अतश्चान्यतरमात्रेपि पर्यवस्येदिति भावः ।

१. आरण्यके. ३-प्रश्ने. ११-अनु. २०-पं.
२. बृ. ५-अ. ७-ब्रा. ३-वा.
३. बृ. ५-अ. ७-ब्रा. २२-विज्ञानस्थाने माध्यन्दिनपाठः ॥

य आत्मानमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः "[1] "यः पृथिवीमन्तरे सञ्चरन्"- इत्यारभ्य [2]"यस्य मृत्युः शरीरम्। यं मृत्युर्न वेद । एष सर्व-

* श्रुतप्रकाशिका *

अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात् 'यस्य पृथिवी शरीरम्' इति व्यतिरेकनिर्देशस्वारस्यभङ्गाभावस्य प्रकरणसिद्धत्वाच्चदपवादाभावे तत्राप्यौपचारिकत्वाश्रयणायोगात् अधिकरणाधिकर्तव्यभावव्याप्यव्यापकभावाङ्गप्राङ्गभावनियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च । यं पृथिवी न वेदेति दृष्टान्तार्थम्, यथा अचेतनं न वेत्ति तथा चेतनोऽपीति भावः । य आत्मनीति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते, नक्षत्रचन्द्रादित्यादीनामचिरसंसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात्, 'यस्सर्वेषु भूतेषु तिष्ठन्' इत्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च । न च भूतशब्दः पृथिव्याद्यचिन्मात्रपरः, 'यस्य पृथिवी शरीरम्, 'यस्यापश्शरीर'मित्यादिना पृथिव्यबादीनां भूतानां पृथगुक्तत्वात्। यमात्मा न वेदेति इयत्तया वेदननिषेधः, भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते, कारणावस्थमपि भगवतश्शरीरम्, शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह (यः पृथिवीमन्तरे सञ्चरन्निति) मृत्युः—तमश्शब्दवाच्या प्रकृतिः, तत्रैव तमश्शब्दस्थाने मृत्युशब्दपाठात् ।

* भावप्रकाशिका *

(अयं निर्देश इति) यस्यात्मा शरीरमित्यादिनिर्देश इत्यर्थः । (अधिकरणाधिकर्तव्येति) 'य आत्मनि तिष्ठन्' इत्यधिकरणाधिकर्तव्यत्वमुक्तम् । 'आत्मनोऽन्तर' इति व्याप्यव्यापकभावः । 'य आत्मा न वेदे'ति अङ्गप्राङ्गभावः । 'य आत्मानमन्तरो यमयति' इति नियाम्यनियन्तृभावश्चोक्त इति भावः । (पृथिव्यबादीनामिति) 'ऋक् पूर्धू'रित्यप्रत्ययाभावस्समासान्तविधेरनित्यत्वादिति द्रष्टव्यम् । अन्तर्यामिब्राह्मणेनैव चारितार्थ्यात् 'यः पृथिवीमन्तरे सञ्चरन्' इति सुबालवाक्योपादानस्य प्रयोजनमाह (कारणावस्थमपीत्यादिना) जीवेन सहेति

१—२-सुबालोपनिषदि. ७-ख.

भूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" [1]"तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यादीनि ॥ अत्रापि– "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम् । "तदनुप्रविश्य सच्च त्यच्चाभवत्"

* श्रुतप्रकाशिका *

शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह ( तत्सृष्ट्वेति ) न केवलं श्रुत्यन्तरानुरोधादैतदात्म्यशब्दार्थौ निश्चीयते, स्वप्रकरणवाक्यादपीत्याह ( अत्रापीति ) अनेन जीववाचिकशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनाऽवगतमिति सिद्धम् । जीवेनात्मना–जीवशरीरकेण मया 'व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत् । नामरूपे इतिपदं व्याचष्टे (वस्तुत्वं शब्दवाच्यत्वं चेति) तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वं चेत्यर्थः । अचिद्ब्रह्मणोस्तादात्म्यमनुप्रवेशकृतमस्तु, जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात्, जीवेन मयेतिश्रवणादित्यत्राह ( तदनुप्रविश्येति ) ननु जीवमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात् सिध्यति, नामरूपव्याकरणश्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात् . यथा रूपव्याकरणं रूपनिष्पादनमात्रम्, न तु स्वस्य तद्बोध्यत्वापादनम्, एवं नामव्याकरणमपि शब्दसृष्टिरेव, न तु तद्बोध्यत्वापादनमिति । नैवम् "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति समानवाक्ये इदंशब्दवाच्यजगदात्मब्रह्मणः प्रलयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात् नामरूपाभ्यामितीत्थ-

* भावप्रकाशिका *

श्रवणादित्यत्राह ( तदनुप्रविश्येतीति ) ननु श्रुत्यन्तरे तादृशवाक्यान्तरसद्भावेपि अश्रुतवेदान्तान्तरस्य श्वेतकेतोः 'अनेन जीवेन मया' इत्यनेन वाक्येन जीवब्रह्माभेदसिद्धिः कस्मान्न स्यादिति चेन्न, अत्रापि प्रकरणे 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' इत्यनेन प्रजाशब्दार्थस्याचित्संसृष्टचेतनस्य सच्छरीरत्वादिकथने 'तस्य सोम्य

[1] तैत्त. आन. ६-अनु. २-

इत्यनेनैकार्थ्याज्जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशा-

* श्रुतप्रकाशिका *

भावे तृतीया, नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः । नच नामकर्तृत्वमेव नामविशिष्टत्वम्, न तु नामवाच्यत्वमिति वक्तुं युक्तम्. सञ्ज्ञासञ्ज्ञिसम्बन्धव्युत्पादके नामोच्चरितरि च पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः , नामवाच्यस्यैव हि नामविशिष्टत्वप्रसिद्धिः , उच्चारयितुश्शब्दोपादानत्वाभावान्नामविशिष्टत्वाप्रसिद्धिः , कृत्स्नोपादानस्य तु ब्रह्मणः शब्दोपादानत्वयोगाद्रूपविशिष्टत्ववन्नामविशिष्टत्वोपपत्तिरिति चेन्न , नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः । नहि घटादिनामविशिष्टत्वे कथिते नभसो नामित्वं स्वरसतः प्रतीयते , वाच्यत्वेन शब्दसम्बन्धिन्येव हि नामित्वप्रतीतिस्वारस्यम्, नच लक्षणावृत्त्यापि तत्तन्नामबोध्यत्वं ब्रह्मणस्सम्भवतीतिवाच्यम् , लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेः । ननु श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतम् । सत्यम्, तदगत्याश्रितम्; प्राणहारित्वगुणसाम्यात् प्रयोगान्यथासिद्धेः । "यथा वै श्येनो निपत्यादत्तः " इति हि श्रुतिः । मुख्यस्यैव हि शब्दस्य नामत्वप्रतीतिः स्वतःप्राप्ता । अत्र तु स्वतःप्राप्तस्य मुख्यत्वस्यापवादाभावान्न तत्प्रहाणं युक्तम्, अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्यादवगम्यते । एतदैकार्थ्यात् 'नामरूपे व्याकरवाणि' इत्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितम् । किञ्च न तावद्वर्णसृष्टिप्रतिपादनशङ्कापि भवितुमर्हति । नामशब्दस्य वर्णमात्रपर्यायत्वाभावात्, ब्रह्मव्यतिरिक्तसमस्ततत्तत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन गगनासाधारणरूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्धत्वात्तत्प्रतिपादन-

❀ भावप्रकाशिका ❀

तदा सम्पन्नो भवति ' इत्यादिभेदनिर्देशेन चाभेदभ्रमनिवृत्त्युपपत्तेः ( नामरूपाभ्यामितीत्थम्भावे तृतीयेति ) यद्यप्येकीकृतं वस्तु नामरूपाभ्यां करणाभ्यां विभिन्नतया अक्रियत, अज्ञाप्यत इत्येवं व्याकरणे नामरूपयोः करणत्वमपि सम्भवति, कारकविभक्तित्वसम्भवे उपपदविभक्तित्वं चान्याय्यम् . तथाप्युपायान्तरप्रदर्शनपरत्वाददोष इति ध्येयम् । ( संज्ञासंज्ञिसम्बन्धव्युत्पादक इति ) सङ्केतयितरि पित्रादावित्यर्थः । ( गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेरिति ) नच घटपदवाच्य-

देवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य

* श्रुतप्रकाशिका *

वैयर्थ्यं च स्यात् । नच रूपशब्दस्य गोबलीवर्दन्यायेन सङ्कोचः । सङ्कोचकस्य नामव्याकरणनिर्देशस्यान्यथासिद्धत्वात् , अतो निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेव नामव्याकरणं स्यात् । तत्र 'बहु स्या'मित्यनेन स्वद्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमात् अस्मिन्वाक्येऽपि व्याकरणस्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रियमाणरूपस्य ब्रह्मविशेषणत्वमवगम्यते ; अतो ब्रह्मविशेषणरूपसमभिव्याहारान्नाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते । नाम्नो विशेषणत्वं वाचकतयैवेत्युपपादितम् । कृत्स्नस्य रूपस्य ब्रह्मविशेषणत्वावगमात्तत्तद्रूपप्रवृत्तिनिमित्तकत्वाच्च नाम्नां ब्रह्मविशेषणत्वम् , तस्य वाचकतयैवेत्यवगम्यते ; स्वद्यमाणबहुत्वविषयस्य बहुशब्दस्योपक्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनादुपक्रमोक्तबहुत्वावान्तरभिदा रूपतत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमवगम्यते । " तत्तेज ऐक्षत' ता आप ऐक्षन्त' इति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मविषयतया प्रयोगदर्शनाच्च नाम्नां ब्रह्मविशेषणत्वं तद्वाचकतयेत्यवगम्यते " वचसां वाच्यमुत्तमम् " " हरिरखिलाभिरुदीर्यते तथैकः " " नताः स्मः सर्ववचसां प्रतिष्ठा यत्र शाश्वती " इत्यादिस्मृतिस्वारस्याच्च नामवाच्यत्वमवगम्यते ; ततश्च 'नामरूपे व्याकरवाणि' इतिश्रुतिः चिदचिद्विशिष्टस्य ब्रह्मणस्तन्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम् । ऐतदात्म्यशब्दार्थव्याख्यानं निगमयति ( अत इति ) शरीरवाचिशब्दानां शरीरि-

* भावप्रकाशिका *

स्यापि कलशस्य नामित्वं नास्त्येव, घटशब्दस्य संज्ञाशब्दत्वाभावादिति वाच्यम् , अन्यत्र नामशब्दस्य घटादिशब्दसाधारणवाचकत्वमात्रार्थकत्वेन संज्ञाशब्दपर्यायत्वादिति भावः । ( निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेवेति ) तत्तद्रूपवाचकशब्दवाच्यत्वसम्पादनमेवेत्यर्थः । नन्वस्तु नामव्याकरणं शब्दवाच्यत्वसम्पादनम् , तथापि चिदचितोरेव नामवाच्यत्वसिद्धिर्न ब्रह्मणः , ब्रह्मपर्यन्तत्वे प्रमाणाभावात् 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्रापीदंशब्दस्य जगद्वाचितया ब्रह्मवाचित्वाभावात् इत्याशङ्क्य नामवाच्यत्वस्य ब्रह्मपर्यन्तत्वमुपपादयति ( तत्र बहु-स्यामित्यनेनेत्यादिना ) तत्र नामव्याकरणस्य नामवाच्यत्वसम्पादनरूपत्वे सतीत्यर्थः ।

वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते । तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमित्यैतदात्म्यमिदं सर्वमिति प्रतिज्ञातार्थस्य तत्त्वमसीति सामानाधिकरण्येन विशेष उपसंहारः ॥

---

* श्रुतप्रकाशिका *

पर्यन्तत्वं निगमयति ( तस्मादिति ) तस्मात्–उदाहृतवाक्यैश्शरीरशरीरिभावप्रतिपादनात्तस्य तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः । ननु न तत्पर्यन्ताभिधानमुपपद्यते लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात् ब्रह्मण एकत्वेन द्वित्वबहुत्वानुपपत्तेश्चेत्यत्राह ( अतस्सर्वशब्दानामिति ) लोकव्युत्पत्तिशब्दस्यायं भावः,– नात्र व्युत्पत्तिविरोधः , व्युत्पन्नार्थापरित्यागात् . ब्रह्मणो लौकिकप्रमाणागोचरतया तत्पर्यन्तव्युत्पत्त्यभावः , न स्ववाचकतयेति सोऽन्यथासिद्धः, यथा लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्यावगम्य लोकतो व्युत्पत्त्यभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते तद्वत् . तत्तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति । तत्त्वमसीत्यस्योपसंहारवाक्यतामाह ( इत्यैतदात्म्यमिति ) ( सामानाधिकरण्येन विशेष उपसंहार इति ) वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहारः, सामान्येन प्रतिज्ञातस्य विशेष उपसंहार इत्यर्थः । 'तदैक्षत' इत्यादिना तच्छब्दार्थः प्रतिपन्नः 'ऐतदात्म्यम्' इत्यादिना जीवस्य ब्रह्मात्मकत्वं प्रतिपन्नम् । 'अनेन जीवेन' इत्यादिना जीववाचिशब्दानां

* भावप्रकाशिका *

( लोकतो व्युत्पत्त्यभावपरिहार इति ) लौकिकानामपूर्वे व्युत्पत्तिः कुतो नास्तीति शङ्कया अपूर्वस्य लौकिकप्रमाणागोचरत्वेनेति यथा परिहारः क्रियते तथेत्यर्थः–( वैय्यधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहार इति ) ऐतदात्म्यमिति बहुव्रीहिणा वैय-

अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवल-भेदवादिनश्च वैयधिकरण्येन सामानाधिकरण्येन च

* श्रुतप्रकाशिका *

ब्रह्मपर्यन्तत्वं प्रतिपन्नमिति नात्रोद्देश्योपादेयविभागः , अयं ह्यप्राप्तार्थप्रतिपादकवाक्यानाम्, न तु निगमनवाक्यानाम्, तेषां प्राप्तविषयत्वात् । निगमनं चोक्तार्थप्रतिष्ठार्थत्वादपेक्षितं दृश्यते , तस्मान्निगमनवाक्येऽस्मिन्नुद्देश्योपादेयविभागमुखेन चोद्यस्य नावकाश इति परिहार उक्तो भवति। यत्र त्वप्राप्तार्थपरवाक्ये जगद्ब्रह्मणोस्सामानाधिकरण्यम् , तत्र ब्रह्मणस्तद्रूपनामभाक्त्वं विधेयं ज्ञातव्यम्, एवं भेदश्रुतिघटकश्रुत्यविरोधार्थं 'तत्त्वमसि' इतिवाक्यसामानाधिकरण्यं शरीरशरीरिभावेनोपपादितम्॥ शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुणपदयोर्व्यक्तिगुणिपर्यन्ताभिधानवत् सम्भवतीत्याकृत्यधिकरणन्यायेनोपपिपादयिषुः शरीरवाचिशब्दानमाकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य "अंशो नानाव्यपदेशात्" इत्यधिकरणस्य पूर्वपक्षभूतेष्वर्थेषु दूषणमाह ( अत इति ) अतः–जगद्ब्रह्मणोः श्रुतिभिः शरीरशरीरिभावप्रतिपादनात्तस्य च तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः। भेदाभेदवादिशब्देनौपाधिकस्वाभाविकभेदाभेदवादिनोर्द्वयोरपि तन्त्रेणोक्तिः। केवलभेदशब्देन स्वपर्यवसितभेदो विवक्षितः। तद्वादिनश्च वैशेषिकादयः, वैयधिकरण्यं च "अस्यैष आत्मा" इत्येवंरूपत्वादुपदेशस्य। ब्रह्मात्मभावोपदेश-

* भावप्रकाशिका *

धिकरण्येन इदं सर्वमिति सामान्येन च निर्दिष्टस्य शरीरात्मभावस्य तत्त्वमसीतिसामानाधिकरण्येन विशेषे चोपसंहारः कृत इत्यर्थः। ( ननु निगमनवाक्यानामिति ) ननु यथा धूमवान् सर्वोपि वह्निमानिति, पर्वतसाधारण्येन धूमवत्त्वावच्छेदेन वह्निमत्त्वव्याप्त्युपदर्शनेन ज्ञातत्वेपि पर्वतो वह्निमानितिवाक्यस्य एतत्पर्वतत्वावच्छेदेन वह्निप्रतिपादकस्य यथोद्देश्योपादेयत्वम् , एवमिह किं न स्यादिति चेन्न; तत्रापि इमे पर्वता वह्निमन्त इति पुरोवर्तिपर्वतसाधारण्येन निश्चयस्थले उद्देश्योपादेयविभागाभावस्येष्टत्वादितिभावः ( भेदश्रुतिघटकश्रुत्यविरोधार्थमिति ) द्वाभ्यामपि सामानाधिकरण्यस्याविरोधार्थमित्यर्थः। ( तन्त्रेणोक्तिरिति ) अचिद्ब्रह्म-

ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः । एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते तस्यैवेति चेत् , तत् स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित् । कल्पितभेदनिरसनमिति चेत् ; तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम् । सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत् । भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गा-

* श्रुतप्रकाशिका *

परित्यागः कथमितिशङ्कायां मृषावादिपक्षे तदनुपपत्तिं वक्तुमाह ( एकस्मिन्निति ) शङ्कते ( तस्यैवेति ) प्रतिवक्ति ( तदिति ) स्ववाक्येन– 'सत्यं ज्ञानम्' इत्यादिना स्ववाक्येन । स्वरूपपरवाक्येन प्रतिपन्नादधिकार्थप्रतिपत्तिरस्ति वा ? न वा ? प्रथमे सविशेषत्वम् , द्वितीये तादात्म्योपदेशवैयर्थ्यमिति भावः । पुनः शङ्कते ( कल्पितेति ) दूषयति ( तदिति ) प्रकारद्वयोपस्थापकत्वादिति भावः ( सामानाधिकरण्यतादात्म्येति ) सामानाधिकरण्येन तादात्म्योपदेशावसेयमित्यर्थः । न केवलमसाधकत्वम् , विरुद्धमपीत्याह( सामानाधिकरण्यं त्विति ) औपाधिकभेदाभेदवादे तदनुपपत्तिमाह ( भेदाभेदेति ) क्लेशकर्माद्यस्पृष्टस्सार्वज्ञ्यादिगुणको हीश्वरः, अत ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातादीश्वरतादात्म्योपदेशो विरुद्ध इत्यर्थः । परित्यक्ताः स्युः– परित्यागः फलित इत्यर्थः । स्वाभाविक-

* भावप्रकाशिका *

योर्भेदाभेदौ स्वाभाविकौ, चिद्ब्रह्मणोस्त्वभेदस्स्वाभाविकः, भेदस्त्वौपाधिकः, मुक्तावभेदवचनादिति भास्करमतम् । चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ , मुक्तौ भेदस्यापि निर्देशादिति यादवप्रकाशमतमितिविवेको द्रष्टव्यः । ( स्ववाक्येन सत्यं ज्ञानमित्यादिनेति ) आदिपदेन 'सदेव सोम्येद'मित्यादेः प्राकरणिकवाक्यस्यापि परिग्रहः ( परित्यागः फलित इत्यर्थ इति ) स्वारसिकार्थपरित्याग एवोपदेशपरित्यागः, नहि वेदस्य तदर्थत्यागादन्यस्त्यागोऽस्तीति भावः । ब्रह्मज्ञानेन

त्तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणस्स्वत एव जीवभावाभ्युपगमात् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादा-

* श्रुतप्रकाशिका *

भेदाभेदपक्षे तदनुपपत्तिमाह ( स्वाभाविकेति ) ( गुणवद्दोषाश्च स्वाभाविका भवेयुरिति ) ब्रह्मण ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषाश्च स्वाभाविका भवेयुः "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति । संसारप्रवाहानन्त्येन दोषा नित्याः स्युरित्यर्थः । यद्वा तत्तद्दोषसम्बन्धार्हत्वं स्वाभाविकं स्यादित्यर्थः । ततः किमित्यत्राह ( इति निर्दोषेति ) सद्ब्रह्मात्मादिशब्दानां नारायणशब्दपर्यवसायित्वेनेश्वरातिरिक्तवस्तुनिषेधादिभिरीश्वरस्यैव ब्रह्मत्वं सिद्धं कृत्वा 'निरवद्यं निरञ्जन'मित्यादिश्रुत्युक्तं ब्रह्मणो निर्दोषत्वं चाभिप्रेत्य निर्दोषब्रह्मतादात्म्योपदेशविरोध उक्तः । निर्दोषश्रुतिविरोधः फलितः, तर्हि निर्दोषश्रुतिविरोध इति वक्तव्ये किमर्थं निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध इत्युक्तम् ? उच्यते,— हेयानर्हतादात्म्यं हि पुरुषार्थः, स्वरूपैक्ये च ब्रह्मणो हेयार्हत्वाद्धेयार्हब्रह्मतादात्म्यधीर्न हेयापहा, तत्तादात्म्यानुभवोऽप्यपुरुषार्थश्चेत्युपायत्वप्राप्यत्वविरोधात्तादात्म्योपदेशपर-

* भावप्रकाशिका *

जीवस्य दोषनिवृत्तेश्शास्त्रसिद्धत्वान्नित्यदोषोपहितत्वं ब्रह्मणो बाधितमित्यस्वरसादाह ( यद्वा तत्तद्दोषसम्बन्धार्हत्वमिति ) यथा जीवस्य दोषसम्बन्धार्हत्वं स्वाभाविकम्; एवं तदभिन्नब्रह्मणोपि स्यादित्यर्थः । ननु निर्दोषब्रह्मतादात्म्योपदेशविरोधो न सम्भवति, तन्मते ईश्वरस्यैव निर्दोषत्वम्, चिदचिदीश्वरसमुदायात्मकब्रह्मद्रव्यस्य निर्दोषत्वम्; येन निर्दोषब्रह्मतादात्म्योपदेशविरोधस्स्यादित्याशङ्क्याह ( सद्ब्रह्मात्मादिशब्दानामिति ) ( निर्दोषश्रुतिविरोधः फलित इति ) जीवस्य ब्रह्मतादात्म्ये प्रतिपाद्ये ब्रह्मणो निर्दोषत्वश्रुतिर्विरुध्येतेति पर्यवसितोर्थः । ( हेयापहेति )

त्म्योपदेशो विरुद्ध एव । केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासम्भवादेव ब्रह्मात्मभावोपदेशा न सम्भवन्तीति सर्ववेदान्तपरित्यागः स्यात् ॥

—( अपर्यवसानवृत्तिनिरूपणम् )—

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति । जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन 'गौरश्वो मनुष्यो

---

* श्रुतप्रकाशिका *

वाक्यस्य प्रयोजनपर्यवसानं स्यात्, न ह्यसिना छिद्यमानस्य कालाग्निना दह्यमानस्य च पुरुषस्योपासनमुपासकानर्थं परिहरति । न च तत्तादात्म्यधीः कस्यचित्पुरुषार्थः, तद्वदिति ज्ञापनाय तादात्म्योपदेशो विरुद्ध इत्युक्तम् । स्वनिष्ठभेदपक्षे दूषयति (केवलेति) अत्यन्तभिन्नयोः–प्रकारप्रकारिभावरहितयोरित्यर्थः । केनापि प्रकारेण–विशेष्यांशतोऽप्यैक्यासिद्धिरित्यर्थः ॥ .... .... .... .... ....

एवं पूर्वपक्षचतुष्टयेऽप्यनुपपत्तिमुक्त्वा स्वपक्षे वैषम्यमाह (निखिलेति) सम्यक्छब्देन मुख्यत्वं विवक्षितम्, कथं मुख्यत्वमित्यत्राह (जातिगुणयोरिति) दण्डादिव्यावृत्त्यर्थमाह (शरीरभावेन विशेषणत्वेनेति) कथं मुख्यमेव दृष्टचर-

७ भावप्रकाशिका ७

'स्रगियं यदि जीवितापहा' इतिवत् 'अन्येभ्योपि दृश्यते' इति डप्रत्यये 'क्विप्च' इति क्विपि वा रूपम्. क्विप्पक्षे बह्वादिषु पाठसामर्थ्यात् ङीषभावे 'अन्नेभ्यः' इति न ङीबितिधातुवृत्तावुक्तमिति द्रष्टव्यम् । ततश्च 'अपक्लेशतमसोः' इति क्लेशतमसोरेवोपपदयोर्डप्रत्ययविधानमिति । अथ किमिदं रूपमिति न चोदनीयम् ॥

(दण्डादिव्यावृत्त्यर्थमाहेति) शरीरभावेनेतिपदसमभिव्याहारेण विशेषणत्वमिति भाष्यस्यापृथक्सिद्धतया विशेषणत्वमिति लभ्यते, न विशेषणत्वमात्रमिति

देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि द्रव्यप्रकारत्वमेव 'खण्डो गौः' 'शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम् । मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः पण्डो योषिदात्मा जातः' इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव समानाधिकरण्यनिबन्धनम्, न परस्परव्यावृत्ता जात्यादयः ।

* श्रुतप्रकाशिका *

मित्युच्यते, अमुख्यत्वेऽपि हि प्रयोगस्सम्भवति, अमुख्यत्वं च शरीरस्य द्रव्यत्वात्, नहि दण्डकुण्डलादिशब्दानां विशेष्यपर्यन्ताभिधानं दृष्टम्, तस्माद्द्रव्यत्वे सति विशेषणत्वं जातिगुणयोरन्यतरत्वे सति विशेषणत्वं वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति शरीरवाचिशब्दस्य विशेष्यपर्यन्ताभिधानममुख्यमित्यत्राह (जातिगुणयोरपीति) एवकारेण जातिगुणयोरन्यतरत्वादेः प्रयोजकत्वव्युदासः । ततः किमित्यत्राह (मनुष्यत्वादीति) अत्र प्रकारशब्दो विशेषणमात्रपरः, एवकारेण दण्डकुण्डलादिव्यावृत्तिरभिप्रेता । (सामानाधिकरण्यमनुगतमितीति) सामानाधिकरण्यस्यानुगतत्वादनुगतमेव तत्प्रयोजकं वाच्यमित्यर्थः । जातित्वगुणत्वादेः प्रयोजकत्वं किं न स्यादित्यत आह (न परस्परेति) परस्परव्यावृत्ताः— परस्परानुयायिनः । जात्यादयः— जातित्वादयः । अयमभिप्रायः; गङ्गायां घोष इत्यादिषु प्रवाहकूलयोर्गङ्गापदप्रवृत्तिनिमित्तभूतस्यानुयायिनः आकारस्यादर्शनात्तत्र लाक्षणिकत्वम्; अत्र तु यत्र यत्र विशेष्यपर्यन्ताभिधायित्वेन प्रयोगो दृष्टचरः, तत्र तत्र प्रयोगविषयेष्वनुवृत्ताकारदर्शनादननुगताकारप्रयोजकत्वाश्रय-

* भावप्रकाशिका *

भावः । (तत्र तत्र प्रयोगविषयेषु अनुवृत्ताकारदर्शनादिति) ननु जातिगुणद्रव्येष्वपृथक्सिद्धविशेषणत्वस्यानुगतस्य मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकस्य

स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचिद्द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः, दण्डी कुण्डलीति । न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्, तेषां विशेष-

* श्रुतप्रकाशिका *

णेन क्वचिल्लाक्षणिकत्वं वक्तुमयुक्तम्, अन्यथा अद्रव्यत्वे सति विशेषणत्वं विशेष्यपर्यन्ताभिधाने प्रयोजकमित्यपि न वक्तव्यम्, जातित्वं गुणत्वं वा प्रयोजकमस्तु, अन्यस्य लाक्षणिकं स्यात्, न च तथा भवदभिमतम्, जातिगुणवाचिनामुभयेषामपि हि शब्दानां विशेष्यपर्यवसायित्वेन प्रयोगदर्शनात्. तस्माच्छरीरवाचिशब्दानामपि विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात् प्रयोगेषु सर्वेष्वनुवृत्तैकाकारदर्शनाच्चाननुवृत्ताकारान्तरस्य प्रयोजकत्वकल्पनेनान्यतरस्यामुख्यत्वकल्पनाया अयुक्तत्वादिदमपि सामानाधिकरण्यं जातिगुणवाचिशब्दानामिव मुख्यमेवेति । ननु प्रकारभूतद्रव्यवाचिपदानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभिधायित्वं दण्डादिशब्दानां तथात्वादर्शनादनुपपन्नमिति शङ्कायां प्रकारतयैवेति पूर्वमभिप्रेतं विवृणोति ( स्वनिष्ठानामेव हीति ) अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकमित्यर्थः । यत्र यत्र नियतप्रकारत्वं तत्र सहोपलम्भनियमो दृष्टः, शरीरे तु सहोपलम्भनियमाभावाद-

* भावप्रकाशिका *

सम्भवेपि देवादिशब्दप्रवृत्तिनिमित्तस्य शरीरजीवपरमात्मसाधारणस्य प्रवाहतीरानुगतगङ्गापदप्रवृत्तिनिमित्तस्येव एकस्य भावात्तच्छब्दप्रवृत्तिनिमित्तदेवत्वादिजात्याश्रयशरीरस्यैव मुख्यत्वमतदाश्रयात्मनि तत्सम्बन्धाल्लक्षणैवास्त्विति चोद्यस्य कः परिहार उक्त इति चेत्. उच्यते ; देवत्वादिकमेव देवादिशब्दस्य शरीरात्मसाधारणं प्रवृत्तिनिमित्तम्, स्थूलो मनुष्यो देव इत्याद्यबाधितप्रयोगवशाद्देहस्य देवत्वाद्याश्रयत्वाभ्युपगमवत् देवोऽहं जानामीति अबाधितप्रयोगवशाद्देवत्वस्यात्माश्रयत्वस्याप्यभ्युपगन्तव्यत्वात् । नच देहात्माविवेककृतोयं प्रयोग इति वाच्यम् ; नाहं देह इति देहात्मविवेकवतोपि नाहं देवो मनुष्य इत्यप्रतीतेः । नच देहद्वारा देवत्वरूपप्रवृत्तिनिमित्ताश्रयत्वेपि आत्मनस्साक्षात्प्रवृत्तिनिमित्ताश्रयत्वाभावान्न तच्छब्द-

एवं सामानाधिकरण्यावसेयमेव ॥ यदि "गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र 'खण्डो मुण्डो गौः' 'शुक्लः पटः कृष्णः पटः' इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते, तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्, न चैवं दृश्यते, नहि नियमेन गोत्वादिवदात्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति ; अतो मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव ।

---

* श्रुतप्रकाशिका *

पृथक्सिद्धविशेषणत्वमनुपपन्नम्, तस्मात् सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण चोदयति ( यदि गौरश्व इति ) पक्षे व्यापकविपर्ययं दर्शयति ( न चैवमिति ) तद्विवृणोति ( नहीति ) ततः किमित्यत्राह ( अत इति ) परिहरति

ꣻ भावप्रकाशिका ꣻ

वाच्यत्वम्, अन्यथा घटद्वारा घटत्वाश्रयभूतलस्यापि घटशब्दवाच्यत्वप्रसङ्ग इति वाच्यम्. तत्र भूतले घटत्वमिति वा भूतलं घट इति वा भूतलस्य घटत्वाश्रयग्राहकस्याबाधितप्रमाणस्याभावेन तस्य घटशब्दवाच्यत्वाभावेपि देवोहं जानामीत्यबाधितप्रतीतेः देवत्वस्वरूपप्रवृत्तिनिमित्ताश्रयत्वस्य सत्त्वेन तच्छब्दवाच्यत्वस्याप्यावश्यकत्वात् । अपूर्वान्तरितस्यापि यागादेः स्वर्गसाधनत्ववत् आस्तरणान्तरितस्यापि पर्यङ्कादेश्शयानदेवदत्ताधारत्ववत् शरीरान्तरितस्याप्यात्मनो देवत्वाद्याश्रयत्वं न विरुध्यते, भूतलस्य तु घटाधारत्वमेव, नतु घटत्वाधारत्वम् तथा अप्रतीतेरिति विशेषः । उष्णं जलमित्यादौ तु अबाधितप्रतीतिव्यवहाराभावात् नोष्णादिशब्दवाच्यत्वम्, अत एवापृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यवाचित्वे दीपाद्यपृथक्सिद्धप्रभावाचिनामपि दीपादिवाचित्वप्रसङ्ग इत्यादिक्षुद्रोपद्रवाणामपि नावकाशः, दीपादेः प्रभात्वरूपप्रवृत्तिनिमित्ताश्रयत्वाभावात् । ननु

नैतदेवम् ; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वञ्च जात्यादितुल्यम् , आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते। आत्मैकप्रयोजनत्वञ्च तत्तत्कर्मफलभोगार्थतयैव सद्भा-

* श्रुतप्रकाशिका *

( नैतदेवमिति ) सहोपलम्भनियमस्य नियतप्रकारत्वाप्रयोजकत्वे दूषणं वक्ष्यन् प्रथमं शरीरस्यापृथग्विशेषणत्वं प्रतिपन्नमिति दर्शयति ( मनुष्यादीति ) आत्मैकाश्रयत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्यर्थः । यद्वा प्रकारत्वशब्देन प्रकारतयैव प्रतीतिर्विवक्षिता, उत्तरत्र प्रकारत्वविवरणे आत्मविशेषण-तयैव प्रतीतेरिति वक्ष्यमाणत्वात्; तेन विशेष्यप्रतिपत्तिसम्भवे दण्डकुण्डलादिवत्पृथ-गवस्थितत्वेन प्रतिपन्नत्वाभावः फलितः । तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्य-प्रतीतिसम्भवे पृथक्स्थितत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणत्वे प्रयोजकमित्यर्थः । तेषु त्रिष्वात्मैकाश्रयत्वं पक्षे दर्शयति ( आत्मैकाश्रयत्वमिति ) तदेकप्रयोजनत्वं दर्शयति ( आत्मैकेति ) न च दुःखैकफलनारकशरीरेष्वव्याप्तिः, दुःखस्याप्रयोजनत्वे

* भावप्रकाशिका *

मनुष्यादिशरीराणामिति भाष्ये तत्प्रकारत्वमपृथक्सिद्धविशेषणत्वरूपतयोच्यमानं दण्डादिष्वतिप्रसक्तमित्याशङ्क्याह ( अन्यतरान्वितमिति ) नन्वात्मैकाश्रयत्व-तदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्ययुक्तम् , व्यर्थविशे-षणत्वात् । किञ्च तथा सत्यात्मैकाश्रयत्वतदेकप्रयोजनत्वान्यतरप्रयुक्तमित्येवो-च्येत . किमित्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वमिति निर्देश इत्यस्वरसादपृथक्सि-द्धत्वप्रयोजकत्रयपरतया व्याचष्टे ( यद्वा प्रकारत्वशब्देनेति ) ( उत्तरत्र प्रकारत्व-विवरण इति ) नचात्मविशेषणतयैव प्रतीतेरिति भाष्यखण्डस्य प्रकारत्वप्रमाणोपन्या-सपरत्वसम्भवेन प्रकारत्वविवरणरूपत्वमसिद्धम् , अतः प्रकारत्वं प्रकारतैकस्व-भावत्वमित्यर्थः किं न स्यादिति वाच्यम् . तथा हि सति तदेकाश्रयत्वतदेक-प्रयोजनत्वतद्विशेषणत्वैश्शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमादिति विशेषण-त्वतत्प्रकारतैकस्वभावत्वयोरुपपाद्योपपादकभावेन भेदेन निर्दिशद्भाष्यं विरुध्येत ,

वात्, तत्प्रकारत्वमपि देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्य्यन्तत्वे हेतुः। एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयप्रत्ययः। देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मे'ति लोकवेदयोः सामानाधिकरण्येन व्यवहारः। जातिव्यक्त्योर्नियमेन सह-

---

* श्रुतप्रकाशिका *

ऽपि तेषां पापक्षयरूपप्रयोजनहेतुत्वात्। न च पत्यादिप्रीतिहेतुषु भृत्यादिदेहेषु तदेकप्रयोजनत्वादतिव्याप्तिरशङ्कनीया, तत्प्रयोजनसाधनत्वेन विना स्थित्यभावस्य विवक्षितत्वात्, क्रयविक्रयाद्यर्हस्य तदेकप्रयोजनत्वं हि न सिध्यति। तत्कर्मफलभोगार्थतयैव सद्भावादिति ह्युक्तम्, अतस्तदेकप्रयोजनशब्दस्याप्ययमेवार्थः। अथ तत्प्रकारत्वं दर्शयति (तत्प्रकारत्वमपीति) विशेष्यप्रतीतिसिद्धौ तत्पृथक्सिद्धत्वेन प्रतीत्यभावस्तत्प्रकारत्वशब्देन विवक्षित इत्यर्थः। पञ्चमीनिर्देशस्त्वौपचारिकः। यद्वा तत एव तत्प्रकारत्वेनोक्तमित्यर्थः। अथवा पृथक्स्थितत्वप्रतीत्यभावे प्रतीतिविशेषो हेतुतयोदाह्रियते, एतत्तदेकाश्रयत्वादित्रितयं सपक्षेऽपि दर्शयति (एतदेव हीति) विपक्षव्यावृत्तत्वं दर्शयति (एतत्स्वभावेति) ईदृशप्रकारत्वमेव पक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुरित्याह (देवमनुष्यादीति) सहोपलम्भनियमस्यान्यथासिद्धिमाह (जातिव्यक्त्योरिति) सहोप-

* भावप्रकाशिका *

अतो विशेषणत्वं विशेषणतयैव प्रतीतत्वं विवक्षितमिति भावः। (भृत्यादिदेहेष्विति) न च भृत्यदेहस्य स्वामिप्रयोजनसाधनत्वेपि स्वप्रयोजनादेरपि साधकतया नातिव्याप्तिशङ्कयशङ्केति वाच्यम्, तथात्वे पत्नीपुत्रादिभोगसाधने शरीरे असम्भवापत्तेरिति भावः। ननु प्रकारत्वं प्रकारतयैव प्रतीतिरिति व्याख्यातत्वात्। विशेषणतया प्रतीतेः प्रकारतया प्रतीतत्वमित्युक्ते साध्याविशेष इत्याशङ्क्याह (पञ्चमीनिर्देशस्त्वौपचारिक इति) (एतत्तदेकाश्रयत्वादित्रितयमिति) त्रित्वोक्ति-

प्रतीतिरुभयोश्चाक्षुषत्वात् । आत्मनस्त्वचाक्षुषत्वा-च्चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते । पृथग्ग्र-हणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा-वोचः, जात्यादिवत्तदेकाश्रयत्वतदेकप्रयोजनत्वतद्वि-

* श्रुतप्रकाशिका *

लम्भनियमस्त्वेकसामग्रीवेद्यत्वप्रयुक्तः, न स्वपृथक्सिद्धविशेषणत्वप्रयुक्त इत्यर्थः । चाक्षुषत्वं प्रदर्शनार्थम् । उपाधेरपक्षस्त्वं दर्शयति ( आत्मनस्त्विति ) एक-सामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावान्नापृथक्सिद्धविशे-षणत्वमित्याशङ्क्याह ( पृथग्ग्रहणेति ) स्वरूपम्– धर्मः, प्रकार-त्वमेव धर्मो यस्य तत्प्रकारतैकस्वरूपम्. एकशब्देन कदाचिदप्रकारत्वस्य व्युदासः, ततश्च दण्डकुण्डलादिवैषम्यम् । किमपृथक्सिद्धविशेषणत्वे प्रयोजकान्तराभावादेक-सामग्रीवेद्यत्वं प्रयोजकमुच्यते ? उतास्यानुयायित्वादिदमपि प्रयोजकमुच्यते ? इति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति ( जात्यादीति ) प्रकारतैकस्वभाव-त्वावगमादित्यत्र स्वभावशब्देनैव प्रकारत्वनियमे सिद्धेऽप्येकशब्दप्रयोग एक-सामग्रीवेद्यतास्वभावत्वव्यावृत्त्यर्थः । यदि तदेकाश्रयत्वादिरेवापृथग्विशेषणत्वे प्रयो-

* भावप्रकाशिका *

मनुष्यादिशरीराणामित्यादिभाष्यद्वितीयव्याख्याभिप्रायेणेतिद्रष्टव्यम् । ( स्वरूपमिति ) अत्र स्वशब्दः आत्मीयवाचीति भावः । ( प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यत इति ) एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति-तदभावान्नापृथक्सिद्धविशेषणत्वमित्युच्यत इत्यर्थः । एवं सत्येव पृथग्ग्रहणयोग्य-स्येतिभाष्यावतारिका ग्रन्थैकरूप्यमुपपद्यत इति द्रष्टव्यम् । ( एकसामग्रीवेद्य-तास्वभावत्वव्यावृत्त्यर्थ इति ) अत्र केचित् ; प्रकारतैकस्वरूपत्वं दुर्घटमित्यत्र एक-शब्दस्येवेहापि कदाचिदप्रकारत्वव्युदासकत्वस्यैव युक्तत्वात्, तस्यैनेह कथनाच्च तदेव युक्तम्, नत्वेकसामग्रीवेद्यत्वस्वभावत्वव्यावृत्त्यर्थत्वम्, तदेकाश्रयत्वादीनाम-पृथक्सिद्धविशेषणत्वावगमकत्ववदेकसामग्रीवेद्यत्वाभावावगमकत्वाभावात्, अत एव यदि तदेकाश्रयत्वादिरेवापृथक्सिद्धविशेषणत्वे प्रयोजक इत्युत्तरग्रन्थावतारि-

शेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्। सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्;

* श्रुतप्रकाशिका *

जकः, कथं तर्हि जात्यादौ सहोपलम्भनियम इत्यत्राह (सहोपलम्भेति) अनेन पूर्वं चाक्षुपत्वोक्तिरेकसामग्रीवेद्यत्वप्रदर्शनार्थेति स्पष्टम्। अथ पूर्वोक्तविकल्पे द्वितीयशिरसि चापृथग्विशेषणत्वप्रयोजकतयोच्यमानमिदं किं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगविषयेषु सर्वेष्वनुयायि उत भवदभिमतजातिगुणेष्वेवानुयायि? इति विकल्पोऽभिप्रेतः। तत्र न प्रथमः, देहात्मनोरेकसाम-

* भावप्रकाशिका *

कापि न युक्ता, एकसामग्रीवेद्यत्वाभावस्य उक्तरीत्या प्रागसमर्थितत्वेन एकाश्रयत्वादिरेवेत्यनुवादासम्भवात्। कथं तर्हि सहोपलम्भनियम इत्युक्तम्? तस्य त्वयमभिप्रायः,— एकसामग्रीवेद्यत्वस्यापृथक्सिद्धविशेषणत्वाप्रयोजकत्वे ऽपृथक्सिद्धविशेषणेषु जातिव्यक्त्यादिष्वेकसामग्रीवेद्यत्वासम्भवेन तन्निबन्धनस्सहोपलम्भनियमोपि न स्यादिति एवमाक्षिपन्तं प्रति सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इति परिहारस्यायुक्तत्वात्, तदभ्युपगमेनैवाक्षेपस्य प्रवृत्तत्वाज्जात्यादौ सहोपलम्भनियम इत्यध्याहारस्यापि क्लिष्टत्वाच्च। किञ्च पृथग्ग्रहणायोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति भाष्यस्य सहोपलम्भनियमशून्यस्य तत्प्रकारतैकस्वरूपत्वं दुर्घटमित्यर्थस्यैव स्वरसतः प्रतीतेस्स एवार्थ उचितः। किं प्रकारतैकस्वरूपत्वे प्रमाणाभावात्तन्नास्तीत्यभिप्रायः? उत प्रकारत्वस्य स्वभावत्वे यद्वस्तु यत्स्वभावविशिष्टं तद्वस्तु ग्राह्यमाणं तत्स्वभावयुक्तमेव गृह्यत इति। अपृथक्सिद्धत्वस्वभावत्वे तद्विशिष्टमेव गृह्येतेत्यभिप्राय इति विकल्प्य प्रथमं दूषयति; भाष्ये—जात्यादाविति। द्वितीयं दूषयति; भाष्ये—सहोपलम्भनियमस्त्विति। सहोपलम्भनियमस्सहैव प्रकारतया उपलम्भनियम इत्यर्थः। सहैव प्रकारतया प्रतिपादयतीत्युत्तरभाष्यानुगुण्यात्, वस्तुग्राहकं प्रमाणं तत्तत्स्वभावविशिष्टमेव गृह्णातीति नियमाभ्युपगमे बाधकं दर्शयति—यथा चक्षुषेति। पृथिव्यास्स्वाभाविकगन्धरसादिसम्बन्धित्वस्याग्रहवच्छरीरगतात्मप्रकारत्वस्याप्यग्रहणोपपत्तौ प्रमाणान्तरसिद्धप्रकारतैकस्वभावत्वस्यापह-

यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते; एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारत्वैकस्वभावमपि न तथा गृह्यते ; आत्मग्रहणे चक्षुषस्सामर्थ्याभावात् । नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः । तत्प्रकारत्वैकस्वभावत्वमेव

* श्रुतप्रकाशिका *

ग्रीवेद्यत्वाभावात्, ततश्च अनुगतप्रयोजकसद्भावादपृथग्विशेषणत्वस्याप्यनुगतत्वेन सामानाधिकरण्यप्रयोगाणां सर्वेषां मुख्यत्वे सम्भवत्यप्यननुगतमाकारं प्रयोजकत्वेनाङ्गीकृत्य अपृथग्विशेषणत्वमपि सङ्कुचितं कृत्वा तद्द्वारा सामानाधिकरण्यप्रयोगाणाममुख्यत्वाश्रयणमनुपपन्नमित्यर्थसिद्धम्, प्रकारत्वैकस्वभावत्वावगमादित्यत्रैकशब्देन एकसामग्रीवेद्यतास्वभावत्वस्य व्युदस्तत्वात् । अथ पराभिमतस्थलानुयायित्वरूपे द्वितीयशिरसि गन्धादौ व्यभिचारेण दूषणं वदन् एकसामग्रीवेद्यत्वस्यापृथग्विशेषणत्वाव्यापकत्वमाह (यथेति) न ह्यचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः । एवंशब्दो यथाशब्दप्रतिनिर्देशरूपः । कस्मादग्रहणमित्यत्राह (आत्मग्रहण इति) व्यापकत्वाभावफलमाह (नैतावतेति) एतावता— चक्षुषा ग्रहणाभावमात्रात् । न तत्प्रकारत्वस्वभावहानिः, एकसामग्रीवेद्यत्वस्यापृथग्विशेषणताव्यापकत्वाभावात्तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्चेति भावः। ततः किमित्यत्राह (तत्प्रकारतेति) एकशब्द एकसामग्रीवेद्यतास्वभावत्वव्युदास-

* भावप्रकाशिका *

त्वानर्हत्वादिति भाव इति वदन्ति । (पूर्वोक्तविकल्पे द्वितीयशिरसीति) अनुयायित्वादेकसामग्रीवेद्यत्वमपि प्रयोजकमिति द्वितीयकल्प इत्यर्थः । (अनुगतप्रयोजकसद्भावादिति) तदेकाश्रयत्वादिरूपानुगतप्रयोजकसद्भावादित्यर्थः । (द्वितीयशिरसि गन्धादाविति) यद्यपि शरीरादिषु भिन्नसामग्रीवेद्येषु अपृथक्सिद्धविशेषणत्वस्य समर्थितत्वेनापृथक्सिद्धसामान्ये प्रयोजकत्वशङ्काया अनुत्थानात्; जात्यादिगतापृथक्सिद्धत्वविशेषे एकसामग्रीवेद्यत्वस्य प्रयोजकत्वेपि तस्याप्रत्याख्येयत्वात्, तत्प्रत्याख्यानं प्रकृतानुपयुक्तम्, तथापि पराभिमानखण्डनार्थमुक्तमिति

सामानाधिकरण्यनिबन्धनम् । आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ॥ ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्य्यन्तता शरीरशब्दस्य । नैवम्; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणान्निष्कर्षकशब्दोऽयम्; यथा गोत्वं

---

* श्रुतप्रकाशिका *

परः, एवकारः सहोपलम्भनियमव्युदासार्थः । अपृथग्विशेषणत्वे सति शरीरस्य केनापि प्रमाणेन तत्तथोपलभ्येतेत्यत्राह (आत्मेति) ॥ शब्दोपि न शरीरिपर्यन्ताभिधायीति चोदयति (ननु चेति) परिहरति (नैवमिति) इमौ चोद्यपरिहारौ आकृत्यधिकरणेऽपि समानावित्यभिप्रायेणाह (यथा गोत्वमिति) निष्कर्षकशब्दानां विशेष्यपर्यन्ताभिधायित्वाभावे चेतनाचेतनवाचिनश्शब्दा न ब्रह्मपर्यन्ताभिधायिनो भवन्ति "यस्यात्मा शरीरम्' 'यस्य पृथिवी शरीरम्" इत्यादिष्वात्मादिशब्दानां निष्कर्षकशब्दत्वावगमादिति चेत्, उच्यते; निष्कर्षकशब्दो द्विविधः, वैवक्षिकनिष्कर्षको नियतनिष्कर्षकश्चेति । तत्र शरीरादिशब्दा नियतनिष्कर्षकाः, आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः, गोत्वादिशब्दवत् शुक्लादिशब्दवच्च, प्रयोगस्य व्यवस्थापकत्वात् । निष्कर्षकानिष्कर्षकविभागोऽपि हि प्रयोगाधीनः, तद्द्वयमपि विभागस्तन्मूलः । ननु शुक्लादिशब्दा नियतनिष्कर्षका एव, गुणिपर्यन्तता तु "गुणवचनेभ्यो मतुपो लुगक्तव्यः" इति स्मरणात् । नैवम्; जातिवाचिशब्दवद-

* भावप्रकाशिका *

द्रष्टव्यम् । (एकशब्द एकसामग्रीवेद्यतास्वभावत्वव्युदासपरः, एवकारस्सहोपलम्भनियमव्युदासार्थ इति) अत्र केचित्,—एकशब्दः प्रकारत्वानवस्थाव्युदासपरः, एवकारस्सहोपलम्भनियमैकसामग्रीवेद्यत्वव्युदासपर इत्येव युक्तमिति वदन्ति । भाष्ये— पदार्थविवेकप्रदर्शनायेति । देवादिशब्दैर्हि शरीरात्मानौ न विविच्य ज्ञापयितुं शक्यौ, शरीरादिशब्दैस्तु विविच्य ज्ञापयितुं शक्याविति भावः । (वैवक्षिकनिष्कर्षक इति) विवक्षायां सत्यां निष्कर्षक इत्यर्थः । विवक्षायां भव इत्यध्यात्मादित्वात् ठञ् ।

* श्रुतप्रकाशिका *

पृथक्सिद्धविशेषणत्वाचित्वाविशेषाच्छुक्लादिशब्दानाम् , प्रत्ययस्तु द्विशब्दस्थद्विवचनवत् प्रकृत्यनतिरिक्तार्थः, त्रिलिङ्गतया शब्दसाधुत्वाय स्वरविशेषाय च भवति, तत एव हि "गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वति' इति नैघण्टुकाः । यतस्त्वतो गुणिपर्यन्तानामेव गुणवाचिपदानां लिङ्गस्वरार्थं मतुब्लोपस्मरणम् , न तु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थम्, अत एव हि रागशब्दस्य रक्तपदतुल्यतया प्रयोगाभावः, अतः शुक्लादिशब्दा वैवक्षिकनिष्कर्षकाः, नियतनिष्कर्षकाणामपि तथात्वं प्रतियोगिविशेषसापेक्षम्, न तु सार्वत्रिकम्, "रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः" 'पुण्यो गन्धः पृथिव्यां च" इति गन्धादिशब्दानामपि परात्मपर्यन्ततया प्रयोगात्; अतः पृथिव्याद्यपेक्षयैव गन्धादि-

* भावप्रकाशिका *

( जातिवाचिशब्दवदपृथक्सिद्धविशेषणवाचित्वाविशेषादिति ) ननु नीलादिशब्दानां गवादिशब्दसाम्ये गवादिशब्दानां जातिमात्रे प्रयोगाभावात् नीलादिशब्दनां गुणमात्रे प्रयोगो न स्यात् . प्रयुज्यते च पटस्य शुक्ल इतीति चेन्मैवम् ; गोशब्दप्रवृत्तिनिमित्तस्य गोत्वानाश्रयत्वेन गोत्वस्य गोपदप्रयोगाविषयत्वेपि नीलपदप्रवृत्तिनिमित्तनीलत्वाश्रयत्वेन नीलरूपस्य तच्छब्दवाच्यत्वोपपत्तेः ( त्रिलिङ्गतया शब्दसाधुत्वायेति ) प्रत्ययान्तत्वे तु 'दण्डवान् दण्डवती दण्डवत्' इतिवच्छुक्लादिशब्दानां त्रिलिङ्गत्वं सिध्यति. उक्तञ्च भगवता कात्यायनेन 'गुणवचनेभ्यो लुग्वक्तव्यः' तथाच लिङ्गवचनसिद्धिः स्वरविशेषाय च भवतीति नीलादिशब्देष्वर्श आद्यजन्तत्वाश्रयणे स्वरभेदोपि सिद्धो भवतीत्यर्थः । ( लिङ्गस्वरार्थं मतुब्लोपस्मरणमिति ) मतुब्लोपादिस्मरणमित्यर्थः । अतश्च मतुब्लोपस्य स्मरणार्थत्वोक्तिरयुक्तेति चोद्यं निरस्तम् । ( अत एव हि रागशब्दस्येति ) 'गुणवचनेभ्यो मतुपो लुक्' इत्यत्र गुणद्वारा गुणवचनेभ्य एव मतुब्लोपस्मरणात् रागशब्दस्यातथात्वान्न मतुब्लोपेत्यर्थः । वस्तुतस्तु मतुब्लोपस्य वा अर्श आद्यजन्तत्वस्य वा अभेदोपचारस्य वा लक्षणाया वा आश्रयणे नीलादिशब्दानां गुणिवाचित्वभङ्गप्रसङ्गात् मतुब्लोपादिकं सिद्धान्ते अनभिमतमेव । लिङ्गमशिष्यं लोकाश्रयत्वादिति त्रिलिङ्गता चोपपद्यत इति द्रष्टव्यम् । ( पृथिव्याद्यपेक्षयैव गन्धादिशब्दानां नियतनिष्क-

शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः ॥ अतो गवा-

* श्रुतप्रकाशिका *

शब्दानां नियतनिष्कर्षकत्वम्। शरीरवाचिशब्दानां शरीरिपर्यन्ततां निगमयति (अतो गवादीति) आत्मपर्यन्ताः— आत्मपर्यन्तशक्तयः । शरीरवाचिशब्दैरात्म-बोधनं शक्तिनिबन्धनतया मुख्यमित्यर्थः। ननु यद्यपि शरीरवाचिशब्दा आकृतिनय-गोचराः, तथापि तैश्शरीरिबोधनं लाक्षणिकम्; गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात्. सम्बन्धानुपपत्तिभ्यां हि लक्षणा , जातिमात्रस्यानयनाद्यनर्हत्वात्-व्यक्तिसम्बन्धाच्च गवादिशब्दैर्व्यक्तिर्लक्षणया बोध्यते, प्रयोगे अन्यथासिद्धे शक्ति-कल्पनानुपपत्तेः । नैवम् , अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रति-

* भावप्रकाशिका *

षेकत्वमिति) यद्यपि 'गन्धः पृथिवी जलं रसः' इत्यादिप्रयोगेषु गन्धरसादिशब्दानां पृथिवीजलादिपर्यन्तत्वं दृष्टम्, तत्र च तेषामौपचारिकत्वाश्रयणे 'रसोऽहमप्सु' इत्यादीनां परमात्मनि औपचारिकत्वं सुवचम्, रसाभेदोपचारस्यैव युक्तत्वात्। रसोऽहमप्स्वित्यादौ रसशब्दस्य रसवत्परत्वे अप्सु रसवानित्यस्यायुक्तत्वाच्च , तथापि बहूनां रसगन्धादिशब्दानां परमात्मनि प्रयुक्तानां मुख्यत्वे सम्भवति, औपचारिकत्वा-श्रयणमयुक्तमिति भावः । व्यक्तीनामानन्त्येनानन्तासु व्यक्तिषु शक्तिग्रहासम्भवाद्व्य-भिचाराच्च, व्यक्तीनामशब्दार्थत्वम्, नियमलक्षणत्वात्सम्बन्धस्य . अनियमे सति तदयोगात् . व्यक्तौ शक्त्यभ्युपगमे शक्तीनामानन्त्यप्रसङ्गाच्च जातिरेव शब्दार्थः। व्यक्तिलाभस्तु लक्षणया आक्षेपाद्वा भविष्यतीतिभाट्टोक्तरीत्या वा जातेः परतन्त्रस्व-लक्षणस्वभावविशिष्टतयैव भाने तद्रूपस्य व्यक्तिघटितमूर्तित्वेन व्यक्तिमनादाय स्वभावविशिष्टजातिबोधनासम्भवात्. जातिभानसामग्र्यैव व्यक्तिमादाय जातिं बोधयति । यद्धि येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमात् । ननु जातिव्यक्त्योर्द्वयोरपि प्रत्याय्यत्वे व्यक्तावपि शक्तिः किं न स्यादिति वाच्यम्; जाति-व्यक्तिविषयकज्ञानस्य शब्दजन्यत्वे अविशिष्टेपि जात्यंश एव शक्तिः कल्प्यते. अनन्यलभ्यस्यैव शक्यत्वात् व्यक्त्यंशस्य नान्तरीयकतयापि लाभसम्भवात् . अतो नाक्षेपाल्लक्षणया वा व्यक्तिप्रतीतिरभ्युपेयेति प्राभाकरोक्तरीत्या वा व्यक्तावुपस्थिति-सम्भवेन न व्यक्तौ शक्तिः कल्पनीयेत्येतदाशङ्क्य परिहरति, यद्यपि शरीरवाचिशब्दा

दिशब्दवद्देवमनुष्यादिशब्दा आत्मपर्यन्ताः । एवं देव-मनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीर-

* श्रुतप्रकाशिका *

बन्धकत्वात् । अन्यथा जात्यादिशब्दानामपि सम्बन्धानुपपत्त्यविशेषेण क्वचिद्व्यक्तिपर्यन्तप्रयोगप्रसङ्गः । आकृतिरेव शब्दशक्तिविषयः, व्यक्तिबोधस्त्वर्थसामर्थ्यात्, प्रत्यभिज्ञायां संस्कारसचिवेन्द्रियवदर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टबोधसामग्रीत्यपि न युक्तम्, जात्यादिशब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव । न हि सत्यां सामग्र्यां कार्यानुदय उपपद्यते । ननु गवादिशब्दाः जातेर्व्यक्तिपरतन्त्रतारूपम-

* भावप्रकाशिका *

इत्यादिना प्रघट्टकेन । ( अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वादिति ) नीलत्वादिप्रवृत्तिनिमित्ताश्रयस्य तच्छब्दलक्ष्यत्वासम्भवादित्यर्थः । ननु जातिवाचित्वमते गवादिशब्दानां गोत्वं न प्रवृत्तिनिमित्तम्, अपि तु तदेव शब्दार्थः । तथाचाधेयवाचिना शब्देनाधारलक्षणायां कानुपपत्तिरिति चेन्न, स्वार्थाघनेन रूपेण तीरत्वादिना उपस्थित एव तीरादौ गङ्गादिपदस्य लक्षणा दृष्टा, नचात्र व्यक्तिस्स्वार्थभूतजातिं विना रूपान्तरेणोपस्थिता । किञ्च 'गां पश्य गौस्तिष्ठति' इत्यादौ सत्यपि जातेरन्वययोग्यत्वे तदनुपपत्त्यनुसन्धानं विनैव जातिविशिष्टव्यक्तिप्रतीतेर्न तत्र लक्षणा, प्रत्युत गौर्नित्या गौर्जातिरित्यादावन्वयानुपपत्त्यैव जातिधीरिति जातावेव लक्षणा युक्ता । किञ्च शक्तिग्राहकानयनादिव्यवहारयोग्यव्यक्तिपरित्यागेन तदयोग्यजातिशब्दार्थस्वीकारोऽप्रसङ्गतः । तथा 'गौरनित्या गौश्शुक्ला गौस्सास्नादिमती गां बधान गौर्गच्छति गामानय' इत्यादिप्रयोगप्रतीतिप्राचुर्यविषयव्यक्तिशक्तिपरित्यागश्चासङ्गतः, गवादिशब्दानां जातिमात्रविषयप्रयोगे स्वतलादिवैयर्थ्यञ्च स्यादित्यादिवक्ष्यमाणदूषणे तात्पर्यात् । ( जात्यादिशब्दानामपि सम्बन्धानुपपत्त्यविशेषणेनेति ) नच जातिरित्यादिशब्दानामपि सम्बन्धानुपपत्तिप्रतिसन्धानदशायां लक्षणेष्टैवेति वाच्यम्, जात्यादिशब्देषु लक्षणायाः क्वाप्यदृष्टचरत्वादिति भावः । नन्विदं सिद्धान्तेपि समानम् । जात्यादिशब्दानामप्यपृथक्सिद्धविशेषणवाचिशब्दत्वाद्व्यक्तिवाचित्वं किं न स्यात्? निष्कर्षकशब्दत्वादिना वैलक्षण्यं तथापि

तथा तत्प्रकारत्वाज्जीवात्मवाचिनश्शब्दाः परमात्म-

* श्रुतप्रकाशिका *

भिदधति, अतस्तैर्व्यक्तिपर्यन्तबोधः। जात्यादिशब्दास्तु जातिस्वरूपमात्रम्, अतस्तैर्व्यक्तिपर्यन्तबोधाभावः। नैवम्, जात्यादिशब्दैर्द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः। ननु न जातेर्द्रव्यप्रकारतैकस्वभावत्वरूपपारतन्त्र्याबोधनं विवक्षितम्, किन्तु विशेषणान्तरान्वयकारकभावानर्हत्वरूपपारतन्त्र्याबोधनमिति। उच्यते, गवादिशब्दैस्तादृक्त्वबोधनमेकपदेन विशेष्याभिधाननिबन्धनम्, न हि कुण्डलीत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः कुण्डलेन भूषित इतिवत्कारकभावश्च भवति, एवं च सति पारतन्त्र्याबोधनाद् व्यक्त्यबोधनेऽभ्युपगम्यमाने अन्योन्याश्रयः स्यात् पारतन्त्र्याबोधनाद्विशेष्याबोधनम्, तदबोधनात्पारतन्त्र्याबोधनमिति। किञ्च गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्यबोधनासामर्थ्यप्रसङ्गः, धर्मिबोधनासामर्थ्यव्यापकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्यबोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्तयेत्? द्रव्यांशे शक्तिर्माभूत्, जातेर्व्यक्तिपारतन्त्र्यमपि गवादिशब्दा बोधयेयुरिति न वाच्यम्, द्रव्यांशे शक्तिविरहितैर्जात्यादिशब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात्, अतश्शब्दशक्तिनिबन्धनैव गवादिशब्दैर्द्रव्यप्रतीतिः। किञ्च यदि जातिमात्रमेव मुख्यार्थः तर्ह्यमुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जातिमात्रे गवादिश-

* भावप्रकाशिका *

सुवचम्. तथापि पूर्वोक्तदूषणे तात्पर्यात् प्राभाकरमतं दूषयति (आकृतिरेव शब्दशक्तिविषय इति) (पारतन्त्र्याबोधनं विवक्षितमिति) ननु जातिशब्देन जातेर्द्रव्यप्रकारतैकस्वभावत्वलक्षणपारतन्त्र्यबोधनस्य विवक्षितत्वे व्यक्त्यभिधानस्य सिद्धत्वाद्विशेषणान्तरान्वयानर्हत्वलक्षणस्य कारकभावानर्हत्वलक्षणस्य वा पारतन्त्र्यस्याभिधानं व्यर्थं व्यक्तिप्रतीत्यप्रतीत्योर्द्रव्यप्रकारतैकस्वभावत्वलक्षणपारतन्त्र्याभिधानानभिधानयोरेव प्रयोजकत्वादितिचेत्; सत्यम्—कस्यचिन्मन्दस्येदृशशङ्कासम्भवादिति द्रष्टव्यम्. (किन्तु विशेषणान्तरान्वयेति) ननु जातिं पश्य व्यापिकामित्यत्र जातिशब्दोपात्तायां जातेर्व्यापकत्वरूपविशेषणान्तरान्वयवत् दृशिक्रियायां कर्मकारकत्वेन चान्वयवत् गौश्शुक्ला तिष्ठतीत्यादौ गोशब्दप्रतिपन्नाया जातेर्विशे-

* श्रुतप्रकाशिका *

ब्दानां प्रचुरप्रयोगप्रसङ्गः, मुख्यार्थतद्गतगुणसम्बन्धिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगदर्शनात् । गङ्गाग्निसिंहादिशब्दानां कूलमाणवकादिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः, न तु व्यक्तिनिष्ठा गौः व्यक्तिनिष्ठो महिष इति प्रयोगः, जातिरेव मुख्यार्थश्चेद्गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात्, न हि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताः प्रयुज्यन्ते, प्रचुरप्रयोगाभावो भावप्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगादिति चेन्न, प्रचुरप्रयोगानुगतिर्हि लक्षणाया निरूढिः, ततश्च प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति परिहारो न घटते, प्रसङ्गस्य प्रसञ्जनीयाभावपरिहार्यत्वाभावात् । न ह्यग्निमत्त्वप्रसङ्गोऽन्यभावात्परिह्रियते, भावप्रत्ययानपेक्षत्वप्रसङ्गश्च दुष्परिहरः, शुक्लादिशब्दानां गुणिबोधने निरूढलक्षणाभ्युपगमेऽपि पटस्य शुक्ल इति गुणमात्रपरप्रयोगे भावप्रत्ययानपेक्षत्वदर्शनात् । शुक्लादिशब्दानां हि लुप्तमतुबर्थलक्षणा परैरभ्युपगता, यथा समासेषु प्रातिपदिकेनाप्रयुक्तविभक्त्यर्थ-

* भावप्रकाशिका *

षणान्तरान्वयो वा क्रियायां कारकत्वेनान्वयो वा यद्यपि न दृष्टचरः । तथापि तादृशपारतन्त्र्यं न शब्देनाभिधीयते, विशेषणान्तरान्वयानर्हत्वस्य वा कारकभावानर्हत्वस्य वा गवादिशब्देनाप्रतीतेः । नहि गौरित्युक्ते गोत्वं कारकभावानर्हमित्यपिशब्देन प्रतीयत इति चेत्. सत्यम्; कारकभावाद्यनर्हत्वप्रयोजकः पारतन्त्र्यविशेषो गवादिशब्दात्प्रतीयत इत्यत्र तात्पर्यात् ( मुख्यार्थतद्गतगुणसम्बन्धीति ) मुख्यार्थतद्गतगुणेति द्वन्द्वः, मुख्यार्थसम्बन्धी लक्ष्यः, तद्गतगुणसम्बन्धी गौणः । ( प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति परिहारो न घटते इति ) नच गवादिशब्दानां व्यक्तौ निरूढप्रचुरप्रयोगात्. जातौ च प्रचुरप्रयोगाभाव इत्यस्य व्यक्तौ प्रचुरप्रयोगाज्जातौ प्रचुरप्रयोगाभाव इत्यर्थः । ननु प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति । ततश्चायमनुक्तोपालम्भ इति वाच्यम्; अव्यक्तौ प्रचुरप्रयोगादित्यस्य जातौ प्रचुरप्रयोगाभावादित्यर्थपर्यवसितत्वेनानुक्तोपलम्भाभावात् । ( भावप्रत्ययानपेक्षत्वदर्शनादिति ) भावप्रत्ययानपेक्षत्वस्यापि दर्शनादित्यर्थः । ततश्च पटस्य शौक्ल्यमित्यादौ क्वचिद्भावप्रत्ययसापेक्षत्वदर्शनं न दोषायेति ज्ञेयम् ।

* श्रुतप्रकाशिका *

लक्षणेष्यते, लक्षणाया निरूढिर्नाम सर्वप्रयोगानुगतिरिति चेन्न. गोशब्दे तदभावप्रसङ्गात्, अनुवृत्तो गोव्यवहार इति. गोत्वमात्रेऽपि हि गोशब्दः क्वापि प्रयुज्यते। किञ्च सर्वप्रयोगानुगता वृत्तिर्लक्षणैव न स्यात्, आकृतिविषयवृत्तिवत्। ननु अनन्यथासिद्धा वृत्तिर्मुख्या. सत्यम्, अनन्यथासिद्धिश्च दर्शिता. अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणासामर्थ्याभावस्योपपादितत्वात्। ननु त्वत्पक्षे धर्मिवाचिपदानां भावप्रधाननिर्देशेषु मुख्यैकदेशे लक्षणाऽभिमता; अस्माकं तु गवादिशब्दानां व्यक्तौ लक्षणा, तत्र शक्तेर्विशेषणविशेष्यगोचरत्वकल्पने भवतां गौरवं स्यात्। स्यादेव, स तु नात्र दोषः, लाघवेन निर्वाहायोग्यस्थले गौरवस्य दोषत्वाभावात्. लक्षणाश्रयणानुपपत्तिर्हि दर्शिता। किञ्च गामानयेत्यादिषु व्यक्तिप्रतीतिरर्थसामर्थ्याद्भवति चेत्तर्हि विवक्षिताया जातेः प्रतिसम्बन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेत, ततश्च पुत्रः पितेतिवत् खण्डो गौरयमिति सामानाधिकरण्यं न स्यात्. पुत्रमानयेत्यत्र हि ममेत्यनुक्तेऽप्यर्थवशाद्विवक्षितपुत्रप्रतिसम्बन्धिपितृत्वेन प्रतीयमानो देवदत्तः पुत्रगुणतया प्रतीयते, न तु

* भावप्रकाशिका *

जातिस्थले तु न क्वचिद्भावप्रत्ययानपेक्षत्वं दृश्यत इति। खण्डस्य गौः मुण्डस्य गौरित्यादिप्रयोगस्य जातिविषयस्य क्वाप्यदर्शनादिति भावः। निरूढलक्षणाभ्युपगममुपदिशति (शुक्लादिशब्दानां हीत्यादिना) (निरूढिर्नाम सर्वप्रयोगानुगतिरिति चेदिति) सर्वप्रयोगानुगता लक्षणा निरूढलक्षणेत्युच्यते, नतु प्रचुरप्रयोगानुगतिरितिचेदित्यर्थः। (अनुवृत्तो गोव्यवहार इतीति) इदन्त्वापाततः, भावप्रत्ययानपेक्षप्रयोगस्यात्रैव दृष्टत्वे भावप्रत्ययानपेक्षत्वप्रसङ्गश्च दुष्परिहर इतिपूर्वग्रन्थविरोधापत्तेरिति द्रष्टव्यम्। (भवतां गौरवं स्यादिति) जातिव्यक्त्योश्शब्दार्थत्ववादिनामित्यर्थः। (प्रतिसम्बन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेतेति) जातिर्व्यक्त्याश्रया भवितुमर्हति, जातित्वादिति. आक्षिप्ता व्यक्तिरुपसर्जनतया भायात्. पर्वतो वह्निमानित्यत्र वह्निवत्। (पुत्रः पितेतिवदिति) पुत्रशब्दाक्षिप्तपितृवाचिना पितृशब्देन पुत्रशब्दस्य सामानाधिकरण्याभाववत् जातिव्यक्तिवाचिनोर्गौः खण्ड इत्याक्षेप्याक्षेपकवाचिशब्दयोस्सामानाधिकरण्यं न सम्भवतीत्यर्थः। (विवक्षि-

* श्रुतप्रकाशिका *

विशेष्यत्वेन प्रधानतया, तदवच्छेदार्थत्वात्तस्य । गवादिशब्देषु तु द्रव्यमेव प्रधानतया प्रतीयते, गङ्गायां घोष इत्यत्र प्रवाहस्याविवक्षितत्वात्कूलस्य तदुपसर्जनतया प्रतीत्यभावः । छत्रिणो गच्छन्तीत्यत्र स्वच्छत्रिणां छत्रिप्रतिसम्बन्धितया प्रतीयमानत्वाभावात् छत्रिगुणभावेन प्रतीत्यभावः, अतो विवक्षितार्थप्रतिसम्बन्धितया प्रतीयमानत्वेऽपि प्रधानतया प्रतीयमानं द्रव्यं शब्दशक्त्यैव प्रतीयते, अयं पुत्रीत्यत्र पुत्रिशब्देन प्रतीयमानपुत्रिवत् । किञ्च विशेष्यांशे शक्तिमता रूपिशब्देन रूपप्रतिपत्तिदर्शनात् तद्रहितेन रूपशब्देन विशेष्यप्रतिपत्तिदर्शनाभावाच्च शब्दविशेषोपश्लिष्टविशेष्यप्रतीतिरन्वयव्यतिरेकाभ्यां शब्दशक्तिनिबन्धनेत्यध्यवसीयते, अतो गवादिशब्दानां विशेष्यबोधकत्वं शक्तिनिबन्धनम् । ननु व्यक्तीनामानन्त्याच्चाभिस्सम्बन्धग्रहोऽनुपपन्नः, एकस्यां व्यक्तौ शब्दवाच्यता व्युत्पत्तिश्चेत् व्यक्त्यन्तरस्य गोशब्दवाच्यत्वं न स्यात् । नैवम्; यत्र जातिस्तत्रायं शब्द इत्येवंरूपत्वाद्व्युत्पत्तेः, अतो वाच्यतानिमित्तस्यैकत्वात्प्रत्येकव्युत्पत्त्यनपेक्षा युगपत्सर्वव्यक्तीनां वाच्यताव्युत्पत्तिरेकैकव्यक्तौ वाच्यतानिमित्तस्य पुष्कलत्वादेकैक-

* भावप्रकाशिका *

तेति ) तात्पर्यविषयेत्यर्थः । विशेष्यत्वेनेत्येतद्व्याचष्टे ( प्रधानतयेति ) ( तदवच्छेदार्थत्वात्तस्येति ) पुत्रव्यावृत्त्यर्थत्वात्पितुरित्यर्थः । यद्वा प्रधानतया तदवच्छेदार्थत्वादित्यन्वयः । प्रधानत्वेन तस्यावच्छेदस्सम्बन्धः, तदर्थत्वात् प्रधानीकरणार्थत्वादितियावत् । विवक्षितार्थप्रतिसम्बन्धितयेत्यत्र विवक्षितपदव्यावर्त्यमाह ( गङ्गायां घोष इत्यत्रेति ) वस्तुतो गङ्गासम्बन्ध्येव तीरं तीरत्वेनैव भासते, नतु गङ्गासम्बन्धित्वेन, तथात्वे शक्त्या प्रवाहस्य लक्षणया तीरस्य च प्रतीतौ वृत्तिद्वयविरोधप्रसङ्गात्, अतः प्रवाहस्याविवक्षितत्वम्, जातेस्तु शाब्दप्रतीतौ विषयत्वमस्तीति भावः । इदमुपलक्षणम्, कूलस्य लक्षणया वृत्त्या उपस्थापितत्वात् प्राधान्येन भानं भवति . आक्षिप्ताया व्यक्तेशब्दवृत्त्यानुपस्थितायाः प्राधान्येन भानं न सम्भवतीत्यत्र तात्पर्यात् । अयमिह प्रयोगक्रमोऽभिप्रेतः,—यदि गोव्यक्तिः पदतात्पर्यविषयसम्बन्धितया भासमानत्वे सति गोपदवाच्या न भवेत् तर्हि गोपदजन्यप्रतीतिविशेष्या न भवेदिति । ( शब्दविशेषोपश्लिष्टेति )

पर्य्यन्ताः, अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः

* श्रुतप्रकाशिका *

व्यक्तेर्वाच्यत्वसिद्धिश्च घटते । कथमनन्तानां व्यक्तीनां बुद्धावारोपणं शक्यमिति चेत्, व्यक्तीनां शब्दवाच्यत्वं प्रतिषेधता त्वया व्यक्तयः प्रतिपन्नाः, न वा ? न चेत्तासु शब्दवाच्यत्वनिषेधोऽनुपपन्नः । "लब्धरूपे कचित्किञ्चित्तादृगेव निषिध्यते" । प्रतिपन्नाश्चेत् किं कतिपयव्यक्तयः प्रतिपन्नाः ? उत सर्वाः ? प्रथमे सर्वव्यक्तीनां शब्दवाच्यत्वनिषेधायोगः । द्वितीये त्वमिव सर्वे सर्वा व्यक्तीः प्रतिपद्येरन् व्युत्पद्येरंश्च , अतो गवादिशब्दाः स्वशक्त्यैव व्यक्तिबोधकाः, तद्वच्छरीरवाचिशब्दानामपि स्वशक्त्यैव शरीरिपर्यन्तबोधकत्वं सिद्धम् । एवं शरीरवाचिशब्दाश्शरीरिपर्यन्ताः स्युः , ततः किं परमात्मचिदचिद्वाचिशब्दानां सामानाधिकरण्यस्येत्यत्राह ( एवमिति ) प्रयोजकाकारं वदन्निगमयति ( अत इति ) एवं तत्त्वमसीतिवाक्येन चिदचिच्छरीरकस्य कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वं प्रतिपादितम् । न च प्रकारैक्यं कार्यकारणैक्यं चेत्यर्थभेदाद्वाक्यभेदश्शङ्कनीयः, प्रकारित्वस्य पदावगम्यत्वात् । तत्पदं हि प्रकृतवाचकम्, प्रकृतं हि सार्वज्ञ्यादिगुणकं जगच्छरीरकं कारणं "तदैक्षत 'एकमेव' 'बहु स्याम्' 'तत्तेजोऽसृजत' 'अनुप्रविश्य नामरूपे व्याकरवाणि' 'सदायतनाः सत्प्रतिष्ठाः" इत्यादिभिरीक्षितृत्वैकत्वानुप्रवेशपूर्वकनामरूपव्याकरणधारणश्रवणात् , अतस्तत्पदं सार्वज्ञ्यादिगुणकजगच्छरीरकब्रह्मपरम् । त्वम्पदं च कार्याचित्संसृष्टजीवविशेषविशिष्टब्रह्मपरम् , अत उभयावस्थस्य ब्रह्मणः चिदचित्प्रकारवत्त्वं पदावगतम् । पदद्वयस्यसमानविभक्त्या कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वमवगम्यते ; अतो न वाक्यभेदः । अतः कार्यकारणावस्थप्रकार्यैकत्वं तत्त्वमसीतिवाक्येन प्रतिपादितं परमात्मानम् प्रति जगतश्श-

* भावप्रकाशिका *

शब्दादुपस्थितस्य शब्दादुपस्थितं प्रत्येव विशेषणत्वम्. नाक्षिप्तं प्रतीत्यर्थः । ( प्रकार्यैक्यं कार्यकारणैक्यञ्चेति ) उभयोरपि तत्त्वम्पदार्थयोश्चिदचित्प्रकारत्वं तयोरैक्यञ्चेत्यर्थः । ( वाक्यभेदश्शङ्कनीय इति ) यद्यपि तत्त्वमसीत्यस्यानुवादरूपत्वसमर्थनान्न वाक्यभेदप्रसङ्गः, तथाप्यभ्युपेत्योक्तमिति द्रष्टव्यम् ॥

पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसङ्ग्रहे समर्थितः ॥

—( मतान्तरेषु सामानाधिकरण्यानुपपत्तिः )—

इदमेव शरीरात्मभावलक्षणं तादात्म्यम् ।"आत्मेति-

* श्रुतप्रकाशिका *

रीरत्वं कथम्? अस्मिन् सिद्धे शरीरित्वप्रयुक्ता दोषाः स्युः, उक्तस्यानुग्राहकस्य न्यायस्य किमनुग्राह्यं प्रमाणम्? कथं व्युत्पत्तिविरोधपरिहार इति शङ्कायामाह (अयमर्थ इति) ॥ .... .... .... .... .... .... ....

परेण स्वरूपैक्यपरत्वेनोदाहृतं सूत्रं वाक्यकारवचनञ्च व्याचष्टे (इदमेवेत्यादिना) अत्रायमर्थस्सङ्कलय्यानुसन्धेयः, मृषावादिभिस्सामानाधिकरण्यनिर्वाहाः बहुधा कृताः, तत्र सामानाधिकरण्यस्यातद्व्यावृत्तिमुखेन वस्तुमात्रपरत्वं सत्यादिवाक्यनिरूपणेन निरस्तम्, व्यावृत्तीनामुपलक्षणतापक्षे पदान्तरवैयर्थ्यात् विशेषणत्वाभ्युपगमे मुख्ये सम्भवति लाक्षणिकार्थस्वीकारायोगाच्च । तत्त्वमसीति वाक्ये चान्वयमुखेन स्वरूपमात्रपरत्वे तत्पदस्य प्रकृतपरामर्शित्वभङ्गः, पदद्वयलक्षणा, प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यलक्षणहानिः, उपलक्षणरूपप्रवृत्तिनिमित्ताश्रयणे पदान्तरवैयर्थ्यं 'तदैक्षत' इत्याद्युपक्रमविरोधः, उपक्रमोपक्रमविरोधः, श्रुत्यन्तरविरोधस्तिरोधानाद्युपपत्तिरूपतर्कविरोधश्चेति दूषणान्युक्तानि । बाधार्थत्वे च स्वरूपलक्षणा नञर्थलक्षणा चेति पदद्वयलक्षणादयो दोषाः, प्रत्यक्षेण बाधादर्शनाद्बाधपरत्वानुपपत्तिः, पदान्तरेण विरोधिधर्मानुपस्थापनेन विरोधाभावाद्बाधकल्पनानुपपत्तिरित्यधिकं दूषणद्वयञ्चोक्तम् । तथा 'सर्वं खल्विदं ब्रह्म' इत्यत्र सामानाधिकरण्यस्य चातदाकारारोपणनिबन्धनत्वमयुक्तम्, सर्वत्वब्रह्मत्वयोरेकाश्रयत्वाभावेन सामानाधिकरण्यलक्षणाभावात्परमार्थत ऐक्याधिकरण्ये सम्भवत्यपरमार्थैक्यविषयत्वाश्रयणानुपपत्तेश्च । ऐक्यापारमार्थ्ये हि सामानाधिकरण्ये वाक्यप्रामाण्यं

* भावप्रकाशिका *

(विशेषणत्वाभ्युपगमे मुख्य इति) पदान्तरवैयर्थ्यपरिहाराय सत्यादिपदलक्षितानां व्यावृत्तीनां विशेषणत्वाभ्युपगमे मुख्यानां सत्यत्वादीनामेव विशेषणत्वमस्तु,

तूपगच्छन्ति ग्राहयन्ति च" इति वक्ष्यति; [2]"आत्मेत्येव तु गृह्णीयात्" इति च वाक्यकारः ॥

* श्रुतप्रकाशिका *

हीयते, प्रतिपिपादयिषितस्यैक्यस्य मिथ्यात्वात् । एवमचिद्ब्रह्मणोस्सामानाधिकरण्यं सत्यानृतयोरैक्याभावादयुक्तम् । अन्तःकरणचिन्मात्रयोरैक्याभावात् 'ब्रह्माहमसी'ति सामानाधिकरण्यं न घटते, अहंशब्दस्य अन्तःकरणोपहितज्ञप्तिवाचित्वात्तदुपपत्तिरिति चेन्न; अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वाभावात्. यथा अहमिच्छामि द्वेष्मीतीच्छादेरहमर्थविशेषणतया व्यवहारात् अहंशब्दस्य नान्तःकरणोपहितेच्छादिवाचित्वम्, एवमहं जानामीति प्रयोगात्तदुपहितज्ञप्तिवाचित्वमप्यहंशब्दस्यानुपपन्नम् । नहि ज्ञप्तिरेव ज्ञप्त्या विशेष्यते. ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्य कस्यचित् ज्ञानस्य शशविषाणायमानस्य लौकिकबुद्ध्यगोचरत्वान्न तद्विवक्षया ऽहंशब्दप्रयोगोपपत्तिः, अतो ऽहं ब्रह्मास्मीति सामानाधिकरण्यमयुक्तम् । अन्तःकरणद्वयैक्याभावात् अहमादिशब्दानां पूर्वोक्तन्यायेन तदुपहितज्ञप्तिवाचित्वाभावाच्च । 'अहं मनुरभव'मित्यादिसामानाधिकरण्यमनुपपन्नम्. प्राणाद्यचेतनजीवयोरैक्याभावात् "प्राणोस्मि प्रज्ञात्मा" "अहमेवेदं सर्वम्" 'मत्तः सर्वम्" इत्यादि चायुक्तम् । "अहं हरिः सर्वमिदं जनार्दनः" इति जीवेश्वरवाचिनोरचिदीश्वरवाचिनोश्च शब्दयोस्सामानाधिकरण्यमयुक्तम्, जीवेश्वरयोः पृथिव्यादीनां च चिन्मात्रे कल्पितत्वात् । नहि रज्जुकल्पितसर्पभूदलनाम्बुधारावाचिनां शब्दानां मिथस्सामानाधिकरण्यम्, अहं हरिः सर्वमित्यादिशब्दनाम्

* भावप्रकाशिका *

अविशेषादित्यर्थः । (यथा अहमिच्छामीति) यद्यहंशब्दस्यान्तःकरणोपहितेच्छादिवाचित्वाभावे अहमिच्छामीत्यादिप्रत्ययानुपपत्तिर्न परैः प्रमाणत्वेनोपन्यस्ता, अहंशब्दस्यान्तःकरणोपहितघटादिपरत्वाभावात्, तदुपहितेच्छावाचित्वाभावस्यापि प्रमाणाभावेनैव सिद्धेः । अथापि अहमिच्छामीतीच्छाया विशेषणतानुपपत्तिरपि प्रमाणीकर्तुं शक्येत्यभिप्रेत्यैवं व्यवहृतमिति द्रष्टव्यम् । (नहि ज्ञप्तिरेव ज्ञप्त्या विशेष्यत इति) अहमर्थस्यैव ज्ञप्तित्वे अहं जानामीति प्रतिपन्नं ज्ञप्त्या-

1. शारीर. ४-अ. १-पा. ३-सू. | २. श्रुतिः ॥

* श्रुतप्रकाशिका *

अध्यस्तवाचिनामधिष्ठानभूतब्रह्मपरत्वादेकार्थत्वमिति चेन्न ; आकृतिवाचिनां व्यक्तिपर्यन्तत्तयेव अध्यस्तवाचिनां शब्दानामधिष्ठानवाचित्वेन व्युत्पत्त्यभावात् । न हि रजतशब्दस्य शुक्तित्वाश्रयद्रव्यवाचित्वेन व्युत्पत्तिः, तदभावश्च शुक्तिशकलादौ रजतादिशब्दप्रवृत्तिनिमित्तभूतरजतत्वादेरभावात् । ननु, अध्यस्तवाचिनः शब्दाः अधिष्ठाने मुख्यवृत्ताः, इदं रजतमिति वृद्धव्यवहारमूलव्युत्पत्तिसद्भावादिति चेत् . उच्यते ; यदर्थविवक्षया शब्दप्रयोगो नान्यथासिद्धः , तस्य तद्वाचित्वनिश्चयः । तत्रेदं वक्तव्यम् . अध्यस्तवाचिनश्शब्दस्याधिष्ठानपर्यन्तत्वे किं भ्रान्तप्रयोगो मूलम् ? उत प्रबुद्धप्रयोगः ? न प्रथमः, रजतपुरोवर्तिनोरनध्यस्तत्वानधिष्ठानत्वबुद्ध्यैव तत्र रजतशब्दप्रयोग इति तस्याध्यस्तवाचिनोऽधिष्ठानपर्यन्तत्वासाधकत्वात् । नह्यदेवदत्तत्वाज्ञानाद्देवदत्तशब्दप्रयोगो देवदत्तशब्दस्य यज्ञदत्तवाचित्वे मूलं भवति । द्वितीये च रज्जुस्सर्प इति प्रयोगः सर्पशब्दस्य प्रागनारोपितबुद्धिमूलप्रयोगानुवादरूपत्वादारोपितविषयशक्तिकल्पने मूलं न स्यात् । नन्वपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वमिष्टम्, अध्यस्तं चाधिष्ठानस्यापृथग्विशेषणम्, तस्मिन् सत्यवभासात् तेन विना तदनवभासाच्चेति चेन्न, अन्यत्र सतो विशेषणस्य पुरोऽवस्थितं प्रत्यपृथक्सिद्ध्यभावात् ; अख्यातिपक्षे चाध्यस्तत्वाधिष्ठानत्वयोरेवाभावात् मृषावादिपक्षे च मृद्विवर्तस्य घटादेः कनकं प्रतीवाविद्याख्यदोषविवर्तस्य रजतस्य पुरोऽवस्थितं प्रत्यपृथग्विशेषणत्वायोगाच्चेति, अतो जीवेश्वरसामानाधिकरण्यमयुक्तम् । किञ्च तत्त्वमस्यादिवाक्येषु ब्रह्मवाचकपदसमभिव्याहृतं त्वमादिजीववाचिपदं किं मुख्यार्थाप्रहाणेन समानाधिकरणम् ? उत

* भावप्रकाशिका *

अयत्त्वमहमर्थस्य न स्यादिति भावः । ( यदर्थविवक्षयेति ) भ्रान्तिदशायामधिष्ठानत्वबुद्धेरेवाभावात् । तदर्थविवक्षया न प्रयोगः, प्रबोधदशायामधिष्ठानत्वधीसम्भवेपि तदर्थविवक्षया न प्रयोग इति भावः । (यज्ञदत्तवाचित्वे मूलं भवतीति ) नचैवं वदतस्तदपीष्टमेवेति वाच्यम् . तथा सति वाच्यावाच्यव्यवस्थाभङ्गप्रसङ्गादिति भावः । ( सर्पशब्दस्य प्रागनारोपितेति ) प्रबोधदशाभाविनो रज्जुस्सर्प इति प्रयोगस्यायमर्थः,—एतावन्तं कालं सर्पपारमार्थ्यबुध्या रज्जुस्सर्पपदप्रयोगविषयोऽभूदिति । (आरोपितविष-

* श्रुतप्रकाशिका *

तत्प्रहाणेन ? प्रथमे वस्तुनस्सविशेषत्वं दोषार्हतदनर्हयोरैक्यानुपपत्तिश्च । द्वितीये जीवब्रह्मणोरैक्यं न सिध्येत् , जीवभावस्य मिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च न सिध्येत् , प्रकृत्यंशविवक्षितार्थैकत्वपरायास्समानविभक्तेस्तदविवक्षितार्थैकत्वप्रतिपादनासामर्थ्यात् तदविवक्षितविशेषणमिथ्यात्वप्रतिपादनासामर्थ्याच्च । न हि महृष्टो जनपदः अग्निर्माणवक इत्यत्र जनपदमहर्षयतोरग्निमाणवकयोश्चैकत्वं जनपदत्वाग्नित्वयोर्मिथ्यात्वेन तदधिष्ठानमात्रपारमार्थ्यं च सिध्यति । जनपदशब्देन वाच्यबहिर्भूतो लक्ष्यते , त्वंशब्देन तु वाच्यैकदेशो लक्ष्यत इति, तस्य तत्त्वविधानेऽधिष्ठानैक्यं विरोधाज्जीवभावमिथ्यात्वं च सिध्यतीति चेन्न , त्वमादिशब्दानां ज्ञातृपदसमानाधिकरणानां ज्ञप्तिवैयधिकरण्येन ज्ञप्तिवाचित्वासिद्ध्या वाच्यैकदेशलक्षणाया दुर्वचत्वात् । तत्सिद्धावपि नाधिष्ठानैक्यमितराकारमिथ्यात्वञ्च सिध्येत् । नहि दूरस्थस्य पर्वतस्य अग्रे ज्वलन्तमग्निं दृष्ट्वा पर्वतो ज्वलित इत्युक्ते पर्वताग्न्योरेकत्वं सान्वादिप्रदेशान्तरमिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च सिध्यति , अतो विवक्षितैकत्वजीवभावमिथ्यात्वासिद्धिः, अतस्सर्वं सामानाधिकरण्यं मृषावादिनां विरुद्धम् । औपाधिकभेदाभेदपक्षेऽपि मुख्यया वृत्त्या

* भावप्रकाशिका *

येति ) आरोपितविषयोऽधिष्ठानमित्यर्थः । ( द्वितीये जीवब्रह्मणोरैक्यमिति ) त्वंशब्देन जीवभावाधिष्ठानस्वरूपमात्रस्य विवक्षितत्वेन जीवब्रह्मणोरविवक्षितत्वादिति भावः । ( तदविवक्षितविशेषणेति ) अविवक्षितविशेषणं जीवभावः, त्वंशब्दमुख्यार्थभूतजीवसम्बन्धिचिन्मात्रैक्यबोधनमात्रैक्यबोधनमात्रेण मुख्यार्थभूतजीवब्रह्मैक्यं मुख्यार्थभूतजीवसम्बन्धिकर्तृत्वादिबन्धमिथ्यात्वञ्च तद्धर्माधिष्ठानमात्रपारमार्थ्यञ्च सिध्यतीतिचेत्. जनपदलक्ष्यार्थभूतजनप्रहृष्टैक्यबोधेपि जनपदशब्दैक्यं मुख्यार्थभूतजनपदधर्मभूतजनपदत्वादिधर्ममिथ्यात्वतद्धर्माधिष्ठानमात्रपारमार्थ्यञ्च सिध्येदित्याह ( नहि प्रहृष्टो जनपद इति ) ( तस्य तत्त्वविधान इति ) तच्छब्दार्थत्वविधानइत्यर्थः । ( ज्ञप्तिवैयधिकरण्येनेति ) त्वं जानासीति त्वंशब्दज्ञाधात्वोर्वैयधिकरण्येनेत्यर्थः । वाच्यैकदेशलक्षणासत्त्वेपि मुख्यार्थयोरभेदासिद्धौ तन्मूलतया मुख्यार्थधर्माणां मिथ्यात्वासिद्धौ च दृष्टान्तमाह ( नहि दूरस्थस्येति ) पर्वतो-

* श्रुतप्रकाशिका *

सामानाधिकरण्यमनुपपन्नम् । तथा हि ; ईश्वर एव हि ब्रह्म तन्मते , जीवेश्वरयोरचिदीश्वरयोश्च क्लेशकर्माद्यर्हत्वतदनर्हत्वपरिणामित्वापरिणामित्वलक्षणविरुद्धस्वभावायोगात्तद्वाचिशब्दानां घटपटादिशब्दानामिव न सामानाधिकरण्यम् । भेदवदभेदस्यापि विद्यमानत्वात्तदुपपत्तिरिति चेत् न, सत्यपि केनाप्याकारेणैक्ये प्रवृत्तिनिमित्तभावाभावलक्षणे विशेष्यांशभेदे प्रतीयमाने समानविभक्तेरेकत्वप्रतिपादनासामर्थ्यात् , यतः प्रथमपदप्रतिपन्नविशेष्यात्पदान्तरविशेष्यस्यांशतोऽपि भेदासहमभिन्नत्वमेव सामानाधिकरण्यावबोध्यम् , तत एव हि खण्डमुण्डयोर्व्यक्तिजात्यात्मना घटशरावयोः कार्यकारणरूपेण गोपुच्छयोरेकदेशैकदेशिभावेन भिन्नत्ववदभिन्नत्वेऽभ्युपगम्यमानेऽपि खण्डो मुण्डो घटश्शरावो गौः पुच्छमिति सामानाधिकरण्याभावः । ननु चिदचितोर्ब्रह्मैकदेशत्वात् शुक्लः कृष्णो रक्तश्चायं पट इतिवत् "व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च" इत्यादिसामानाधिकरण्यमुपपद्यते । नैवम्; एकदेशैकदेशिभावे सत्यपि अङ्गुलिः पुरुष इति सामानाधिकरण्यादर्शनात् । ननु शुक्लादिशब्दतुल्यत्वं किं न स्यात् ? उच्यते ;

* भावप्रकाशिका *

ज्वलित इत्यत्र पर्वतशब्दो बाध्यान्तर्गतपर्वतप्रदेशलक्षकः , ज्वलितशब्दस्तदाधारलक्षकः, ततश्च लक्षितयोरैक्यं स्यात् , नतु मुख्यार्थयोः पर्वताग्न्योः, नवा पर्वतधर्माणां सानुवृक्षादीनाम् . ज्वलितशब्दमुख्यार्थवह्निधर्माणां वह्नित्वदग्धृत्वादीनामपारमार्थ्यं सिध्यति , एवमिह तत्त्वंपदमुख्यार्थयोरैक्यं न सिध्येत् , नवा तद्धर्माणाम्, किञ्चिज्ज्ञत्वसर्वज्ञत्वादीनां मिथ्यात्वं सिध्येदिति भावः । यद्यपि मुख्यार्थयोरैक्यं बोध्यत इति न परमतम्, तथापि जीवब्रह्मैक्यं बोध्यत इति तन्मतप्रसिद्धिमवलम्ब्योक्तमिति द्रष्टव्यम् । ईश्वर एव हि ब्रह्मेति । यादवमते चिदचिदीश्वरातिरिक्तमंशि ब्रह्मास्तीति । भास्करमते तु चिदचिदीश्वरातिरिक्तमंशिभूतं ब्रह्मद्रव्यं नास्तीति विवेको द्रष्टव्यः । ( केनाप्याकारेणैक्य इति ) घटपटयोर्द्रव्यत्वादिना ऐक्येपि घटपटपदप्रवृत्तिनिमित्तसद्भावासद्भावलक्षणभेदे प्रतीयमाने ऐक्यस्य विभक्तिबोध्यत्वादर्शनादित्यर्थः । ( कार्यकारणरूपेणेति ) घटशरावादिकार्यात्मना भेदः, कारणमृदात्मना तु अभेद इत्यर्थः । ( भिन्नत्ववदभिन्नत्व इति )

* श्रुतप्रकाशिका *

पटस्यांशभेदे शुक्लादिशब्दानां पटशब्दश्रवणात्प्राक् मिथस्सामानाधिकरण्याभावे च सत्यपि शौक्ल्यादीनामपृथक्सिद्धविशेषणतया शुक्लादिशब्दैर्विशेष्यपर्यन्तैस्संहृत्य चित्रशब्देनैवाभिहिताद्विशेष्यात्पटशब्दाभिहितविशेष्यस्यांशतोऽप्यनतिरेकात् सामानाधिकरण्यम्। हस्तादीनामेकदेशानां छेदनाद्यर्हाणामेकदेशिनं प्रत्यपृथक्सिद्धविशेषणत्वं नास्ति , छेदनादावपीन्द्रियाणामविनाशित्वात्तद्गोलकस्याप्रच्युतस्वरूपत्वाच ; एवञ्च सति छिन्नहस्तादिवन्मृतशरीरस्यापि अप्रच्युतस्वरूपोपलम्भादात्मानं प्रति तस्य नापृथक्सिद्धिः स्यादिति चेत् . न ; शरीराख्यसङ्घातशैथिल्यानन्तरमेव आत्मोत्क्रमणात्पश्चाच्छरीरबुद्धेर्दग्धपटे पटबुद्धिन्यायेन भ्रान्तिरूपत्वात् . हस्तादीनां तु छेदनदशायामशिथिलस्वांशानां पश्चाच्छैथिल्यमिति विशेषः, अतस्तद्वाचिशब्दानां हस्तादिमात्रवाचित्वाद्धस्ताद्यवयवसङ्घातात्मकस्यैकदेशिनो हस्तादिमात्रातिरेकादनतिरेकलक्षणमेकत्वं प्रमाणविरुद्धतया समानविभक्ति-

* भावप्रकाशिका *

भेदाभेदाभ्युपगमेपीत्यर्थः । ( पटस्यांशभेद इति ) प्रयुक्तानामितिशेषः । ( पटशब्दाभिहितविशेषस्यांशतोप्यनतिरेकादिति ) ननु ' व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च' इति व्यक्ताव्यक्तपुरुषकालादिशब्दैर्भोक्तृभोग्यनियन्त्रंशेषूपस्थितेषु ब्रह्मशब्दस्य तदनतिरिक्तार्थवृत्तित्वसम्भवात् सामानाधिकरण्यं सम्भवतीति चेन्न, 'व्यक्तं विष्णुस्तथाऽव्यक्त'मिति प्रत्येकं प्रत्येकं तथा विष्णुत्वोपदेशात् । ननु छिद्रेष्वाकाशत्ववद्भूशैलादिषु पृथिवीत्ववद्ब्रह्मत्वस्यापि प्रत्येकं पर्याप्तत्वात् 'ज्योतींषि विष्णुः''व्यक्तं विष्णु'रित्यादौ सामानाधिकरण्यमुपपद्यत इति नानुपपत्तिरितिचेन्न, ब्रह्मत्वस्य सामानाधिकरण्यसम्भवेपि व्यक्तं विष्णुरित्यादौ विष्णुशब्दनिर्दिष्टत्वस्येश्वरस्य चिदचिदंशयोरभावेन व्यक्तं विष्णुस्तथाऽव्यक्तमिति विष्णुसामानाधिकरण्यासम्भवात् घटो मृत् शरावो मृदितिनिर्देशसम्भवेपि घटश्शरावा इति निर्देशासम्भवादिति दूषणे तात्पर्यम् । किं हस्तादीतिशब्देन हस्तपादादीन्द्रियं विवक्ष्यते ? उत तदधिष्ठानगोलकम् ? इति विकल्प्याद्यं दूषयति ( छेदनादावपीति ) इदमुपलक्षणम्, शरीरनाशेपि आकल्पस्थायिनामिन्द्रियाणामपि नाशान्नापृथक्सिद्धविशेषणत्वमिति द्रष्टव्यम् । द्वितीयं दूषयति ( तद्गोलकस्येति ) (स्वाभाविकभेदा-

* श्रुतप्रकाशिका *

र्न प्रतिपादयितुं शक्नोति । ननु हस्तत्वादयो धर्माश्शौक्ल्यादिवदपृथक्सिद्धाः घटस्येव शरीरादेरेकदेशे वर्तन्ते ; अतः शुक्लः कृष्णः पट इतिवद्धस्तः पादो मनुष्य इति युक्तं वक्तुम्, युक्त्यनभिज्ञत्वाल्लोको न प्रयुङ्क्ते । उच्यते; युक्त्यनभिज्ञो विज्ञोपि लोकश्शुक्लादिशब्दान् विशेष्यपर्यन्तान् प्रयुङ्क्ते, न तु हस्तादिशब्दानेकदेशिपर्यन्तान्, अतोऽभिज्ञानभिज्ञप्रयोगानुगुणव्यवस्थापकं वक्तव्यम् । तद्भूमः, केचिदपृथक्सिद्ध-धर्माः कस्यचिदेकदेश एव नियमेन वर्तन्ते , एकदेशे वान्यत्र वा केचिदनियमेन वर्तन्ते, तत्र नियतैकदेशवृत्तिधर्मवाचिनश्शब्दास्तत्तदेकदेशभूतद्रव्यमात्रे वर्तन्ते, एक-देशत्वप्रतीत्युत्पादननियमात्. एकदेशतयैव हि हस्तादयः प्रतीयन्ते, एकदेशवृत्तिनियम-रहितधर्मवाचिनः शब्दा एकदेशत्वप्रतीतिनियममपहाय विशेष्ये वर्तन्ते; अत-श्शुक्लादिशब्दैरेकदेशत्वं हित्वा तादश्रयमात्रोपस्थापनात् तदुपस्थापिताश्रयात् पटत्वाश्रयस्यानतिरेकात् पटशब्दस्य सामानाधिकरण्यं युक्तम् । एकदेशमात्रो-पस्थापकैर्हस्तादिशब्दैरेकदेशिनोऽनुपस्थापितत्वेन हस्तादिप्रातिपदिकप्रतिपन्नविशे-ष्यातिरेकात् सामानाधिकरण्यमयुक्तम् । यदि क्वचित् सामानाधिकरण्यं विद्यते तत्र हस्तादिशब्दस्य तद्वति लक्षणया वा मनुष्यादिशब्दस्य तदेकदेशलक्ष-णया वा प्राधान्याद्यभिप्रायेणोपचारेण वा स्यात् । छिद्रमाकाश इत्यत्र त्वाकाश-त्वस्य समुदायवृत्तित्वाभावेन छिद्रे पुष्कलतया नैकदेशलक्षणा । जीवत्वाचि-त्त्वादिधर्माश्च त्वन्मते ब्रह्मणो नियतैकदेशवृत्तय इति न तद्वाचिशब्दैरी-श्वरवाचिशब्दानां मुख्यया वृत्त्या सामानाधिकरण्यम् । ननु शिरः पाणिरुदरं पादश्च शरीरमिति दृश्यते प्रयोगः । सत्यम् ; प्रभूतकृत्स्नावयवोपादानेऽवय-विनस्तदनतिरेकात्सामानाधिकरण्यसम्भवः, प्रत्येकं सामानाधिकरण्यन्तु एकदेश-लक्षणाप्रसङ्गादमुख्यमेव । एवं चिदचिद्विशेषवाचिशब्दैर्नैकैकस्येश्वरवाचिपद-सामानाधिकरण्यमयुक्तं स्यात् । एकदेशवाचिशब्दानामेकदेशिनि शक्त्यभावात् . "व्यक्तं विष्णुस्तथाऽव्यक्तम्" "ज्योतींषि विष्णुर्भुवनानि विष्णुः' 'भूतानि विष्णुर्भु-वनानि विष्णुः" इति हि प्रत्येकं सामानाधिकरण्यम् । 'अहं सर्वे'मित्यचिज्जीव-वाचिपदयोरपि तद्वदेव सामानाधिकरण्यमयुक्तम्, सर्वत्रामुख्यया वृत्त्या ब्रह्मो-पस्थापनेन सामानाधिकरण्ये स एव दोषः, मुख्यसामानाधिकरण्ये सम्भवत्यमुख्य-

* श्रुतप्रकाशिका *

वृत्त्याश्रयणस्यान्याय्यत्वात् । स्वाभाविकभेदाभेदपक्षेऽपि भोक्तृभोग्यनियन्तॄणां त्रयाणामपि ब्रह्मांशत्वाभ्युपगमादचिज्जीवयोरचिदीश्वरयोर्जीवेश्वरयोश्च सामानाधिकरण्यं घटश्शराव इतिवदनुपपन्नमित्येतदवस्थितम् । अंशतोऽपि विशेष्यभेदासहस्यैवाभेदस्य सामानाधिकरण्यबोध्यत्वाचेषां ब्रह्मसामानाधिकरण्यमपि चिन्त्यम् । ब्रह्मवाचिपदानां सत्त्वद्रव्यत्वादिस्साधारणाकारः प्रवृत्तिनिमित्तं चेत् 'तत्त्वमसीत्युक्ते' सदसि द्रव्यमसीत्युक्तं स्यात् । तदानीमुपदेशवैयर्थ्यम् , नहि कश्चिदहमसदहमद्रव्यमिति मन्यते . सदन्तरैकत्वमुपदेष्टव्यमिति चेन्न, तस्य सामानाधिकरण्यबोध्यत्वाभावात् । सामानाधिकरण्यं हि पूर्वनिर्दिष्टस्य विशेष्यस पदान्तरोपस्थापितविशेषणान्वयमवगमयति , न तु तद्विशेषणान्वितवस्त्वन्तरैक्यम् । न हि ब्राह्मणस्त्वमसीत्युक्ते त्वंशब्दनिर्दिष्टस्य ब्राह्मणान्तरैक्यं प्रतिपादितं भवति, किन्तु तस्य ब्राह्मणत्वविशेषणवैशिष्ट्यमेव ; अतो विवक्षितैकत्वासिद्धेरुपदेशवैयर्थ्यमेव । यद्यंशविशेषसाधारणाकारः प्रवृत्तिनिमित्तं तदा ब्रह्मादिशब्दानां तदितरांशवाचिपदसामानाधिकरण्ये विरोधस्स्यात् . यदा निरतिशयबृहत्त्वं प्रवृत्तिनिमित्तं तदा तत्त्वमसीत्युक्ते निरतिशयबृहदसीत्युक्तं स्यात् , ततश्चाणोर्जीवस्य निरतिशयबृहत्त्वविरोधः, त्वं निरतिशयबृहद्वस्तुनोंश इत्यर्थश्चेदेकदेशलक्षणा, न हि ब्रह्मशब्दस्य बृहदेकदेशो मुख्यार्थः, एवमसाधारणाकारान्तरस्य प्रवृत्तिनिमित्तत्वेऽप्यनुपपत्तिर्द्रष्टव्या ; अतः कुदृष्टित्रयप्रत्यनीकं सामानाधिकरण्यं भाष्याकारपक्ष एव मुख्यम् । व्याख्यानान्तरोक्तनिर्वाहाद्वयदुक्तनिर्वाहस्य किं वैषम्यम् ॥ .... .... .... .... ....

* भावप्रकाशिका *

भेदपक्षेपीत्यादि ) ( सामानाधिकरण्यं हीति ) सामानाधिकरण्यस्यैक्यावगमत्वेन तद्विशेषणान्वितवस्त्वैक्यावगमकत्वेपि वस्त्वन्तरैक्यावगमकाभावात्तथात्वे बाधितार्थत्वप्रसङ्गाचेति भावः । ( विवक्षितैकत्वासिद्धेरिति ) सदन्तरैकत्वस्य विवक्षितत्वे तस्यासिद्धेः, सद्द्रव्यमात्राभेदस्य च प्रत्यक्षसिद्धत्वेनोपदेशवैयर्थ्यमित्यर्थः । ( यद्यंशविशेषासाधारणाकार इति ) ईश्वरत्वमित्यर्थः । ( तदितरांशवाचिसामानाधिकरण्य इति ) घटश्शराव इतिवदिति भावः । ( असाधारणाकारान्तरस्येति ) ब्रह्मत्वादेरित्यर्थः ॥ .... .... .... .... .... .... .... ....

—०( सङ्क्षेपेण सिद्धान्तोपन्यासः )०—

अत्रेदं तत्त्वम्– अचिद्वस्तुनश्चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः– [1] "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" [2] "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [3] "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः–" अमृताक्षरं हर इति भोक्ता निर्दिश्यते, प्रधानमात्मनो भोग्यत्वेन हरतीति हरः । [4] "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" [5] "प्रधान-

* श्रुतप्रकाशिका *

किञ्च–आत्मभेदे सिद्धे हि शरीरशरीरिभावः, स एव नास्ति, कालविशेषे ऐक्यप्रतिपादनात्, "पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" 'सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि" इत्यादिभिश्चिदचितोरुत्पत्तिप्रलयप्रतिपादनात् कार्यकारणयोरेकद्रव्यत्वाच्च । न ह्येकमेव वस्तु शरीरं शरीरि च भवति, तस्मात्स्वरूपपरिणामपक्षेणैव निर्वाहो वरमिति शङ्कापरिहारार्थं सकलश्रुतीनां मुख्यार्थत्वज्ञापनार्थं तेषु तेषु प्रदेशेषु विप्रकीर्णभुक्तानामर्थानां सङ्कलय्य प्रदर्शनेन सुग्रहत्वापादनार्थञ्चारभते ( अत्रेदं तत्त्वमिति ) भोग्यत्वेन भोक्तृत्वेन चेति चशब्द ईशितव्यत्वेन तयोरेककोटिनिवेशात् । 'अस्मान्मायी' इत्यत्र मायाशब्दार्थं निष्कृष्य्मुपादत्ते ( मायां तु प्रकृतिमिति ) अन्यशब्दवाच्य आत्मेति स्पष्टयितुमाह ( क्षरं प्रधानमिति ) अर्थान्तरग्रहहेतुत्वात् हरशब्दं व्याचष्टे ( प्रधानमिति ) अत्र 'व्यक्ताव्यक्तं भरते विश्वमीशः, इति पूर्ववाक्ये श्रवणात् भार्यत्वधारकत्वलक्षणभेदोऽपि सिद्धः । ईश्वरेशितव्यतारूपभेदं दर्शयति ( स कारणमिति ) करणाधिपाधिपशब्दव्याख्यानार्थमाह ( प्रधानेति ) गुणेशः– गुणानां

1 2- श्वे. ४-अ. ९-१०-वा.
3 श्वे. १-अ. १०-वा.
4 श्वे. ६-अ. ९-वा.
5 श्वे. ६-अ. १६-वा

क्षेत्रज्ञपतिर्गुणेशः" [1]"पतिं विश्वस्यात्मेश्वरं शाश्वतं

* श्रुतप्रकाशिका *

सत्त्वरजस्तमसां नियन्ता। अनन्येश्वरत्वं दर्शयति ( पतिमिति ) अनेन शेषशेषित्व-लक्षणभेदोऽपि सिद्धः । न च 'पा रक्षणे' इति धातोर्व्युत्पन्नत्वात्पतिशब्दो रक्षकवाची, न शेषित्ववाचीति वाच्यम्; शेषिणि रूढत्वात्. अन्यथा "गमेर्डोः" इति डोप्रत्ययान्तगमिधातोर्निष्पन्नत्वात् गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्गः। गति-मत्सु सर्वेषु प्रयोगाभावात् तिष्ठत्यपि गवि प्रयोगात्, तत्र रूढिशक्त्याश्रय इति चेत्. एवम्; "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इतिन्यायेन पितृसंरक्षके पुत्रे पित्राद्यपेक्षया पतिशब्दप्रयोगाभावात् गृहाद्यरक्षकेऽपि स्वामिनि पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढः। तथा "दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः" तथा "नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः" इति दासशेषशेषिशब्दप्रयोगो भगवच्छास्त्रेषु दृश्यते । पत्यादिशब्दाभावेपि

७ भावप्रकाशिका ७

( 'पा रक्षणे' इतिधातोरिति ) 'पातेर्डतिः' इतिडप्रत्ययान्तत्वेनेत्यर्थः। ( पतिशब्दप्रयोगाच्चेति ) गृहपतिरितिप्रयोगादित्यर्थः। ( शेषिणि पतिशब्दो रूढ- इति ) अत एव 'अन्तर्वत्पतिवतोर्नुक्' इत्यत्र भर्तृत्व एव नुगित्युक्त्वा स्वाम्यर्थत्वे स्वया पतिमती पृथिवीति शेष्यर्थत्वं सिद्धवत्कृत्यैव प्रत्युदाहृतं महाभाष्ये । 'पत्युर्नो यज्ञसंयोग' इत्यत्र भगवता पतञ्जलिना पतिशब्दोऽयमैश्वर्यवाचीत्युक्तम्. पाणिनिनापि 'पत्यावैश्वर्ये' इत्यत्र ऐश्वर्यार्थत्वमाविष्कृतम्, जैमिनिनापि 'मेध-पतित्वं स्वामिदैवतस्य समवायात्' इति स्वामिवचनत्वं स्पष्टीकृतम् । 'ये यज्ञपतिं वर्द्धानी'त्यत्र स्वामिवचनत्वं सिद्धवत्कृत्यैव ऊहानूहचिन्ता नवमे कृता, अतो न स्वामिवचनत्वे विप्रतिपत्तिः, अतएव विश्वपतिमिति विश्वेश्वरत्वे कथिते स्वस्यापी-श्वरान्तरशङ्काव्यावृत्त्यर्थमात्मेश्वरमिति शेष्यन्तरनिषेध उपपद्यते। 'धवः प्रियः पति-र्भर्ता' इति भर्तृवाच्यपि पतिशब्दोऽन्यः। 'मेधपतिभ्यां मेधम्' इत्यत्र देवतायामपि प्रयोगात् 'मेधपतित्वं स्वामिदैवतस्य समवायात्' इति जैमिनिना स्वामिवाचित्व-

१ तै. नारायणे. ११-अनु. ३-वा.

शिवमच्युतम्"[१] "ज्ञाज्ञौ द्वावजावीशनीशौ" [२] "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" [३] "भोक्ता भोग्यं प्रेरितारं च मत्वा" [४] "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" [५] "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तत-

* श्रुतप्रकाशिका *

"व्रीहीन् प्रोक्षति" इत्यादौ द्वितीयाश्रुत्या प्रोक्षणादेर्व्रीह्यादिशेषत्ववत् "यस्यात्मा शरीरम्" इत्यादिना जगतः परमात्मशरीरत्वावगमात् शरीरपारार्थ्यस्य च "सङ्घातःपरार्थत्वा"दित्याभिः प्रसिद्धत्वाच जगद्ब्रह्मणोः शेषशेषिभावसिद्धेः, अतो यथोक्त एवार्थः। मुखान्तरेणापि भेदसिद्धिं दर्शयति ( ज्ञाज्ञाविति ) उत्पत्तिप्रलयाभावप्रतिपादनं दर्शयति ( नित्यो नित्यानामिति ) आकारान्तरेणापि भेदमाह ( भोक्तेति ) भगवतो ऽस्पृष्टदोषत्वं दर्शयति ( तयोरिति ) भेदज्ञानस्य मोक्षहेतुत्वमाह ( पृथ-

* भावप्रकाशिका *

देवतावाचित्वयोः प्रदर्शितत्वाच. तत्रापि कामं शक्तिरस्तु वा माया, स्वामीश्वरापरापर्यायशेष्यर्थत्वेन विमतिश्शक्या कर्तुमिति द्रष्टव्यम्। 'इभ्य आढ्यो धनी स्वामी नायकः पतिरीशिता' इति च निघण्टुः। ( द्वितीयाश्रुत्या प्रोक्षणादेरिति ) द्वितीयाश्रुतिप्रतिपादितसाध्यभावानां व्रीहीणां श्रुतिबलात् समीहितसाध्यापेक्षिण्याभावनयान्वयबलात् समीहितसाधनत्वलक्षणशेषित्वस्य सिद्धिवत् श्रुतिप्रतिपन्नशरीरभावस्य जगतश्शरीरत्वाक्षिप्तशेषशेषिभावः पत्यादिशब्दाभावेपि सिध्यतीत्यर्थः। ( सङ्घातपरार्थत्वादिति ) "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययाधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थप्रवृत्तेश्च ॥" इति साङ्ख्यश्लोकः। सङ्घातस्य सर्वस्यापि शयनासनादिवत्पारमार्थ्यावश्यम्भावात्, देहस्यापि सङ्घातरूपतया पारमार्थ्यं सिद्धमित्यर्थः। 'अजोऽन्यः' इति श्रुत्यंशेन प्रकृतिं जहाति मुक्ते अन्यत्वप्रतिपादनमभिप्रयन्नाह

१ श्वे. १-अं. ९-वा.
२ कठ. ५-वल्ली. १३-वा.
३ श्वे. १- अ. १२-वा.
४ मु. ३ मुण्ड. १-ख. १-वा.
५ श्वे. १-अ. ६-वा.

स्तेनामृतत्वमेति" [1]"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" [2]"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्याद्याः॥ स्मृतावपि,—

[3]"अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो! ययेदं धार्य्यते जगत्॥"
[4]"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥"

* श्रुतप्रकाशिका *

गिति) मुक्तौ भेदमाह (अजामिति) जीवेश्वरयोः स्वतो भेदं सविशेषत्वं च स्पष्टयितुमाह (समान इति) पृथक्त्वज्ञानस्य मोक्षोपायत्वपरस्य वाक्यद्वयस्य मध्ये 'अजामेका'मित्यादिवाक्यमुपात्तम्। 'समाने वृक्षे' 'अजामेकाम्' इति प्रधानप्रसङ्गोपेतत्वसाम्यात्। जुष्टम्—प्रियमाणम्। (स्मृतावपीति) अष्टधा भिन्ना प्रकृतिर्ममेत्यनेन कारणावस्थायामपि भेदसिद्धिः। मामिकां प्रकृतिं कल्पक्षये

छ भावप्रकाशिका छ

(मुक्तौ भेदमाह--अजामितीति) (प्रधानप्रसङ्गोपेतत्वसाम्यादिति) यद्यपि पृथगात्मानमितिपूर्ववाक्ये प्रधानप्रसङ्गोपेतत्वं नास्ति तथाप्युपरितनवाक्यस्य प्रधानप्रसङ्गोपेतत्वात् तेन सङ्गतिरस्तीति भावः। (ममेत्यनेनेति) षष्ठ्या व्यतिरेकनिर्देशादिति भावः।

१ तै. ६-प्र. नारायणे. १०- अ. ५-वा.
२ श्वे. ४-अ. ७-वा.
३ गी. ७-अ. ४-५-श्लो.
४ गीता. ९-अ ७-८-श्लो.

[1] "मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥"
[2] "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।"
[3] "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥" इति ।

जगद्योनिभूतं महद्ब्रह्म मदीयम्, प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत्; तस्मिंश्चेतनाख्यं गर्भं यत्संयोजयामि, ततो मत्कृताचिदचित्संसर्गाद्देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवतीत्यर्थः ॥ एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन

* श्रुतप्रकाशिका *

यान्तीत्यत्रापि तथा । प्रकृतिं स्वामवष्टभ्य विसृजामीत्यत्रापि तत्सिद्धिः, मयाऽध्यक्षेणेत्यत्र तु स्वभावासङ्करः कारणावस्थायां भेदश्च सिध्यतः। प्रकृतिमित्यत्रानादित्वरूपठोक्तिः। ममेत्यत्रापि कारणावस्थायां भेदसिद्धिः । उदाहृतस्मृतिवचनेषु व्याख्येयांशं व्याचष्टे (जगद्योनीति) जगद्योनिशब्देन 'त्रिगुणं तज्जगद्योनि'रिति वचनं स्मर्यते । कार्यावस्थाव्यावृत्त्यर्थं भूतसूक्ष्ममित्युक्तम् । एवं चिदचिदीश्वरभेदे सति कथमेकत्वावधारणमुपपद्यत इति शङ्कायां घटकश्रुतीरवतारयति (एवमिति) 'यः पृथिवीमन्तरे सञ्चरन्' इति सुबालोपनिषदि श्रूयते ।

* भावप्रकाशिका *

(स्वभावासङ्कर इति) अध्यक्षत्वादिस्वभावासङ्कर इत्यर्थः । लयप्रकरणात्तमसोऽपि लय एवोच्यते, ततश्च ब्रह्मपरिणामवाद एवाभ्युपगतस्स्यादितिशङ्कां वारयति

1 गी. ९-अ. १०-श्लो.
2 गी. १३-अ. १९-श्लो.
3 गी. १४-अ. ३-श्लो.

श्रुतयः [1] "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य– [2] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति। तथा [3] "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य [4] "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"। अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते; अस्यामेवोपनिषदि– [5] "अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते" इतिवचनात्। [6] "अन्तः

* श्रुतप्रकाशिका *

मरणयमादिव्यावृत्त्यर्थं मृत्युशब्दं व्याचष्टे (अत्रेति) लीयत इति वचनात्, क्रमप्रत्यभिज्ञानादित्यर्थः। 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्' इति क्रमो हि 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति क्रमेण सङ्गच्छते। तमस एकीभावमात्रं श्रुतम्, न लयः, तमस्स्वप्रद्धाणाभावात्। कार्यानुपयुक्ततमःशरीरके देवे कार्योपयुक्तस्य तस्यैकीभावः। मृत्युसंज्ञस्य तमसः शरीरत्वश्रवणात् विशेषणभूततमसा तमस एकीभावो युक्तः। सर्वान्तरत्वविवरणायाह (अन्तःप्रविष्ट इति)

* भावप्रकाशिका *

(तमस एकीभावमात्रमिति) (कार्यानुपयुक्ततमश्शरीरक इति) अक्षरा-

[1] बृ. ५-अ. ७-ब्रा. ३-वा.
[2] बृ. ५-अ ७-ब्रा. विज्ञानस्थाने माध्यन्दिनपाठः२२-वा.
[3] [4]. सुबाल. ७-ख.
[5] सुबाल. २-ख.
[6] यजुरारण्यके ३-प्रश्ने. चित्ति. ११-अनु. २१-पं.

प्रविष्टः शास्ता जनानां सर्वात्मा" इति च ॥ एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्य्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्य्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः [1] "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य [2] "सन्मूलाः सोम्येमास्सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति । तथा [3] "सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत" इत्यारभ्य [4] "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः ॥ अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः [5] "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्र-

* श्रुतप्रकाशिका *

अनेनापि शरीरात्मभावः फलितः । अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वम्, अन्तःप्रवेशशास्तिभ्यां नृपगगनव्यावृत्तिरिति, एतदपि शरीरलक्षणं भाष्यकाराभिप्रेतम् । भेदश्रुतिघटकश्रुत्यविरोधेनैक्यवाक्यानामर्थमाह ( एवमिति ) घटकतयोपात्तं सन्मूला इति ॥ ( अत्रापीति ) छान्दोग्यप्रकरणे तैत्तिरीयप्रकरणे चेत्यर्थः । हन्ताहमित्यादिच्छान्दोग्ये । तत्सृष्ट्वेत्यादितैत्तिरीये । जीवेनात्मनेत्यस्य

* भावप्रकाशिका *

व्यक्तमहदादिरूपेण परिणतस्तमोंशः अपरिणततमोंशश्च ऐक्यं प्राप्तावित्यर्थः । ( एतदपि शरीरलक्षणमिति ) यस्य चेतनस्य यद्द्रव्यमित्याद्युक्तलक्षणत्रयवदन्तः-

१ छा. ६-प्र. २-ख. १-वा.
२ छा. ६-प्र. ८-ख. ६-वा.
३ ४- तै. आन. ६-अनु. २-३
५ छा. ६-प्र. ३-ख. २-वा.

विश्य नामरूपे व्याकरवाणि" इति,– "तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनु प्रविश्य। सच्च त्यच्चाभवत्–विज्ञानं चाविज्ञानं च। सत्यञ्चानृतं च सत्यमभवत्" इति च। "अनेन जीवेनात्मनानुप्रविश्य" इति जीवस्य ब्रह्मात्मकत्वं "तदनु प्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानञ्च" इत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते। एवम्भूतमेव नामरूपव्याकरणं "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इत्यत्राप्युक्तम्।

* श्रुतप्रकाशिका *

व्याख्यानार्थमाह (अनेनेति) अनुप्रवेशश्रवणाभावेऽपि सामान्येनोक्तं नामरूपव्याकरणमनुप्रवेशपूर्वकनामरूपव्याकरणे पर्यवस्यति सामान्यविशेषन्यायादित्याह (एवम्भूतमेवेति) यद्वा सर्वशाखाप्रत्ययन्यायेन क्वचिदनुक्तस्यान्यतो ग्राह्यत्वात् क्वचिज्ज्ञातोऽनुप्रवेशः कार्योपयोगितया अपेक्षितत्वादन्यत्रापि स्वीकार्य इत्याह– एवमिति। एवम्भूतशब्दोऽनुप्रवेशपूर्वकत्वपरः, अनेन नामरूपव्याकरणश्रुत्युपादानेन जीवानामुत्पत्तिप्रलयौ नामरूपव्याकरणतदभावौ, न तु स्वरूपनिष्पत्तिविनाशावित्युक्तं भवति, अनेन पूर्वोक्तशङ्का च परिहृता, कालविशेषोक्तमैक्यं नामरूपव्याकरणाभावमात्रम्, न तु स्वरूपैक्यमित्यवगमात्॥ अथ सर्वश्रुतीनामस्मिन्नर्थे मुख्यत्वं दर्शयन् प्रथममेकविज्ञानेन सर्वविज्ञानं परमतेऽनु-

* भावप्रकाशिका *

प्रविश्य नियाम्यत्वमपि भाष्यकाराभिमतं शरीरलक्षणमित्यर्थः। (अनुप्रवेशश्रवणाभावेपीति) तन्नामरूपाभ्यां व्याक्रियतेत्यत्रेतिशेषः। सामान्यशब्दस्य विशेषपदोपस्थापिते पर्यवसानं हि सामान्यविशेषन्यायः। अनुप्रवेशपूर्वकत्वस्य तु नामरूपव्याकरणस्वरूपानन्तर्गतत्वेन विशेषपदप्रतिपाद्यत्वाभावात् नायं सामान्यविशेषन्यायविषयो भवितुमर्हतीति अपरितोषादाह (यद्वा सर्वशाखाप्रत्ययन्यायेनेति)

१. बृ. ३-अ. ४-ब्रा. ७-वा.

अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्य्यस्यानन्यत्वेन कारणविज्ञानेन कार्य्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम्। "अहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति, 'तिस्रो देवता' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्सर्वे वाचकाः शब्दाः अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्य्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम्; अतः स्थूलसूक्ष्मचिद-

* श्रुतप्रकाशिका *

पपन्नमिति प्रागुक्तं स्वमत उपपन्नमित्याह (अत इति) कार्यकारणयोरैक्यप्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् सामानाधिकरण्याच्चेति त्रिधा ह्यद्वैतप्रतीतिः, अत्र पूर्वोक्तद्वयमस्मदुक्तप्रकारेणोपपन्नमिति अत इत्यादिभाष्येणोक्तं भवति। विशिष्टं कारणम्, तदेव कार्यमिति कारणात्कार्यस्यानन्यत्वम्; अतः कार्यकारणयोरैक्यपराणां श्रुतीनां तयोरेकद्रव्यत्वमेव प्रतिपाद्यम्, न तु विशिष्टत्वनिषेधः, तस्य विहितत्वात्। एकविज्ञानेन सर्वविज्ञानमपि एवमेव; यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधो न कृतः स्यात् तद्वत्। उपपन्नतरमिति तरप्प्रत्ययेन मुख्यत्वं सर्वत्रापि विवक्षितम्, एवं सद्विद्योपक्रमगतस्यैकविज्ञानेन सर्वविज्ञानस्य मुख्यत्वमुक्तम्। अथ तदुपसंहारगतस्य तत्त्वमसीति सामानाधिकरण्यस्य मुख्यत्वमाह (अहमिमा इति) उपादानत्वस्वभावासङ्करौ कथमुपपद्येते इत्यत्राह (अतः स्थूलेति) भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्, अतोऽवस्थाविशेषौ स्थूलसूक्ष्मशब्दाभ्यां दर्शितौ, अनेन कालविशेषावच्छिन्नैकत्वानधारणं नामरूपविभागाभावाभिप्रायमिति फलितम्। उपादानत्वेऽपि

चित्प्रकारकं ब्रह्मैव कार्य्यं कारणं चेति ब्रह्मोपादानं जगत्। सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति। ब्रह्मोपादानत्वेऽपि सङ्घातस्योपादानत्वेन चिदचितो-र्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा शुक्ल-कृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्त-त्तन्तुप्रदेश एव शौक्ल्यादिसम्बन्ध इति कार्यावस्था-यामपि न सर्वत्र वर्णसङ्करः, तथा चिदचिदीश्वर-सङ्घातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः। तन्तूनां पृथ-क्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारकत्वं कार्यत्वञ्च। इह तु चिदचितोस्सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात्तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः, स्वभाव-

* श्रुतप्रकाशिका *

स्वभावासङ्करमाह (सूक्ष्मेति) दृष्टान्तेनेममर्थमुपपादयति (यथेति) ननु शुक्ल-कृष्णादितन्तवः कारणावस्थायामपि भिन्नाः, न च तेष्वन्यतमं प्रत्यन्यतमस्य कारणत्वम्, अतस्तत्र स्वभावासङ्करः। अत्र तु विश्वस्य सङ्घातोपादानत्वेऽपि कारणावस्थायां परमात्मैक एव स्वशब्देन श्रूयते, न तु चेतनाचेतनौ। किञ्च परमात्मनः प्रागेकत्वं तस्मादितरयोर्द्वयोरुत्पत्त्यादिकं च श्रूयते, अतो न स्वभावा-सङ्कर इत्यत्राह (तन्तूनामिति) नहि तन्तुष्वन्योन्यगुणप्रधानभावोऽस्तीति न तत्रान्यतमवाचिशब्देन समुदाय उच्यते, अत्र तु सर्वप्रकारस्य भगवतस्सर्व-शब्दवाच्यत्वमुपपन्नमित्यन्यतमवाचिशब्देनापि विशिष्टमेवोच्यत इति विशिष्ट-स्यैव कारणत्वात् प्रागपि भेदोऽस्तीति स्वभावासङ्कर उपपन्न इत्यर्थः। केना-कारेण साधर्म्यमित्यत्राह (स्वभावेति) स्वमागतेतरपदार्थानां लवणस्वापचिवत्

भेदस्तदसङ्करश्च तत्र चात्र च तुल्यः । एवञ्च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम् । स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात्कार्य्यत्वमप्युपपन्नतरम् । अवस्थान्तरापत्ति-

* श्रुतप्रकाशिका *

ब्रह्मणोऽन्यथाभावमाशङ्क्याह (एवञ्चेति) तर्ह्युपादानत्वमेव अनुपपन्नमित्यत्राह (स्थूलावस्थस्येति) आत्मतयावस्थानात् कथं कार्यत्वमित्यत्राह (अवस्थेति) अविकारत्वश्रुतीनां प्रकृतिगतस्वरूपान्यथाभावरूपविकारो ब्रह्मणि नास्तीत्यर्थः । कार्यावस्थचिदचिन्नियमनरूपावस्थान्तरापत्तिर्ब्रह्मणः कार्यत्वमिति कार्यत्ववादिनीनां श्रुतीनामर्थः । न हि कारणावस्थनियमनं कार्यावस्थनियमनं भवति, तत्तदवस्थचिदचिन्नियमनरूपविशेषा एव ब्रह्मणोऽद्वारकावस्थाः, स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपविकारास्तु सद्वारकावस्था इत्यर्थः । यथा ग्राहकग्रहणेन सन्निधिसमाम्नातेषु वस्तुषु परमापूर्वशेषतयावगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेस्सद्वारकशेषत्वं च मुख्यमेवावगम्यते तथा बहु स्यामिति ग्राहकग्रहणेन सर्वावस्थासु परमात्मीयतयावगतासु स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपसद्वारकावस्थायाः

* भावप्रकाशिका *

(यथा ग्राहकग्रहणेनेति) ग्राहकं साधिकारापूर्वं फलवत्परमापूर्वमित्यर्थः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिवाक्यप्रतिपन्नमपूर्वं परमापूर्वम् , तत्सन्निधिसमाम्नातानां 'समिधो यजति व्रीहीनवहन्ति' इत्यादिवाक्यानां कार्यान्विताभिधायित्वस्वभावानां परमापूर्वलक्षणकार्यान्वितप्रयाजावघातादिलक्षणस्वार्थाभिधानमेव ग्राहकग्रहणम् . एवंरूपेण ग्राहकग्रहणेन सर्वेष्वपि द्रव्यगुणक्रियारूपेषु शेषशेषिभूतपदार्थेषु खले कपोतवत् अवगतग्राहकैदमर्थ्येषु यागस्य करणतया अद्वारकशेषत्वमवसीयते . व्रीहीणां यागद्वारा शेषत्वं प्रोक्षणादीनाञ्च व्रीहिद्वारा शेषत्वं करणैदमर्थ्यद्वारैदमर्थ्यग्राहकश्रुत्यादिप्रमाणैरवसीयत इत्यर्थः । (बहु स्यामिति ग्राहकग्रहणेनेति) ग्राहकस्थानीयः परमात्मा. तस्य ग्रहणं सङ्कल्पः ।

रेव हि कार्य्यता ॥ निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासम्बन्धादुपपद्यन्ते । [1]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति हेयगुणान् प्रतिषिध्य "सत्यकामस्सत्यसङ्कल्पः" इति कल्याणगुणान् विदधती इयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ॥ ज्ञानस्वरूपं ब्रह्मेतिवादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वयम्प्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । [2]" यः सर्वज्ञः सर्ववित्" [3] "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [4] "विज्ञातारमरे केन विजानीयात्' इत्यादिकाः ज्ञातृ-

* श्रुतप्रकाशिका *

तच्चनियमनरूपाद्धारकावस्थायाश्च परमात्मीयत्वं मुख्यमेवेति भावः । ( निर्गुणेति ) अपहतपाप्मेत्यादि चात्र किञ्चिद्विवृतम् ( श्रुतिरेवेति ) मतान्तरोक्तनिर्वाहेषु श्रुतहानिरश्रुतकल्पनं चास्ति, अत्र तु निर्वाहः श्रौत एव श्रुतानुगुणश्चेति वैषम्यमिति भावः । अथार्थगुणनिषेधपरत्वेन पराभिमतानां श्रुतीनामर्थमाह ( ज्ञानस्वरूपमिति ) सर्वज्ञस्येत्यादिपदानि मङ्गलगुणविशेषविधायिवाक्यसरणार्थानि, "तद्गुणसारत्वात्" इत्यादिसूत्रसिद्धमेवात्र निर्वाहद्वयमुक्तम् । ईश्वरस्य ज्ञातृत्वात् ज्ञानैकनिरूपणीयत्वमुक्तम् । ज्ञातुर्हि ज्ञानं निरूपकम्, तरपो मुख्यत्वमर्थः । ज्ञानस्वरूपत्वज्ञानगुणकत्वपराः श्रुतीर्दर्शयति ( यस्सर्वज्ञ इति )

ॐ भावप्रकाशिका ॐ

( अत्र किञ्चिद्विवृतमिति ) पूर्वं विस्तरेण विवृतमित्यर्थः । ( उभयथापि ज्ञानव्य-

१ छा. ८-प्र. १-ख. ५-वा.
२ मु. १-ख. १-९-वा.
३ श्वे. ६-अ. ८-वा.
४ बृ. ६-अ. ५-ब्रा. १५-वा.

त्वमावेदयन्ति ; [1]"सत्यं ज्ञानम्" इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम् ॥ [2]"सोऽकामयत बहु स्याम्' [3]'तदैक्षत बहु स्याम्' [4]'तन्नामरूपाभ्यां व्यक्रियते" इति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाऽब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति तत्प्रतिषिध्यते

* श्रुतप्रकाशिका *

ज्ञानस्वरूपताम्– उभयथापि ज्ञानव्यपदेशयोग्यताम् , ज्ञानगुणकत्वस्य ज्ञानस्वरूपत्वस्य च विहितत्वादुभयमप्युपपन्नमित्यर्थः । ज्ञानस्य ज्ञानाश्रयत्वानुपपत्तिचोद्यपरिहारः पूर्वमेव कृतः ॥ भेदनिषेधश्रुतीनामर्थमाह ( सोऽकामयतेति ) विचित्रस्थिरत्रसरूपतया– विचित्रस्थिरत्रसशरीरतया । अब्रह्मात्मकेति ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तम् ; विहितव्यतिरिक्तस्वनिष्ठवस्तुनानात्वमित्यर्थः । यद्वा स्थिरत्रसरूपतया– स्थिरत्रसात्मकत्वात् । ( अब्रह्मात्मकेति ) अब्रह्मभूतमित्यर्थः । तथा सति कार्यकारणभेदनिषेधः कृतः स्यात् , ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादैक्यश्रुतिशेषभूतभेदनिषेधोऽपि तदनुरोधेन प्रकारिभेदनिषेध एव भवितु-

७ भावप्रकाशिका ७

पदेशयोग्यतामिति ) यद्यपि 'सत्यं ज्ञान'मित्यत्र ज्ञानमित्यस्य नैतावानर्थः, तथापि वलितार्थकथनमिति द्रष्टव्यम् । ( उभयमप्युपपन्नमित्यर्थ इति ) अत्र ज्ञानमित्यस्य 'तद्गुणसारत्वा'दितिन्यायेन ज्ञानगुणकत्वार्थकत्वात् प्रत्युतानुगुणत्वमेवेति द्रष्टव्यम् । ब्रह्मैव स्वसङ्कल्पादित्यादिभाष्ये ब्रह्मैवेति ब्रह्मशब्दस्य निष्कृष्टपरमात्मपरत्वपरत्वस्वारस्यानुरोधेन स्थिरत्रसरूपतयेत्येतद्व्याचष्टे ( स्थिरत्रसशरीरतयेति ) अब्रह्मात्मकेत्यत्रापि ब्रह्मशब्दं केवलपरमात्मपरतया व्याचष्टे ( ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तमिति ) स्थिरत्रसरूपतयेत्येतत्स्वारस्यानुरोधेन ब्रह्मपदं चिदचिद्विशिष्टवस्तुपरमित्यभिप्रयन् व्याचष्टे ( यद्वा स्थिरत्रसरूपतयेति ) ( ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादिति )

१ तै. आन. १-अनु. १-वा.
२ तै.आ. ६-अनु. २-वा.
३ छा. ६-प्र. २-ख. ३-वा.
४ बृ. ३-अ. ४-ब्रा. ७-वा.

[1] "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति [2] 'नेह नानास्ति किञ्चन [3] "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयात्" इत्यादिना। न पुनः 'बहु स्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते। "यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिनिषेधवाक्यादौ च तत्स्थापितम्– [4] "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" [5] "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्यादिना॥ एवं चिदचिदीश्व-

* श्रुतप्रकाशिका *

मर्हतीत्यर्थः। निषेधसामान्यं हि विशेषविधाने दृष्टे तद्व्यतिरिक्तविषयं दृष्टं 'न हिंस्या'दित्यादिषु। विशेषविधानं सामान्यनिषेधो बाधते चेत् वैधहिंसाया अधर्मत्वप्रसङ्ग इत्यभिप्रायेणाह (न पुनरिति) उक्तमर्थमुपक्रमेणैवोपपादयति (यत्र त्वस्येति) (योऽन्यत्रात्मन इति) अन्यत्रेत्यव्ययं विना शब्दपर्यायम्. ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः। भेदविशेषनिषेधदर्शनात्सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति 'छागो वा मन्त्रवर्णात्' इतिन्यायादिति भावः। इतरव्याख्यातृभिर्भवद्भिरपि निर्वाहप्रकाराः कृताः, तत्र को विशेष इत्यत्राह (एवमिति) अस्मदुक्तनिर्वाहः श्रुतिभिरेवोक्तः श्रुत्यनुगुणश्च, तत्कृतनिर्वाहः श्रुतिविरुद्धः, अश्रुतस्तर्काभासमूलश्चेत्यर्थः। अपन्यायमूलस्य सकलश्रुतिविरुद्धस्येति

* भावप्रकाशिका *

इदन्तु सिंहावलोकितकेन प्रथमपक्षशेषभूतमिति द्रष्टव्यम्। भाष्ये– सर्वं तं परादादिति। सर्वं कर्तृ, तं परादात्–पराकुर्यात्। निश्वसितम्– अनायासेनोत्पन्नम्,

१–२ कठ. ४- वल्ली. १०-११-
३ बृ. ४-अ. ४.ब्रा. १४-वा.
४ बृ. ४-अ. ४-ब्रा. ६-वा.
५ मुवा. २-ख॥ बृ. ४-४-१०, ६-५-११

राणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां कार्य्यका-
रणभावं कार्यकारणयोरनन्यत्वञ्च वदन्तीनां सर्वासां

* श्रुतप्रकाशिका *

सर्वत्रान्वेति । अन्यस्येति स्वाभाविकभेदाभेदं स्वनिष्ठभेदं चाह । इममर्थं वैदिकदृष्टान्तेनोपपादयति ( चिदचिदीश्वराणामिति ) आग्नेयः अग्नीषोमीयोपांशुयाजौ ऐन्द्रौ द्वौ ऐन्द्राग्नश्चेति षड्यागाः । उत्पत्तिवाक्यमिति– प्रथमप्रतिपत्तिजनकं

* भावप्रकाशिका *

सङ्कल्पमात्रविजृम्भितमिति यावत् ( ऐन्द्राग्नश्चेति षड्यागा इति ) ऐन्द्रौ द्वौ आग्नेयश्चेति षड्यागाः इति पाठस्समीचीनः । ऐन्द्राग्नश्चेतिपाठे एवमभिप्रायं केचिदूचुः,– आग्नेयः पौर्णमास्याममावास्यायाञ्च कर्तव्यः सायंप्रातःकालकर्तव्याग्निहोत्रहोमवदेक एव. कर्मभेदापादकशब्दान्तरादेरनुपलम्भात् , अत एवाष्टमे 'एककर्मणि विभागो विकल्पो हि चोदनैकत्वात्' इत्यत्र एकस्यैवाग्नेयस्य पौर्णमासीसंज्ञकत्वादमावास्यासंज्ञकत्वाच्च पौर्णमासीकाले क्रियमाणोप्याग्नेयः अमावास्यासंज्ञको भवतीति तस्मिन्नेवाग्नेये 'पञ्चहोत्राममावस्यामभिमृशेत्' इति शास्त्रवशात् पञ्चहोत्रमन्त्रप्रयोगेपि पौर्णमास्यां किं न स्यात् ? अवैगुण्यादिति चेत्. सत्यम्; आग्नेयस्यावैगुण्यं तस्योभयसंज्ञकत्वात् तेन सह तत्कालकर्तव्यानामग्नीषोमादीनां हविषाममावास्यासंज्ञाभावेन वैगुण्यं पञ्चहोत्राभिमर्शे स्यात्, अतस्तेषामप्यनुग्रहाय क्रियमाणमभिमर्शनञ्चतुर्होतृकरणमेव कर्तव्यम् । नच पञ्चहोत्राग्नेयमभिमृश्य चतुर्होत्राग्नीषोमीयानामभिमर्शः किं न स्यादित्याशङ्क्य 'आसन्नानि हवींष्यभिमृशति' इति एकस्यैव विहितत्वात्, तत्र हविरन्तरानुग्रहवशेन परं व्यवस्था इति आपदेव्यादिग्रन्थपर्यालोचनया एकमेवाग्नेयाख्यं कर्म पौर्णमासीत्रिके अमावास्यात्रिके चान्तःपतितम्, नाग्नेयकर्मभेदः । यदि भेदस्स्यात् प्रकृतौ पौर्णमासीकालकर्तव्याग्नेयाभिमर्शने पञ्चहोतृमन्त्रप्रसक्तेरेवाभावात् अव्यवस्थाशङ्का, तत्परिहारावसङ्गतौ स्याताम्, ततश्च एकमेव कर्म कालद्वययोगि, यथा अग्निहोत्राख्यं कर्म सायंप्रातःकालद्वययोगीत्येव युक्तम् ; अतोऽसोमयाजिविहितैन्द्राग्नेनैव षट्त्वसङ्ख्यापूरणं कर्तव्यम्–इति । अत्रोत्पत्तिवाक्यैः 'यदाग्नेयोऽष्टाकपालः अमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति' इत्येवमादिभिः । ( उत्पत्तिवाक्यमिति ) प्रथमप्रति-

श्रुतीनामविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्य्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यते। चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कार्य्यकारणभावप्रतिपादनं कार्य्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम्। यथा– आग्नेयादीन् षड्यागानुत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् [1]"दर्शपूर्णमासाभ्याम्" इत्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति; तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान् [2]'क्षरं प्रधानममृ-

* श्रुतप्रकाशिका *

वाक्यम्. पृथगुत्पन्नान्–पृथक् प्रतिपादितान्। उत्पत्तिवाक्यैः– 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्येवमादिभिः। समुदायानुवादिवाक्यद्वयेन–"य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते" इत्येताभ्याम्। (दर्शपूर्णमासाभ्यामिति) स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थः। तथात्रार्थप्रतिपादनं दर्शयति (तथेति) (शरीरिभूतेति)

ॐ भावप्रकाशिका ॐ

पत्तिजनकं वाक्यम्, पृथगुत्पन्नान्– पृथक् प्रतिपादितानितिपाठक्रमस्तु समीचीनः। (स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थ इति)

१ कात्यायनश्रौतसूत्रम्. ४-२-४७. | २ श्वे. १-अ. १०-पा.

ताक्षरं हरः क्षरात्मानावीशते देव एकः" [१]'पतिं विश्वस्यात्मेश्वरम्' [२]"आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य [३]'यस्य पृथिवी शरीरम्' [४]'यस्यात्मा शरीरम्' [५]"यस्याऽव्यक्तं शरीरम्। यस्याक्षरं शरीरम्। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैश्चिदचितोस्सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मताञ्च प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्य्यावस्थश्च परमात्मैक एवेति पृथक् प्रतिपन्नं वस्तुत्रितयं [६]'सदेव सोम्येदमग्र आसीत्' [७]'ऐतदात्म्यमिदं सर्वम्' [८]'सर्वं खल्विदं

* श्रुतप्रकाशिका *

कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति वचनभङ्ग्या पृथक्प्रतिपन्नं वस्तुत्रितयं प्रतिपादयतीत्यर्थः । आग्नेयादिसमुदाये अन्यतमवाचिशब्दैस्समुदायाभिधानं न दृष्टम्, अत्र तु परमात्मवाचिशब्देन समुदायाभिधानं कथमित्यत्राह

❀ भावप्रकाशिका ❀

तत्समुदायद्वयमेकीकृत्य समुच्चित्य स्वर्गसाधनत्वाकारेण कामिकर्तव्यतया विदधाति. यथा व्यापृते षडपि यागाः स्वर्गसाधनं भवन्ति तथा व्यापारितव्यमिति, साधनत्वेन विदधातीत्यर्थः । यद्वा एकीकृत्य स्थितं तदिति योजना, समुदायीभूतं तत्कर्मेत्यर्थः । (कारणावस्थः कार्यावस्थश्च परमात्मा एक एवेतीति) अयमत्रान्वयक्रमः— 'सदेवसोम्येदमग्र आसीत्' ऐतदात्म्यमिदं सर्वं' सर्वं खल्विदं

१–३ तै॰ नारायणे. ११-अनु. ४-वा.
२ बृ. ५-अ. ७-ब्रा. ३-वा.
४ बृ. ५-अ. ८-ब्रा विज्ञानस्थाने माध्यन्दिनपाठः २२.
५ सुबाल. ७-ख.
६ छा. ६-प्र. २-ख. १-वा.
७ छा. ६-प्र. ८-ख. ७-वा.
८ छा. ३-प्र.१४-ख. १-वा.

ब्रह्म" इत्यादिवाक्यं प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्यायमात्मा सुखीत्यात्मशब्देनाभिधान इत्यलमतिविस्तरेण ॥

---

* श्रुतप्रकाशिका *

( चिदचिद्वस्त्विति ) दृष्टान्तमाह ( यथेति ) तत्र अन्योन्यं प्रकारप्रकारिभावाभावादन्यतमवाचिशब्देन न समुदायाभिधानम्, अत्र तु तथाभावादुपपन्नम्। कथम्? उच्यते; अर्थसामर्थ्याच्छब्दसामर्थ्याच्च. चिदचितोरपृथक्सिद्धप्रकारत्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः। सद्ब्रह्मशब्दौ विशिष्टस्य सत्त्वबृहत्त्वयोगाद्विशिष्टोपस्थापनसमर्थौ। आत्मशब्दश्च व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापक इति। यद्वा "अक्षरात् सम्भवतीह विश्वम्' 'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः' तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' 'आत्मन आकाशस्सम्भूतः" इत्यादिषु परमात्ममात्रवाचिभिश्शब्दैः कारणमुच्यते, तेषां विशेषणभूतचिदचिदभिधाने शक्तिर्नास्ति; लक्षणायां स एव दोषः, अतस्सर्वत्र स्वरूपपरिणाम एव स्वरसप्राप्त इत्यत्राह— चिदचिदिति। श्रुत्यन्तरबलेन स्वरूपविकारासम्भवात्कार्योपयुक्तमनुक्तमपि विशेषणं पृषदाज्यनयादर्थस्वभावेन सन्निधापितमनुसन्धेयमिति भावः। तदेव

* भावप्रकाशिका *

ब्रह्म' इत्यादिवाक्यं कर्तृ, पृथक् प्रतिपन्नं वस्तुत्रितयं सद्ब्रह्मादिशब्दयुक्तवचनभङ्ग्या कारणावस्थः कार्यावस्थश्च एक एवेति प्रतिपादयतीति ( परमात्ममात्रवाचिभिश्शब्दैरिति ) अक्षरसर्वज्ञादिशब्दैरित्यर्थः। अर्थसामर्थ्यं दर्शयति ( चिदचितोरिति ) शब्दसामर्थ्यं दर्शयति ( सद्ब्रह्मशब्दावित्यादिना ) दृष्टान्तदार्ष्टान्तिकवैषम्यहेतुप्रतिपादनं मन्दफलम्, आत्मशब्दस्य व्यापकवाचिनश्शब्दसामर्थ्याद्व्याप्योपस्थापकत्वं नास्तीत्यपरितोषात् स्वरूपपरिणामशङ्कानिवृत्त्यर्थतया चिदचिद्वस्तुशरीरिण इति भाष्यमवतारयति ( यद्वा अक्षरात्सम्भवतीह विश्वमिति )

—( निवृत्त्यनुपपत्तिः )—

यत्पुनरिदमुक्तम्— ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति । तदयुक्तम्; बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् पुण्यापुण्यरूपकर्मनिमित्तदेवा-

* श्रुतप्रकाशिका *

लोकप्रयोगेणापि द्रढयति— यथेति । अयमात्मा सुखीत्यात्मविशेषस्य सुखित्वविधाने शरीररहितस्यात्मनो वैषयिकसुखासम्भवाचादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतः सिध्यति तद्वदिति भावः ॥

निवृत्त्यनुपपत्तिं वक्तुमनुवदति ( यत्पुनरिति ) दूषयति ( तदयुक्तमित्यादिना ) प्रपञ्चस्य ज्ञानबाध्यत्वं ज्ञानस्य चैक्यविषयत्वमुभयमपि पराभिमतम्, तत्र प्रथमं ज्ञानबाध्यत्वानुपपत्तिमाह ( बन्धस्येति ) सर्वप्रमाणानुगुणं पारमार्थ्यमुपपादयति ( पुण्यापुण्येति ) प्रतीतिमात्रसिद्धस्य हेतुहेतुमद्भावनियमो ऽनुपपन्नः, पर-

* भावप्रकाशिका *

( पृषदाज्यनयादिति ) यथा पृषदाज्यसङ्करायाचोदितमपि पात्रान्तरमुपादीयते तद्वदित्यर्थः । दर्शपूर्णमासयोरष्टावुपभृतिगृह्णातीति प्रयाजानुयाजार्थं चतुर्गृहीतद्वयम्, एकस्यामुपभृतियुगपद्गृहीतं तथैव पशौ प्राप्तम्, तत्रानूयाजानां द्रव्यविकारः श्रूयते, पृषदाज्येनानुयाजान्यजति, पृषदाज्यञ्च दधिमिश्रितमाज्यमेव, तत्र द्वयोरसङ्करेऽवश्यम्भाविनि चिन्ता किं कालभेदेन तस्यामेवोपभृतिद्वयं गृहीतव्यम् ? उत एकस्मिन्नेव काले पात्रभेदेन ? इति । तत्र तु 'अष्टावुपभृतिगृह्णाती'ति पात्रैकत्वं श्रुतम्, पदार्थक्रमस्तु पदार्थानां गुणः पाठकल्प्यश्च । अत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं गृहीतव्यमिति प्राप्त उच्यते, उभयोर्ग्रहणाङ्गत्वात् पात्रैक्यस्य क्रमस्य च विकृतौ चानुमाने प्राप्तौ तुल्यं बलाबलम्. एवञ्चाविशेषे सति प्रयाजाज्यग्रहणेनोपक्षितस्यानुयाजाज्यग्रहणस्याकरणेन किञ्चित्कारणमस्तीति तदैव पात्रान्तरमुपादाय ग्राह्यमिति । 'विकारस्तेनुयाजानां पात्रभेदोऽर्थभेदात्स्यात्' इत्यत्र चिन्तितम्. केचित्तु पृषदाज्यशब्दार्थस्य दधिमिश्राज्यस्याज्यशब्देनैवाभिधानसम्भवात् । 'देवान् आज्यपान् आवाह' इत्या-

दिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् । एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धवि-

* श्रुतप्रकाशिका *

मार्थस्यैवार्थक्रियाकारित्वादुत्पत्तिमत्त्वाच्च . असत्यस्य हेतुत्वासम्भवमुत्पत्त्यसम्भवं च प्रागुपपादितमुपजीव्योक्तम् । न हि प्रतीतिमात्रसिद्धमन्यत्र विद्यमानं वस्त्विह किमप्युत्पादयति, नापि स्वयमिदानीमुत्पाद्यते । किञ्च अपरमार्थस्य भ्रान्तिज्ञानसामग्रीव्यतिरिक्तहेतुसापेक्षत्वं च न दृष्टम्, न चाङ्कुरादिसामग्र्येव भ्रमसामग्री, गिरिशिखरगतमृत्सलिलबीजसम्बन्धेन अपवरकगतस्याङ्कुरभ्रमप्रसङ्गात् । न च पदार्थानामर्थक्रियाकारित्वमुत्पत्तिमत्त्वं च मिथ्येति वाच्यम्, ज्ञानाबाध्यत्वाभावात् । किञ्च मिथ्यात्वे पापकरणेऽपि न प्रायश्चित्तापेक्षा, मिथ्येतिबुद्धिरेवालमिति भावः । भवतापि ज्ञाननिवर्त्यत्वमविद्याया वक्तव्यम्, तच्च सत्यत्वे कथमुपपद्यत इत्यत्राह ( एवंरूपेति ) परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते, अपि त्वदृष्टद्वारा; यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिः, न तु मिथ्येति ज्ञानात्तथेत्यर्थः । प्रपञ्चस्य ज्ञानानिवर्त्यत्वमुक्तम् । ऐक्यज्ञानस्योपायत्वानुपपत्तिमाह ( भवदभिमतस्येति ) तत्त्वज्ञानं हि मोक्षोपायः, भिन्नविषयस्याभेदज्ञानस्यातत्त्वज्ञानरूपत्वाद्विपरीतफलत्वमित्यर्थः । अद्वैतस्यातथ्यत्वे प्रमाण-

* भावप्रकाशिका *

दिनिगदेषु आज्यपानित्येवमविकृत एव प्रयोगः, नतु पृषदाज्यपानित्यूहेन प्रयोग इति दशमे निर्णीतम्. तद्वदिहापि विशेष्यमात्रवाचिनोपिशब्दस्य चिदचिद्विशिष्टे प्रयोग उपपद्यत इति वदन्ति । अर्थक्रियाकारित्वादित्यनेन हेतुभावानुपपत्तिरुक्ता । उत्पत्तिमत्त्वादित्यनेन हेतुमद्भावानुपपत्तिरुक्तेति द्रष्टव्यम् ॥

( हेतुसापेक्षत्वञ्च न दृष्टमिति ) प्रपञ्चस्य तु तत्सापेक्षत्वान्न मिथ्यात्वं युक्तमिति भावः । ( न चाङ्कुरादिसामग्र्येव भ्रमसामग्रीति ) तद्भ्रमसामग्रीत्यर्थः । ( भिन्न-

वृद्धिरेव फलं भवति– [1] "मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इति शास्त्रात् । [2] "उत्तमः पुरुषस्त्वन्यः" [3] "पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविसजातीयस्य तदन्तर्य्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ॥ अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात्तस्य निवर्तकान्तरं मृग्यम् । निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य क्षणिकत्वात्स्वयमेव नश्यतीति चेत्. न तत्स्वरूपतदुत्पत्तिविनाशानां

* श्रुतप्रकाशिका *

माह ( मिथ्यैतदिति ) ऐक्यस्यातात्त्विकत्वकण्ठोक्तिर्दर्शिता । ऐक्यस्यासत्यत्वं यथा फलति तथा भेदज्ञानस्यैव मोक्षहेतुत्वमाह ( उत्तम इति ) स्मृतिवचसोः सङ्गत्यर्थं श्रुतेः पश्चादुपादानम् , ऐक्यज्ञानस्य निवर्तकत्वे प्रमाणविरोध उक्तः ॥ अथ तर्कविरोधमाह ( अपिचेति ) दावानलविषनाशकविषदृष्टान्ताभिप्रायेण शङ्कते ( निवर्तकज्ञानमिति ) निवर्तकज्ञानं तद्विनाशश्च किं ब्रह्मव्यतिरिक्तम् ? उत स्वरूपम् ? इति विकल्पमभिप्रेत्याह ( नेति ) ब्रह्मव्यतिरिक्तत्वाद्घटादेरिव विनाशस्य काल्पनिकत्वम् , यथा स्वप्नपदार्थस्वरूपतदुत्पत्तिस्थितीनां काल्पनिकत्वान्नाशश्च काल्पनिकः

* भावप्रकाशिका *

विषयस्याभेदज्ञानस्येति ) वस्तुतो भिन्ने विषये उत्पन्नस्याभेदज्ञानस्येत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः इति स्मृत्युपबृंहणीयायाः पृथगात्मानमितिश्रुतेरुपबृंहणात्पश्चादुपादानं कथमित्यत्राह ( स्मृतिवचसोरिति ) स्मृत्योरन्यवसायार्थमित्यर्थः । ( दावानलेति ) यथा दावानल इन्धनानि विनाश्य इन्धननाशे स्वयमेव नश्यति तथेत्यर्थः । ( निवर्तकज्ञानं तद्विनाशश्च किमिति ) ननु विनाशस्यैव दूष्यत्व-

१ वि. पु. २ अं. १४-अ. २७ श्लो.. 
२ गीता. १५-अ. १७ श्लो
३ श्वे. १-अ. ६-वा.

काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्; तथासति निवर्तकज्ञानोत्पत्तिरेव न

* श्रुतप्रकाशिका *

स्तथेति भावः। (विनाशतत्कल्पनाकल्पकरूपाविद्याया इति) विनाशः कल्प्यः, तद्विषयभ्रमबुद्धिः कल्पना, कल्पको भ्रमाश्रयादिः, एवंरूपाविद्याया इत्यर्थः। स्वरूपपक्षं दूषयति (तथा सतीति) पूर्वस्मिन् पक्षे दूषणं प्रकारान्तरेणाप्युक्तं वेदार्थसङ्ग्रहे, भावरूपस्य नाशो ह्युत्तरावस्थाप्राप्तिः, सा चात्रानुपपन्ना, ब्रह्मव्यतिरिक्तस्यावस्थावतोऽन्यस्य स्थित्यभ्युपगमे अद्वैतहानिप्रसङ्गादिति। भावान्तरं ह्यभावः। घटस्य प्रागभावः पिण्डत्वादिपूर्वावस्था, प्रध्वंसः कपालाद्युत्तरावस्था, इतरेतराभावोऽप्यश्वस्य गोत्वाभावः अश्वत्वम्, गोरप्यश्वत्वाभावो गोत्वम्। संसर्गाभावे कथं भावरूपत्वम्? यदि महीमात्रमेव तर्हि घटसंसर्गे सत्यपि संसर्गाभावः स्यात्। यद्व्यतिरिक्तस्तर्ह्यभावोऽङ्गीकृत इति। उच्यते; भवत्पक्षे अभावाश्रयस्य यद्वैलक्षण्यं तदेव संसर्गाभावः यदि महीमात्रमेव अभावाश्रयः, तर्हि भावाश्रय-

* भावप्रकाशिका *

प्रतीतेर्ज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इति कथमुच्यत इति चेन्न; विनाशस्य न केवलं ब्रह्मव्यतिरिक्ततया मिथ्यात्वम्, अपि तु निवर्तकज्ञानस्य मिथ्यात्वेन तत्प्रतियोगिकस्य विनाशस्यापि मिथ्यात्वमिति दूषणस्फोरणाय निवर्तकज्ञानस्यापि ब्रह्मस्वरूपव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इत्युक्तम्। अत एव भाष्ये—तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेनेति ज्ञानस्वरूपस्य काल्पनिकत्वमुक्तम्। नन्वेवं ज्ञानस्वरूपविनाशयोरेव काल्पनिकत्वस्य वक्तव्यतया ज्ञानोत्पत्तिकाल्पनिकत्वोक्तिः किमर्थेति चेन्न; दृष्टान्ततया तदुपन्यासोपपत्तेः। केचित्तु तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेनेत्यस्य विनाशकल्पनोपपादकत्वात्, तद्विनाशो ब्रह्मस्वरूपमेवेति चेदिति भाष्येपि विनाशस्यैव प्रतीतेश्च विनाशपरिग्रह एव युक्तः, अतो निवर्तकज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पो न हृदयङ्गम इति वदन्ति। (एवंरूपाविद्याया इत्यर्थ इति) उपादानोपादेययोरभेदोपचारादेवमुक्तमिति द्रष्टव्यम्।

स्यात्, तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवात् ॥ अपिच चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता ? अध्यासरूप इति चेत् . न ; तस्य

* श्रुतप्रकाशिका *

भूतलेऽप्यभावाश्रयत्वप्रसङ्गः, तत्रापि महीमात्रसद्भावात् । यदि केनचिद्विशेषेण विशिष्टं भूतलमभावाश्रयः स एव विशेषस्संसर्गाभाव इति । कालविशेषविशिष्टत्वे सति देशविशेषत्वमेव, स च विशेषः । तदानीमेव घटसहितप्रदेशान्तरव्यावृत्त्यर्थं देशविशेषत्वमित्युक्तम्; तस्यैव देशस्य कालान्तरे घटसहितस्य व्यावृत्त्यर्थं कालविशेषविशिष्टत्वे सतीत्युक्तम् । यथाऽऽहुः "संसर्गाभावमेवं विदुरिह सुधियो भावमेव स्वभावं मन्वानाः कुम्भवद्भूतलत इतरभूभागभेदस्स्वभावः । यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः कुम्भाभावाश्रयोऽन्यैरगणि स इह नः काधिकस्योपलम्भः ॥" इति । नाशस्यावस्थान्तरत्वात्कर्मनाशं वदतस्तवापि चोद्यं तुल्यमिति चेत् . न ; कर्म ह्यस्मत्पक्षे भगवत्प्रीत्यप्रीतिरूपम्, तत्र यः संसारफलानुगुणस्सङ्कल्पः तद्विनाश्यं कर्म, यस्तु मोक्षानुगुणस्सङ्कल्प स एव पूर्वस्य नाश इत्युपपन्नमेव "धातुः प्रसादान्महिमानमीशम्" इत्यादिभिः ॥ अथ निवर्तकज्ञानस्य ज्ञात्रनुपपत्तिमाह ( अपिचेति ) नहि स्वरूपभूतज्ञानस्य ज्ञात्रन्तरापेक्षा , अतस्तद्व्यावृत्त्यर्थं कृत्स्ननिषेधविषयज्ञानस्येत्युक्तम् , प्रमाणजन्यज्ञानं हि साश्रयमेव दृष्टम्. ज्ञाता किं ब्रह्मव्यतिरिक्तः ? उत नातिरिक्तः ? इतिविकल्पाभिप्रायेणाह–चिन्मात्रेति प्रथमम् । धर्मिप्रश्नः कोऽयमिति । ब्रह्मव्यतिरिक्तपक्षे दूषणमाह ( नेति ) कर्मकर्तृत्वविरोधादिति भावः । निवर्त्यत्वे सति हि कर्म-

* भावप्रकाशिका *

( कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेश इति ) कालविशेषविशिष्टदेशविशेष इत्यर्थः । ( तवापि चोद्यं तुल्यमिति चेदिति ) निश्शेषकर्मस्वरूपनाशो न स्यादिति भावः । ( विकल्पाभिप्रायेणाहेति ) चिन्मात्रेत्यनुक्त्वा ब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्येत्युक्तौ ब्रह्मशब्दार्थे चिन्मात्रव्यतिरिक्तानामपि केषाञ्चिदनुप्रवेशसम्भवेन ब्रह्मशब्दार्थव्यतिरिक्तकृत्स्नपारमार्थ्यनिषेधे चिन्मात्रव्यतिरिक्तकृत्स्न-

निषेध्यतया निवर्तकज्ञानकर्मत्वात्तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमिति चेत्; ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वम् किं स्वरूपम्? उताध्यस्तम्? अध्यस्तं चेत्, अयमध्यासः तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात् । ब्रह्मस्वरूपस्यैव ज्ञातृत्वे अस्मदीय एव पक्षः परिगृ-

* श्रुतप्रकाशिका *

कर्तृविरोधः, अतस्तत्परिहारार्थं स्वरूपपक्षं शङ्कते (ब्रह्मेति) ज्ञातृत्वधर्मविकल्पोऽयं किं स्वरूपमिति । स्वरूपम्—स्वाभाविकमित्यर्थः । पाश्चात्यत्वेन बुद्धिस्थतया अध्यस्तपक्षं दूषयति (अध्यस्तं चेदिति) (निवर्तकज्ञानाविषयतया तिष्ठत्येवेति) ज्ञातृत्वाध्यासस्य तन्मूलाविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वात् निवर्तकान्तरस्य च भवद्भिरनभ्युपगमात् तदुभयं तिष्ठत्येवेति निश्शेषाविद्यानिवृत्तिर्न स्यादित्यर्थः । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि कस्यचित् कञ्चित् प्रति सिद्धिरूपतया ज्ञात्रपेक्षयाऽनवस्था स्यादित्याह (निवर्तकेति) आद्यं शिरो दूषयति (ब्रह्मस्वरूपस्येति) निरुपाधिकस्यैव ब्रह्मस्वरूपस्याभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तः स्यादित्यर्थः ।

* भावप्रकाशिका *

पारमार्थ्यनिषेधाभावेन तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वादिति दूषणस्यालग्नकत्वापत्तेर्भिन्मात्रेतिपदमावश्यकमिति भावः । (प्रथमं धर्मिप्रश्न इति) उत्तरत्र ज्ञातृत्वधर्मविकल्पस्य करिष्यमाणत्वादेवमुक्तमिति द्रष्टव्यम् । स्वरूपमित्यस्य यथाश्रुतार्थत्वे ब्रह्मस्वरूपस्यैव ज्ञातृत्वे इति दूषणभाष्यासामञ्जस्यं मन्वान आह स्वरूपमिति । (स्वाभाविकमित्यर्थ इति) भाष्ये—अध्यस्तश्चेत् अयमध्यासस्तन्मूलाविद्यान्तरञ्च इत्यादि । अध्यस्तस्य ज्ञातुर्निवर्तकज्ञानाश्रयत्वलक्षणज्ञातृत्वस्य तत्कल्पकाविद्यायाश्च निवर्तकज्ञानानुगुणतया निवर्तकज्ञानोपजीव्यस्य तद्बाध्यत्वाभावादित्यर्थः । अत्र तस्मादित्युपसंहारभाष्यावतारिकाग्रन्थपर्यन्तो ग्रन्थः लेखकदोषात् पतित इति वदन्ति । भाष्ये—तस्यापि त्रिरूपत्वादिति ।

हीतः स्यात् । निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं 'भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नम्" इत्यस्यामेव छेदनक्रियायामस्य छेत्तुरस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवदुपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति, स्वनाशस्यापुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलमनेन दिष्टहतमुद्गराभिघातेन । तस्मादनादिकर्मप्र-

---

* श्रुतप्रकाशिका *

ब्रह्मव्यतिरिक्तस्य ज्ञातुर्निवर्तकज्ञानस्य च ब्रह्मव्यतिरिक्तत्वरूपोपाधिकोडीकारबलेन प्रपञ्चतन्मूलाविद्यानिवर्तकज्ञानेनैव निवृत्तिर्भविष्यतीत्याशङ्क्य व्याघातेन दूषयति ( निवर्तकज्ञानस्वरूपमिति ) ज्ञातुरपि निवर्तकज्ञाननिवर्त्यत्वे निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिश्च न स्यादित्याह ( अध्यस्तो ज्ञातेति ) ज्ञातृनाशस्य परमपुरुषार्थरूपब्रह्मस्वरूपत्वात् नापुरुषार्थतेत्याशङ्क्याह ( तन्नाशस्येति ) पूर्वपक्षनिराकरणमुपसंहरति ( इतीति ) एवं ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वनिराकरणेन बन्धस्य सत्यत्वसिद्धेस्तन्निवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेति कर्मविचारपूर्ववृत्तत्वं युक्तमित्याह ( तस्मादिति ) तस्मात्– साधनचतुष्टयस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः ; तच्च निर्विशेषब्रह्माध्यस्तप्रपञ्चस्य कर्मनिरपेक्षज्ञाननिवर्त्यत्वम् , तच्चानुपपन्नमित्युपपादनेन वस्तुसामर्थ्यासिद्धेरित्यर्थः ।

❁ भावप्रकाशिका ❁

निवर्तकज्ञानान्तरस्य कल्पकाविद्याज्ञातृसापेक्षत्वेन त्रिरूपत्वादित्यर्थः । प्रथमं दूषयति; भाष्ये–ब्रह्मस्वरूपस्यैव ज्ञातृत्व इति । ज्ञातृत्वस्य ब्रह्मस्वाभाविकत्व इत्यर्थः । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमात्पुरुषार्थत्वमस्त्वित्याह; भाष्ये–तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगम इति । ( तस्मात् साधनचतुष्टयस्येति ) तस्मादिति व्याख्येयं पदम् ।

वाहरूपाज्ञानमूलत्वाद्बन्धस्य तन्निवर्हणमुक्तलक्षणज्ञानादेव। तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या। तत्र केवलकर्मणामल्पास्थिरफलत्वम्, अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणाम् उपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते। केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न सम्भवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्म-

---

* श्रुतप्रकाशिका *

स्वरूपानादित्वव्यावृत्त्यर्थं प्रवाहशब्दः, अनिर्वचनीयव्यावृत्त्यर्थः कर्मशब्दः। उक्तलक्षणज्ञानादेव– उपासनात्मकादेव। तदुत्पत्तिर्वर्णाश्रमोचितकर्मलभ्याऽस्तु, ततः किमुपासनादिस्वरूपज्ञानं प्रति प्रस्तुतकर्मविचारपूर्ववृत्तत्वस्येत्यत्राह (तत्रेति) कर्मविचारादेव तस्याल्पास्थिरफलत्वज्ञानं फलितमिति भावः। (अनभिसंहितफलेति) 'यज्ञेन दानेन' इत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्पदार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानादृते उपासनद्वारा अनन्तस्थिरफलत्वरूपं विशेषणं च न ज्ञायत इति भावः। ततः किमित्यत्राह (केवलेति) केवलाकारः– आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः। हानार्थमुपादानार्थं च हि कस्यचिज्ज्ञानम्, तत्र फलद्वारा कर्म त्याज्यम्, स्वरूपेणोपादेयम्, उभयार्थं ज्ञानं कर्मविचारादृते न सिध्यति। तस्मात्कर्मविचारनिवृत्तौ तज्ज्ञानफलं हानमुपादानं च न सम्भवतीत्यर्थः। अथातश्शब्दार्थं निगमयति (इति कर्मविचारानन्तरमिति) ब्रह्मविचारः कर्तव्य इत्यनेन ब्रह्मजिज्ञासाशब्दार्थः

* भावप्रकाशिका *

(आत्मयाथात्म्यबुद्धिसंस्कारशून्याकार इति) भगवच्छेषत्वज्ञानपूर्वकत्वराहित्यं केवलाकारः। (हानमुपादानञ्च न सम्भवतीत्यर्थ इति) नित्यनैमित्तिकायज्ञक-

विचारः कर्त्तव्य इत्यथात इत्युक्तम् ॥

—:( अधिकरणपूर्वपक्षः ):—

तत्र पूर्वपक्षवादी मन्यते वृद्धव्यवहारादन्यत्र

* श्रुतप्रकाशिका *

उक्तः, विचारस्य कर्तव्यतायां नातीव विवादः, शाब्द आर्थ इत्येतावदेव हि वैषम्यम् । अथातश्शब्दार्थे एव ह्यतीव विवादः, अतो ऽथात इत्येतावदुपात्तम् , एवं सूत्रस्याक्षरयोजना कृता ॥ .... .... .... .... .... ....

अथ तात्पर्यार्थ उच्यते— तत्रेत्यादिना । अक्षरयोजनायां परेणान्यथोक्तो-ऽक्षरार्थश्च निरस्तः, तन्निरसनसमय एव परेणान्यथोक्तस्तात्पर्यार्थोऽपि निरस्तः, परेण हि प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानाय ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा प्रपञ्चस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् ज्ञानाय स आरम्भणीय इति सिद्धान्तितम् ; तच्च पूर्वं निरस्तम् । अथ सूत्रकाराभिप्रेतां तन्निरसनीयशङ्कामुपन्यस्य तदभिप्रेतं तत्परिहारं च वक्तुमारभते ( तत्रेत्यादिना ) कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इत्युक्त्वा सिद्धवस्तुनि शब्दव्युत्पत्त्यसम्भवात् ब्रह्मविचारः कर्तव्य इति वचनं व्याहतमिति परिचोदनं पूर्वमीमांसानभिज्ञत्वकृतम् । 'अथातो धर्मजिज्ञासा' इत्यत्र अध्ययनानन्तरं तत एव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा प्राभाकरैरध्ययनस्याचार्यकाधिकारकत्वात् धर्मविचारः कर्त्तव्यः

ঌ भावप्रकाशिका ঌ

ब्रह्मोपासनमनन्तस्थिरब्रह्मप्राप्तिसाधनमिति आपातप्रतीतिरनवगतकर्मविचारस्य न सम्भवतीत्यर्थः । ननु हानोपादानशब्दाभ्यामननुष्ठानानुष्ठाने विवक्षिते, तादृशकर्मानुष्ठानाननुष्ठानयोर्ब्रह्मोपासनयुक्तत्वेपि ब्रह्मविचारानुपयुक्ततया ब्रह्मविचारपूर्ववृत्तत्वकथनावसरेऽनुपयुक्तत्वादिति द्रष्टव्यम् ॥ .... .... .... .... .... ....

ननु, वचनं व्याहतमिति वदतः कोऽभिप्रायः ? विचारः कर्तव्य इति सूत्राक्षरयोजनानन्तरं न कर्तव्यमिति पूर्वपक्षप्रदर्शनमयुक्तमिति वा ? उत सिद्धव्युत्पत्तेः सूत्रकारेणासूचनान्नैवं पूर्वोत्तरपक्षौ युक्ताविति वा ? इति विकल्पमभिप्रेत्य प्रथमं दूषयति ( अथातो धर्मजिज्ञासेत्यत्रेति ) ( प्राभाकरैरध्ययनस्याचार्यकाधिकारत्वादिति ) अयं भावः,—मतद्वयेप्यध्ययनस्यार्थज्ञानार्थत्वाभावाद्विचारो नारम्भणीय

* श्रुतप्रकाशिका *

इति पूर्वपक्षं कृत्वाऽर्थबोधाधिकारत्वात्कर्तव्य इति सिद्धान्तितम् । भाट्टैस्त्वध्ययनस्य स्वर्गार्थत्वान्न धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वात्सः कर्तव्यः इति सिद्धान्तितम् । तच्च व्याहतं , भवत्पक्षे; तत्र हि सूत्राक्षराणि योजयित्वा तात्पर्यार्थ उक्तः , अत्राप्यक्षरार्थमुक्त्वा तात्पर्यार्थ उच्यत इत्युपपन्नम् ।

५ भावप्रकाशिका ५

इति पूर्वपक्षः, अर्थज्ञानार्थत्वादारम्भणीय इति सिद्धान्तश्च समान एव । भाट्टमते विश्वजिन्न्यायेनाध्ययनस्य स्वर्गार्थत्वेनार्थज्ञानार्थत्वाभावात् धर्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादर्थज्ञानमेव फलम्. नचाध्ययनस्यार्थज्ञानसाधनत्वस्य प्राप्तत्वाद्विधिवैयर्थ्यं शङ्कनीयम् , नियमार्थतयाप्युपपत्तेरिति सिद्धान्तितम् । गुरुमते तु "आचार्यकनियोगार्थं स्वाध्यायस्तत्प्रयुक्तितः । प्रथमावगतत्वेन तद्धि युक्तं प्रयोजनम् ॥ नतु वाक्यार्थविज्ञानं तद्धि पश्चात्प्रतीयते । तेनाविवक्षितार्थत्वाद्वेदस्यार्थविचारणम् ॥ न कर्तव्यमतश्शास्त्रं मीमांसाख्यमनर्थकम्" 'स्वाध्यायोऽध्येतव्य' इति स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां प्रथमावगतत्वेनाचार्यकनियोग एवास्य प्रयोजनम् , नत्वर्थज्ञानम्; पश्चाद्भावित्वात् । यद्यपि पुरुषान्तरगामित्वेन बहिरङ्गमाचार्यकम् , तथापि प्रथमावगतत्वेन तत्सिद्धिरेवास्य प्रयोजनं युक्तम्, नत्वर्थज्ञानम् , पश्चाद्भावित्वात्. तेनान्यार्थत्वाद्वेदाध्ययनस्याविवक्षितोऽर्थः । अविवक्षितश्च न निर्णेतव्यः, निर्णिनीषितार्थप्रयोजनाभावात् , अनिर्णेतव्यश्चार्थो न विचारमर्हतीति. तदात्मकं मीमांसाशास्त्रमनर्थकत्वादनारम्भणीयमिति पूर्वः पक्षः । कथमाचार्यकरणविधिप्रयुक्तमध्ययनं न स्वविधिप्रयुक्तम् ? उच्यते; न स्वाध्यायविधावस्ति नियोज्यः , तत्र चासति न प्रयोजकता युक्ता, प्रयाजादिनियोगवत् , न ह्यधिकारस्य स्वविषयानुष्ठापकत्वं सम्भाति , प्रयाजादिविधिवत् । नचाध्ययनविधेरधिकारी श्रूयते , तस्मान्नास्य प्रयोजकत्वं सम्भवति । नच कल्पयितुं शक्यो नियोज्यः , पितृयज्ञवदकल्पितेपि तस्मिन्यदनुष्ठानं प्रसिध्यति , स्यादेतत्; अश्रूयमाणोपि नियोज्यः पितृयज्ञवत्कल्प्यत इति । तन्न; अकल्पितेपि तस्मिन् यतोपिऽनुष्ठानं प्रसिध्यति, सिद्धे तस्मिन् नासौ कल्पयितुं शक्यः, अनुपपत्त्यभावात् । अनुष्ठानाधीनसिद्धिर्हि

* श्रुतप्रकाशिका *

अक्षरयोजनायां ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः , कर्मणोऽल्पास्थिरफलत्व-निर्णयविशिष्टानन्तस्थिरफलापातप्रतीतिः । अनन्तस्थिरफलापातप्रतीतिर्नास्ति

* भावप्रकाशिका *

नियोगस्तत्सिध्यर्थमनुष्ठातारमाक्षिपन्ननधिकारिणोऽनुष्ठातृत्वायोगात् अनियोज्यस्या-धिकारासम्भवात् नियोज्यं कल्पयति । प्रयाजादिनियोगवत्सम्भवति चेहाचार्य-करणविध्यनुष्ठापितेनैव विपर्ययेणाध्ययननियोगसिद्धिरिति न नियोज्यकल्पना-सम्भवः, कथं पुनराचार्यकरणविधिरध्ययनं प्रयुङ्क्ते ? उच्यते; उपनीयाध्या-पनादाचार्यकं भवति , नचाध्ययनमन्तरेणाध्यापनं सम्भवतीति तदाक्षिपति, उपनयनमध्यापनसमानकर्तृकमेवावगम्यमानं तदङ्गमेव विज्ञायते, कथं समान-कर्तृकत्वमुपनीयेति क्त्वाश्रवणादेव तस्मात्तदङ्गं तस्य च द्वारापेक्षायामुपनेयास-क्तिरेव लिङ्गाद्द्वारमवगम्यते, उपनेयो हि नाकिञ्चित्करोऽङ्गमिति तद्व्यापारापेक्षाया-मुपनयनप्रकरणाधीतमध्ययनमध्यापनोपकारित्वात्तद्व्यापारत्वेनाध्यवसीयते , एवञ्च वैधमेवाध्ययनं कुर्वन्माणवकोऽध्यापनस्योपकारीत्यवगमात् तद्विषयमेवाध्यापनमा-चार्यकसाधनम्— इति । तद्द्वारेण सर्वस्याध्ययनाङ्गस्य तदुपकारित्वादध्ययनार्थस्य व्रतादेस्तत एवानुष्ठानसिद्धिः , तस्मादाचार्यकरणविधिप्रयोजनकत्वादध्ययनस्याविव-क्षितार्थत्वाद्वेदस्य तदर्थनिर्णयार्थं नारब्धव्यमिति । सिद्धान्तस्तु,— सत्यमाचार्य-करणविधिप्रयुक्तमध्ययनम्, नतु तत्सिद्धिरेवास्य प्रयोजनम् बहिरङ्गत्वात्, अन्तरङ्ग-त्वादध्येतृगतमेवार्थज्ञानं प्रयोजनत्वेनाध्यवसीयते । ननु प्रथमावगतत्वेन प्रयोजना-पेक्षमध्ययनमध्यापनविध्यवगतमाचार्यकमेव तावत्स्वीकरोति , स्वीकृते च तस्मिन्न-पेक्षाभावात् पश्चादवगतत्वेनान्तरङ्गमप्यर्थज्ञानं न प्रयोजनीकरोति । मैवम्,— प्रथममाचार्यकस्य प्रयोजनत्वानवकल्पनात् यद्यकल्पितेपि तस्मिन्ननुष्ठानमध्ययनस्य न सिध्येत्, ततः कल्प्येत, न त्वेतदस्ति; अकल्पितेपि तस्मिन्ननुष्ठानलाभात्, अनु-ष्ठिते त्वध्ययने प्रयोजनापेक्षायामन्तरङ्गत्वात् , अर्थज्ञानमेव फलमङ्गीक्रियते । ननु नियोग एव शब्दावगतः प्रयोजनं स्यात्, नार्थज्ञानम्. न, अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात्, तेनोभयोरपि प्रयोजनत्वं युक्तम्. अवगतत्वादर्थ-ज्ञानस्य नियोगस्य च तत्रार्थज्ञानरूपं प्रयोजनं विचारमन्तरेणाध्ययनेन सम्पाद-

* श्रुतप्रकाशिका *

चेत् अल्पास्थिरफल एव तृप्तः स्यात्, अल्पास्थिरफलत्वनिर्णयो नास्ति चेत् न निर्वेदः स्यादिति विशिष्टो हेतुः । अत्रापातप्रतीतिस्सम्भावितप्रामाण्या विवक्षिता, तादृशी हि सा प्रवृत्तिहेतुः , तत्र ब्रह्मज्ञानस्यानन्तास्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनाऽनुपपन्ना , सिद्धवस्तुनि शब्दस्य बोधकत्वनिश्चयाभावादिति विशिष्टहेतौ विशेष्यांशासिद्धिमाशङ्क्य सिद्धवस्तुनि व्युत्पत्तिसम्भवादनन्तस्थिरफलापातप्रतीतिरस्तीति परिह्रियते । अत्र पूर्वपक्षवादी प्राभाकारः, सूत्रकारैर्भविष्यद्दर्शनवेदित्वात्कैश्चिदनुक्तत्वेऽपि सम्भाव्यमानानां प्रतिकूलपक्षाणाम् आशङ्क्य निरसनीयत्वाच्चैवं पूर्वपक्षीकरणं युक्तम् । यद्वा जैमिनिमतं हीदं चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इति । चोदना च क्रियायां प्रवर्तकं वचनम्, तमाशङ्क्य सिद्धवस्त्वपि वेदप्रतिपाद्यमिति सूत्रकारैस्साधयितुं युज्यते । अक्षरयोजनायां ब्रह्मविचारः

* भावप्रकाशिका *

यितुं शक्यत इति अध्ययनविधिरेव तत्सिध्यर्थं विचारमाक्षिपतीति तदात्मकं शास्त्रमारब्धव्यमिति व्याख्यातम् । द्वितीयं दूषयति ( अक्षरयोजनायां ब्रह्मविचारारम्भे इति ) ( प्रामाण्यसम्भावनाऽनुपपन्नेति ) उत्पन्नापीयमवगतिः मूलाभावान्न समीचीना भवितुमर्हतीति प्रामाण्यसम्भावना न भवतीति भावः । ( चोदनालक्षणोर्थ एव वेदप्रतिपाद्य इतीति ) 'अथातो धर्मजिज्ञासा' इति सूत्रे अथशब्दस्य वेदाध्ययनानन्तरमित्यर्थः । ततश्च वेदाध्ययनानन्तरं तदर्थजिज्ञासा इति सूत्रे कर्तव्ये धर्मजिज्ञासेति सूत्रयतो जैमिनेर्धर्म एव कृत्स्नवेदार्थ इति भावोऽवसीयते, ततश्च कृत्स्नवेदार्थस्य धर्मस्य चोदनैव प्रमाणमिति चोदनासूत्रे कथनात् कार्यप्रतिपादकमेव वाक्यं वेदार्थे धर्मे प्रमाणमित्युक्तं भवति ; ततश्च कार्यमेवार्थ इति फलति । ततश्चैवं वदतो जैमिनेस्सिद्धार्थे व्युत्पत्तिरेव नास्ति तत्प्रतिपादने प्रयोजनं चेत्याशयोऽवसीयते, तत्र निष्प्रयोजनत्वं समन्वयाधिकरणे निराकरिष्यते. अधुना सिद्धार्थे व्युत्पत्तिस्समर्थ्यत इति भावः । इदञ्चोपलक्षणम्, आम्नायस्य क्रियार्थत्वादिति कण्ठत एव सूत्रितत्वादित्यपि द्रष्टव्यम् । नच जैमिनेरेव पूर्वपक्षित्वे परस्परविरुद्धयोरैकशास्त्र्यं कथं निर्वहेदिति वाच्यम् ; अन्वारुह्योक्तिप्रतिक्षेपमात्रेण शास्त्रैक्यसम्भवात् । ननु विषयो विशयश्चैवेतिन्यायेनायं विषय इत्थं

शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, व्यवहारस्य

* श्रुतप्रकाशिका *

कर्तव्य इत्युक्तत्वात् ब्रह्मविचारारम्भो न युक्त इति पूर्वपक्षसमाप्तावुक्तत्वाद्ब्रह्मविचारारम्भो युक्त इति स्थितमिति सिद्धान्तस्योपसंहृतत्वाच्च दीपे कण्ठोक्तौ विषयस्संशयश्चेहार्थसिद्धौ , ब्रह्मविचार इत्युक्तत्वात् ब्रह्ममीमांसाविषयं इति सिद्धम् । आरम्भो न युक्तः, युक्त इति चोक्तत्वात्संशयसिद्धिः, ब्रह्ममीमांसा किमारम्भणीया ? उतानारम्भणीया ? इति । तदर्थं चिन्त्यते ; किं वेदान्ता ब्रह्मणि प्रमाणम् ? उत न ? इति । तदर्थं परीक्ष्यते, शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणं सम्भवति, नेति ? तदर्थं विचार्यते, किं वृद्धव्यवहारादन्यत्र शब्दार्थसम्बन्धावधारणं सम्भवति ? न ? इति । वृद्धव्यवहारे च शब्दस्य सिद्धवस्तुबोधकत्वावधारणं सम्भवति ? न ? इति च न सम्भवतीति पूर्वः पक्षः, सम्भवतीति सिद्धान्तः । यदा व्यवहारादन्यत्र न व्युत्पत्तिः , व्यवहारे च शब्दस्य सिद्धरूपार्थबोधकत्वावधारणं न सम्भवति तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चयवतः पुरुषस्यानन्तस्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनाया असिद्धेर्विशिष्टहेत्वभावादनारम्भणीयेति पूर्वपक्षे फलफलिभावः । राद्धान्ते तु, यदा व्यवहारादन्यत्र व्युत्पत्तिर्व्यवहारे सिद्धवस्तुपरत्वावधारणं च सम्भवति तदा शब्दस्य सिद्धरूपार्थे सामर्थ्यात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्यात् प्रामाण्याभावनिश्चयरहितपुरुषस्यानन्तस्थिरफलरूपब्रह्मविषयापातप्रतीतिप्रामाण्यसम्भावनासिद्धेर्विशिष्टहेतुसिद्ध्या ब्रह्ममीमांसा आरम्भणीयेति विचाराणां फलफलिभावः । पूर्वपक्षमुपक्षिपति— तत्रेति । पूर्वं मृषावाद्युक्तं सूत्रतात्पर्यं व्युदस्तम् , तद्व्यावृत्तिं सूचयति तत्रशब्देन । तत्र— प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थः । पूर्वपक्षमुपपादयति ( वृद्धव्यवहारादिति) वृद्धः—व्युत्पन्नः प्रयोज्यः प्रयोजकश्च, तयोर्व्यवहारः—वाचिकः कायिकश्च, व्यवहारादन्यत्र शक्त्यवधारणं माभूत् । ततः किमित्यत्राह (व्यवहारस्य

* भावप्रकाशिका *

संशय इति प्रदर्शनीये कथं तदप्रदर्शनं भाष्ये युक्तमित्याशङ्क्याह ( अक्षरयोजनायामित्यादिना ) ( तत्र— प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थ इति )अत्र केचित् , प्रपञ्चसत्यत्वस्थापनस्य च कार्ये व्युत्पत्तिसमर्थनस्य च हेतुहेतुमद्भावासम्भवं मन्यमानास्तत्रेति

च कार्य्यबुद्धिपूर्वकत्वेन कार्य्यार्थ एव शब्दस्य प्रामाण्य-मिति कार्य्यरूप एव वेदार्थः, अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ति।

* श्रुतप्रकाशिका *

चेति ) कार्यधीपूर्वकत्वफलमाह ( कार्यार्थ एवेति ) ततः फलितमाह ( कार्यरूप इति ) वेदस्य शब्दात्मकत्वाच्छब्दस्य च व्युत्पत्त्यपेक्षत्वादिति भावः। ततः किमित्यत्राह ( अत इति ) अतः– वेदार्थस्य कार्यरूपत्वादित्यर्थः। न प्रमाणभावमनुभवितुमर्हन्ति– प्रामाण्यसम्भावना च नास्ति, अयोग्यत्वादित्यर्थः। प्रथमव्युत्पत्तिर्वृद्धव्यवहारादन्यत्र न सम्भवति, न हि घटोऽस्तीत्युक्ते प्रवृत्त्यभावे सति तस्य बोधकत्वं ज्ञायते, गामानयेत्यादिशब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा प्रवृत्तेः कार्यबुद्धिपूर्वकत्वं जानन् व्युत्पित्सुः, अयं शब्दः कार्यरूपार्थबोधक इति निश्चिनोति; तत्र बहुषु प्रयोगेष्वनुवृत्तशब्दस्यानुवृत्तार्थेन सम्बन्धं व्यावृत्तशब्दस्य व्यावृत्तार्थेन सम्बन्धं गृहीत्वा आवापोद्वापमुखेनार्थविशेषैश्शब्दविशेषसम्बन्धं निश्चिनोतीति प्रथमं व्युत्पत्तिः कार्यार्थ एव। नहि प्रथमत एवास्य शब्दस्यायमर्थ इत्युक्ते अस्य शब्दस्यायमर्थ इत्येतद्वाक्यस्थपदानामर्थप्रतीतिः, एवं कार्यार्थ एव व्युत्पत्तिं कृतवतः पुरुषस्यास्य शब्दस्य अयमर्थ इति पश्चाच्छिक्षितेऽपि प्रथमं कार्यार्थपरतया व्युत्पन्नकतिपयपदसमभिव्याहारदर्शनात्प्रथमव्युत्पत्त्यविरोधेन तत्तच्छब्दार्थसम्बन्धग्रहणात्सर्वे शब्दाः कार्यार्थपरा एवेति गृह्यन्ते ; अतो "य एव लौकिकास्त एव वैदिकाः" इति न्यायाद्वेदान्तास्सिद्धवस्तुनि न बोधका भवन्ती-त्यर्थः। वेदानां संस्कृतशब्दत्वात् भाषान्तरेण प्रथमं व्युत्पन्नस्य पुरुषस्य संस्कृते शब्दे अस्य शब्दस्यायमर्थ इति व्युत्पाद्यमाने प्रथममेव सिद्धवस्तुनि व्युत्पत्तिः कृता स्यादिति चेन्न, कार्यार्थपरत्वेन प्रथमव्युत्पन्नभाषान्तरशब्दानां पर्यायत्वेन व्युत्पाद्य-

* भावप्रकाशिका *

भाष्यस्थपदस्य ब्रह्मविचारारम्भकर्तव्यत्वाकर्तव्यत्वसंशये सतीत्यर्थ इति मन्यन्ते। ( सम्बन्धं गृहीत्वेति ) सम्बन्धो गृह्यत इत्यभिप्रेत्येत्यर्थः। ततश्च 'गामानय गां बधान गां पश्य' इति बहुप्रयोगानुस्यूतगोशब्दस्य सर्वक्रियानुस्यूतगोपिण्डोऽर्थः।

नच पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात् सुलभसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः, नापि व्युत्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा शब्दस्य

* श्रुतप्रकाशिका *

मानत्वात्संस्कृतशब्दा अपि कार्यार्थपरत्वेनैव हि व्युत्पन्नाः स्युः । सिद्धवस्तुनि व्युत्पत्तेर्भाट्टैरुक्तमुदाहरणं व्युदस्यति ( न चेति ) कालत्रयवर्तिनामिति पञ्चिकाया मुक्तम्, तदत्राभिप्रेतम् । देशकालयोग्यतादिभिः पुत्रजन्म जानातीत्यत्राह ( सुलभेति ) सुलभसुखप्रसवादिनाऽन्यथासिद्धिर्नयविवेकोक्ता । आदिशब्देन पित्राद्यरिष्टाभावो भाविसमृद्ध्यादिकं च विवक्षितम् । व्युत्पत्तिर्नाम शब्दस्यार्थविशेषस्सह सम्बन्धग्रहणम्, न स्वर्थमात्रेणेत्येवं दूषणमुक्तम् । नैयायिकादिभिरुक्तमुदाहरणं व्युदस्यति ( नापीति ) व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयोदाहरण-

* भावप्रकाशिका *

व्यावर्तमानानामानयनादिशब्दानां व्यावर्तमानाः क्रिया अर्था इति सम्बन्धग्रहणेवावापोद्धाराधीनशक्तिग्रहरूपतया क्त्वाप्रत्ययार्थपौर्वापर्यानुपपत्तिरितिशङ्काया नावकाशः । ननु हर्षहेतूनामानन्त्यादित्यनेनैव विवक्षितार्थसिद्धेः कालत्रयवर्तिनामित्यनर्थकम्, प्रत्युतायुक्तञ्च. इदानीन्तनहर्षे अतीतानागतयोर्हेतुत्वासम्भवात्, हर्षहेतुशब्दस्य हर्षहेतुज्ञापनपरत्वाश्रयणस्य क्लिष्टत्वाच्चेत्याशङ्क्य पञ्चिकोक्तानुवादरूपत्वाददोष इत्यभिप्रयन्नाह ( कालत्रयवर्तिनामिति ) ( पञ्चिकायामिति ) ननु हर्षहेतुविशेषपरत्वानिश्चयेपि हर्षहेतुमात्रपरत्वं निश्चितमिति कथं व्युत्पत्त्यभाव इत्याशङ्क्याह ( व्युत्पत्तिर्नामेति ) ( व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयोदाहरणमिति ) यद्यपि भाष्ये- व्युत्पन्नेतरपदविभक्त्यर्थस्येति । इतरपदविभक्त्यर्थस्येति इतरपदविभक्त्यर्थव्युत्पत्तिमानेवोदाहृतः, न प्रत्येकम् । प्रत्येकं व्युत्पत्त्यभिप्रायत्वे केवलविभक्तिमात्रव्युत्पत्तेरप्युदाहरणं प्रदर्शनीयं

सिद्धवस्तुन्यभिधानशक्तिनिश्चयः, ज्ञातकार्य्याभिधायि-

* श्रुतप्रकाशिका *

मिदम्, कः कूजतीति प्रश्नस्य पिकः कूजतीति केनचिदुक्ते व्युत्पन्नकूजतिशब्देन व्युत्पित्सुना पिकशब्दार्थो ज्ञायते, व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिदम्, काष्ठैः स्थाल्यामोदनं पचतीत्युक्ते व्युत्पन्नविभक्तिपचतिशब्दार्थेन व्युत्पित्सुना काष्ठादिप्रकृत्यर्थो ज्ञायत इति । (ज्ञातेति) इदानीं श्रुते अस्मिन्

७ भावप्रकाशिका ७

स्यादिति चेत् । सत्यम्; भाष्ये पदान्तरस्य विभक्तेश्च व्युत्पत्तिद्वयमपि प्रयोजकतयोपात्तम् . तथापि केवलं पदान्तरव्युत्पत्तेरपि अर्थनिश्चायकत्वमभिप्रेत्य ग्रन्थकृता भाष्याभिप्रेतत्वेन उदाहृतमिति द्रष्टव्यम् । ( व्युत्पन्न [कः] कूजतिशब्देनेति ) यद्यपि समभिव्याहृतपदान्तरस्यैव व्युत्पन्नत्वं वक्तव्यम्, सान्निध्यतस्सिद्धपदस्य वृद्धा इत्युक्तरीत्या प्रसिद्धपदसमभिव्याहारलक्षणसान्निध्यस्यैव शक्तिग्राहकत्वकथनात्, अत एव 'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ प्रसिद्धपदसामानाधिकरण्यादिभिर्व्युत्पत्तिग्रह इति तार्किकैरप्युदाहृतम्, तथापि क इत्यस्य पिक इत्युत्तरं जानता तु निर्विचिकित्सं शब्दार्थाध्यवसानं सम्भवतीत्यभिप्रेत्य एवमुक्तमिति द्रष्टव्यम् । व्युत्पन्नकूजतिशब्देनेतिपाठस्तु सुगम एव । ( व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिदमिति ) यद्यपि भाष्ये व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयः व्युत्पन्नविभक्तिकस्य प्रकृत्यर्थनिश्चय इति यथासङ्ख्यान्वयस्स्वरसतः प्रतीयते । नच विभक्तिमात्रव्युत्पन्नस्य प्रकृत्यर्थनिश्चयोदाहरणं नास्तीति शक्यम्, देवदत्तश्चन्तं यज्ञदत्तं पश्यति व्युत्सिरसौ देवदत्तो यज्ञदत्तं हन्तीति केनचिद्वाक्ये प्रयुक्ते सुप्तिङ्विभक्त्यर्थज्ञानवतस्तस्य कर्तृकर्मक्रियावाचिपदत्वनिश्चयद्वारा प्रकृत्यर्थनिश्चयसम्भवात्, तथाप्ययमर्थस्सम्भवतीत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् । पिकः कूजतीत्यादौ कूजतिपदार्थनिश्चयेपि पिकपदगतप्रथमार्थापरिज्ञाने कारकान्तरशङ्कया पिककूजतिपदयोस्सामानाधिकरण्याप्रतीतेरर्थानिश्चयात् पदान्तरव्युत्पत्तिविभक्तिव्युत्पत्त्योर्मिलितयोरेव पिकपदार्थनिश्चायकत्वात् । नच कः कूजतीति प्रष्टुर्वाक्ये व्युत्पन्नस्य विभक्त्यर्थापरिज्ञानेपि कूजतिपदव्युत्पत्तिमतः पिकपदार्थनिश्चयस्सम्भवतीति वाच्यम्, क इत्यत्रैव प्रथमाविभक्त्यर्थनिश्चयस्यावश्यकतया विभक्त्यैक्येन

पदसमुदायस्य तदंशविशेपनिश्चयरूपत्वात्तस्य । न च सर्पाद्भीतस्य नायं सर्पो रज्जुरेपेति शब्दश्रवणसमनन्तरं भयनिवृत्तिदर्शनेन सर्प्पाभावबुद्धिहेतुत्वनिश्चयः, अत्रापि निश्चेष्टं निर्विपमचेतनमिदं वस्त्वित्याद्यर्थवोधेषु वहुषु भयनिवृत्तिहेतुषु सत्सु विशेपनिश्चयायोगात् । कार्य्यबुद्धिप्रवृत्तिव्याप्तिवलेन

* श्रुतप्रकाशिका *

वाक्ये पूर्वं कार्यपरतया व्युत्पन्नवाक्यस्थकतिपयपददर्शनादयमपि पदसमुदायः कार्याभिधायीति ज्ञायत इत्यभिप्रायेण ज्ञातकार्याभिधायिपदसमुदायस्येत्युक्तम्, तदंशविशेपः— कार्यांशविशेपः, कार्यं ह्यनेककारकविशिष्टम्, तस्य कार्यस्य विशेपणांशनिश्चयरूपत्वात्। तस्य— पदान्तरार्थनिश्चयस्य प्रकृत्यर्थनिश्चयस्य चेत्यर्थः । यद्वा, तदंशविशेपः— कार्याभिधायिपदसमुदायांशविशेपः मृपावादिभिरुक्तमुदाहरणं दूपयति ( न चेति ) वाचस्पतिनोक्तमर्थमाशङ्क्य परिहरति ( कार्येति ) तेन खल्वेवं सिद्धवस्तुनि प्रामाण्यमुपपादितम्, सर्वशब्दानामर्थोऽनुयायी वक्तव्यः,

* भावप्रकाशिका *

पिकपदविभक्तेरपि निश्चितत्वात् मिलितयोरहेतुत्वमिति भाष्याभिप्रायः । न चैवं सति पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेनवेतिभाष्ये पदान्तरार्थनिश्चयोक्तिरयुक्ता स्यादिति वाच्यम्; लोकप्रसिध्यनुसारेण पदान्तरार्थनिश्चयेनेत्युक्त्वा इत्थमेवानुशयानेन प्रकृत्यर्थनिश्चयेनेति द्वितीयकल्पोक्तिरिति वदन्ति । भाष्ये—पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वेति पदान्तरार्थनिश्चयदर्शनेन प्रकृत्यर्थनिश्चयदर्शनेन वेत्यर्थः । ततश्च तस्यैवाभिधाशक्तिनिश्चयरूपतया हेतुहेतुमद्भावासङ्गतिरिति न चोदनीयम्। (व्युत्पन्नवाक्यस्थकतिपयपददर्शनादिति ) ननु कार्यवाचिपदसमभिव्याहारदर्शनेन तत्समुदायान्तर्गतपदान्तरस्यापि तदभिधायित्वनिश्चये घटवाचिपदान्तरसमभिव्याहारादितरपदस्यापि तथात्वप्रसङ्गात्, प्रत्युत तस्य पर्यायपदत्वशङ्कावहत्वेन तदर्थकत्वाभावनिश्चय एव हेतुत्वादिति चेन्न; उपक्रम एव पदजातस्य कार्यसामान्यवाचित्वं निश्चितवतः पुंसः प्रसिद्धपदसामानाधिकरण्येन उत्पद्यमानाया

* श्रुतप्रकाशिका *

किं कार्यरूपार्थाभिधायित्वमनुयायि ? उत कार्यान्वितस्वार्थाभिधायित्वम् ? उत कारकान्वितस्वार्थाभिधायित्वम् ? प्रथमे कारकपदेषु व्यभिचारः, तेषां कार्याभिधायित्वाभावात् । द्वितीये लिङादिषु व्यभिचारः, तेषां कार्यान्वितस्वार्थाभिधायित्वाभावात् । तृतीये च कारकपदेषु व्यभिचारः, तेषां कारकान्वितस्वार्थाभिधायित्वाभावात्; तस्मादन्यान्वितस्वार्थाभिधायित्वं पदानामनुयायीति वक्तव्य-

* भावप्रकाशिका *

वाच्यवाचकभावप्रतीतेस्तद्विशेषरूपत्वेन प्रथमावगतकार्यसामान्यवाचित्वपरित्यागासम्भवात् । तदंशविशेषनिश्चयरूपत्वादिति भाष्ये तच्छब्दं कार्यपरतया व्याख्याय सन्निहितपदसमुदायपरतया व्याचष्टे ( यद्वा तदंशविशेष इति ) ( तृतीये च कारकपदेषु व्यभिचार इति ) नच कारकान्वितस्वार्थाभिधायित्वसत्त्वेपि कार्यार्थत्वासिद्धेरेतत्पक्षनिरासो व्यर्थ इति वाच्यम्, क्रियाया एव कारकान्वितत्वेन सर्वपदानां कारकान्वितस्वार्थाभिधायित्वे कार्यवाचित्वस्यावर्जनीयतया तस्यापि प्रतिक्षेप्यत्वात् । ननु कारकान्वितस्वार्थाभिधायित्वे कारकाणां क्रियाविनाभूततया क्रियामात्रवाचित्वसिद्धावपि कार्याभिधायित्वस्यानावश्यम्भावादितिहासपुराणादौ तथैवोपलब्धेरिति चेत् . सत्यम्; सिद्धान्तिना सर्वपदानां क्रियावाचित्वस्यापि प्रतिक्षेप्यतया अस्यापि पक्षस्योद्धाटननिरासनोपपत्तेः । अत्र केचित्,— वाचस्पतिनानेन प्रकारेण सिद्धवस्तुप्रामाण्योपपादनप्रकारः कुतो न दृश्यते ? तत्र हीत्थं वाचस्पतिवाक्यम्; अपि च 'आम्नायस्य क्रियार्थत्वा'दिति शास्त्रकृद्वचनम् . तत्रार्थग्रहणं यद्यभिधेयवाचि, ततो भूतार्थानां द्रव्यगुणशब्दानामानर्थक्यमभिधेयत्वं प्रसज्येत. नहि ते क्रियार्थाः । यद्युच्येत न क्रियार्थत्वं क्रियाभिधेयत्वम्, अपि तु क्रियाप्रयोजनत्वम् . द्रव्यगुणशब्दानाञ्च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानं कार्यमर्थमवगमयतीति हि चोदनाभूतादिकमप्यर्थमवगमयति. तदपि 'न कार्यशेषभूत एवार्थे न सङ्गतिग्रहे' इत्येतदुपपादितम् भूतेप्यर्थे व्युत्पत्तिं दर्शयद्भिः, नापि स्वार्थमात्रपरतैव पदानाम् . तथा सति न वाक्यार्थप्रत्ययः । नहि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा. तस्मात्पदानां स्वार्थमभिदधतामेकप्रयोजनवत्पदार्थपरतया एकवाक्यता ; तथाच तत्तदर्थान्तरविशिष्टैक-

* श्रुतप्रकाशिका *

मन्वितामिधायित्ववादिना । अन्यान्वितत्वं सिद्धवस्तुनोऽपि स्यादिति कार्यरूपार्थ एव व्युत्पत्तिरिति निर्बन्धोऽनुपपन्न इति । इमां शङ्कामभिप्रेत्य परिहरति ( कार्य-

* भावप्रकाशिका *

वाक्यार्थप्रत्यय उपपन्नो भवति, तथाच अर्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ 'न कार्यसंसर्गनियमः पदार्थानाम्' इति । नास्मिन् वाचस्पतिवचनसन्दर्भे एते विकल्पा दृश्यन्ते, नाप्यनेन प्रकारेण दूषणम्, अस्य हि सन्दर्भस्यायमर्थः, 'आम्नायस्य क्रियार्थत्वा' दित्यत्र किमभिप्रेतम् ? । सर्वपदानां कार्यवाचित्वम् ? उत कार्यान्वितत्वच्छेपवाचित्वम् ? नाद्यः, द्रव्यगुणवाचिशब्देषु तदभावात् । न द्वितीयः, सिद्धार्थेपि व्युत्पत्तेरुपपादनात् । नन्वेवमितरान्विताार्थकत्वमपि न स्यादिति चेन्न; स्वार्थाभिधायिशब्दैर्लक्षणया इतरान्वयविशिष्टप्रतीतिरिति । अत्र च श्रुतप्रकाशिकाग्रन्थोक्तविकल्पत्रयं न दृश्यते, दूषणप्रकारोपि नेदृशो लक्ष्यते, भूतार्थेपि व्युत्पत्तिदर्शनस्थलेपि नायं विकल्पः प्रदर्शितः, एवं हि तत्र वाक्यम्, इदमत्राकूतम्, "कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा । सिद्धबोधे भवत्येवं शास्त्रत्वं हितशासनात् ॥" यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवगतं भवेत्. न भवेदहेयानुपादेयभूतब्रह्मात्मगतापरत्वमुपनिषदाम्, तत्राविदितसामर्थ्यत्वात्पदानाम्, लोके तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः । अथ तु भूतेप्यर्थे पदानां लोके शक्यस्सङ्गतिग्रहः, तत उपनिषदां तत्परत्वं पौर्वापर्यालोचनया अवगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुम्. श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । तत्र तावदेवं कार्यार्थेन सङ्गतिग्रहो यदि तत्परः प्रयोगो लोके न दृश्येत तदवगत्यो वा व्युत्पन्नस्योन्नेतुं न शक्येत . न तावत्तत्परः प्रयोगो न दृश्यते लोके, कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसन्दर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः । तद्यथा;—"आखण्डलादिलोकपालचक्रवालाधिवसतिस्सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदवनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजस्सुमेरुः" इति । नैष भुजङ्गो रज्जुरित्यादिनापि भूतार्थबुद्धिः व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुम्, हर्षादेरुन्नयनहेतोरसम्भवात् ।

शब्दस्य प्रवर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैः पदैः कार्य्यस्यैव विशिष्टस्य प्रतिपादनान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः । इष्टसाधनताबुद्धिस्तु कार्य्यबुद्धिद्वारेण प्रवृत्तिहेतुः, न

* श्रुतप्रकाशिका *

बुद्धीति ) कार्यबुद्धिप्रवृत्तिव्याप्तिबलेनेति उत्तरत्र सर्वपदानां कार्यपरत्वेनेत्यनेनान्वयः । शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनाच्छब्दस्य प्रवर्तकार्थावबोधकत्वात्कार्यबुद्धेः प्रवृत्तेश्च व्याप्तिबलेन प्रवर्तकस्य च कार्यरूपत्वात्सर्वैः पदैः कार्यमेव विशिष्टं प्रतिपाद्यते ; तस्मान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः, अपि तु विशिष्टकार्यांशविशेषे पदशक्तिनिश्चय इत्यर्थः । ननु कार्यमेव प्रवर्तकं चेत्प्रवर्तकस्य शब्दार्थत्वात्सर्वशब्दानां कार्यपरत्वं स्यात्, तन्न, इष्टसाधनताबुद्धेः प्रवर्तकत्वादिति भाट्टोक्तमर्थमाशङ्क्याह ( इष्टसाधनतेति ) स्वप्रयोजनोपायः परेण साध्यते चेत्तत्रापि

ॐ भावप्रकाशिका ॐ

तथाहि; 'अविदितार्थजनभाषार्थो द्रमिडो नगरगमनोद्यतो राजमार्गाभ्यर्णे देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मवार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः पट्टवासोपायनार्पणपुरस्सरं दिष्ट्या वर्धसे देवदत्त पुत्रस्ते जात इति वार्ताहारव्यवहारश्रवणसमनन्तरमुपजातरोमाञ्चकञ्चुकं विकासिनयनोत्पलमतिस्मेरमुखमहोत्पलं विलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, प्रमोदस्य च प्रागभूतस्य तद्व्यवहारश्रवणसमनन्तरं भवतस्तद्धेतुकताम् । नचायं प्रतिपादयन् हर्षहेतुमर्थमहर्षाय कल्प्यत इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपाद्यते, हर्षहेत्वन्तरस्याप्रतीतेः, पुत्रजन्मनश्च तद्धेतोरवगमात्, तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति, एवं भयशोकादयोप्युदाहार्याः, तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोप्युपपन्नः, एवञ्च ब्रह्मज्ञानस्य पुरुषार्थहेतुभावात्, अनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्तिवेदान्तानां पुरुषहितशासनात् शास्त्रत्वं सिद्धं भवतीति, अतः कथमिदमुक्तमिति न जानीमह इति चोदयन्ति ; तत्रेदमुत्तरम् । सत्यम्; युष्माभिर्न ज्ञायते, नैतावता विषयस्याप्रमाणत्वम् . नह्ययं स्थाणोरपराधः

स्वरूपेण, अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्य-नुपलब्धेः। इष्टोपायो हि मत्प्रयत्नादृते न सिद्ध्यति ; अतो मत्कृतिसाध्य इति बुद्धिर्यावन्न जायते तावन्न प्रव-र्तते ; अतः कार्य्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्य्यस्यैव वेदवेद्यत्वात् परिनिष्पन्न-रूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः[1] "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिः

* श्रुतप्रकाशिका *

न प्रवृत्तिरिति वर्तमानाया अपीष्टोपायताबुद्धेरप्रवर्त्तकत्वं दृष्टम्, अतः कार्यबुद्धिः प्रवृत्तिव्याप्येत्यर्थः । ननु कार्यबुद्धिरपि प्रवृत्तिं व्यभिचरति, निर्द्धनस्य द्विजस्य यागकर्त्तव्यताबुद्धिमत्त्वेऽपि प्रवृत्त्यभावात् । नैवम् ; मयैवाद्य साधयितुं शक्यमिति बुद्धिर्हि कार्यबुद्धिः, न तस्याः प्रवृत्तिव्यभिचारः, निर्धनस्य हि नैवंविधा प्रतिपत्तिः, किन्तु यागः कदाचित्कर्तव्यः, अर्थादिलाभादनुष्ठाने सति फलप्राप्तिरस्तीति, अतो न दोषः। ततः किमित्यपेक्षायामुपपादितहेतुशरीरं वदन् शङ्कान्तरं च परिहरन् पूर्वपक्षं निगमयति ( अत इत्यादिना ) ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः, तत्र विशेष्यांशस्यानन्तस्थिरफलापातप्रतीतिरूपस्य असिद्धिरुक्ता । अत्र चोद्यमा-पादितम्, मन्त्रार्थवादेपूपासनविधिशेषभूतेष्वनन्तस्थिरफलापातप्रतीतिसिद्धेः न विशे-ष्यांशासिद्धिरिति विशिष्ट एव हेतुरिति एतदाशङ्क्याह (अक्षय्यं ह वा इति) अयमर्थः ;

* भावप्रकाशिका *

यदेनमन्धो न पश्यतीति न्यायात्, स्थलान्तरे ग्रन्थान्तरे च प्रतिपादनसम्भ-वात्, एषामपि वाक्यानां तात्पर्यतस्तदर्थप्रतिपादनसम्भवाच्चेति अलमतिक्षोदेन । शब्दस्य प्रवृत्त्यन्वयव्यतिरेकानुविधायित्वज्ञानोत्पाद्यस्य शब्दे प्रवर्तकार्थावबोधित्वा-वगमस्य कार्यबुद्धिप्रवृत्तिव्याप्तित्वलनिष्पाद्यत्वाभावात् कार्यत्वबुद्धिप्रवृत्त्योः कार्य-करणभावाग्रहेपि शब्दस्य प्रवृत्त्यन्वयव्यतिरेकग्रहमात्रेण प्रवर्तकार्थाभिधायित्वस्य ग्रहणसम्भवादित्यभिप्रयन्नाह ( उत्तरत्र सर्वपदानामिति ) ( अन्यतरांशासिध्य-

[1] आपस्तम्बश्रौतसू: ८-प्र. १-खं. १-सू:

कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति ॥

—:( अधिकरणसिद्धान्ते सिद्धवस्तुनि शब्दव्युत्पत्तिनिरूपणम् ):—

अत्राभिधीयते— निखिललोकविदितशब्दार्थसम्बन्धावधारणप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिका न बहु मन्यन्ते । एवं किल बालाश्शब्दार्थसम्बन्धमवधारयन्ति, मातापितृ-

* श्रुतप्रकाशिका *

यदि मन्त्रार्थवादेष्वनन्तस्थिरफलप्रतीत्या ब्रह्मविचारारम्भः, तर्हि पूर्वभागेऽपि "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति" इत्यादिभिरनन्तस्थिरफलप्रतीत्या अल्पास्थिरफलत्वनिर्णयरूपविशेषणांशासिद्धेर्ब्रह्मविचारारम्भो न युक्त इति । विशिष्टहेतौ विशेषणविशेष्ययोरन्यतरांशासिद्ध्यभिप्रायेण कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तास्थिरत्वज्ञानहेतुक इत्युक्तम् ॥ .... .... ....

( अत्राभिधीयत इति ) अस्मिन् पूर्वपक्षे सूत्रकारैः परिहारोऽभिधीयत इत्यर्थः । ( निखिलेति ) अन्यथा वदता भवतापि वक्ष्यमाणप्रकारेणैव शब्दव्युत्पत्तिः कृतेति निखिललोकशब्दस्य भावः । प्रामाणिकाः— प्रमाणेनार्थं स्वीकुर्वन्त इत्यर्थः । कथं सम्बन्धावधारणमित्यत्राह ( एवं किलेति ) ( मातापितृप्रभृतिभिरिति ) अयं भावः, यदा स्वयमेव बालो व्युत्पत्तिक्षमो भवति तदानीमप्येनं वृद्धै-

* भावप्रकाशिका *

भिप्रायेणेति ) केचित्तु कृतकर्मविचारस्यावृत्तिविधानादिना कर्मफलानित्यत्वादगमरूपविशेषणसम्भवस्याप्येतदधिकरणप्रदर्शनीयतया अंशद्वयासिद्धेरपि वक्तुं शक्यत्वेन यथाश्रुतमेव भाष्यं युक्तमिति मन्यन्ते— इति पूर्वपक्षः ॥ .... ....

(सूत्रकारैः परिहारोभिधीयत इति) इदमुपलक्षणम्, सूत्रकृदभिमतः परिहारोभिधीयत इत्यपि द्रष्टव्यम्, एवं प्रचक्ष्महे इत्यादौ तथैव वर्णनीयत्वात् ( प्रमाणेनार्थं स्वीकृतवन्त इति ) तेन दीव्यति खनति जयति जितमिति दीव्यत्याद्यर्थे

प्रभृतिभिः अम्बातातमातुलादीन् शशिपशुनरमृगपक्षिसर्पादींश्च एनमवेहि इमं चावधारय इत्यभिप्रायेणाङ्गुल्या निर्दिश्य तैस्तैश्शब्दैस्तेषु तेष्वर्थेषु बहुशः

---

* श्रुतप्रकाशिका *

रुपाध्यायादिभिर्व्युत्पादयितुं श्रद्दधाना मातापित्रादयो न हि स्वयं व्युत्पत्त्यनुगदशायामुपेक्षन्ते। किन्तु अक्षरशिक्षाद्युपयोगिनीः शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्तीति, अम्बातातप्रभृतिस्सप्रतियोगिकशब्दगणः, शशिपशुप्रभृतिरप्रतियोगिकशब्दगण इति विभागः , असम्बन्धिशब्दव्युत्पत्तेः पूर्वमेवाम्बातातादिशब्दव्युत्पत्तिर्दृश्यते , सा च स्वदभिमतशब्दार्थसम्बन्धग्रहणे तु नोपपद्यते , न हि कश्चित्प्रति पिता अन्यस्यापि पिता भवति ; तस्माद्व्युत्पित्सोर्मातापित्रादिषु अन्यैस्तत्तच्छब्दप्रयोगासम्भवात्प्रथममम्बादिशब्दार्थव्युत्पत्तिस्त्वन्यगते न सम्भवति , अतो बुद्धिपूर्विकैव प्रथमव्युत्पत्तिरिति ज्ञापनार्थं कोटिद्वयं शब्देषु दर्शितम्, यादृच्छिकवृद्धव्यवहारेणानन्तशब्दव्युत्पत्त्यनुपपत्तिश्च । सर्वलोकसम्प्रतिपन्नव्युत्पत्तिप्रकारापन्हवश्च। ( एनमवेहि इमञ्चावधारयेति ) एनम्—बोधकशब्दम्, इमम्—बोध्यमर्थञ्चावेहीत्यर्थः। ( बहुश इति ) यावदङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यदर्शनजनितवासना-

* भावप्रकाशिका *

ठक्प्रत्यय इति भावः । नन्वम्बातातमातुलशशिपशुनरमृगपक्षीति ऐकपद्येनैव निर्देष्टव्ये विभज्योपादानं किमर्थमित्याशङ्क्य विभागेनोपादानस्य प्रयोजनमाह ( अम्बातातप्रभृतिरिति ) भाष्ये—एनमवेहीति । क्वचित्कोशे अवैहीति पाठो दृश्यते, स तु लेखकस्खलनकृतः, 'एत्येधत्यूठ्सु' इत्यत्र एचीत्यनुवृत्तेरिही यस्य एजादित्वाभावात् , आङुपसृष्टत्वेपि 'ओमाङोश्च' इति पररूपप्रसङ्गेनावैहीत्यस्यानिष्पत्तेरिति द्रष्टव्यम् । ( एनं बोधकशब्दमिति ) ननु व्युत्पादनस्थले अन्वादेशाभावात्कथमेनादेश इति चेन्न; पूर्वमम्बादिशब्दान् प्रयुक्तवतः तद्विषयेन्वादेशसम्भवात् । नच एनमवेहीति कथं शब्दविषये अङ्गुलिनिर्देश इति वाच्यम् , इमञ्चावधारयेति निर्दिष्टार्थमात्रविषयत्वेनाप्युपपत्तेः । भाष्ये— अवधारयेत्यभिप्रायेणेति । अभिप्रायाकारकथने बालोऽसावमुमर्थमवधारयत्वित्यभिप्रायेणाङ्गुल्या

शिक्षिताः शनैश्शनैस्तैस्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोस्सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति ।

* श्रुतप्रकाशिका *

भूयस्त्वोदयेन स्वयमेव तत्तदर्थेषु तत्तच्छब्दान् प्रयोक्तुमर्थमात्रदर्शनेन शब्दं स्मर्तुं शब्दमात्रश्रवणेनार्थं स्मर्तुं च क्षमा भवन्ति तावदित्यर्थः। शिक्षिताः— तैस्तैः शब्दैः तेषु तेष्वर्थेषूत्पादितज्ञानाः । एवं तर्ह्यङ्गुल्या निर्दिष्टेष्वर्थेष्वमी शब्दास्सङ्केतिताः इति मन्येरन्निति चेत् । यद्वा लिङ्गत्वजन्यजनकभावादिसम्बन्धान्तराद्बोधका इति मन्येरन्निति चेत्तत्राह ( सम्बन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्चेति ) अयमर्थः,— यादृच्छिकव्युत्पत्तावपि तुल्यं चोद्यम्, शब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्टवतो व्युत्पित्सोरियं शङ्का भवति, एतच्छब्दप्रयोगादनन्तरमस्य प्रवृत्तिः किं जन्यजनकभावादिसम्बन्धात् ? उत सङ्केतात् ? इति। तत्र सम्बन्धान्तरशङ्कास्वदर्शनादेव न जायत इति चेत्. बुद्धिपूर्वकव्युत्पत्तावप्ययं परिहारः समानः, सङ्केतबुद्ध्युत्पत्तिश्च नोपपद्यते ; किमेते ऽस्मन्मातापित्रादयस्सङ्केतयन्ति ?

७ भावप्रकाशिका ७

निर्दिश्येत्येवं प्रथमपुरुषस्य वक्तुमुचितत्वात् तत्रैव तात्पर्यम् . ( अमी शब्दास्सङ्केतिता इति मन्येरन्निति ) सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषान्तरादर्शनाच्चेति भाष्यानुरोधात् शङ्काद्वयव्युत्क्रमो द्रष्टव्यः । ननु बालस्य व्युत्पत्तिग्रहात्पूर्वमम्बाताततमातुलादिशब्दैस्तदर्थबुद्ध्युत्पत्तौ न शक्तिग्रहो मूलम्, तस्य तदानीमनिश्चयात्, अपि तु तदर्थाभिमुखाङ्गुलिनिर्देशसाहचर्यलक्षणसम्बन्धवशादेव शब्दस्यार्थप्रत्यायकत्वमिति वक्तव्यम् ; एवञ्च स्वस्य तदर्थबुद्ध्युत्पत्तेरीदृशसम्बन्धनिमित्ततां जानन् कथं वाच्यवाचकलक्षणसम्बन्धान्तरं कल्पयेत् ? । किञ्च बालस्य धूल्यक्षराभ्यासदशायां धूलिरेखाविशेषमङ्गुल्या निर्दिश्य अयं ककारोऽयं खकार इति बहुशश्शिक्षयन्ति, स च पश्चाल्लिपिविशेषदर्शने अक्षरं प्रतिपद्यते, अक्षरविशेषश्रवणे लिपिविशेषञ्च स्मरति , न तत्र बोध्यबोधकत्वलक्षणसम्बन्धान्तरं कल्पनीयम्, एवमिदा-

पुनश्च व्युत्पन्नेतरशब्देषु 'अस्य शब्दस्य अयमर्थः' इति पूर्ववृद्धैश्शिक्षितास्सर्वशब्दानामर्थमवगम्य पर-

* श्रुतप्रकाशिका *

उत पूर्वमेव कश्चित्सङ्केतितवान्? इति । न तावत्प्रथमपक्षः, अनेकैः पुरुषैस्तेष्वेवार्थेष्वेकरूपशब्दप्रयोगदर्शनात् । नापि द्वितीयः, अनेन पूर्वं सङ्केतिताः शब्दा इति सङ्केतयितुः पुरुषस्याज्ञानादिति परिहारस्तत्रापि वक्तव्यः, सोऽस्माकमपि समानः, सर्वप्रमाणानां बोधकत्वे अविशिष्टेऽपि प्रत्यक्षस्य वैषम्यं सत्तया ज्ञानजनकत्वम्, अनुमानागमौ तु ज्ञाततया ज्ञापकौ, तत्रानुमानं जन्यजनकभावादिसम्बन्धान्तरज्ञानेन बोध्यविषयबोधजनकम्, शब्दस्तु बोध्यबोधकभावरूपसम्बन्धज्ञानादेव बोध्यं बोधयति, एवं सम्बन्धान्तरशङ्का सङ्केतितत्वशङ्का च निरस्ता । सम्बन्धान्तराभावात्सङ्केतयितृपुरुषाज्ञानाच्च बोध्यबोधकभाव एव सम्बन्ध इति बालैर्ज्ञातुं शक्यमिति चेत्, तत्त्रापि तुल्यम् । किञ्च शब्दोच्चारणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा प्रवृत्तेश्च कार्यबुद्धिपूर्वकत्वमनुमाय यदनन्तरं यद्भवति तत्तस्य कारणमितिन्यायाच्छब्दोच्चारणेन कार्यबुद्धिरस्य जातेति कार्यरूपः शब्दार्थ इति बोद्धुं बालैरतीव न शक्यते, अशक्यत्वं दृश्यते च, न बाला उक्तप्रकारेण कार्यार्थपरत्वं शब्दस्य निश्चिन्वन्ति, अतो बालैर्दुरवगमत्वदोषं भवत्पक्ष एवातीव प्रसजति । कालपरिपाकात् ज्ञायत इति चेत् । अयं परिहारोऽस्मत्पक्षे सुसङ्गत इति (पुनश्चेति) अस्य शब्दस्य अयमर्थ इति व्युत्पत्तिश्चेदन्विताभिधानभङ्गप्रसङ्ग इति चेन्न.

* भावप्रकाशिका *

स्त्विति चेत् . उच्यते ; अर्थविशेषमेवाङ्गुल्या निर्दिश्याम्बादिशब्दं प्रयुङ्क्ते, नान्यमित्यत्र किञ्चिन्नियामकम्, मृगयमाणो बालः तयोरौत्पत्तिकं सम्बन्धविशेषं निश्चिनोतीत्युक्तौ दोषाभावात् . लिप्यादौ तु सङ्केतपूर्वकत्वापरिज्ञानदशायामौत्पत्तिकं सम्बन्धं निश्चिनोतु, का नः क्षतिः ? सङ्केतपूर्वकत्वज्ञाने तु तद्बाध्यत इत्यदोषात् (अन्विताभिधानप्रसङ्ग इति चेदिति) द्विविधं वाक्यार्थप्रक्रियाभेदमाहुस्तन्त्रनिष्ठाः, अन्विताभिधानमभिहितान्वय इति "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥" इत्यन्विताभिधानम् । अयमत्र श्लोकार्थः,—पदानि तावच्छ्रूयन्ते, श्रुतानि च व्युत्पत्त्यनुसारेण

* श्रुतप्रकाशिका *

प्रातिस्विकव्युत्पत्तेस्समुदायज्ञानार्थत्वात् । न हि काव्यादिषु वाक्यार्थज्ञानोपयोगित्वेन सम्पाद्यमानं पदार्थज्ञानं वाक्यार्थज्ञानविरोधि , न ख्लक्षरशिक्षा च पदार्थज्ञानविरोधिनी, एवं तैस्तैः पदैः परस्परान्वितस्वार्थाभिधानव्युत्पत्तेः प्रतिपदमर्थव्युत्पत्तिर्न विरोधिनी , अपि तु उपयुक्तैव . यथा भवत्पक्षे अवापोद्धापरूपेण प्रतिपदार्थव्युत्पत्तिर्वाक्यार्थज्ञानोपयोगित्वान्न विरोधिनी तद्वत् । भवत्पक्षे तु प्रातिस्विकव्युत्पत्तिः पश्चाद्भाविनी , अत्र तु पूर्वभाविनीति विशेषः । वाक्यार्थज्ञानोपयोगित्वं समानम्. शब्देनान्वयपर्यन्ताभिधानं ह्यन्विताभिधानम्, प्रातिस्विकव्युत्पत्तावपि तत्रैव व्युत्पत्तिः क्रियत इति न विरोधः , अभिहितान्वयपक्षे अर्थानां परस्परान्वयबोधनयोग्यत्वं शब्दानां स्वार्थबोधनशक्तिः शब्दैरपि परस्परान्वयायोग्यत्वेन स्वार्थाभिधानमिति त्रयमपि कल्पनीयम् । अन्विताभिधानपक्षे तु

७ भावप्रकाशिका ७

पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति, स्मृतेषु च पदार्थेषु आकाङ्क्षादिपरामर्शः, ततो न्यायप्रवृत्तिः, न्यायप्रवृत्त्या वचनव्यक्तिविशेषाभिव्यक्तिः सम्पद्यते, ततस्सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानार्थात्मकं वाक्यार्थमभिदधतीति । अभिहितान्वयवादिनस्तु एवमभ्यदधुः,—पदैः पदार्थाः पृथक् पृथगभिधीयन्ते, तच्चाभिधानं पदार्थस्मरणमात्रपर्यवसितम्, 'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते' इति वचनात्, ते चाभिहिताः पदार्थाः योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति , न तत्र पदव्यापारः । अर्थैरेवार्थविशेषसिद्धेः, यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थरूपमर्थविशेषसंसर्गात्मकमवबोधयन्ति, पश्चादेव प्रतिपन्नार्थानुरोधेन शब्दरचना, एवमर्थाः एवमर्थविशेषं बोधयन्तीति, ततश्चास्यायमयमर्थ इति व्युत्पत्तौ एकैकस्य पदस्य तत्तदर्थमात्रपरतया व्युत्पत्तेस्तावन्मात्रस्यैवाभिधेयतया पदान्तरार्थान्वितार्थाभिधानं न सिद्ध्येदिति भावः ( प्रातिस्विकव्युत्पत्तेरिति ) प्रतिपदव्युत्पत्तेरित्यर्थः । ( अत्र तु पूर्वभाविनीति विशेष इति ) अयमर्थः, याद्दच्छिकव्युत्पत्तिस्थले गवानयने प्रवृत्त्युपलम्भेनास्य वाक्यस्य गवानयनकार्यत्वमर्थ इति प्रथमतोऽवगत्यावापोद्धारक्रमेणास्य पदस्यायमर्थ इति पदार्थत्वं निश्चिनोति, बुद्धिपूर्वकव्युत्पत्तिस्थले तु अस्य

प्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते ।

* श्रुतप्रकाशिका *

शब्दानां स्वार्थबोधनशक्तेरेव अन्वयपर्यन्तत्वाभ्युपगमात् कल्पनालाघवमस्तीति स एवात्र स्वीकृतः । अन्विताभिधानभङ्गप्रसङ्गश्च परिहृतः । अस्य शब्दस्य अयमर्थ इत्यत्राप्ययमर्थ इति बुध्यस्वेति ह्युक्तं भवति, तस्मात्कार्यार्थ एव व्युत्पत्तिरिति चेत्. एवं तर्हि याद्दच्छिकव्युत्पत्तावपि सिद्धवस्तुन्येव व्युत्पत्तिः स्यात्, प्रयोज्यवृद्धस्य कार्यबुद्धिर्जातेति व्युत्पित्सुर्जानाति । शब्दबोध्यत्वं कार्यस्यैव, न बुद्धेः ; बुद्धिर्हि शब्दजन्या, न तु शब्दवाच्येति चेत् ; अत्रापि शब्दबोध्यत्वं तत्तत्पदार्थस्यैव न बुद्धेः, नहि घटबुद्धिर्घटशब्दवाच्या. अपि तु तज्जन्या । वाच्यस्तु घट एव इति तुल्यः परिहार इत्यभिप्रेत्य एनमवेहि इमं चावधारयेत्यभिप्रायेणाङ्गुल्या निर्दिश्येत्युक्तम् ( तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जत इति ) याद्दच्छिकव्युत्पत्तौ कतिपयशब्दानां कार्यार्थपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाः पुरुषा अपि कार्यार्थ एव व्युत्पत्तिं कृतवन्तो गामानयेत्यादिवाक्यं प्रयुञ्जत इति चेत् . अनेकशब्दानां सिद्धवस्तुपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाः पुरुषा अपि तथैव व्युत्पत्तिं कृत्वा तत्तदर्थविवक्षया शब्दान् प्रयुञ्जते, व्युत्पत्तिदर्शनं प्रयोगदर्शनमपि ह्युभयमत्राविशिष्टमिति भावः । एवं बुद्धिपूर्वकव्युत्पत्त्या शब्दानां सिद्धवस्तुपरत्वमुक्तम् । याद्दच्छिकव्युत्पत्तावपि सिद्धार्थेपि व्युत्पत्तिरस्तीत्याह

* भावप्रकाशिका *

पदस्यायमर्थ इति पदार्थस्वबुद्धिपूर्विका वाक्यार्थावगतिरिति । ( शब्दैरपि परस्परान्वययोग्यत्वेन स्वार्थाभिधानमिति ) पदानामेव पदार्थेषु संसर्गबोधनशक्त्याधानशक्तिरित्यर्थः । अत्र केचिदाचार्याः—शक्तित्रयगौरवं नास्त्येव, पदानामेव पदार्थाभिधानशक्तेस्स्वीकारात् । अर्थानां संसर्गबोधकत्वं तु स्वाभाविकमेव. शब्दाभिधानमन्तरेणापि प्रतीतानामर्थानां संसर्गबोधकत्वस्य सम्भवात्, इतरथा कविकाव्यमूलज्ञानानुपपत्तिप्रसङ्गात्, शब्दान्वयव्यतिरेकानुविधानेन शाब्दत्वस्याप्युपपत्तेः, अव्यवहितत्वस्याप्रयोजकत्वादभिहितान्वयपक्ष एव भाष्यकृदभिमतमिति वदन्ति । ( बुध्यस्वेति ह्युक्तं भवतीति ) अयं भावः, येन हि यत् सिषाधयिषितं तत्तस्यार्थः दण्डेन सिषाधयिषितस्य घटस्य दण्डार्थत्वदर्शनात् । प्रकृते चाम्बादिपदेन बालस्य

प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम्— केनचित्पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्त इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित्तज्ज्ञापने प्रवृत्तः पिता ते सुखमास्त इति शब्दं प्रयुङ्क्ते। पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकवच्चेष्टाविशेषज्ञस्तज्ज्ञापने प्रवृत्तमिमं

* श्रुतप्रकाशिका *

( प्रकारान्तरेणापीति ) शब्दनिरपेक्षं तत्तदर्थज्ञानं चेष्टादिना सम्भवतीति दर्शयति ( मूकवदिति ) परोक्तयादृच्छिकव्युत्पत्तौ व्युत्पित्सुव्यतिरेकेण पुरुषद्वयापेक्षा गवाद्यपेक्षा च , अस्यां तु व्युत्पित्सुव्यतिरेकेण पुरुषत्रयापेक्षेति वैषम्यम् । किञ्च, पुत्रस्ते जात इत्यादिवाक्यस्य गामानयेत्यादिवाक्यस्य च वैषम्यं दुरुपपादम् । कालत्रयवर्तिहर्षहेतुबाहुल्यसम्भावनया हि पुत्रजन्मवाक्ये व्युत्पत्तेरशक्यत्वमुक्तम् । तन्न; सन्निहितं पुत्रजन्म दृष्ट्वा तज्ज्ञापनाय प्रवृत्ते पुरुषे ज्ञाते पश्चाच्च जातकर्मादौ दृष्टे ततः पूर्वमनुल्लसितमुखत्वादसम्भावितपुत्रजन्मविज्ञानस्य पुरुषस्यैतद्वाक्यश्रवणानन्तरभाविनो मुखविकासस्यातीतागामिहर्षहेत्वन्तरश्रवणमूलत्वशङ्कानुदयात् । नहि सन्निहितहेतुपरित्यागेनादृष्टहेतुशङ्का धियमधिरोहति , सुलग्नसुखप्रसवादिहेत्वन्तरशङ्का स्यादिति चेत् , नैवम् ; सुलग्नादिमात्रस्य हर्षहेतुत्वायोगात् । न खल्वन्यदीयपुत्रजन्माद्यनुबन्धिसुलग्नत्वादीनां हर्षहेतुत्वम् , अतः स्वपुत्रजन्मविशेषणीभूतानां सुलग्नत्वादीनामेव हर्षहेतुत्वम् , अतः स्वपुत्रजन्मन्यज्ञाते सुलग्नत्वादीनां हर्षहेतुत्वायोगादस्य वाक्यस्य स्वपुत्रजन्मज्ञापकत्वमवश्यं विदितं स्यात् । प्रागेव पुत्रजन्मज्ञानसम्भवादस्य वाक्यस्य सुलग्नत्वादिपरत्वशङ्का स्यादिति चेन्नैवम्; ततः पूर्वं मुखविकासविरहेण प्रागेव पुत्रजन्मज्ञानशङ्कानुदयात्, अतः पुत्रजन्मनः सन्निहितत्वात्पूर्वं मुखविकासाभावाच्च प्राथमिकमुखविकासहेतोरस्य वाक्यस्य पुत्रजन्मज्ञापकत्वं व्युत्पि-

* भावप्रकाशिका *

सिद्धार्थभूताम्बादिबुद्धिर्हि प्रतिपादयितुस्सिषाधयिषिता । ततश्चाम्बादिपदप्रयोजनत्वेनार्थभूताया अम्बादिबुद्धेः बालगतायास्साध्यत्वेन सिद्धत्वाभावात् कार्यार्थत्वमेव स्यादिति । इयञ्च शङ्का कार्यार्थाभिधायित्वमित्यत्रार्थशब्दाभिधेययोरभिधेय-

ज्ञात्वानुगतस्तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा अयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः, अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः ॥

* श्रुतप्रकाशिका *

सुर्मन्यते । तत्रैवं शङ्का सम्भवति, किं पुत्रजन्मादिमात्रज्ञापकमिदं वाक्यम्? उत सुलभत्वादिविशिष्टपुत्रजन्मादिज्ञापकम्? इति, ईदृशशङ्काग्रस्तत्वं गामानयेत्यादिवाक्यस्यापि तुल्यम्। किमिदं वाक्यं गवानयनमात्रप्रतिपादकम्? उत पुरोवर्तिनि पिण्डे ये शुक्लत्वादिविशेषा दृश्यन्ते तैर्विशिष्टगवानयनप्रतिपादकम्? इति शङ्कोपपत्तेः । प्रयोगभेदेनावापोद्वापमुखेन शङ्कापाकरणमुभयत्र तुल्यम्, पुत्रजन्मवाक्यादपि गवानयनादिवाक्यस्य अनेकार्थान्तरशङ्काग्रस्तत्वं सुतरां दृश्यत इत्यर्थविशेषावधारणमतीव कर्तुमशक्यम्, गामानयेतिशब्दप्रयोगानन्तरं व्यापारान्तरविधुरं गवि समानीतायामपि गां सन्दर्शय गां पुरः स्थापय गां देहि गां विक्रीणीहीत्याद्यनेकार्थशङ्काहेतुत्वात् प्रयोज्यवृद्धप्रवृत्तेः । किञ्च गामानयेत्यादिशब्दप्रयोगानन्तरं समानयनात्पूर्वमेव उत्थानोपरि वास आच्छादनदण्डग्रहणयादृच्छिकजनसम्भाषणगमनाद्यवान्तरव्यापाराश्च बहवो यस्य पुरुषस्याद्य व्युत्पत्तावुपलभ्यन्ते तस्य तेष्वन्यतमार्थवाचकत्वशङ्का गामानयेत्यादि वाक्यस्य जायते । पश्चाद्गवानयनमपि यादृच्छिकं कृतं स्यात्, न तु वाक्यप्रेरितत्वादिति च शङ्का सम्भवति, अतो नार्थविशेषसम्बन्धावधारणसम्भव इति । बहुभिः प्रयोगैरर्थविशेषनिश्चयोऽन्वयव्यतिरेकाभ्यामिति चेत्. एवमेव पुत्रस्ते जात इत्यादिवाक्यस्यार्थविशेषनिश्चयस्सुतरां सम्भवति । एवं सिद्धवस्तुनि शब्दव्युत्पत्त्युपपत्त्युपपादनेन वेदान्तानां परब्रह्मपरत्वमुपपन्नमित्याह ( अतो वेदान्ता इति )

* भावप्रकाशिका *

प्रयोजनयोर्विवेकाग्रहनिबन्धनेति द्रष्टव्यम् । गां विक्रिणीहीति क्वचित्कोशे पाठो दृश्यते, तत्र विशब्दो लेखकस्खलनकृतः, इतरथा 'परिव्यवेभ्यः क्रिय' इत्यात्मनेपदप्रसङ्गात् । क्रीणातेरेव विक्रियार्थत्वमपि सम्भवति, तथैव 'क्रय्यस्तदर्थे' इति

कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव। कथम्? [1]"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [2]'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' [3]'विज्ञाय प्रज्ञां कुर्वीत। [4]'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यम्, [5]'तत्रापि दहं गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यादिभिः प्रतिपन्नोपासनविषयकार्य्याधिकृतफलत्वेन [6]"ब्रह्मविदाप्नोति

* श्रुतप्रकाशिका *

अथ कार्यार्थपरत्वमभ्युपगम्य ब्रह्मविचारस्य कर्तव्यतामाह (कार्यार्थत्वेऽपीति) कार्यार्थत्वाभ्युपगमेऽपि स्तावकत्वसिद्धिहेतुत्वेन फलसाधनत्वेन च प्रकारद्वयेन सिद्धवस्तुनि तात्पर्यमुत्तरत्रोपपादयिष्यते, अत्र तु प्रकारान्तरेणोपपाद्यते, अनन्तस्थिरफलापातप्रतीतेस्सिषाधयिषितत्वात्फलत्वेन तात्पर्यकथनमत्रोचितमिति फलतया सिद्धिरत्रोच्यते, अनेकवाक्योपादानमुपासने तात्पर्यातिशयज्ञापनार्थमुपसर्गविशेषसन्प्रत्यययोगायोगेऽप्यर्थभेदो नास्तीति ज्ञापनार्थं च। (उपासनविषयकार्याधिकृतेति) उपासनावच्छिन्नकृतिसाध्यापूर्वाधिकृतस्य। विशिंषन् हि विषय उच्यते

* भावप्रकाशिका *

सूत्रे भाष्यप्रदीपे प्रतिपादनात् (उत्तरत्रेति) देवताधिकरण इत्यर्थः। ज्ञानेच्छाकृतीनामेव सविषयत्वेनापूर्वस्य निर्विषयतया कथमुपासनविषयकार्याधिकृतेत्युक्तिरित्याशङ्क्य कृतिसाध्यरूपकार्यशरीरानुप्रविष्टकृतेस्सविषयत्वात् तद्द्वारा तस्य सविषयत्वमित्यभिप्रयन्नाह) (उपासनावच्छिन्नेति) विशिंषन् हि विषय उच्यत इति पाठस्समीचीनः, विपूर्वात् सिनोतेर्निष्पन्नत्वाद्विषयशब्दस्य. विषयशब्दो हि विशे-

---

१ बृ. ४-अ. ४-ब्रा. ५-६-अ. ब्रा. ६-
२ छा. ८-प्र. ७-ख. १-वा.
३ बृ. ६-अ. ४-ब्रा. २१-वा.
४ छा ८-प्र. १-ख. १-वा
५ तै. नारायणे. १०-अनु. २३-वा
६ तै. आन. १-अ. १-वा.

परम्" इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवत् रात्रिसत्रप्रतिष्ठावदपगोरणशतयातनासाध्यसाधनभाव-

* श्रुतप्रकाशिका *

( ब्रह्मस्वरूपतद्विशेषणानामिति ) विशेषणानि—गुणा विभूतयश्च । विधिवाक्योक्तस्य फलस्यार्थवादोक्तविशेषणे तात्पर्यमस्तीति ज्ञापनार्थं दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवदित्युक्तम्, "यस्मिन्नोष्णं न शीतं नारतिः" इति श्रुतिः । स्वर्गरूपफलं विधिगतम् विशेषणमन्यत्र, फलस्य विधिवाक्यगतत्वाभावेऽप्यन्यपरार्थवादोक्तफले विध्यपेक्षिते तात्पर्यमस्तीति दर्शयितुं रात्रिसत्रप्रतिष्ठावदित्युक्तम् । "रात्रीरुपेयात् प्रतितिष्ठन्ति ह वा एते य एता रात्री रुपयन्ति" इति हि श्रुतिः । प्रतिष्ठाकाम उपेयादिति वचनाभावेऽपि अर्थवादोक्तफले तात्पर्यमङ्गीकृतमित्यर्थः । विधेयोपकारके विरोधिफलेऽपि तात्पर्यमस्तीतिज्ञापनार्थम्— अपगोरणशतयातनासाध्यसाधनभाववचेत्युक्तम् "तस्माद्ब्राह्मणाय नापगुरेत योपगुरुते शतेन यातयात् " इति हि श्रुतिः । अनेन मोक्षोपायविरोधिफलेऽपि तात्पर्यं सिद्धमित्यभिप्रायः । अनुयायिहेतुः कार्योपयोगितयैव सिद्धेरित्युक्तम् , उपासनविषयकार्योपयोगित्वात् फलभूत-

* भावप्रकाशिका *

प्तार्थस्सिनोतिर्बन्ध उच्यते, विशेषेण सिनोतीति विषयः, अतो नियामक इत्यभियुक्तोक्तेः । विशिन्वन्निति पाठे तु वस्तुव्याख्यानमेतत्न शब्दव्याख्यानमिति द्रष्टव्यम् । ( रात्रीरुपेयात् प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीति हि श्रुतिरिति ) अत्र यद्वक्तव्यं तत्पूर्वमेवोक्तम् । ( विधेयोपकारक इति ) विधेयाया अपगोरणनिवृत्तेः निवर्त्यापगोरणगतानिष्टसाधनत्वस्योपकारकत्वात् । अपगोरणस्य अनिष्टसाधनत्वाभावे निवृत्तेरेवासम्भवादिति भावः । ( अपगोरणशतयातनेति ) अपगोरणम्—वधोद्यमः, शतयातना—नरकविशेषः ( मोक्षविरोधिफलेपीति ) 'उदरमन्तरं कुरुते अथ तस्य भयं भवति" इत्यादिवाक्येष्विति भावः ( कार्योपयोगितयैव सिद्धेरित्युक्तमिति ) कार्योपयोगित्वमिति शेषः । कार्योपयोगितया सिद्धेरित्यनेनानुयायिहेतुकार्योपयोगित्वमित्युक्तमित्यन्वयः । अत एव

वच्च, कार्योपयोगितयैव सिद्धेः ॥

—(अपूर्वखण्डनम्)—

गामानयेत्यादिष्वपि वाक्येषु न कार्य्यार्थे व्युत्पत्तिः भवदभिमतकार्यस्य दुर्निरूपत्वात् । कृतिभावभावि-

* श्रुतप्रकाशिका *

ब्रह्मस्वरूपे तद्विशेषणगुणादौ विधिविरोधिनि फले संसारहेयत्वादौ च विवक्षा-कार्येत्यर्थः । .... .... .... .... .... .... .... .... ....

प्रवर्तकवाक्येऽपि न त्वदभिमतसिद्धिरित्याह— ( गामिति ) कार्य्यार्थे प्राधान्येन त्वदभिमते कृत्युद्देश्यलक्षणकार्यार्थे । कुत इत्यत्राह ( भवदभिमतेति ) खेदश्रमादावपि कृतिसाध्यत्वात्तद्व्यावृत्त्यर्थं क्रियाकार्येऽप्युद्देश्यत्वमङ्गीकार्य्यम्, त्वदुक्तोद्देश्यत्वस्य दुर्निरूपतया तल्लक्षणकार्य्यस्य दुर्निरूपत्वादित्यर्थः । दुर्निरूपत्वं कथमित्यत्राह ( कृतीति ) कृतिभावभावि, कृतिः आन्तरप्रयत्नः, तत्सद्भावानन्तरभावि , कृतिसाध्यत्वं भावार्थादिष्वप्यस्तीति तद्व्यावृत्त्यर्थं कृत्युद्देश्यमित्युक्तम् , कृत्युद्देश्यत्वं कृतिप्रधानत्वमित्यर्थः । कार्यस्य कृतिसाध्यत्वमिष्टत्वं कृत्युद्देश्यत्वमिति त्रयमपि तन्मतेऽभ्युपगतम् । इष्टत्वकृतिसाध्यत्वे फलभावार्थसाधारणे, कृतिप्रधानत्वं त्वाकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते. यथा टीकायामुक्तम् "कार्यमर्थं प्रतिपादयतो वेदस्य प्रमाण्यम् " इति । अत्रार्थशब्देन प्राधान्यं विवक्षितम्. यथा पञ्चिकायां " कार्यमर्थं प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यं

५ भावप्रकाशिका ५

'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इत्यत्रार्थवादसमर्पितो देवतासम्बन्धः स्थण्डिलनिवृत्त्यौपयिकचरूपधानविध्यनाकाङ्क्षितत्वान्नादर्तव्य इत्युक्तं द्वितीये । संयुक्तस्त्वर्थशब्देनेत्यधिकरणे, ततश्च विध्यपेक्षितसमर्पकोऽर्थवाद आदर्तव्यः । नान्य इति भावः ॥ .... .... .... .... .... .... ....

( अत्रार्थशब्देन प्राधान्यमिति ) नन्वर्थशब्दस्य प्राधान्यपरत्वे किं प्रमाणम् ? नच कार्यमर्थं प्रधानतया प्रतिपादयतीति पञ्चिकावाक्यं प्रमाणमिति वाच्यम् , अर्थशब्दस्य प्राधान्यार्थत्वस्यासद्वाक्यादप्रतीतेः, तत्र हि कार्यरूपोऽर्थस्समभिव्याहृतयागाद्यपेक्षया शेषितया प्रतिपाद्यत इत्यस्यैव प्रतीतेः । नापि कृतिसाध्यं प्रधा-

कृत्युद्देश्यं हि भवतः कार्य्यम्। कृत्युदेश्यत्वञ्च कृतिकर्मत्वम्। कृतिकर्मत्वञ्च कृत्या प्राप्तुमिष्टतमत्वम्। इष्टतमं च सुखं वर्तमानदुःखस्य तन्निवृत्तिर्वा। तत्रेष्टसुखाद्यर्थिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता, ततः

* श्रुतप्रकाशिका *

तत्रैव प्रामाण्यशब्दव्युत्पत्तेः व्युत्पत्त्यायत्तत्वात्तस्ये " ति । प्रकरणशालिकायां " कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत " इति । तत्र तृतीयाकारतयाऽभिमतं कृत्युद्देश्यत्वं कृतिसाध्यत्वेष्टत्वाकारयोरन्यतराकारे पर्यवस्यतीत्यभिप्रायेण दूषयितुमाह ( कृत्युद्देश्यत्वं चेति ) पाणिन्युक्तप्रकारेण कर्मत्वं विवृणोति ( कृतिकर्मत्वं चेति ) इष्टतमत्वं च कार्ये नास्तीत्याह ( इष्टतमं चेति ) कृतिकर्मत्वं नाम प्रवर्तकत्वमित्यत्राह ( तत्रेति ) तदपीष्टस्य स्वप्रयत्नसाध्यत्वमेवेत्यर्थः, आदिशब्देन दुःखनिवृत्तिरुच्यते. स्वप्रयत्नादृते यदीत्यादेरयं भावः, कृतिसाध्यत्वातिरिक्तिकृतिकर्मत्वं नाम इष्टतमत्वे पर्य्यवस्यतीति । प्रयत्नेच्छुः चिकीर्षुः । प्रवर्तते आन्तरप्रयत्नमिच्छन् स तमुत्पादयतीत्यर्थः । इष्टतमस्यैव रूपद्वयमस्ति इच्छाविप-

* भावप्रकाशिका *

नमिति प्रकरणशालिकावाक्यं प्रमाणम्. तत्रापि कृतिप्रधानस्वरूपार्थप्रतीतेः, अर्थशब्दस्य प्राधान्यपरत्वे प्रामाण्याभावाच्चेति चेन्न. कृतिसाध्यं प्रधानमिति समभिव्याहारात् कृतिप्रधानत्वलाभात् तस्यैवार्थशब्दनिर्देशार्हत्वादिति भावः ( कृतिकर्मत्वं नाम प्रवर्तकत्वमाहेति ) यत्प्रकारकं ज्ञानं प्रवर्तकं तत्प्रवर्तकत्वमित्यर्थः । भाष्ये—कृत्युद्देश्यत्वं न किञ्चिदुपलभ्यत इत्यत्र कृत्युद्देश्यत्वमित्यस्य प्रवर्तकत्वमित्यर्थ इति ग्रन्थकृतो भावः । अयं भावः,—कृतिभावभावि कृत्युद्देश्यत्वं तन्मते कार्यत्वम्, कृतिसाध्यत्वे सति कृत्युद्देश्यत्वमिति तदर्थः । तत्र च विशेष्यभूतकृत्युद्देश्यत्वं कृतिकर्मत्वम्, तच्च प्रवर्तकज्ञानप्रकार इति स्थितम् । प्रवर्तकज्ञानप्रकारश्च कृतिसाध्यत्वे सति इष्टतमत्वमिति सिद्धम्. तत्र च कृतिभावभावीत्यनेनैव सत्यन्तस्य सिद्धत्वात्. प्रवर्तकमित्यनेन विवक्षणीयांशस्तु इष्टतमत्वमात्रमेव । ततश्च कृतिभावभावित्वे सति प्रवर्तकत्वं नाम कृतिसाध्यत्वे सतीष्टतमत्वमिति

प्रयत्नेच्छुः प्रवर्त्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किञ्चिदप्युपलभ्यते। इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव, तत एव प्रवृत्तेः। न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वं, यतः सुखमेव पुरुषानुकूलम्। न च दुःखनिवृत्तेः पुरुषानुकूलत्वं, पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमिति हि सुखदुःखयोः स्वरूपविवेकः। दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति, नानुकूल-

---

* श्रुतप्रकाशिका *

यत्वं प्रेरकत्वं चेति तत्र प्रेरकत्वं कृत्युद्देश्यत्वमित्यत्राह (इच्छाविषयस्येति) कुत इत्यत्राह (तत एवेति) पुरुषानुकूलत्वं कृत्युद्देश्यत्वमित्यत्राह (नचेति) सुखमेव पुरुषानुकूलमिति न वाच्यम्, सुखव्यतिरिक्तस्यापि अनुकूलत्वदर्शनादित्यत्राह (न च दुःखनिवृत्तेः पुरुषानुकूलत्वमिति) न हि दुःखनिवृत्तिः सुखं भवतीत्यर्थः। एतदुपपादयति (पुरुषानुकूलमिति) तर्हि दुःखनिवृत्तेरिच्छाविषयत्वं कथमित्यत्राह (दुःखस्येति) स्वत इष्टत्वमनुकूलत्वम्, न त्विष्टान्तरहेतुतया अनिष्टनिवृत्तिरूपतया वा इष्टत्वम्, एवं स्वतोऽनिष्टत्वं प्रतिकूलत्वम्. न त्वनिष्टान्तरहेतुतया इष्टनिवृत्तिरूपतया वा ऽनिष्टत्वम्, अतो दुःखनिवृत्तेरिष्टत्वं दुःखस्य

* भावप्रकाशिका *

भाव: (तत्र प्रेरकत्वं कृत्युद्देश्यत्वमिति) कार्ये प्रेरकत्वज्ञानात्प्रवर्तते, ततश्च प्रवर्तकज्ञानप्रकारत्वात्, कृतिकर्मत्वरूपप्रवर्तकत्वरूपं प्रेरकत्वस्योपपद्यत इत्यर्थः। (नहि दुःखनिवृत्तिस्सुखं भवतीत्यर्थ इति) अत्र केचित् यथाश्रुतमेव युक्तम्, सुखव्यतिरिक्ताया अपि दुःखनिवृत्तेरनुकूलत्वदर्शनादिति शङ्काया यथाश्रुतेनैव निवृत्तत्वादिति वदन्ति। (अनिष्टनिवृत्तिरूपतया वा इष्टत्वमिति) नन्वनिष्टनिवृत्तेरपि सुखवत्पुरुषार्थान्तरसाधनत्वज्ञानानधीनेच्छाविषयता कुतो न स्वत इष्टत्वम्? नच दुःखनिवृत्तित्वप्रकारकज्ञानाधीनत्वात्तदिच्छाया न स्वत इष्टत्वमिति वाच्यम्; तथासति सुखेच्छायास्सुखत्वप्रकारकज्ञानाधीनत्वात् स्वत इष्टत्वं न स्यात्,

तया। अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः। अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं

* श्रुतप्रकाशिका *

प्रतिकूलत्वादित्यर्थः । दुःखनिवृत्तेरनुकूलत्वाभावमुपपादयति (अनुकूलप्रतिकूलेति) स्वरूपेणावस्थितिः—सुखनिवृत्तिरूपा दुःखनिवृत्तिरूपा च । अनुकूलप्रतिकूलान्वयविरहरूपायां स्वरूपेणावस्थितौ दुःखनिवृत्त्यंशस्य सामानाधिकरण्येन व्यपदेशः, दुःखनिवृत्तिरेव सुखं चेत्दुःखनिवृत्तौ सुखनिवृत्तिर्न स्यात्, तदा सुषुप्तावपि सुखान्वयप्रसङ्गः । अन्यतरनिवृत्तिरन्यतरसंयोगश्चेत् स्वापेऽपि दुःखसुखान्वयः प्रसजेदिति भावः । अपूर्वस्यानुकूलत्वासम्भवे दृष्टान्ताभिप्रायेण क्रियाद्युपादानम्, क्रियादेरित्यादिशब्देन प्रयत्नो विवक्षितः। सुखसाधनत्वादनुकूलत्वमित्य-

* भावप्रकाशिका *

नच इष्टान्तरहेतुत्वानिष्टनिवृत्तित्वज्ञानमन्तरेणैव इष्टत्वं स्वत इष्टत्वं विवक्षितमिति वाच्यम्; तथासति पारिभाषिकत्वापत्तेः । साक्षादिच्छाविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वादित्युत्तरभाष्ये दुःखनिवृत्तेरपि साक्षादिच्छाविषयत्वकथनाच्चेति चेत्. अत्र केचित्—दुःखाभावे इच्छा दुःखद्वेषायत्ता, नतु स्वतः, अतो न स्वत इष्टत्वम्. नच द्वेषो नाम सिद्धान्ते जिहासैव. सैव च निवृत्तिश्चेदिति दुःखद्वेषस्य स्वाभाविकत्वं वदता द्वेषस्य हानेच्छारूपजिहासारूपत्वञ्च वदता हानलक्षणनिवृत्तेः स्वत एवेष्टत्वमभ्युपेयमिति वाच्यम्, लोके अभावेच्छायाः प्रतियोगिद्वेषाधीनतयैव दर्शनेन द्वेषस्य हेयत्वप्रकारकज्ञानविशेषरूपत्वस्यावश्यं वाच्यतया तदधीनेच्छाविषयस्य दुःखाभावस्य न स्वत इष्टत्वमिति वदन्ति। नन्वनुकूलत्वज्ञानं हि इच्छाहेतुः, अनुकूलत्वस्येष्टतमत्वरूपत्वे इष्टतमत्वज्ञानमिच्छायां हेतुरितिपर्यवसन्नम्, इष्टतमत्वज्ञानस्य ज्ञाततया इच्छाविषयत्वरूपेष्टतमत्वायत्तमिति आत्माश्रय इति चेन्न; इच्छाविषयतानिबन्धनस्वरूपविशेषस्यैवानुकूल्यार्थत्वे आत्माश्रयाद्यभावात् । नन्वनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्दुःखनिवृत्तिश्चेत्, प्रतिकूलनिवृत्तेरिव अनुकूलनिवृत्तेरपि दुःखनिवृत्तित्वप्रसङ्ग इत्याशङ्क्य प्रतिकूलनिवृत्त्यंशे दुःखनिवृत्तेस्सामानाधिकरण्यमित्याह (स्वरूपेणावस्थितिस्सुखनिवृत्तिरूपेत्यादिना) (दृष्टान्ताभिप्रायेण क्रियाद्युपादानमिति) अत्र केचित्, गामानयेत्यादिष्वपि वाक्येषु न

न सम्भवति । न सुखार्थतया तस्याप्यनुकूलत्वम् ; दुःखात्मकत्वात्तस्य । सुखार्थतयापि तदुपादानेच्छा-मात्रमेव भवति । नच कृतिं प्रति शेषित्वं कृत्युद्दे-श्यत्वम्, भवत्पक्षे शेषित्वस्यानिरूपणात् ॥

—:( शेषलक्षणम् ):—

न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसम्बन्धी शेषीत्यवगम्यते, तथा सति कृतेरशे-

---

* श्रुतप्रकाशिका *

त्राह ( नेति ) कुत इत्यत्राह (दुःखात्मकत्वादिति) तस्य—क्रियादेः। प्रतिकूलरूपतया भासमानं वा तद्विषयज्ञानं वा दुःखम् , न तद्व्यतिरिक्तमात्मगुणान्तरमित्यभिप्रेत्य दुःखात्मकत्वादित्ययं हेतुरुक्तः। (सुखार्थतयेति) नहि दण्डचक्रादिर्घटो भवती-त्यर्थः । असुखार्थात्सुखार्थस्य किं वैषम्यमित्यत्राह ( सुखार्थतयापीति ) कृतिशे-षित्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति ( नचेति ) अनिरूपणात्—दुर्निरूपत्वादित्यर्थः।

परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति पक्षमनूद्य दूषयति ( नच परोद्देश-

* भावप्रकाशिका *

कार्यार्थे व्युत्पत्तिरिति उपक्रमभाष्यग्रन्थानुसारात्, क्रियातदतिरिक्तापूर्वसाधारण-कार्यत्वस्यैव निर्वचनीयत्वप्रतीतेः, तदनुरोधेन क्रियादेरनुकूलत्वं न सम्भवतीति भाष्यस्यापि क्रियाक्रियासाधारण्येनानुकूलत्वनिषेधपरतया योजयितुं शक्यतया दृष्टान्ताभिप्रायेणोक्तौ न स्वारस्यं पश्यामः, अत एव फलभावार्थव्यावर्तकं कृति-प्रधानत्वं वर्ण्यत इत्यत्रापि न मूलं पश्यामः। ततश्चेष्टत्वातिरिक्तस्य इष्टत्वाघटि-तस्य वा कृतिप्रधानत्वस्याभावात् सुखदुःखनिवृत्तिभिन्नस्याप्यपूर्वस्य स्वत इष्टत्वा-भावात्. अनन्यार्थतया प्रतिपन्नस्य त्वन्मते सुखदुःखनिवृत्तिसाधनतयापीष्टत्वाभा-वात् न त्वदभिमतापूर्वं कार्यत्वमित्येवं भाष्याभिप्रायपर्यवसानप्रतीतेः, भावा-र्थस्वर्गव्यावृत्तं पराभिमतं कार्यत्वं निराक्रियत इत्यत्र विनिगमकं न पश्याम इत्यपि वदन्ति । ( सुखार्थतयेति ) नहि दण्डचक्रादिर्घटो भवतीत्ययं ग्रन्थः कुत इत्यत्राह दुःखात्मकत्वादिति ग्रन्थात्पूर्वं पठितव्यः, न क्वापि पठितव्यो वा. अन-तिप्रयोजनत्वात्, अतो व्युत्क्रमेण प्रतीकग्रहणाशङ्का न कार्या ॥

पेत्वन तां प्रति तत्साध्यस्य शेषित्वाभावात् , न च परोद्देशप्रवृत्त्यर्हताया: शेषत्वेन पर: शेषी , उद्देश्यत्वस्यैव निरूप्यमाणत्वात् प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च। प्रधानस्तु भृत्यपोषणेऽपि स्वोद्देशेन प्रवर्तत इति चेन्न, भृत्योऽपि हि प्रधानपोषणं स्वोद्देशेनैव प्रवर्तते । कार्य्यस्वरूपस्यैवानिरूणात् कार्य्य-

* श्रुतप्रकाशिका *

प्रवृत्तेत्यादिना) । (नच परोद्देशप्रवृत्त्यर्हताया इति) उत्पत्तिश्च प्रवृत्तिमद्व्यापार:, अतः प्रवृत्त्यर्हत्वम् उत्पत्त्यर्हत्वम्, परोद्देशप्रवृत्त्यर्हतायाः शेषत्वरूपतयेत्यर्थ: (उद्देश्यत्वस्यैव निरूप्यमाणत्वादिति)। अयमर्थः, कृत्युद्देश्यत्वम्—कृतिशेषित्वम्, शेषित्वञ्च शेषप्रतिसम्बन्धित्वम् । शेषत्वम्-परोद्देशप्रवृत्त्यर्हत्वमित्युक्ते सत्युद्देश्यत्वं नाम उद्देश्यत्वमित्युक्तं भवतीत्यात्माश्रयः । उद्देश्यत्वनिरूपणोपयुक्तस्य शेषत्वनिरूपणस्य उद्देश्यनिरूपणसापेक्षत्वादिति । किं परोद्देशप्रवृत्त्ययोगव्यवच्छेदो विवक्षितः ? उतान्ययोगव्यवच्छेद: ? इति विकल्पे प्रथमे शिरसि राजन्यतिव्याप्तिमाह (प्रधानस्यापीति) अत्रोद्देश्यशब्देन प्रयोजनभावाभिसन्धिर्विवक्षितः, तत्परिहारमुखेन द्वितीयं शिरश्शङ्कते (प्रधानस्त्विति) परोद्देशेन प्रवृत्त्यन्ययोगव्यवच्छेदो विवक्षितः, स तु प्रधानस्य नास्ति, स्वोद्देशेनापि तस्य प्रवृत्तेः, अतो नातिव्याप्तिरित्यर्थः । परिहरति (नेति) भृत्येप्वव्याप्तिमाह (भृत्यो ऽपि हीति) कार्यप्रतिसम्बन्धित्वं शेषत्वमिति पक्षं दूषयति (कार्यस्वरूपस्येति) कार्यस्वरूपे निरूप्यमाणे फलभावार्थविलक्षणाकारेण तन्निरूपणार्थं कार्यत्वं कृत्युद्देश्यत्वमित्युक्तम्। उद्देश्यत्वम् शेषित्वम्. शेषित्वं च—शेषप्रतिसम्बन्धित्वम्. शेषत्वं च—कार्यप्रतिसम्बन्धित्वमित्युक्ते सत्यात्माश्रयः स्यात्, कार्यनिरूपणोपयुक्तशेषत्वनिरूपणस्य कार्यनिरूपणसापेक्षत्वादित्यर्थः ॥ भाष्यकाराभिमतं शेषत्वलक्षणं स्वीकृत्य कृत्युद्देश्यत्वसमर्थनमपि दुश्शकम्, तथाहि; परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः,'परश्च

६ भावप्रकाशिका ६

( अयोगव्यवच्छेदो विवक्षित इति ) अत्यन्तायोगव्यवच्छेदो विवक्षित

* श्रुतप्रकाशिका *

शेपी इति भगवान् भाष्यकारो वेदार्थसङ्ग्रहे शेपिलक्षणमभाषिष्ट । "शेषःपरार्थत्वात्" इति शेषशेषिभावलक्षणपरस्य जैमिनीयसूत्रस्य परैरन्यथाव्याख्यातत्वात् तद्व्यावृत्त्यर्थं तस्य सूत्रस्यार्थोऽनेन लक्षणग्रन्थेन यथावत्प्रदर्श्यते । अस्यार्थ उच्यते, अन्यस्य प्रयोजनमेव यस्य परमप्रयोजनं स शेषः, अन्यः शेषीति वाक्यार्थः, अत्र परशब्दोऽन्यपर्यायः, परातिशयशब्दयोः कर्मधारयशङ्कानिवृत्त्यर्थो गतशब्दः, तेन स्वगतातिशयाधायके शेपित्वातिव्याप्तिव्युदासः, अतिशयशब्दः प्रतिकूलेतराकारपरः निकृष्टेतराकारपरो वा, तेन परगतविनाशाधायकशल्याग्नि-कण्टकादीनां विनाशं प्रति शेपत्वव्युदासः । न च दुःखहेतुषु यातनाशरीरेष्व-व्याप्तिः, तेषामपि दुःखजननद्वारा पापक्षयलक्षणातिशयहेतुत्वात् । न चानुत्पन्ने अपूर्वे श्रीह्यादिभिरतिशयाधानायोगात्तेष्वव्याप्तिः, सत्तालाभस्यातिशयरूपत्वात्;निकृ-र्षात्मकधर्मेतराकारो ह्यतिशयः । ननु मानसम्बन्धार्हं व्यवहारार्हं वा यत् स्वरूपं तदेव सदिति भवन्मतम्, सत्ताजात्यभावात्,तत्कथं स्वरूपमेवाकार इत्युच्यते ?न; स्वरूपस्यैव सत्तारूपत्वेऽपि तल्लाभस्याकारत्वोपपत्तेः, सत्तालाभो ह्यतिशय इत्युक्तम्, सत्ता-लक्षणस्वरूपस्यच लाभो नाम प्रथमक्षणसम्बन्धः, स्वरूपस्याविद्यमानत्वेऽपि धीस्थ-तया परातिशयाधानव्यवहार उपपन्नः, इच्छयेतिपदेन परगतातिशयस्य इच्छा-विषयतया प्रयोजनत्वमवगम्यते, इच्छापदस्य च निरुपपदत्वात् साक्षादेवेच्छा-विषयत्वमभिप्रेतम् । साक्षादिच्छाविषयश्च परमप्रयोजनम्, अवान्तरप्रयोजनस्य हि तदर्थतयेष्टत्वमिति न साक्षादिच्छाविषयत्वम्, अतः परमप्रयोजनज्ञापकेनेच्छ-येतिपदेन परार्थत्वादित्यर्थशब्दो व्याख्यातो भवति । अर्थ्यत इति ह्यर्थः, इष्यत इति यावत् । निरुपपदश्चार्थशब्दः स्वतः परमप्रयोजनपरः, अनेन स्वातिशया-धायके भृत्यादौ लक्षणस्याव्याप्तिशङ्काव्युदासः, भृत्यो हि स्वालङ्कारादिकमपि स्वाम्यतिशयाय भवतीति हि बुध्या स्वातिशयमाधत्ते, अतो भृत्येन स्वातिशयाधानस्य परातिशयः परमप्रयोजनमिति नाव्याप्तिः । उपादेयत्वम्—स्वीकार्यत्वम् व्यवहर्तव्यत्व-

* भावप्रकाशिका *

इत्यर्थः । ( यथावत्प्रदर्श्यते इति ) भाष्यकृतेति शेषः । ( अस्यार्थ उच्यत इति ) मयेतिशेषः । ( सत्तालाभो ह्यतिशय इत्युक्तमिति ) ननु सत्तैवातिशय इत्युक्तमिति

* श्रुतप्रकाशिका *

मिति यावत् । इच्छास्वीकारौ यथायोग्यं सम्भवतः, शेषशेषिणोरुभयोरन्यतरस्मिन् वा सम्भवतश्चेदिच्छास्वीकारौ तद्गतौ स्तः, यथा राजभृत्यराजतद्भवनादौ, उभयमचेतनं चेदुभयव्यतिरिक्तचेतनगताविच्छास्वीकारौ, यथा प्रभाप्रभावच्छागतदङ्गादिके । उपादेयत्वम्—उपादातुमर्हत्वम्, तेनाकिञ्चित्कारदशायामव्याप्तिपरिहारः, एवकारेण कदाचित्स्वार्थनिरपेक्षपरप्रयोजनसाधकेषु प्रकृष्टकृपास्नेहान्वितेषु अतिव्याप्तिव्युदासः । अथवा केनचिदाकारेणोपहितस्य शेषत्वे सति तदनुपहितस्य

७ भावप्रकाशिका ७

भावः । ननु परगतातिशयेत्यत्र परशब्दार्थस्याधिकरणकारकत्वप्रतीतेः पूर्ववर्तिन एव कारकत्वात् । उत्पाद्यस्थले च उत्पत्तिरूपातिशयं प्रत्यपूर्ववर्तिनः कथं कारकत्वमित्याशङ्क्यानुत्पन्नस्यापि बुद्धौ सूक्ष्मरूपेण विपरिवर्तमानत्वेन कारकत्वं सम्भवति, एवमेव हि जायमानस्य जनिकर्तृत्वमप्युपपादनीयम्, एवमेव हि नवमे भाविनोऽपूर्वस्य निमित्तत्वं समर्थितमित्यभिप्रयन्नाह ( स्वरूपस्याविद्यमानत्वेपीति ) ( परातिशयः परमप्रयोजनमिति ) नन्वेवं स्वर्गस्य पुरुषशेषत्वं न स्यात् . तद्धि कामवशात् विधिवशाच्चावगन्तव्यम्. अन्यार्थस्य काम्यत्वासम्भवात्. नह्यस्वार्थं किञ्चित्कश्चित्कामयते, यदपि परार्थं किञ्चित्कामयते तदपि परम्परया स्वार्थमेव. तथा विधिवशाच्च. विधिर्हि प्रवर्तनात्मा स्वर्गस्यात्मार्थत्वाभावे तत्साधने पुरुषस्य प्रवर्तकत्वानुपपत्तेरिति युक्तिद्वयबलात् स्वर्गस्यात्मार्थत्वं साधनीयम् । यदि च परार्थत्वमेव काम्यत्वं तदर्थं प्रवृत्तिश्च, तर्हि युक्तिद्वयमपि आत्मार्थत्वसाधकं न भवेदितिचेत्. न; यजेतेत्यात्मनेपदबलेन स्वर्गस्य कर्तृगामित्वावगमेन पुरुषार्थत्वप्रतीत्युपपत्तेरिति द्रष्टव्यम् । परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपमित्यत्र एवकारस्योपादेयत्वायोगव्यवच्छेदकतया कादाचित्कोपादेयत्वायुक्तेषु प्रकृष्टकृपास्नेहान्वितेषु नातिव्याप्तिरिति व्याख्याय कृपास्नेहान्वितत्वकर्तृत्वादिविशेषोपहितेषु शेषत्वं दृष्टमितिमत्वा एवकारस्य परगतातिशयाधानेच्छयेत्यनेनान्वयमभिप्रेत्यान्ययोगव्यवच्छेदकतया परातिशयैकप्रयोजनत्वरूपार्थसम्भवमभिप्रेत्य यदा यस्य यदतिशयैकप्रयोजनत्वं तदा तच्छेष इत्यभिप्रेत्य व्याचष्टे (अथवा केनचिदाकारेणेति) ननु परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य धर्मस्य तच्छेष एवास्तु , किं

* श्रुतप्रकाशिका *

शेषत्वव्यावृत्त्यर्थ एवकारः, अनुपहितस्य प्रयोजनान्तरसाधकत्वेन परातिशयैकप्रयोजनत्वाभावात्, स्वरूपम्—स्वं रूपम्. असाधारणधर्मः—निरूपकधर्म इत्यर्थः। न च निरूपकशब्दस्य व्युत्पादनार्थत्वात् व्यावर्त्यधर्मापेक्षा, परातिशय एव परमप्रयोजनं यस्य स परं प्रति शेष इति लक्षणमुक्तं भवति। यतः परातिशयस्यैव परमप्रयोजनस्याधायकत्वं लक्षणम्, अत एव परगतातिशयाधानायोगान्ययोगव्यवच्छेदविकल्पेन राजन्यभृत्ययोरतिव्याप्त्यव्याप्तिप्रसञ्जनमस्मत्पक्षे नावतरति, परातिशयमात्राधायकत्वस्य लक्षणत्वाभावात्। नच द्वारशेषिगतातिशयस्य परमशेषिगतातिशयं प्रति प्रयोजकत्वे सत्यपि तस्य परमप्रयोजनत्वाभावात् द्वारशेषिणं प्रति शेषभूतवस्तुनि लक्षणस्याव्याप्तिशशङ्कनीया, शेषभूतवस्तुगतातिशयापेक्षया शेषिगतातिशयस्य पारम्यमात्रस्य निवक्षिततया परमशेषिगतातिशयरूपपरमप्रयोजनत्वस्य व्युदसनीयत्वाभावात्। ततश्च द्वारशेषिगतातिशयस्य शेषभूतवस्तुगतातिशयान्तराधायकत्वेन प्रयोजनत्वं परमशब्दव्युदसनीयम्। ननु 'पुरुषश्च कर्मार्थत्वा'दिति पुरुषस्य कर्मशेषत्वं कर्ममीमांसायां राद्धान्तितम्। पुरुषश्च स्वर्गकाम इति तस्य परातिशयनिष्पादनमेव परमप्रयोजनं न भवतीत्यव्याप्तिरिति चेन्न, तस्य कर्तृत्वोपहितवेषेण शेषत्वादुपहितस्य कर्मनिष्पादनैकप्रयोजनत्वाच्च कर्मशेषतोपपत्तेः। नन्वेतल्लक्षणमसम्भवहतम्, न खलु चेतयमानः कश्चित्परगतातिशयं स्वस्य परमप्रयोजनं मत्वा प्रवर्तते, किन्तु परमप्रयोजनमपि स्वप्रयोजनार्थं मत्वा हि प्रवर्तते। उच्यते, नैवमसम्भवः, अचेतनेषु परातिशयैकप्रयोजनत्वदर्शनात्. यद्यपि चेतनस्वारसेन स्वप्रयोजनमेव परमप्रयोजनं मन्यते तथाऽपि न लक्षणस्य हानिः, जन्मक्रिया-

५ भावप्रकाशिका ५

निरूपकधर्मवाचिस्वरूपपदेन ? व्यावर्त्याप्रसिद्धेरित्यत आह (नच निरूपकशब्दस्येति) स्वरूपशब्दस्य निरूपकधर्मे व्युत्पन्नत्वान्निरूपकेत्युक्तम्, यदतिशयैकपरप्रयोजनत्वं यस्य धर्मस्य तच्छेष इत्युक्तोपि न दोष इति भावः। (शेषभूतवस्तुगतातिशयान्तराधायकत्वेनेति) शेषस्य शेष्यनुष्ठाप्यत्वेन शेषवस्तूत्पत्तेरपि शेषगतातिशयरूपतया शेषिणोपि तदाधायकत्वसम्भवादिति भावः। (परप्रयोजनत्वं परमशब्दव्युदसनीयमिति) शेषगतातिशयस्येतिशेषः। प्रकृष्टकृपान्वितेषु परातिशयस्य स्वरसतः परम-

* श्रुतप्रकाशिका *

यभिज्ञैर्मध्यस्थैः परातिशयनिष्पादनैकभोजनतया प्रतिपत्तुं शक्यत्वात्, इच्छा-स्वीकारौ यथासम्भवमिति युक्तम्, तथा प्रतिपत्तियोग्यत्वगनिष्टमप्यवर्जनीयं स्वय-मपि भृत्यो जानाति । अपि च परातिशयस्य परमप्रयोजनत्वावगतिः स्वरसतश्चेतन-स्यापि सम्भवति, प्रकृष्टकृपास्नेहान्वितेषु तद्दर्शनात्। दया हि स्वार्थनिरपेक्षा पर-दुःखासहिष्णुता, अत्रानुकूलेतरजनः पर इति विवक्षितः, अर्थादिकामनया परदुःखं शिशमयिषोस्तद्दुःखानुवृत्तिरनिष्टा स्यादिति तद्व्युदासाय स्वार्थानपेक्षशब्दः। यद्यपि कृपया परं रक्षतः शास्त्रसिद्धमदृष्टम्, तथाप्यदृष्टाभिसन्धिविरहितस्यैव परदुःखदर्शनानन्तरमवशाश्रुपातादिमत्त्वदर्शनाद्रक्षणदशायामप्यदृष्टाभिसन्धिराहि-त्यदर्शनाच्च स्वार्थानपेक्षता युक्ता । परदुःखदर्शनजनिततादात्विकस्वदुःखनिवृत्तिरूप-फलाच्चत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्, ईदृशं स्वार्थत्वं शेषस्याप्यस्ति, तद्धि स्वार्थानपेक्षत्वं न विहन्ति, किन्तु तदनुकूलमेव, परदुःखज्ञानरूपदुःखनिर्वृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात्. तथा मित्रा-दिषु स्नेहप्रकर्षाच्च, स्वार्थानपेक्षाप्रवृत्तिर्बन्धुद्रविणयशोधर्महानिकरी प्राणव्ययकरी च दृश्यते, सम्बन्धविशेषान्वितेषु प्रीतिः स्नेहः यस्य विपाकाः अस्थानभयशङ्कित्वं दोषानवभासो दोषेऽपि गुणबुद्धिरित्यादयः । स्निग्धश्च जनः स्वसत्तामनपेक्ष्य पुत्रादिदुःखनिवृत्त्यर्थं प्रवर्त्तमानो दृश्यते, तच्च तद्गतदुःखासहत्वकृतम्, यस्य दुःखातिशयदर्शनं स्वसत्तानपेक्षतामापादयेत् स च निरतिशयप्रीतिविषयः, परा-नर्थनिमित्ताऽप्रीतितारतम्यस्य तद्विषयप्रीतितारतम्यनिबन्धनत्वात्, यश्च निरति-शयप्रियः, तदभ्युदयोऽपि निरतिशयप्रियः, तत्प्रीतितारतम्यस्य तत्सम्बन्धिप्रीति-तारतम्यहेतुत्वात् तदभ्युदयश्च परमप्रयोजनं भवति, स्वप्रीतिहेतुभूतस्वगतार्था-न्तरसाधनत्वनैरपेक्ष्येण स्वेच्छाविषयत्वात्, अतः कृपया स्नेहेन वा परदुःखास-हिष्णुत्वदर्शनात् परप्रयोजनस्य परमप्रयोजनत्वं सिद्धमिति न शेषलक्षणस्यास-म्भवः । न च परमप्रयोजनरूपपरातिशयाधायकत्वस्य मित्रादिष्वपि सम्भवाल्ल-

* भावप्रकाशिका *

प्रयोजनत्वावगतिमुपपाद्य स्नेहान्वितेष्वप्युपपादयति ( तथा मित्रादिष्वित्यादिना ) ( सम्बन्धविशेषान्वितेष्विति ) सम्बन्धविशेषान्वितेष्वित्यर्थः । (पुरुषविशेषं प्रति न

* श्रुतप्रकाशिका *

क्षणस्यातिव्याप्तिश्शङ्कनीया, तेषां परातिशयैकप्रयोजनत्वनियमाभावात् । तद्धि तेषामाकारविशेषोपहितरूपेण वा यावज्जीवं वा पुरुषविशेषम्प्रति न नियतं पुरुषभेदेनाप्यनियतञ्च, भृत्येषु तु तन्नियतम् शेषविशेषनियमाभावेऽपि यं कञ्चित्प्रति पारार्थ्यं भृत्यादेर्यावदात्मभावीति । यदीदृक्त्वं न दृश्यते तेषां न भृत्यत्वम् । यद्वा यद्यपि गर्भदासादयः स्वेषां परार्थैकप्रयोजनत्वमजानन्तश्शेषिण्यतिशयाधानमपि स्वार्थं मन्यन्ते तथापि स्थूलोऽहमित्यात्मनो देहाद्यभिन्नत्वबुद्धिवत् सा भ्रान्तिरिति न लक्षणाव्याप्तिः, स्वार्थत्वबुद्धेरात्मस्थूलत्वधिय इव प्रमाणबाधितत्वात् । न च स्वार्थत्वभ्रान्तिमात्रेण पारार्थ्यहानिः, न ह्यात्मनः स्थूलोऽहमिति भ्रान्त्या देहवैलक्षण्यहानिः, एवं चिदचितोरपि स्वातन्त्र्यबुद्धेः श्रुतिबाधितत्वान्न लक्षणाव्याप्तिः । न खलु व्रीह्यादीनां यागीयत्वाज्ञानेऽपि यागशेषत्वहानिः, स्वातन्त्र्याभिमानवतः परमप्रयोजनरूपंपरगतातिशयं नियमेनानादधतः कथं लक्षणवत्त्वमिति चेन्न एतद्बुद्ध्या तथात्वानवगमेऽपि वस्तुतः परमात्मलीलोपकरणतया परमात्मनि लीलारसरूपातिशयस्य नियमेन सिद्धेः । तत्त्वज्ञैरीश्वरपरिकरत्वेन नियमेन ज्ञायमानत्वं चास्य किञ्चित्कारः, तेन एतत्परिकरवत्तया ज्ञायमानत्वरूपातिशयः परस्य सिध्येत् । तदुक्तं नीतिविद्भिः " मनागुपकारिता सर्वस्यास्यैव तत्परिकरत्वेन ज्ञायमानत्वात् " इति । शेषभूतवस्त्वाहितलीला-

ॐ भावप्रकाशिका ॐ

नियतं पुरुषभेदेनाप्यनियतञ्चेति) अस्य स्निग्धस्यामुं स्निग्धविशेषं प्रति परगतातिशयैकप्रयोजनत्वमस्तीति नियमोपि नास्ति, यथा भृत्यादेर्यावज्जीवं यत्किञ्चित्प्रति पारार्थ्यं नियतम्, एवं स्निग्धव्यक्तिविशेषनियमाभावेप्यन्यस्मिन् स्निग्धव्यक्तिविशेषे उपकारकतयैवावतिष्ठत इत्यपि न नियमोस्तीत्यर्थः । येषां स्वातन्त्र्यबुद्ध्या परातिशयाधानेपि स्वार्थत्वबुद्धिः, तेषां अलक्ष्यतया न तत्राव्याप्तिर्दोषायेत्येकं परिहारं यत् ईदृक्त्वं न दृश्यते तेषां न भृत्यत्वमिति भाष्येणोक्त्वा अलक्ष्यत्वाङ्गीकरणस्य अयुक्तत्वं मत्वा परिहारान्तरमाह ( यद्वा यद्यपि गर्भदासादय इति) वास्तवं पारार्थ्यमेव लक्षणम्, न प्रतीयमानमिति भावः । ( ज्ञायमानत्वं चास्य किञ्चित्कार इति ) लीलारसनिष्पादनं पूर्वोक्तचशब्देन

प्रतिसम्बन्धी शेषः तत्प्रतिसम्बन्धी शेषीत्यप्यसङ्गतम् ॥ नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वम्, पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम्, स चेच्छाविषयः, तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात् कृतिसाध्यता, कृतिप्रधानत्वरूपं कार्य्यं दुर्निरूपमेव । नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्ति-

* श्रुतप्रकाशिका *

रसाद्यतिशयभाक्त्वं न परमात्मनोऽवाप्तसमस्तकामत्वविरोधि, इच्छायां सत्यामभिमतविनियोगानुगुणपरिकरसम्पत्तिरेवावाप्तसमस्तकामत्वम्, यथाह भगवान् भाष्यकारो वेदान्तसारे "अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाऽभिमतसकलभोगोपकरणसद्भावः" इति । अतो यथोक्तशेषलक्षणमुपपन्नम्, एवमस्मदुक्तं शेषलक्षणमङ्गीकृत्य कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति परैर्वक्तुं न शक्यते, विकल्पासहत्वात् । किं त्वया द्वारशेषित्वं कृत्युद्देश्यत्वमभिमतम् ? उत परमशेषित्वम् ? प्रथमे भावार्थस्यापि कृतिशेषित्वं स्यात्, तस्य कृतिसाध्यत्वात् । द्वितीये स्वर्गस्य कृतिं प्रति शेषित्वं स्यात्, कृतिसाध्यापूर्वस्यापि स्वर्गसाधनत्वात्; अतः कृतिशेषित्वरूपं कृत्युद्देश्यत्वं फलभावार्थविलक्षणाकारेण न सिध्यति ॥ अथ कृतिप्रयोजनत्वं कृत्युद्देश्यत्वमितिपक्षं दूषयति (नापीति) नहि कृतिर्नाम चेतयमाना काचित्प्रयोजनवती, तस्मात्कृतिप्रयोजनं नाम कृतिमत्पुरुषप्रयोजनमित्यर्थः । ततः किमित्यपेक्षायां तच्चेष्टत्वे पर्यवस्यतीत्याह (स चेति) (कृतिसाध्यता कृतिप्रधानत्वरूपं कार्य्यं दुर्निरूपमेवेति) कृतिप्रधानत्वशब्देन स्वेदादिव्यावृत्तिः, कृतिसाध्यताशब्देन आत्मव्यावृत्तिः, तस्य हि कृतिशेषित्वमस्ति, विशिष्टस्य लक्षणत्वाचत्र विशेष्ये दुर्निरूपे सति विशिष्टमेवासिद्धमित्यर्थः । एवं तृतीयाकाररूपं प्रयोजनत्वं दूषितम् । अथ स्वत इष्टत्वरूपं प्रयोजनत्वं तत्प्रयुक्तकृतिसाध्यत्वं च दूषयति (नियोगस्यापीति) इषिः—इच्छा । अत्रेच्छाविषयभूतार्थान्तरसाधनत्वविरहेणेष्टत्वं स्वत इष्टत्वं विवक्षितम्, तत्सुखस्य दुःखनिवृत्तेश्च समानम् । स्वत इष्टत्वं स्वत इष्टत्वप्रयुक्तकृतिसाध्यत्वञ्च तयोरेव, तस्मात्स्वत इष्टत्वप्रयुक्त-

भ्यामन्यत्वात्तत्साधनतयैवेष्टत्वं कृतिसाध्यत्वञ्च , अत एव हि तस्य क्रियातिरिक्तता, अन्यथा क्रियैव कार्यं स्यात् स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्य्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः, अतः प्रथममनन्यार्थतया प्रतिपन्नस्य कार्य्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसाधनं भवतीत्युपहास्यम्, स्वर्गकामपदान्वितकार्या-

---

* श्रुतप्रकाशिका *

कृतिसाध्यत्वे तत्साधनतयेष्टस्य नियोगस्य न सिध्यत इत्यर्थः । साधनतयेष्टत्वमुपपादयति (अत एव हीति) साधनत्वेन सिध्यनङ्गीकारे धात्वर्थ एव कार्यं स्यादित्याह ( अन्यथेति ) एतद्विवृणोति( स्वर्गकामेति )( अत इति ) स्वर्गकामपदान्वयात्पूर्वं धात्वर्थमात्रस्यैव कार्यताप्रतिपत्तेस्तदन्वये तत्साधनतयैव प्रतिपत्तेश्चेत्यर्थः । (प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसाधनं भवतीति) अयमर्थः, यथा स्वप्राधान्यनिर्वहणायानुजीविनामभिमतं प्रभुः प्रददाति तद्वदपूर्वमपि स्वयं प्रधानतया प्रतिपन्नं स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य स्वर्गं ददातीति । यथा पञ्चिकायाम् " आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये । कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव न" इति । उपहास्यम्—समीपस्थैरपि हास्यम् । अत इत्युक्तमर्थं विवृणोति (स्वर्गकामेति) प्राधान्येन कार्यप्रतिपत्तिः किमेकपदश्रवणवेलायाम् ? उत स्वर्गकामपदान्वितवेलायाम् ?इति विकल्पमभिप्रेत्य प्रथमे कल्पे दूषणम्—अन्यथा क्रियैव कार्यं स्यादित्यनेनोक्तं भवति, तस्मिन्नेव पक्षे अभ्युपगमेन दूषणान्तरञ्च, एकपदेन कार्यमनन्यार्थं प्रतिपन्नमस्तु, तथाऽप्यन्विताभिधानदशायां प्रतिपन्न एवार्थस्सम्यगर्थः, अतो नानन्यार्थत्वमिति । द्वितीयकल्पे दूषणमुच्यते (स्वर्गकामपदान्वितेति) स्वर्गकाम-

* भावप्रकाशिका *

समुन्नीयते । दूषणान्तरमेव दर्शयति, ( एकपदेन कार्यमित्यादिना ) ननु त्रिपु

भिधायिपदेन प्रथममप्यनन्यार्थतानभिधानात् सुख-दुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य कृति-

* श्रुतप्रकाशिका *

पदान्वितलिङ्गादिना तत्साधनतयैवाभिधानात् प्रथममनन्यार्थतया प्रतिपन्नमिति न वक्तुं युक्तमित्यर्थः । व्युत्पत्तिदशायामपूर्वस्य साधनतया व्युत्पत्तिः, अभिधान-दशायान्तु अनन्यार्थं स्वाधिकार्यमित्येव प्रतीयत इति शङ्कायाम् अपूर्व-व्युत्पत्तिमतोऽपि पुरुषस्य एकपदश्रवणवेलायामनन्यार्थत्वप्रतीत्यनुपपत्तिमाह (सुखेति) न निर्विशेषं सामान्यमिति न्यायात्साध्यमिति सामान्येनाभिधेयमपि विशेषनिष्ठतया प्रतीयते, सुखं दुःखनिवृत्तिस्तत्साधनं वा त्रीण्येव कृतिसाध्यानि, तस्मादेषु त्रिष्वन्यतमेन साध्येन भवितव्यम्, तत्र सुखत्वदुःखनिवृत्तित्वायो-गात् तत्साधनतयैव साध्यमिति प्रतीयते, कृतिर्हि त्रिष्वन्यतममेव गोचरयति, तथा दर्शनात्, दर्शनानुरोधेन चाभ्युपगन्तव्यम्. कृतेः क्रियातिरिक्तगोचरत्वा-दर्शनेन हि कृत्यपूर्वयोर्घटकत्वेन भावार्थो निवेशितः, तस्मात् त्रिष्वन्यतमत्वाभावे साध्यमिति प्रतीतिरेव न स्यादित्यर्थः । किञ्च अन्विताभिधानवादिना स्वर्गकामपदा-न्वित एव लिङ्गादिः कार्यमभिदधातीति वक्तव्यम्, तदानीं तत्सन्निधानबलेन तत्साधनतयैव प्रतीतिः स्यादिति नानन्यार्थतया प्रतिपत्तिरिति । सुखेत्यादेरेवं वार्थः, सुखदुःखनिवृत्त्यन्यत्वात्स्वत इष्टतया कृतिसाध्यत्वमयुक्तम्, तत्साधनादन्य-

* भावप्रकाशिका *

अन्यतममेव कृतिसाध्यत्वेन प्रतीयत इत्युक्तम्, यागस्य सुखदुःखाभावेतरत्वात्, साधनत्वप्रतीतेश्च प्रथमतो भावात्, यागे कृतिसाध्यत्वप्रतीतिः न स्यादि-त्याशङ्क्य क्रियातिरिक्तस्यापूर्वस्य साक्षात्कृतिविषयतया साध्यत्वासम्भवात् किं विषयकृतिसाध्यम् अपूर्वमित्याकाङ्क्षायां यागविषयककृतिसाध्यमिति यागस्या-वच्छेदकतया विषयत्वमात्रं प्रतीयते, न साध्यत्वमित्याह (कृतेः क्रिया-तिरिक्तगोचरत्वादर्शनेनेति) (सुखेत्यादेरेवं वार्थ इति) पूर्वस्मिन् पक्षे कृतिसाध्य-त्वे इष्टत्वं प्रयोजकतया नोपन्यस्तम्, अपि तु सुखदुःखाभावतत्साधनान्यतमत्व-मित्युक्तम्, अस्मिंस्तु पक्षे त्रिष्वप्यनुगतमिष्टत्वमेव कृतिसाध्यत्वप्रयोजकमुच्यत इति विशेषः । सम्भावितप्रकारान्तरेण प्रयोजनत्वनिराकरणपरतया पौनरुक्त्यापरिहारं

साध्यताप्रतीत्यनुपपत्तेश्च । अपि च–किमिदं नियोगस्य प्रयोजनत्वम् ? सुखवन्नियोगस्याप्यनुकूलत्वमेवेति चेत्, किं नियोगः सुखम् ? सुखमेव ह्यनुकूलम्, सुखविशेषवन्नियोगापरपर्य्यायं विलक्षणं सुखान्तरमिति चेत्, किं तत्र प्रमाणम् ? इति वक्तव्यम् । स्वानुभवश्चेन्न, विषयविशेषानुभवसुखवन्नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते । शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात्पश्चात्तु भोक्ष्यत इति चेत्

* श्रुतप्रकाशिका *

तया परम्परयेष्टत्वेन कृतिसाध्यत्वमप्ययुक्तमिति । पूर्वं तृतीयाकाररूपं प्रयोजनत्वं निरस्तम् । अथ स्वत इष्टत्वरूपं प्रयोजनत्वञ्च सुखदुःखनिवृत्त्यन्यत्वान्निरस्तम्, इदानीं स्वत इष्टत्वसिद्धये अनन्यार्थत्वदृढिम्ने च सम्भावनीयं सुखरूपप्रयोजनत्वं दूषयितुमुपक्रमते ( अपि चेति ) ( किमिदं नियोगस्य प्रयोजनत्वमिति ) किं– क्षेपे । शङ्कते ( सुखवदिति ) अनुकूलत्वं सुखेतरस्यानुपपन्नम्मन्यमानः पृच्छति ( किमिति ) अभिमतं विवृणोति ( सुखमेव हीति ) पुनः शङ्कते ( सुखविशेषवदिति ) नियोगापरपर्यायम्– पर्यायशब्दबाहुल्यसम्भवादपरशब्दः (सुखान्तरमिति) यथा भौमसुखाद्विलक्षणं स्वर्गादिसुखं सम्भाव्यते, तथा ततोऽपि विलक्षणं सुखान्तरमिदमित्यर्थः । प्रमाणाभावं वक्तुमाह ( किं तत्रेति ) चन्दनादिसुखं हि स्वानुभवसिद्धम्, अतः स्वानुभवो लौकिकवाक्यं वेदे च काम्यविधिवाक्यं नित्यनैमित्तिकवाक्यमर्थवादाश्च यथाक्रमं न नियोगस्य सुखरूपतां प्रति प्रमाणानि न भवन्तीत्युच्यते (स्वानुभवश्चेदित्यादिना) (तस्य दुःखात्मकक्रियाविषयत्वा-

* भावप्रकाशिका *

दर्शयन् अपिचेत्यादिभाष्यमवतारयति ( पूर्वं तृतीयाकाररूपमित्यादिना ) ( पर्यायशब्दबाहुल्यसम्भवादिति नियोगपर्यायमित्युक्ते नियोगशब्द एव पर्यायशब्द इति प्रतीयते, अपरशब्दप्रयोगे तु नियोगवाचिशब्देषु सोपि कश्चित् पर्याय इति प्रती-

किं तन्नियोगस्य पुरुषार्थत्ववाचिशास्त्रम्? न तावल्लौकिकं वाक्यम्, तस्य दुःखात्मकक्रियाविषयत्वात्, तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात्। नापि वैदिकम्, तेनापि स्वर्गादिसाधनतयैव कार्य्यस्य प्रतिपादनात्। नापि नित्यनैमित्तिकशास्त्रम्, तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्थापूर्वव्युत्पत्तिपूर्वकमित्युक्तरीत्या तेनापि सुखादिसाधनकार्य्याभिधानमवर्जनीयम्, नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यरोगतादिव्यति-

---

* श्रुतप्रकाशिका *

तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनादिति ) दुःखात्मकस्य सुखादिसाधनभूतधात्वर्थमात्रस्य कर्त्तव्यताप्रतिपादनादित्यर्थः । नियतैहिकफलस्येत्यादिना योग्यानुपलब्धिरुच्यते, नियतैहिकफलस्य कर्मणः—अप्रस्तुतप्रतिबन्धस्य कर्मण इत्यर्थः । अनेनान्त्येष्टिसापेक्षपरमापूर्वव्यावृत्तिः । अथ कृतिसाध्यत्वं दूषयति

७ भावप्रकाशिका ७

यत इति भावः । भाष्ये— पश्चात्तु भोक्ष्यत इति । परिपाकदशायामसुखत्वेनानुभूयत इत्यर्थः । नियतैहिकानि कारीर्यभिचारादीनि, नियतामुष्मिकानि स्वर्गार्थानि कर्माणि, पशुपुत्रान्नाद्यर्थानि तु अत्रैव जन्मनि कर्मणः परिपाके ऐहिकानि, इतरथा आमुष्मिकाणीति, अतो अनियतैहिकानीति पूर्वतन्त्रे स्थितम् । ततश्च भाष्ये—अनुभूयमानान्नाद्यरोगतादिव्यतिरेकेणेति । अनियतैहिकफलानामप्युपपादनात् । भाष्ये—नियतैहिकशब्दः नियतामुष्मिकस्वर्गादिसाधनकर्मविलक्षणमात्रपर इति । नियतैहिकशब्देन पश्वन्नाद्यर्थकर्मणामपि सङ्ग्रहं हृदि निधाय तेषु च कर्मसु सति प्रतिबन्धके तदानीमेव इह फलानुभवासम्भवात् तदानीमनुभूयमानान्नाद्यरोगतादिव्यतिरेकेणेति ग्रन्थासामञ्जस्यं मन्वानस्सोपस्करं व्याचष्टे ( अप्रस्तुतप्रतिबन्धस्य कर्मण इत्यर्थ इति ) शेष इत्यर्थः । ( अन्त्येष्टिसापेक्षेति )

रेकेण नियोगरूपसुखानुभवानुपलब्धेश्च, नियोगः सुखमित्यत्र न किञ्चन प्रमाणमुपलभामहे। अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्त्तनवन्नियोगरूपसुखप्रकारकीर्त्तनं भवतामपि न दृष्टचरम्; अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यवसीयते. धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्य्यामिपरमपुरुषसमाराधनरूपता समाराधितात्परमपुरुषात्फलसिद्धिश्चेति "फलमत उपपत्तेः"[1] इत्यत्र प्रतिपादयिष्यते, अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सिद्धम्। चातुर्मास्यादिकर्मस्वपि

* श्रुतप्रकाशिका *

(अतो विधिवाक्येष्वपीति) किं व्युत्पत्तिसिद्धत्वाद्धात्वर्थातिरिक्तार्थः स्वीक्रियते? उत पुरुषार्थतासिध्यर्थम्? उत सुखसाधनत्वलक्षणाव्यवहितपुरुषार्थत्वसिध्यर्थम्? इति विकल्पं हृदि निधाय प्रथमद्वितीयकल्पयोरुत्तरमाह (अत इति) अयमर्थः उक्तप्रकारेण धात्वर्थातिरिक्ते व्युत्पत्त्यभावात् तथाविधस्य स्वतः पुरुषार्थत्वाभावाच्चेति। कर्तृव्यापारः—प्रयत्नः। शब्दशास्त्रस्वारस्यमप्यस्मत्पक्षे विद्यत इत्याह (शब्दानुशासनसिद्धमेवेति) साधनत्वसिद्ध्यर्थं क्रियातिरिक्तार्थस्वीकार इत्यत्राह (धात्वर्थस्य चेति) 'यज देवपूजायां'' इति हि धातुरिति भावः। प्रकृतब्रह्मविचारारम्भहेतुः सिद्ध इत्याह (अत इति) सिद्धवस्तुनि बुद्धिपूर्वकं यदृच्छया चाद्य व्युत्पत्तिसम्भवात्, अन्यथापि विधिशेषतया सिद्धेश्चेत्यर्थः। अथ विशेषणांशासिद्धिं परिहरति (चातुर्मास्यादीत्यादिना) कर्मणामावृत्तिविधानाच्च क्षयिफलत्वमवगतमिति सिद्ध-

* भावप्रकाशिका *

परिधानीये कर्मणि "दक्षिणे हस्ते जुहूं सादयति" इत्यादिवाक्यविहितक-

[1] १-शारीर सू. ३-२-३७

केवलस्य कर्म्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणं [1]" वायुश्चान्तरिक्षं चैतदमृतम् " इत्यादिवदापेक्षिकं मन्तव्यम्, अतः केवलानां कर्मणामल्पास्थिर-

* श्रुतप्रकाशिका *

मित्यनुसन्धेयम् । "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादिवाक्यमभिप्रेत्याह (क्षयिफलत्वोपदेशादिति) अक्षयफलश्रवणनिर्वाहमाह (वायुश्चेति) नहि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणमर्थवादोक्तत्वात् त्यज्यते, अपि तु कर्मणामावृत्तिविधानात् , क्षयिफलत्वोपदेशाच्च , तस्मात्कर्मणां क्षयिफलत्वनिर्णयसिद्धिः, अतो हेतौ विशेषणांशः सिद्धः । अधिकरणार्थमुपसंहरति (अत इति) अस्याधिकरणस्य ब्रह्ममीमांसा विषयः, सा किमारम्भणीया ? उत न ? इति संशयः, सिद्धवस्तुनि शब्दव्युत्पत्तिर्नास्तीति विचारः, अस्तीति निश्चयः, आरम्भः प्रयोजनमित्यधिकरणाङ्गपञ्चकम् । यथाहुः "विषयस्संशयश्चैव विचारो निर्णयस्तथा । प्रयोजनेन सहितमेतत्स्यादङ्गपञ्चकम् "॥ इति । "परीक्ष्य लोकान्" इत्यादिवाक्यं प्रथमसूत्रस्थन्यायसिद्धानुवादपूर्वकं गुरूपसदननियमविधिपरम् " गुरुमेवाभिगच्छेदित्युक्तत्वात्, रागतः प्रवृत्तौ सत्यां विधेयाभावादस्य सूत्रस्य वाक्यत्वं न घटते, उद्देश्योपादेयविभागवद्धि वाक्यम्, विधेयं ह्युपादेयमिति न वाच्यम्, अज्ञात-

* भावप्रकाशिका *

र्मोपयुक्तजुह्वादिपात्रप्रतिपत्तेरपि स्वर्गाद्यर्थकर्माङ्गतया सर्वाङ्गापूर्वसाध्यपरमापूर्वस्य जुह्वादिप्रतिपत्त्यनन्तरभावित्वेन ततःपूर्वमनिष्पत्तेरिति भावः । ( अर्थवादोक्तत्वात् त्यज्यत इति ) अर्थवादप्रामाण्यस्य सिद्धान्तेप्यभ्युपेतत्वेनार्थवादोक्तत्वमात्रेण त्यागं न ब्रूम इत्यर्थः। ( व्युत्पत्तिर्नास्तीति विचार इति ) व्युत्पत्तिर्नास्तीति पूर्वपक्ष इत्यर्थः । वैविध्येन बुद्धेस्सञ्चारणं विचारः । ननु ब्रह्मविचारारम्भस्य न्यायसिद्धत्वे तद्विधायकं " परीक्ष्य लोकान् ' इतिवाक्यं व्यर्थं स्यादित्याशङ्क्याह ( परीक्ष्य लोकानित्यादिवाक्यमिति ) ( उद्देश्योपादेयविभागवदिति ) यद्यपि तत्त्वमसीतिवाक्यवत् उद्देश्योपादेयविभागशून्यस्यापि वाक्यत्वं सम्भवति , तथापि सूत्ररूपवाक्यस्य तद्रूपत्वं वक्तव्यमिति भावः। ( विधेयं हि उपादेयमिति )

---

१ बृ-उप. ४-अ-३-ब्रा-३-वा.

फलत्वात् ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात्तन्निर्णय-फलो ब्रह्मविचारारम्भो युक्त इति स्थितम् ॥

इति श्रीभाष्ये जिज्ञासाधिकरणम् ।

---

* श्रुतप्रकाशिका *

ज्ञापकत्वात् । प्रागज्ञातं वाक्यज्ञाप्यं ह्युपादेयम्, रागतो ब्रह्मविचारे प्रवृत्तस्यापि सिद्ध-वस्तुनि व्युत्पत्तिर्नास्तीति वाक्येन अनारम्भणीयत्वं ज्ञायते, तत्प्रति सिद्धवस्तुनि व्यु-त्पत्तिसम्भवादारम्भणीयत्वज्ञापनमज्ञातज्ञापनमेवेत्युद्देश्योपादेयविभागवत्त्वं सूत्रस्य । अत्र हि रागतः प्रवृत्तिमतः पूर्वपक्षहेतुना निवृत्तौ प्रसक्तायामप्रतिपन्नस्तत्परिहारो विधीयते ॥ .... .... .... .... ....

* भावप्रकाशिका *

यद्यपि देशकालादिविधौ विधेयस्यापि देशकालादेर्नोपादेयत्वं तथापि प्रायिक-त्वमभिप्रेत्य एतदुक्तमिति द्रष्टव्यम् । ( व्युत्पत्तिर्नास्तीति वाक्येनेति ) पूर्वपक्षयुक्ति-भिरित्यर्थः । अस्य सूत्रस्याप्रवृत्तप्रवर्तकत्वमपि सम्भवति । यथा "कृष्णलं श्रपयेत्" इत्यस्य श्रपणे प्रयोजनाभावेन निवृत्तस्य प्रतिप्रसवरूपतया विधित्वमित्याह, ( अत्र हि रागतः प्रवृत्तिमत इति ) ॥ .... .... .... .... ....

इति जिज्ञासाधिकरणम् ॥ १ ॥



२ अधिकरणम्

किम्पुनस्तद्ब्रह्म ? यज्जिज्ञास्यमुच्यत इत्यत्राह—

## जन्माद्यस्य यतः ॥ २ ॥

* श्रुतप्रकाशिका *

अथ शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणरूपसम्बन्धिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां स्पष्टत्वादधिकरणसङ्गतिमाह ( किम्पुनरिति ) शास्त्रसङ्गतिर्हि वेदार्थविचाररूपतया स्पष्टतरा, वेदान्तार्थविचाररूपत्वात्काण्डसङ्गतिः, कारणविषयत्वाद्द्विकसङ्गतिः , कारणविषयवाक्यतर्करूपत्वादध्यायसङ्गतिः , अयोगव्यवच्छेदविश्रान्तेः पादसङ्गतिः , शास्त्रारम्भार्थत्वात्पेटिकासङ्गतिः , अतोऽवान्तरसङ्गतिः किम्पुनरित्यादिभाष्येणोच्यते । जिज्ञास्यम्— विचार्यम् , सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेनोपायत्वेन च यत् जिज्ञास्यमुक्तमित्यर्थः । प्राप्यतया प्रापकतया च हि ब्रह्मैव आपाततः प्रतिपन्नम्, अनेन जिज्ञास्यमितिपदेन प्रणववेदप्रधानाद्यौपचारिकार्वाचीनब्रह्मशब्दार्थव्यावृत्तिः, तच्च व्यावर्तकस्य लक्षणस्य वक्तव्यतयापि हि सिध्यति . ब्रह्मशब्दवाच्यं स्वरूपेण गुणैश्च निरतिशयबृहत्त्वयोगि, 'बृहति बृंहयति' “ बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते ”इति श्रुतिस्मृतिनिर्वचनात् । तत्र “ ब्राह्मणो वै सर्वा देवताः”

* भावप्रकाशिका *

( वाक्यतर्करूपत्वादिति ) वाक्यविचाररूपत्वादित्यर्थः । ( सकलेतरपुरुषार्थेति ) कर्मणामल्पास्थिरफलत्वावगत्यनन्तरमनन्तस्थिरफलत्वेनापाततः प्रतिपन्नानां ब्रह्मतदनुबन्धितदुपासनतत्प्राप्त्यादीनां विचार्यत्वमिति हि जिज्ञासासूत्रार्थ इति भावः । ततश्चेतरत्परित्यज्य प्राप्यत्वेन प्रापकत्वेन ब्रह्म जिज्ञास्यमित्यस्य कथं सूत्रार्थत्वमिति न चोदनीयम् । व्याख्यात्रन्तरोक्तजिज्ञास्यपदप्रयोजनं दूषयति ( अनेन जिज्ञास्यमितीति ) भाष्ये—जिज्ञास्यमितिपदस्य सङ्गतिसूचनार्थतया व्याख्यातत्वेन यत्कैश्चिदुक्तं जिज्ञास्यमितिपदे प्रधानाद्यौपचारिकार्वाचीनब्रह्मशब्दार्थव्यावृत्तिरिति, तन्नेत्यर्थः । ततश्च जिज्ञास्यपद इति सप्तमी , नतु जिज्ञास्यपदेनेति तृतीयेति मन्तव्यम् । नेत्यस्य पृथक्पदत्वेन निषेधार्थकत्वात् , तत्र हेतुमाह ( तच्च व्यावर्तकस्येति ) तच्च व्यावर्तनमित्यर्थः । वक्तव्यतया उक्तेत्यर्थः । अपि-

जन्मादीति– सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो

* श्रुतप्रकाशिका *

'नकिरिन्द्रत्वदुत्तर.' अग्निस्सर्वा देवताः 'एक एव रुद्रः' सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः" "आपो वा इदं सर्वम्" इत्यादिभिर्ब्रह्मणाग्नीन्द्रादीनामपि समाभ्यधिकराहित्यप्रतीतेरर्थतत्त्वं व्याकुलम्, अतस्तेषु तापत्रयातुरजिज्ञास्यं तत् ब्रह्म किंलक्षणकमित्यर्थः। सर्वेषां समाभ्यधिकराहित्ये प्रतीतेऽपि तद्व्याहतमन्यपरवाक्यावगतं चेत्यनादरणीयम्, तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव निरतिशयबृहदुक्तं तदेव जिज्ञास्यमित्यभिप्रायेणाह "यतो वा इमानी" त्यादिश्रुतिरितीममर्थं हृदि निधाय सूत्रकारेण जन्मादिसूत्रं प्रणीतमित्यभिप्रायवतोक्तं किं पुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यत इति, नहि किं पुनर्ब्रह्मेत्युक्तम्। सूत्रमुपादत्ते (जन्माद्यस्य यत इति) प्रथमपदं व्याचष्टे (जन्मादीति-सृष्टिस्थितिप्रलयमिति) अन्यत्

* भावप्रकाशिका *

स्सम्भावनार्थः, एवकारार्थो वा। ततश्चायमर्थः, महामहिमशालित्वेन प्रसिद्धप्रणववेदप्रधानब्रह्मविष्णुरुद्राग्नीन्द्रादीनां मध्ये किं निरतिशयबृहदिति प्रश्ने प्रणवादिव्यावृत्तिर्हि व्यावर्तकलक्षणोक्त्यैव सिध्यति, न ततः प्राक् प्रश्नसमये। ततश्च जिज्ञास्यमित्यस्य उक्तरीत्या सङ्गतिसूचकत्वमेव, नतु प्रधानादिव्यावर्तकत्वमिति। ( यदेव निरतिशयबृहदुक्तं तदेव जिज्ञास्यमिति ) नन्वेतद्ग्रन्थपर्यालोचनायां 'यतो वा इमानी'तिवाक्ये तद्विजिज्ञासस्वेति जिज्ञास्यत्वं विधीयत इति प्रतीयते, तदनुसाराच्च 'अधीहि भगव' इति प्रश्नोपि किं जिज्ञास्यमिति जिज्ञास्यविषयक एव, इतरथा प्रश्नोत्तराभ्यां भवितव्यम्। नच तद्युज्यते; उत्तरत्र ग्रन्थकारैरेव यत्नेन विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः, अपि तु ब्रह्मत्वस्यैवेति वक्ष्यते, कथं तयोरविरोध इति चेत्? अत्र केचित्, "इतरे त्वर्थसामान्यात्" इति सूत्रे जगत्कारणतयोपलक्षितमिति भाष्यव्याख्याने केषुचिदुपासनेषु जगत्कारणत्वमनुसन्धेयम्। केषुचिन्न, यत्रानुसन्धेयं तत्र ज्ञाप्यान्तर्गतत्वाज्जगत्कारणत्वं विशेषणम्। यत्र तु नानुसन्धेयं तत्रोपलक्षणम्, ज्ञाप्यानन्तर्गतत्वादिति वक्ष्यमाणत्वेन तद्ग्रन्थपर्यालोचनायां यतो वेतिवाक्ये जिज्ञास्यत्वलक्षणमुपास्यत्वमेव

* श्रुतप्रकाशिका *

पदद्वयं वाक्यार्थयोजनायां व्याख्यास्यते, प्रथमपदव्याख्यानस्य समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेन वाक्यार्थयोजनायामन्तर्गमयितुमशक्यत्वात्तस्य पृथग्व्याख्यानम्। सृष्टिस्थितिप्रलयमित्यत्र सृष्टिशब्द उत्पत्तिपरः 'सृष्टिस्थित्यन्तकालेषु' 'सृष्टिस्थित्यन्तकरणी,मित्यादिप्रयोगात्, प्रयोज्यप्रयोजकव्यापारवाचिशब्दानां व्यतिरेकेण प्रयोगो ब्रह्मण एव निमित्तोपादानत्वाभिप्रायनिबन्धनः । सृष्टिस्थितिप्रलयमिति समाहारार्थे द्वन्द्वः, एकस्मिन्कार्ये अन्योन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः, यथा दर्शपूर्णमासयोः स्वर्गं प्रति, अत्र समुदितविवक्षा, अयमेव समुदायविवक्षायां समाहारः तत्कृतमेकवचनत्वं नपुंसकत्वञ्च ; अतोऽत्र सृष्टिस्थितिप्रलयमिति समाहारे द्वन्द्वः कृतः, वाक्यार्थयोजनायां सृष्टिस्थितिप्रलया इति इतरेतरयोगद्वन्द्वः कृतः, उभयोरपि फलैक्यात् । जन्मादीत्यत्रेतिकरणेन तत्रैकवचने तात्पर्यं गम्यते, तत्र पदार्थयोजनायां सृष्टिस्थितिप्रलयमित्येकवचनान्तपदेन सौत्रपदस्यैकवचनमनुसृतम् तत्राप्येकवचनं, सृष्टिस्थितिप्रलयानां समुदायो लक्षणम्, न त्वेकैकमिति ज्ञापनार्थम्, समुदायस्य लक्षणत्वं श्रुतिस्वारस्यादवसीयते " यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति " इत्यत्र हि न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम्, अन्यथैकतरलक्षणवैयर्थ्यं च स्यात् । न च

* भावप्रकाशिका *

विधीयते, ततश्च विधेये उपासने जगत्कारणत्वस्यान्वयानन्वयाभ्यां विधेयान्वयित्वानन्वयित्वलक्षणे विशेषणत्वोपलक्षणत्वे अपि सम्भवत इति प्रतीयते, तद्ग्रन्थानुरोधेन यतो वेतिवाक्ये जिज्ञास्यत्वमेव विधीयत इति पक्षोप्याचार्याणामभिमत एव। न विचारस्य उपासनस्य वा विधिरित्युत्तरग्रन्थानुसारेण सोपि पक्षोऽभिमत इति उभयथापि सम्प्रदायसत्त्वादिति च वदन्ति । ( समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेनेति ) वाक्यार्थकथनव्याजेनैव समासार्थव्याख्यानसम्भवात्, जन्मादिपदस्य पृथग्व्याख्यानमवश्यमपेक्षितमित्यर्थः । ( ब्रह्मण एव निमित्तोपादानत्वाभिप्रायनिबन्धन इति ) इदञ्चाखिलेत्यादिश्लोकव्याख्यानावसरे सुस्पष्टमुपपादितम् । ( अत्र समुदितविवक्षेति ) दर्शपूर्णमासाभ्यामित्यत्रेत्यर्थः । ( नपुंसकत्वञ्चेति ) सनपुंसकमितिसूत्रेणेति भावः । ( जन्मादीत्यत्रेतिकरणेनेति )

* श्रुतप्रकाशिका *

समुदितं लक्षणम्, व्यावर्त्याभावात्। न हि जगदुत्पत्तौ निमित्तोपादानभूतं स्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्त्वस्तीति चेत्। सत्यम्; व्यवच्छेद्यं नेष्यते तथापि श्रुत्यनुरोधात्सूत्रकारेणैवमुक्तम्। श्रुतिश्च 'तद्विजिज्ञासस्व' इति विधित्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीताबृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमाह। शङ्कितव्यवच्छेदेनापि हि सप्रयोजनत्वं स्यात्, लक्ष्याकारविपरीतशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयायोगात्। न च जन्मादिष्वेकैककारणत्वं लक्ष्याकारविपरीतशङ्कानिराकरणक्षमम्, तथा हि; उत्पत्तिकारणत्वेऽभिहितेपि स्थित्यादिकारणत्वं—न चेत् तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकारणभूतवस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं न स्यात्। मुक्तेर्लयान्तर्भावान्मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च मोक्षप्रदत्वप्राप्यत्वानुगुणैर्गुणैश्च बृहत्त्वं न सिध्यति, अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकत्वात् सृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम्। समुदायस्य लक्षणत्वमिहाविवक्षितम्। जन्मादीति बहुव्रीहेरन्यपदार्थप्रधानत्वेन जन्मनोऽन्तर्भूतत्वादित्यत्राह (तद्गुणेति) बहुव्रीहिर्द्विविधः, तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च इति। तत्र प्रथमस्योदाहरणं "सर्वादीनि सर्वनामानि" लम्बकर्णमानयेत्यादि। द्वितीयस्योदाहरणं चित्रगुमानयेति। तच्छब्देन विशेष्यम् गुणशब्देन विशेषणं च विवक्षितम्। समित्येकीकारे। विशेषणं विशेष्यञ्च एककार्यान्वितत्वेन सह ज्ञापयतीत्यर्थः। एवमपि बहुव्रीहेर्नान्यपदार्थप्रधानत्वभङ्गः, स्वपदवाच्यविशिष्टसमुदायस्य तत्समुदायिनो वा अन्यपदार्थतया विवक्षितत्वोपपत्तेः। समासस्थपदवाच्य-

छ भावप्रकाशिका छ

जन्मादिशब्देनेत्यनुक्तानुक्रियमाणरूपाविनाशेनैकवचनान्तस्यैवानुकरणादिति भावः। शङ्कते (न च समुदितं लक्षणमिति) (विशेषणं विशेष्यञ्च एककार्यान्वितत्वेनेति) तस्यान्यपदार्थस्य गुण उत्पत्तिपदार्थः, तस्यापि क्रियान्विततया संविज्ञानं येन स तद्गुणसंविज्ञानो बहुव्रीहिरिति तत्पुरुषगर्भो बहुव्रीहिः, नतु सच गुणश्च तद्गुणाविति द्वंद्व इति मन्तव्यम्। तथा हि सति 'त्यदादीनि सर्वैर्नित्यमि' त्येकशेषेण सच गुणश्च ताविति रूपप्रसङ्गेन तद्गुणेति रूपासिद्धिप्रसङ्गात्, समुदायस्य

* श्रुतप्रकाशिका *

स्यापि विशिष्टसमुदायान्तर्गतत्वाकारेण अन्यपदार्थत्वं युज्यते, स्वपदमात्रस्य तेनाकारेण तद्वाचकत्वाभावात्। अस्येति व्याख्येयपदोपादानम्, अचिन्त्येत्यादिना तद्व्याचष्टे। अस्येतिपदस्य जगत इत्येतावन्मात्रे वक्तव्ये किमर्थो विस्तर इति चेत्, सूत्रकारविवक्षितार्थकथनार्थः। तद्विवक्षा च श्रुतिविवक्षया, श्रुतिविवक्षा कथं ज्ञायत इति चेत्? उच्यते; "यतो वा इमानि भूतानि जायन्ते" इत्यत्र भूतशब्देन कार्यवर्गेऽभिहितेपि इमानीतिपदं कार्यवर्गस्य धर्मिग्राहकप्रमाणसिद्धाकारविशेषपरम्, तत्र जगत आभासतापरत्वं ब्रह्मणो जिज्ञास्यतानुपयोगीति वैचित्र्यपरमिमानीतिपदम्, ईदृशकार्यनिष्पादनानुगुणगुणोत्कर्षं ब्रह्मेति ज्ञापनार्थम्। श्रुतिवाक्यस्येदंशब्देन निर्दिशतः सूत्रकारस्यापीयमेव विवक्षा, जगतः इमानीतिश्रुतौ बहुवचने सत्यपि सौत्रमेकवचनं कृत्स्नस्य भुवनस्यैककार्यताविशेषेणैककर्तृकत्वज्ञापनार्थम्, भूतशब्दस्य देवादिचतुर्विधभूतमात्रपरत्वव्यावर्तनेन भुवनक्रियायोगिकृत्स्नकार्यसमुदायात्मकजगद्विषयत्वज्ञापनार्थञ्च, अत एव हि भाष्ये जगत इत्युक्तम्। तत्र कार्यवर्गस्य चिदचिदात्मकत्वात्तत्प्रमाणसिद्धचिदचिद्वैचित्रीमचि-

* भावप्रकाशिका *

विवक्षितत्वे सर्वादीनीतिबहुवचनं न स्यादित्याशङ्क्याह (समुदायिनो वा अन्यपदार्थतयेति) (विशिष्टसमुदायान्तर्गतत्वाकारेणेति) अयं भावः,— मत्वर्थे बहुव्रीहेरनुशिष्टत्वात्. वाससिनमानयेत्यादौ वाससंयोगस्यैव मत्वर्थतया प्रतीतेः, तस्य च वासो विना आनयनासम्भवात् वासोविशिष्टस्यैवानयनम्, तद्वदेव शुक्लवाससमानयेति तद्गुणसंविज्ञानबहुव्रीहौ वाससंयोगस्यैव मत्वर्थानुशिष्टबहुव्रीह्यर्थतया प्रतीतेः अन्तरेण वाससस्तस्यानयनासम्भवात् तद्वत एवानयनम्। गोमन्तमानयेत्यत्रेव चित्रगुमानयेत्यत्रापि स्वामित्वस्यैव बहुव्रीह्यर्थतया प्रतीतेस्तस्य चानयनेपि चित्रगवीनां स्वामित्वलक्षणसम्बन्धानपायान्न गवामानयनम्. तद्वदिहाप्यन्यपदार्थे जन्मस्थितिलयारब्धसमुदाये जन्मन आद्यावयवत्वेनानुप्रविष्टत्वात्। अवयवावयविभावस्य च मत्वर्थविहितबहुव्रीह्यर्थत्वात् अवयवेन विना अवयविनोऽभावात् जन्मनोपि ग्रहणं सिद्धमित्यर्थः। (कृत्स्नस्य भुवनस्यैककार्यताविशेषेणेति) कृत्स्नस्य कार्यवर्गस्य एककार्यवदनायासेन एकेन कर्त्रा सङ्कल्पमात्रेण निर्मि-

* श्रुतप्रकाशिका *

न्त्येत्यादिपदद्वयेनाह। ननु गृहाधिकरणे "गृहं सम्मार्ष्टि" इत्यत्र उद्देश्यगतविशेषणे विवक्षाभावादेकवचने तात्पर्याभाव उक्तः, तेन न्यायेन प्रसिद्धवन्निर्देशरूपतया अनुवादरूपस्येदंशब्दस्योद्देश्यविशेषणे तात्पर्याभावेनैवं व्याख्यातव्यम्. मैवम्; गृहाधिकरणे ह्युद्देश्यविशेषणमात्रविवक्षा न निषिद्धा, अपित्वनुवादस्य मूलभूतप्रापकवाक्योक्तार्थविरुद्धविशेषणे हि तात्पर्याभाव उक्तः। उत्पत्तिवाक्यसिद्धस्य गृहबहुत्वस्य विरुद्धं ह्येकत्वम्, अन्यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्राप्यष्टवर्षत्वादिविशेषणे तात्पर्याभावप्रसङ्गात्। अत्र तु प्रापकवाक्येषु जगद्वैचित्र्यमेव स्पष्टम्। यद्वा यत्र प्रयुक्तस्य शब्दस्यार्थाविवक्षायामन्वयानुपपत्त्याऽऽनर्थक्यम्, तत्रोद्दे-

* भावप्रकाशिका *

तत्वज्ञापनार्थमिति भावः। (प्रसिद्धवन्निर्देशरूपतयेति) ननु गृहाधिकरणे एकवचनार्थस्याविवक्षितत्वाङ्गीकारेपि प्रातिपदिकार्थस्य विवक्षाङ्गीकृता। इह तु इमानीत्यत्र अचिन्त्यविविधविचित्ररचनत्वादेः प्रातिपदिकार्थतया कथं तस्याविवक्षाङ्गीकर्तुं शक्यत इति चेन्न. यथा– 'यस्योभयं हविरार्तिमार्च्छति' इत्यत्र प्रातिपदिकार्थेपि हविर्विशेषणीभूतोभयत्वेन श्रुतेर्विवक्षा, एवंभूतानीत्यनेनैव उद्देश्यस्य लब्धत्वादिमानीतिशब्दार्थेन विवक्षाङ्गीकर्तुं शक्येति हि तस्याभिप्रायः, नतु इमानीत्यस्यैव पदस्योद्देश्यसमर्पकत्वमङ्गीकृत्य विशेषणांशेन तात्पर्यमित्युच्यते। नन्वेवंसति प्रसिद्धवन्निर्देशरूपतयानुवादरूपस्येति व्यर्थम्, इदंशब्दार्थे उद्देश्यविशेषणे तात्पर्यभावादित्येव सुवचमिति चेत्. मैवम्; इदंशब्दस्यार्थभूते उद्देश्यविशेषणे वाक्यस्य तात्पर्याभावेनेत्यन्वयः। अचिन्त्यरचनत्वादेस्सन्निहितवाचीदंशब्दार्थस्योपपादकः अनुवादरूपस्येत्यन्तो ग्रन्थ इति द्रष्टव्यम्। नन्वेवम्भूतानीत्यत्र बहुवचनमप्यविवक्षितं स्यात्, तथा 'सर्वाणि ह वा इमानि भूतानि' इत्यादौ सर्वत्वमप्यविवक्षितं स्यादिति कोऽयमाक्षेप इति चेन्न, न्यायसाम्यादापातत आक्षेपस्य तत्परिहारस्य च दर्शने दोषाभावात् (गृहबहुत्वस्य विरुद्धं ह्येकत्वमिति) तत्र ह्युत्पत्तिवाक्ये गृहाणां दशत्वसंख्यावगतैवेति कियन्तो गृहास्सम्मार्ष्टव्या इत्याकाङ्क्षाया अभावादनाकाङ्क्षिता सङ्ख्या अविवक्षिता। अत एव चमसाध्वर्यून् वृणीतेत्यत्र चमसाध्वर्यूणामुत्पादकवाक्यान्तराभावेन उत्पत्तिवाक्यावगतसङ्ख्या-

बहुव्रीहिः । अस्य — अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः । यतः— यस्मात्सर्वेश्वरान्निखिल-

* श्रुतप्रकाशिका *

श्यविशेषणविवक्षा तत्र तत्राङ्गीकृता, तस्मादेवं व्याख्यातुं युक्तम् । तत्राचिदंशवैचित्र्यमाह ( अचिन्त्येत्यादिना पदेन ) जीवकर्तृकतया चिन्तयितुमशक्यत्वमचिन्त्यत्वम् । आकाशवाय्वादिभेदेन विविधत्वम्, प्रत्येकं तत्तद्व्याप्तिबाहुल्येन विचित्रत्वम् ईदृशरचनस्येत्यर्थः, अत्र रचना संस्थानम् । अथ चिद्वैचित्र्यमाह ( नियतेति ) अस्मिन्देशे अस्मिन्काले इदं फलमनेन भोक्तव्यमिति नियमो ब्रह्मादिपिपीलिकान्तानामविशेषेण भवति, ब्रह्मणोऽपि हि स्वमानपरिमितवर्षशतादधिकं जीवितुम्, अण्डान्तरे प्रवेष्टुमण्डाधिपत्यादधिकं फलं भोक्तुञ्चाशक्यम्, एवं चिदचिद्वैचित्रीकथनेन क्षेत्रज्ञमात्रस्य कर्तृत्वानुपपत्तिः सूचिता । तृतीयं पदमुपादत्ते ( यत इति ) पूर्वपदस्य श्रुतिविवक्षानुसारेण व्याख्यानं कृतम्; अत्र तु तादृशपदश्रवणाभावेऽपि कथमनेकविशेषणोक्तिः ? उच्यते; 'यतो येन यत्' इति प्रसिद्धवन्निर्देशो हि प्रापकवाक्यसापेक्षः, तत्र प्रापकवाक्येषु जगत्कारणत्वजिज्ञास्यत्वोपयोगियादृशविशेषणविशिष्टो यो धर्मिविशेष उक्तः तादृशविशेषणविशिष्टः स एवात्र श्रुतौ यच्छब्देन विवक्षित इति सूत्रकाराभिप्राय इति कृत्वा तत्तद्विशेषणविशिष्टतद्धर्मिविशेषपरत्वं सौत्रस्य

* भावप्रकाशिका *

न्तरसम्बन्धाभावेन सङ्ख्याकाङ्क्षायास्सत्त्वात् । चमसाध्वर्यूनिति बहुत्वस्य विवक्षाङ्गीकृता । तथा 'मैत्रावरुणः प्रेष्यति चान्वाह च' इत्यत्र व्यस्तयोः प्रैषानुवचनयोर्निर्ज्ञातकर्तृकत्वेन समस्तयोरेव प्रैषानुवचनयोः कर्त्राकाङ्क्षासत्त्वात् प्रैषानुवचनरूपोद्देश्यगतञ्च शब्दावगतं साहित्यं विवक्षितम् । ततश्च विहितयोरेव प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वविधिरिति पूर्वतन्त्रे स्थितत्वात् । इह तु ब्रह्मण इतरव्यावृत्तमहामहिमप्रदर्शनार्थतया इदानीन्त्वस्यापेक्षितत्वादिति भावः । ( तत्र तत्राङ्गीकृतेति ) 'यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाच्च पुनराधेयं तस्य प्रायश्चित्तिः' इत्यत्र अग्निद्वयोत्पादकसमर्थविधेयाधानान्वयानुपपत्त्या वाक्यस्यायुक्तार्थत्व-

हेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्त-

* श्रुतप्रकाशिका *

यतशब्दस्योक्तम्, यत इत्यत्र तसिप्रत्ययस्य सार्वविभक्तिकत्वाद्विभक्त्यन्तरशङ्का स्यात्, तेन जगज्जन्मादयो यत्र भवन्तीति देशकालादिवदधिकरणत्वमेव ब्रह्मलक्षणमित्यपि शङ्कितुं शक्यम्। एवं तसिलोऽप्येकद्विबहुवचनसाधारणत्वात्कारणवाक्येषु सद्ब्रह्माद्यनेकशब्दैरभिधानाच्च कारणानेकत्वशङ्का स्यादिति तदुभयव्युदासार्थं यस्मादित्युक्तम्। उपायतयोपेयतयापि जिज्ञास्यत्वे कारणत्वे चोपयुक्तानि तत्तत्प्रापकवाक्यसिद्धान्येतच्छ्रुतिविवक्षितानि विशेषणानि दर्शयति (सर्वेत्यादिना) तिस्रो मूर्तयोंऽशाः ब्रह्मांशीति यादवप्रकाशपक्षः, प्रधानपुरुषयोः कारणत्वं केषाञ्चिन्मतम्, ईदृशन्यूनाधिकतत्त्वव्यवच्छेदार्थं "तमीश्वराणां परमं महेश्वरम्' 'स कारणं करणाधिपाधिपः" इत्यादिश्रुत्यनुसारेण सर्वेश्वरादित्युक्तम्। कारणवाक्यशेषभूतशोधकवाक्यसिद्धं जिज्ञास्यत्वोपयोगिनं चिदचिद्व्यावर्त्तकाकारमाह (निखिलहेयप्रत्यनीकस्वरूपादिति) निखिलशब्देनाचिद्गतहेयाः षड्भावविकाराः, चिद्गतहेयाः क्लेशकर्मविपाकाशयाश्च विवक्षिताः। हेयार्हत्वे सति तद्वियुक्तत्वं व्युदस्यते प्रत्यनीकशब्देन। प्रत्यनीकश्चेज्जगदुपादानत्वं नोपपद्यत इत्यत्राह—स्वरूपादिति। अद्वारकहेयसम्बन्धो व्युदस्तः, न तु सद्वारक इत्यर्थः। हेयप्रत्यनीकत्वे विशेषणांशेऽपि हेयासम्भवः, तत्सम्बन्धविरोधित्वात्स्वप्रतिकूलोत्पादकत्वायोगाच्चेत्यत्राह (सत्यसङ्कल्पादिति) स्वसङ्कल्पानुरूपं हेयसम्बन्धं संश्रितेषु तद्वियोगं च कर्तुं समर्थः, नच हेयं सर्वमीश्वरापेक्षया हेयम्, तत्सङ्कल्पनिवर्त्त्यत्वेन तल्लीलारसावहत्वादिति भावः। सत्यसङ्कल्पत्वं हेयप्रत्यनीकत्वोपपादकं कारणत्वजिज्ञास्यत्वोपयोगि च। हेयप्रत्यनीकात्सत्यसङ्कल्पादितिपदद्वयेन 'अपहतपाप्मे'त्यादिवाक्यं स्मारितम्, जिज्ञास्यत्वोपयोगिनीं

* भावप्रकाशिका *

लक्षणानर्थक्यप्रसङ्गेनाग्न्युभयत्वस्य विवक्षा। तथा 'युवं हि स्थः स्वःपती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादित्यादौ द्वित्वादिविवक्षामङ्गीकृत्य कुलायादिषु उत्कर्षाभ्युपगमादिति भावः। किमयं तसल् प्रत्ययः 'तसेश्च' इति विहितस्तसिस्थानकः? उत 'पञ्चम्यास्तसिल्' इति विहितो वेति विकल्प्याद्यं दूषयति (तसिप्रत्ययस्येति) द्वितीयं दूषयति (एवं तसिलो

# कल्याणगुणात्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्

* श्रुतप्रकाशिका *

धर्मिस्वरूपस्य कल्याणतामाह ( ज्ञानेति ) आनन्दत्वं स्वानुकूलत्वम् , आदिशब्देन सत्यत्वमानन्त्यं च विवक्षितम् . हेयप्रत्यनीकत्वं पूर्वमुक्तम्, ज्ञानानन्देति भावप्रधाननिर्देशः "द्व्येकयोर्द्विवचनैकवचने" इतिवत् । ज्ञानत्वानन्दत्वसत्यत्वानि न प्रादेशिकानीत्यनन्तशब्दार्थः । आदिशब्देनानन्त्यस्य गृहीतत्वेऽपि सर्वव्यापित्वस्य कालानन्त्यकथनं नित्यत्वस्य सार्वत्रिकत्वकथनं सर्ववस्तुसामानाधिकरण्यार्हत्वस्य च नित्यत्वकृत्स्नप्रदेशवृत्तित्वकथनं ह्यविरुद्धम् । कल्याणत्वमन्येषामनुभवितॄणामप्यनुकूलत्वम् , ज्ञानत्वादयः कल्याणगुणा यस्य तस्मादित्यर्थः । यथा प्रभाश्रये दीपे प्रभां विना आश्रयांशस्यैव चतुरङ्गुलत्वरूपवत्त्वोज्ज्वलत्वगुणाः तथा ब्रह्मणोऽपि ज्ञानत्वानन्दत्वसदैकरूपत्वानि स्वरूपस्य गुणाः , धर्मिणो धर्मस्य च ज्ञानत्वे व्यक्तिभेदादविरोधः, धर्मधर्मिणोः साधारणाकारो ज्ञानत्वानन्दत्वादिः । यथा नरस्यैव सतो राज्ञो नराः परिकरा इत्युक्ते व्यक्तिभेदादविरोधः, नरत्वं चोभयसाधारणाकारस्तद्वत् । धर्मभूतज्ञानवत्तामाह ( सर्वज्ञादिति ) सर्वज्ञत्वं निमित्तत्वोपयोगि, सर्वशक्तित्वमुपादानत्वोपयोगि, अनेन चिदचिच्छरीरकत्वमप्यभिप्रेतं भवति, अन्यथोपादानत्वायोगात् । किञ्च सर्वज्ञत्वम् उपासकापेक्षितवत्स्मातिबन्धकनिरसनप्रकारज्ञानोपयोगि, सर्वशक्तित्वं तद्विरोधिनिरसनोपयोगि, परमकारुणिकत्वं च जिज्ञास्यत्वकारणत्वोपयोगि, प्रलयदशायामसत्कल्पं चेतनजातं निरीक्ष्य दयया हि सृष्टिः ।

* भावप्रकाशिका *

पीति ) ( धर्मिस्वरूपस्य कल्याणतामाहेति ) ज्ञानत्वादेः कल्याणत्वे कथिते धर्मिणोपि कल्याणत्वं कथितं भवतीत्यभिप्रायः । ( आदिशब्देन सत्यत्वमानन्त्यञ्च विवक्षितमिति ) इदमुपलक्षणम् , सार्वज्ञ्यादीनां तेषामपि कल्याणत्वस्यावश्यबोध्यत्वादिति द्रष्टव्यम् । ( हेयप्रत्यनीकत्वं पूर्वमुक्तमिति ) अतो न तदादिपदग्राह्यमिति भावः । वस्तुतस्तु उक्तस्यापि अनन्तत्वकल्याणत्वबोधनार्थं तस्याप्यादिपदेन ग्रहणे न दोष इत्यपि द्रष्टव्यम् । नन्वादिशब्देनानन्त्यस्यापि ग्रहणे अनन्तकल्याणगुणगणादिति निर्दिष्टमानन्त्यं कथमन्वेतु ? आनन्त्ये आनन्त्याभावादित्याशङ्क्याह ( आदिशब्देनानन्त्यस्य गृहीतत्वेपीति ) ( अन्येषामनुभवितॄणामपीति ) स्वानुकूलत्वमानन्द-

पुंसः, सृष्टिस्थितिप्रलयाः प्रवर्त्तन्ते तद्ब्रह्मेति सूत्रार्थः ॥

* श्रुतप्रकाशिका *

संश्रितसौलभ्यं च दययैव, यथा "माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः" इति। ईदृशेश्वर उपायभूतः, उपेयमन्यदित्यत्राह (परस्मादिति) अत्र माता पितेत्यनुसन्धेयम्। देवताविशेषनिर्णयार्थमाह (पुंस इति) कारणवाक्येषु "छागो वा मन्त्रवर्णात्" इतिसूत्रन्यायात्सद्ब्रह्मात्मादिसामान्यशब्दानां पुरुषनारायणादिविशेषपर्यवसायित्वात्सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति "यतो वा इमानि भूतानि" इत्यादिश्रुतेर्हृदयमिति सूत्रकारस्य भाव इति भाष्यकाराभिप्रायः। पुंस इत्यनेन कारणभूतस्य वस्तुनस्त्रिपाद्विभूतिमत्त्वमपि सूचितम्, पुरुषसूक्ते "त्रिपादस्यामृतं दिवि" इति श्रवणात्। (सूत्रार्थ इति) अक्षरार्थस्तात्पर्यार्थश्चेत्यर्थः। ननु यदीश्वरो लिलक्षयिषितः तर्हि तदसाधारणसर्वज्ञत्वादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वं किमर्थं सूत्रितम्? उच्यते; गुणैः स्वरूपस्य लक्ष्यमाणत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यानन्तर्भावः प्रतीयेत, सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे तन्नियमनधारणाद्यपेक्षितत्वादेव गुणानन्तर्भावो न शक्यशङ्कः, अतो गुणानामिव विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थं जन्मादिलक्षणं सूत्रितम्, विभूतेश्च जिज्ञास्यान्तर्भावः उपासात्रैविध्यतत्क्रतुन्यायाभ्यां

* भावप्रकाशिका *

त्वम्, अन्येषामप्यनुकूलत्वं कल्याणत्वमिति तयोर्भेदः। सौलभ्यानुक्तौ हेतुमाह (संश्रितसौलभ्यञ्चेति) तच्च कारुणिकत्वेनैव सिद्धमित्याशयः। यद्वा दयायाः कारुणिकत्वोपयोगित्वमुक्त्वा जिज्ञास्यत्वोपयोगमाह— संश्रितेति। (विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थमिति) ननु यतो देवदत्त उत्पन्नस्स उपास्य इत्युक्ते नहि देवदत्तस्याप्युपास्यत्वमिति चेन्न, यत इत्यस्य चिदचिद्विशिष्टादित्यर्थकत्वेन यच्छब्दनिर्दिष्टस्य चिदचिद्विशिष्टस्यैव तच्छब्देन निर्देष्टव्यतया तस्याप्युपास्यत्वसिद्धेः। (उपासात्रैविध्यतत्क्रतुन्यायाभ्यामिति) नन्वेवं ताभ्यामेवोपास्यत्वसिद्धेरस्योपास्यान्तर्भावज्ञापनं व्यर्थम्। किञ्च उपासात्रैविध्यस्थले तदुपास्यत्वसिद्धावपि सर्वत्रोपास्यतान्वये प्रमाणाभावात्। नापि तत्क्रतुन्यायात्तत्सिद्धिर्युज्यते। "उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया। सा तत्क्रतुनयप्राप्ता नाकारान्तरवर्जनम् ॥"

* श्रुतप्रकाशिका *

सेत्स्यति । नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति, त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वात् । नैवम् , तस्याः जन्माद्यस्पृष्टत्वेऽपि 'यत्प्रयन्ती'तिप्रलयवाक्यस्थयच्छब्दनिर्दिष्टे मुक्तप्राप्ये ब्रह्मण्यन्तर्भावसिद्धेः । तथाहि , प्रयन्तीत्येतद्विशेषणात्यन्तिकलयरूपं मोक्षमपि प्रतिपादयतीति यच्छब्देन मुक्तप्राप्यतयापि ब्रह्म निर्दिष्टं भवति, प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तरसिद्धमिहानूद्यते । प्रमाणान्तराणि च विभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति, प्राप्याकारस्य चोपास्यत्वं तत्क्रतुन्यायसिद्धम्, तदेवंलक्षणान्तर्भूतेन लयांशेनोपलक्षितायास्त्रिपाद्विभूतेरपि जिज्ञास्यान्तर्भावसिद्धिः सूत्रिता भवति । ननु यत इति सूत्रपदस्थायाः पञ्चम्या उपादानार्थत्वात् ब्रह्मोपादानमिति, निमित्तान्तरसद्भावात् " उपादानन्तु भगवान्निमित्तं तु महेश्वरः " इत्युक्तव्योमातीतपक्षावकाशः प्रसजेत् । नैवम्; यत इति पञ्चम्या हेतुमात्रविषयत्वात् , हेत्वर्थत्वं च जनिस्थितिलयसाधारणत्वादवगम्यते, न तु "जनिकर्तुः प्रकृति"रित्यपादानसंज्ञाविधानवत् स्थितिकर्तुर्लयस्थानस्य च अपादानसंज्ञाविधानं दृश्यते, तस्मादियं हेतौ पञ्चमी; ततश्च निमित्तोपादानयोरुभयोरपि हेतुत्वाविशेषात् यत इतिपदेनोभयविधकारणत्वमपि क्रोडीकृतं भवति । 'यतो वा इमानी'त्यादिवाक्ये यत इतिपदस्योभयविषयत्वात् सौत्रपदस्याप्युभयविषयत्वोपपत्तेः ।

* भावप्रकाशिका *

इतिन्यायेनोपास्यगुणानां प्राप्तिरित्येतावन्मात्रं सिध्यति , न त्वनुपासितगुणानामननुभवः । तथासति मुक्तौ सर्वगुणविशिष्टस्य ब्रह्मणः प्राप्यतया सर्वासूपासनासु सर्वगुणविशिष्टमुपास्यमिति उपासनरूपभेदः कश्चिदपि न स्यादिति चेन्न; उपास्यान्तर्भाव इत्यस्य ब्रह्मशब्दार्थान्तर्भाव इत्यर्थः । सत्यत्वज्ञानत्वादौ लक्षणया कथिते हि विशेष्यमात्रमेव ब्रह्मशब्दार्थ इति शङ्का स्यात्. तस्य विशेष्यमात्रनिष्ठत्वात्. जगज्जन्मादिहेतुत्वे लक्षणया कथिते न सा शङ्कावतिष्ठते, जगत्कारणत्वस्य विशिष्टनिष्ठत्वादित्येव तात्पर्यात् । ( हेत्वर्थश्च जनिस्थितिलयसाधारणत्वादिति ) यदि हि जन्माद्यस्य यत इत्युच्यते तदा जनिकर्तुः प्रकृतिरित्युपादानार्थत्वशङ्का स्यात् , न तथेहेति भावः । ( हेतौ पञ्चमीति ) ' विभाषा गुणे स्त्रियाम् ' इत्यत्र योगविभागादगुणवचनवाचिनो यच्छब्दात्पञ्चम्युपपद्यते ,

* श्रुतप्रकाशिका *

ननु 'यतो वा इमानि' इतिवाक्ये यतो येन यदिति यच्छब्दस्यावृत्तत्वात् यत इतिपदस्य जनिस्थितिलयसाधारण्यं नास्तीति तत्र यत इति पञ्चम्युपादनमात्रविषया, जायन्त इत्यनेनैवान्वयात्, पञ्चम्यर्थो हि "जनिकर्तुः प्रकृति"रित्येव प्रतीयते। किञ्च हेतुमात्रविषयाया अपि सौत्रपदपञ्चम्याः श्रुतिवाक्यस्थपञ्चम्यभिहितोपादानरूपहेतुविशेषे पर्यवसानं स्यात्, सूत्रस्य श्रुत्यैकार्थ्योपपत्तेः, अतः श्रुतिसूत्रयोरुभयोरपि पञ्चम्या उपादानमात्रविषयत्वात् ब्रह्मोपादानम्, न तु निमित्तमिति। नैवम्, श्रुतौ यत इति पदस्य जनिस्थितिलयसाधारणत्वाभावेऽपि यच्छब्दस्यानुवादरूपत्वादनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासम्भवात् प्रापकवाक्येषु च 'एकमेवाद्वितीयं तदैक्षत बहु स्यां तत्तेजोऽसृजत' इत्युपादानभूतस्यैव ब्रह्मणो निमित्तान्तरं निषिध्याहमेव जगद्रूपेण बहु स्यामिति सङ्कल्पमुक्त्वा यथा

* भावप्रकाशिका *

योगविभागे च ज्ञापकम्। 'हेतुमनुष्येभ्योऽन्यतरस्याम्' इत्यत्र हेतुग्रहणम्। तत्र हि 'नाव आगतं नौरूप्य'मित्यादौ अनुपादानभूताया नावो हेतुपञ्चमी सिद्धवत्कृत्य 'हेतुमनुष्येभ्यः' इति पञ्चम्यां ताद्रूप्यप्रत्ययविधानात्। अत्र केचित्, हेतुमनुष्येभ्य इत्यस्य यत्र विभाषागुण इति पञ्चमी जाड्यादागत इति, तत्र सावकाशत्वान्न ज्ञापकत्वं सम्भवति. नच 'अ इ उ ण्' इत्यत्र विवारभेदादित्यत्र विभाषागुण इति पञ्चम्युक्तत्वात्तद्वदिहापि पञ्चमीतिवाच्यम्, तत्र सत्त्वे निविशते-पैतीति पारिभाषिकगुणस्य ग्रहणेपि विवारभेदादिति भाष्यकारनिर्देशानुपपत्त्या परतन्त्रमात्रवाचिगुणग्रहणेपि अपरतन्त्रब्रह्मवाचियच्छब्दात्पञ्चम्यां प्रमाणाभावात्, ततश्च लोकदृष्ट्या जन्मस्थितिलयाः ततो विश्लिष्टा एव दृश्यन्त इत्यपायावधित्वेनापादानत्वात् पञ्चमीति मन्यन्ते। तत्तुच्छम्; 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इतिन्यायेन तत्र शास्त्रे परिभाषितस्यैव गुणस्य ग्रहणौचित्यात्। वृत्त्यादौ च तदनुरूपत्वेनोदाहरणप्रत्युदाहरणयोर्दर्शितत्वाच्च, तेन विवारभेदादिति निर्देशो ज्ञापको विभाषेति योगविभागस्य, अत एव वह्निमान् धूमादित्यादिप्रयोगः, अन्यथा धूमस्य द्रव्यत्वेनापारिभाषिकगुणत्वस्याप्यभावात्पञ्चमी न स्यात्। तेन सुष्ठूक्तं हेतौ पञ्चमीति। यदुक्तं लोकदृष्ट्या ततो विश्लिष्टा

* श्रुतप्रकाशिका *

सङ्कल्पं तत्कर्तृकसृष्टेश्च प्रतिपादनात् तदनुवादिनि लक्षणवाक्ये यत इति पदमुभयविषयम्. श्रुत्यनुविधायित्वाज्जन्मस्थितिलयसाधारणत्वाच्च सौत्रं च यत इतिपदमुभयविषयमेवेति निमित्तान्तरवादो वेदविरुद्धत्वादनादरणीय एवेति । एवं तर्हि प्रकृत्यधिकरणपौनरुक्त्यं स्यादिति चेन्न, तत्र हि निमित्तोपादानैक्यस्य श्रुतिप्रतिपाद्यत्वं समर्थ्यते, अत्र तु निमित्तोपादानैक्यसिद्धवत्कारेण तस्योभयविधकारणत्वस्य लक्षणत्वानुपपत्तिः परिह्रियत इति वैषम्यात् । नन्वीश्वर एव ब्रह्म चेत् सत्यज्ञानादि लक्षणत्वेन वक्तव्यम्, न तु जन्मादि, ईश्वरस्य सर्वविधकारणत्वायोगात्, निमित्तकारणमुपादानं चैकमेव हि वेदान्तेषु मतम्; तस्मादीश्वरादतिरिक्तं ब्रह्माभ्युपगच्छतो भेदाभेदवादिनोऽनुकूलमिदं जन्मादिलक्षणकथनम् । नैवम्, चिदचिद्विशिष्टतया सत्यसङ्कल्पतया चेश्वरस्यैव बहु स्यामिति ईक्षणक्षमत्वेन सर्वविधकारणत्वोपपत्तेः । सन्मात्रस्य चिन्मात्रस्य च सत्यसङ्कल्पत्वायोगादीश्वरस्य च ब्रह्मांशतयाऽध्यस्ततया चाभिमतस्यांशान्तराध्यस्तान्तरसमानाधिकरणशब्दवाच्यत्वायोगाच्च भेदाभेदपक्षे मृषावादिपक्षे च 'बहु स्या'मिति सङ्कल्पपूर्वककारणत्वं न घटत इत्येतल्लक्षणं परेषामेवानुपपन्नम् । किञ्च बुभुत्सितस्य लक्षणं वाच्यम्, बुभुत्सितं चोपास्यम्, ईश्वर एवोपास्यः प्राप्यश्च । उपासनं च विशिष्टविषयम्, उपासात्रैविध्यस्य वक्ष्य-

* भावप्रकाशिका *

इव भवन्तीति. तन्न; लोकदृष्ट्याश्रयणे भीत्रार्थानामित्यादिसूत्राणां व्यर्थत्वप्रसङ्गात्. मृदो घटः शृङ्गाच्छरो जायते गोलोमाविलोमभ्यो दूर्वा जायन्ते' इत्यादौ घटदूर्वादीनां विलादीर्घभोग्यपक्रमणवल्लोकदृष्ट्या अपक्रमणदर्शनेनापायसत्त्वेन 'ध्रुवमपाय' इत्येवापादानत्वस्य सिद्धत्वात् । यथान्यासं सम्प्रधारणायान्तु हेतौ पञ्चमीत्येव गतिरित्यलं प्रपञ्चेन । ईश्वरस्य निर्विकारतया निमित्तत्वमेव, नोपादानत्वमित्यभिमन्यमानशङ्कते ( नन्वीश्वर एवेति ) ननु लक्षणेपि जगज्जन्मादिनिमित्तत्वमेव विवक्षितमित्याशङ्क्याह (निमित्तकारणमुपादानञ्चेति ) ( अध्यस्तान्तरेति ) 'पुरुष एवेदं सर्वम्' 'ज्योतींषि विष्णुः" इत्यादिनिर्देशायोगादित्यर्थः । ( ईश्वर एवोपास्यः प्राप्यश्चेति ) ननु ईश्वरातिरिक्तं ब्रह्मेत्यर्थः । नन्वेवं सत्यज्ञानादिकमेव लक्षणमुच्यतामित्याशङ्क्याह ( उपासनञ्च विशिष्टविषयमिति )

—:( पूर्वपक्षः ):—

[१] " भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म" इत्यारभ्य [२] "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म"

* श्रुतप्रकाशिका *

माणत्वात् । प्राप्तिश्च विशिष्टविषया, यथोपासनभावित्वाचस्याः । जन्मादि चोपास्यलक्षणम्, 'तद्विजिज्ञासस्वे'ति प्रतिपादनात् । सत्यज्ञानादि तु विशेष्यांशस्य लक्षणम्, न तु विशिष्टस्य, अतो विशिष्टस्योपास्यत्वात् जिज्ञास्यब्रह्मलक्षणं जन्माद्येव । यत इत्यस्यानुवादरूपत्वाद्विजिज्ञासस्वेति जिज्ञास्यत्ववचनाच्च जिज्ञास्यत्वोपयोगिशोधकवाक्यार्थश्च यच्छब्दे गर्भितः, तस्मात् यस्मादित्यादिविशेषणान्युक्तानि ॥

अथ जन्मादीनां लक्षणत्वे तत्र जन्मनोऽन्तर्भावे तत्रापि समुदितस्य लक्षणत्वे च किं ते प्रमाणमित्याकाङ्क्षायां सूत्रकारैर्विषयत्वेनाभिप्रेतां श्रुतिं दर्शयति ( भृगुरिति ) शास्त्रं प्रणाड्या विषयः । 'यतो वा इमानि' इत्यादि-

* भावप्रकाशिका *

ननूपासनस्य विशिष्टविषयत्वे प्राप्तिरपि तद्विषया स्यादित्याशङ्क्य इष्टापत्त्या परिहरति ( प्राप्तिश्च विशिष्टविषयेति ) ( जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति ) यद्यपि 'ब्रह्मविदाप्नोति परम्' इत्युक्ते किं तद्ब्रह्म ? कीदृशं वेदनम् ? कीदृशी प्राप्तिः ? इति जिज्ञासायामेव 'सत्यं ज्ञान'मितिमन्त्रप्रवृत्तेस्सत्यत्वादिकं जिज्ञास्यब्रह्मलक्षणमेव, इतरथा तत्कथनस्यानाकाङ्क्षिताभिधानत्वप्रसङ्गात् , उपासात्रैविध्यस्य सिद्धान्तेप्यभ्युपगतत्वेन स्वरूपस्याप्युपास्यत्वाच्च , तथापि विभूतेरप्युपास्यत्वान्तर्भावज्ञापनार्थमिति पूर्वोक्तयुक्त्यावेव तात्पर्यम् ( शोधकवाक्यार्थश्च यच्छब्दे गर्भित इति ) ॥

ननु कारणवाक्यप्रवृत्त्यनन्तरमेव कारणत्वशङ्कितदोषनिराकरणार्थतया शोधकवाक्यस्य प्रवर्तयिष्यमाणत्वात् न तद्वाक्यार्थस्य एतद्वाक्यप्रवृत्तिदशायां गर्भितत्वं सम्भवति । किञ्च भृगुवल्ल्यां 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति

१-२ तै. भृ. १-अनु.

* श्रुतप्रकाशिका *

मात्रे उदाहर्त्तव्येऽपि अर्थवादरूपतात्पर्यलिङ्गज्ञापनार्थं प्रकरणस्य ब्रह्मपरत्वेनानन्यपरत्वज्ञापनार्थं च भृगुर्वा इत्याद्युदाहृतम् । अग्नीन्द्रादिवस्तुषु सर्वोत्कृष्टतया आपातप्रतीतेषु सर्वेषां सर्वोत्कृष्टत्वस्यानुपपन्नत्वेन तत्त्वस्य दुर्निश्चयतया निरतिशयबृहत्त्वाश्रयव्यक्तिविशेषजिज्ञासया हि 'अधीहि भगवो ब्रह्म' इति प्रश्नः । तत्र व्यक्तिविशेषस्य लक्षणमुच्यते "यतो वा इमानि" इति । यतो येन यदिति यद्वृत्तयोगात्कारणत्वमनूद्यते, तद्ब्रह्मेति कारणस्य ब्रह्मत्वं विधीयते, तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति । तद्विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः, विचारात्मकज्ञानं रागप्राप्तत्वान्न विधेयम्, उपासनात्मकस्य तु ज्ञानस्य 'ब्रह्मविदाप्नोति' इति प्राक्-

* भावप्रकाशिका *

निश्चायकवाक्यानां पश्चादेव प्रवृत्तेः, तस्मात्सर्वेश्वरात्सत्यसङ्कल्पादित्यादिविशेषणमपि यच्छब्दगर्भितं कथं स्यात्. शिष्येणाश्रुतवेदान्तेन भृगुणास्य सर्वस्यार्थस्याज्ञानादिति चेत्, अस्त्वयमश्रुतवेदान्तः, अथापीदृशजगन्निर्मातृत्वमीदृशविशेषणविशिष्टस्य सम्भवेदिति सम्भावनां शिष्यस्य स्फोरयन्नाचार्यः प्रतिपादयतीत्युक्ते विरोधाभावात् । किञ्च, पुंसूक्तसद्विद्यादिवाक्यैः सर्वज्ञस्य सर्वशक्तेः लक्ष्मीपतेरेव कारणत्वं निश्चित्य तत्र निरतिशयब्रह्मत्वमजानतो भृगोः 'अधीहि भगवो ब्रह्मेति' जिज्ञासया प्रश्नसम्भवाच्च । ननु शिष्यस्य प्रागेव कारणविशेषनिश्चयवत्त्वे 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्येतावतैव कृतकृत्यत्वात्कारणविशेषनिश्चायकोत्तरसन्दर्भो व्यर्थस्स्यादिति चेन्न; सम्यङ्निश्चयाभावेन तत्सार्थक्यात् । भाष्ये— यत्प्रयन्त्यभिसंविशन्तीति । प्रयन्ति सन्ति यदभिसंविशन्तीति योजना, प्रयन्तीत्यस्य प्रलीयमानानीत्यर्थः । अभिसंविशन्ति— प्राप्नुवन्तीत्यर्थः । अत्र प्रयन्तीत्यान्तिकलयोपि विवक्षितः, अतो मुक्तप्राप्यत्वमप्यन्तर्भवतीति; अत एव ग्रन्थकृता प्रयन्तीत्येतदविशेषेणात्यन्तिकलयरूपं मोक्षमपि प्रतिपादयति, यच्छब्देन मुक्तप्राप्यतयापि निर्दिष्टं भवतीत्युक्तम् । ननु 'यत्प्रयन्ति यदभिसंविशन्ति' इति यच्छब्दानुषङ्गेण लयस्थानत्वं मुक्तप्राप्यत्वमुच्यते, अभिसंविशन्तीति बन्धकत्वं वा उच्यत इति चेन्न, यच्छब्दावृत्तिप्रसङ्गादिति द्रष्टव्यम् । (शास्त्रं प्रणाड्या विषय इति) लक्षणवाक्यं लक्षणतो ब्रह्म प्रतिपादयितुं शक्नोति नवेति विचारः

* श्रुतप्रकाशिका *

रणिकवाक्यान्तरसिद्धत्वात् उपक्रमे 'अधीहि भगवो ब्रह्मे'तिप्रश्नस्य तत्त्वपरत्वे-नोपायविषयत्वाभावाच्च नोपासनात्मकज्ञानमिह विधेयम्, अतो विजिज्ञासस्वेति उपदिश्यमानार्थे अवधानार्थं सन्देहनिवृत्त्यर्थं वोक्तम्, या गन्धवती तां पृथिवीं विद्धीतिवत्, अतः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम्। यथा यत्र सारसः स देवदत्तकेदार इत्युक्ते सारससम्बन्धस्य देवदत्तकेदारलक्षणत्वमुक्तं स्यात् तद्वत्, देवदत्तकेदारो बुभुत्सितो धीस्थः सारससम्बन्धश्च दृष्टः। तस्य देवदत्तकेदारलक्षणत्वं ह्यज्ञातम्, अतस्तदेव वाक्यस्य विधेयम्, एवं निरतिशयबृहत्त्वं बहुष्वर्थेष्वापाततः प्रतीतम्। कारणत्वं च प्रापकवाक्यावगतम्, तस्य निरतिशयबृहद्वस्तु-लक्षणत्वमनवगतमिति तदत्र विधेयम्। लक्षणस्य च सजातीयविजातीयव्यावर्त्तनस्व-भावत्वादन्येषां निरतिशयबृहत्त्वशङ्काव्युदासः फलितः। अतो नारायणादिविशेषशब्द-वाच्यवस्तुविशेषस्यैव निरतिशयबृहत्त्वसिद्धिः। अत एव हि परस्मात्पुंस इत्युक्तम्। प्राप-

* भावप्रकाशिका *

शास्त्रं ब्रह्मणि प्रमाणं नवेति विचारे प्रमाण्या पर्यवस्यतीति भावः। कारण-मनूद्यत इति पाठस्समीचीनः। उत्तरत्र कारणस्य ब्रह्मत्वं विधीयते इत्युक्तेरिति द्रष्टव्यम् (देवदत्तकेदारो बुभुत्सित इति) अतो देवदत्तकेदारत्वमेव विधानयोग्य-मित्यर्थः। (धीस्थः सारससम्बन्धश्च दृष्ट इति) सारससम्बन्धो धीस्थो निश्चित इत्यर्थः। तत्र च हेतुर्दृष्ट इति- दृष्टत्वेन निश्चिततया न विधेयत्वमिति भावः। (तस्य देवदत्तकेदारलक्षणत्वं ह्यज्ञातमिति) सारससम्बन्धिनो देवदत्तकेदारत्वम-ज्ञातमित्यर्थः। लक्षणशब्दस्स्वरूपवचनः। केचित्तु देवदत्तकेदारो बुभुत्सितो-धीस्थः, अतो न विधेय इति योजयन्ति। तन्न; सामान्यतो देवदत्तकेदारस्वरूपस्या-वगतत्वेपि अयं देवदत्तकेदार इति विशिष्य उद्देश्यसम्बन्धितयाऽनवगतत्वाद्विधेय-त्वोपपत्तेः विशिष्य निश्चितत्वे बुभुत्साया एवानुपपत्तेः, देवदेत्तकेदारलक्षणं किञ्चिदस्तीति निश्चयस्यापि सत्त्वेन देवदत्तकेदारलक्षणत्वस्याप्यविधेयत्वप्रसङ्गात्। यदि च सारससम्बन्धे केदारलक्षणत्वस्य ज्ञातत्वाद्विधेयत्वं तर्हि सारससम्बन्धिनि देवदत्तकेदारत्वस्याप्यज्ञातत्वाद्विधेयत्वोपपत्तेः। (तस्य निरतिशयबृहद्वस्तु-लक्षणत्वमिति) कारणत्वस्य निरतिशयबृहद्वस्तुस्वरूपत्वमित्यर्थः। तादृश-

इति श्रूयते । तत्र संशयः — किमस्माद्वाक्यात् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते , नवा ? इति ।

* श्रुतप्रकाशिका *

कवाक्यैरेव कारणभूतवस्तुविशेषस्य निरतिशयबृहत्त्वं ज्ञायत इति किमनेन लक्षण-वाक्येन ? इति चेत्. न; अग्न्यादीनामपि कर्मभागवाक्यैः सर्वोत्कृष्टत्वावगमात् तेषु बृहत्त्वशङ्काव्युदासाय कारणवाक्यानामपि तद्वदन्यपरत्वाभावेन तत्त्वपरत्वज्ञापन-परत्वादस्य वाक्यस्य । अथ श्रुतिरेव लक्षणं प्रतिपादयति चेत् किं सूत्रेणेति शङ्कायां सूत्रतात्पर्यार्थं विवक्षुः संशयं दर्शयितुं श्रुतिगतहेतुनैव संशयोत्पत्तिं दर्शयति ( तत्रेति ) तत्र—तादृश इत्यर्थः । पूर्वपक्षानुगुणेन विशेषणबहुत्वेन सिद्धान्तानुगुणे-नैकवचनान्तब्रह्मशब्दैक्येन च विशिष्टत्वं संशयहेतुत्वेनाभिप्रेत्य तत्रेत्युक्तम् । सं-शयस्वरूपं दर्शयति ( किमस्मादिति ) ब्रह्ममीमांसा किमारम्भणीया, उत न वा इति प्रथमविचारः, तदर्थं वेदान्ता ब्रह्मणि प्रमाणम् ? उत न ? इति द्वितीयविचारश्च चतुस्सूत्रीसाधारणः । सिद्धस्वरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह "तच्छा-स्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव" इति समन्वयाधिकरणोपक्रमे । तस्याधिकरणस्य शास्त्रारम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वस्य भाष्यकारैरेव वक्ष्यमाणत्वात् , तथा चाहुः "व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेनाऽनारम्भमूलानि निराकृतानि" इति , अतस्तद्विचारयुगलमत्रार्थसिद्ध-मित्यभिप्रेत्यैतदधिकरणासाधारणं संशयशरीरं दर्शितं किमस्मादिति । यतो वा इमानीत्यादिवाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति, उत न ? इति संशयः, तदर्थं संशय्यते , किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन च ब्रह्मलक्षणत्वं सम्भवति नेति, तदर्थं विशेषणपक्षे किं विशेषणभेदेन विशेष्यभेदोऽस्ति ? उत

* भावप्रकाशिका *

शब्दार्थमाह ( पूर्वपक्षानुगुणेनेत्यादिना ) सिद्धस्वरूपं ब्रह्मेत्यादिकं समन्व-याधिकरणभाष्यवाक्यम् । ( किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन चेति ) ननु लोके हि व्यावर्तकं द्विविधं विशेषणमुपलक्षणं चेति विकल्पयन्ति , लक्षणेन तथा विकल्पो दृष्ट इति चेन्न; लक्षणस्यापि व्यावर्तकत्वेन विकल्पोपपत्तेः । अनु-मितिप्रतिबन्धकज्ञानविषयत्वं हेत्वाभासलक्षणे विशेषणमुपलक्षणं चेत्यादिविकल्प-

* श्रुतप्रकाशिका *

न ? इति. तदर्थं किं विशेषणस्य विशेषणत्वं स्वाश्रयसर्वधर्मव्यावर्त्तकतया ? उत विरोधिधर्मव्यावर्त्तकतया ? इति, उपलक्षणपक्षे किमाकारान्तरप्रतिपत्तिरस्ति ? उत नास्ति ? इति, सर्वधर्मव्यावर्त्तकतया विशेषणत्वम् आकारान्तरप्रतिपत्तिश्च नास्तीति पूर्वः पक्षः । विरोधिधर्मव्यावर्त्तकतयैव विशेषणत्वम् आकारान्तरप्रतिपत्तिश्चास्तीति राद्धान्तः । सर्वधर्मव्यावर्तकतया विशेषणत्वे विशेष्यभेदप्रसङ्गेन जन्मादीनां विशेषणत्वायोगादाकारान्तरप्रतिपत्त्यभावे चोपलक्षणत्वायोगात् उभयथापि लक्ष-

* भावप्रकाशिका *

दर्शनात् । ननु पूर्वतन्त्रे 'यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् गृहान् गृह्णीयात्' इत्यत्र विशेषणस्य व्यवच्छेदकत्वेन रथन्तरारथन्तरसामयुक्तज्योतिष्टोमे रथन्तरस्य विशेषणत्वायोगात्, तन्मात्रसाधकं क्रत्वन्तरं विधीयत इति पूर्वपक्षं कृत्वा स्वविरोधिगुणव्यवच्छेदकत्वमात्रेणापि विशेषणत्वोपपत्तेः । नीलमुत्पलमित्यादौ दैर्घ्याद्यव्यवच्छेदकस्यापि नीलत्वादेर्विशेषणत्वदर्शनाच्च, प्रकृतस्यैव ज्योतिष्टोमस्य रथन्तरं सामविशेषणमिति व्यवस्थापितत्वात्. तेनैव गतमिति चेन्न; तत्र यदिशब्दश्रवणेन प्रकृतस्यैव ज्योतिष्टोमस्याग्रतो विशेषं प्रति रथन्तरसामावच्छिन्नस्य निश्चितावगतिस्वारस्यात्, तत्र तथात्वेपि इह तदभावेन पूर्वपक्षप्रवृत्त्युपपत्तेः । ( स्वाश्रयसकलधर्मव्यावर्तकतयेति ) ननु स्वाश्रयसकलधर्मव्यावर्तकतया विशेषणत्वं क्वापि न दृष्टचरम् । तथाहि सति एकधर्ममात्रपरिशेषापत्तेः, खण्डत्वादेरपि स्वाश्रये गोत्वद्रव्यादिसहिष्णुत्वादिति चेन्न, समभिव्याहृतविशेषणान्तरव्यवच्छेदकत्वस्य खण्डो मुण्ड इत्यादौ दर्शनादित्यत्र तात्पर्यात् । नन्वीदृशं भेदकत्वमुपलक्षणपक्षेपि सम्भवत्येव । तस्यापि व्यावर्तकत्वादिति चेत्, भवत्विदं दूषणम्, उपलक्षणपक्षेपि समानम् । का नः क्षतिः ? केचित्तु– जन्मादिविशिष्टस्य ब्रह्मत्वं वा ? उत तदुपलक्षितस्य ? विशेषणत्वे जन्मविशिष्टस्य स्थितिविशिष्टस्य लयविशिष्टस्य चैक्यासम्भवात्, विशिष्टानामप्यैक्ये विशेषणानामप्यैक्यप्रसङ्गात् इत्यादिस्सत्यादिवाक्ये मृषावादिभिरुक्तो दोषः पूर्वपक्षेप्यनुसन्धेयः । उपलक्षणपक्षे अस्य दोषस्यासम्भवादाकारान्तरप्रतिपत्तिर्दोष इति पूर्वपक्षिणो भावः । सिद्धान्ते तु सत्यादिवाक्ये सिद्धान्त्युक्तरीत्या एकस्य विशेष्यस्यानेकविशिष्टत्वसम्भवात् न

किं प्राप्तम् ? न शक्यमिति । न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति, अनेकविशेषणव्यावृत्त-

* श्रुतप्रकाशिका *

णत्वासम्भवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोतीति लक्षणदौस्स्थ्येन ब्रह्मणि शास्त्रप्रामाण्याभावात्तद्विचारोऽनारम्भणीय इति पूर्वपक्षे फलितम् । विरोधिधर्मव्यावर्त्तकतयैव विशेषणत्वे विशेष्यभेदाभावाज्जन्मादीनां विशेषणत्वोपपत्तेराकारान्तरप्रतिपत्तिसद्भावादुपलक्षणत्वोपपत्तेश्च . उभयथाऽपि लक्षणत्वसम्भवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोतीति लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेः तद्विचारस्यारम्भणीयत्वं सिद्धान्ते फलितम् । तत्र पूर्वपक्षमुपपादयितुं प्रतिजानीते (न शक्यमिति) जन्मादीनां ब्रह्मलक्षणत्वं किं विशेषणतया ? उतोपलक्षणतया ? इति विकल्पमभिप्रेत्य प्रथमं दूषयति (न तावदिति) कथं विशेषणत्वेन न लक्षयन्तीत्यत्राह (अनेकेति) अनेकत्वप्रसक्तिर्व्यावर्त्तकत्वं वा कथ-

ঔ भावप्रकाशिका ঔ

ब्रह्मव्यक्तिबाहुल्यप्रसङ्गः । जन्मरूपविशेषणान्वितत्तया ज्ञातस्यापि स्थितिरूपविशेषणान्वितत्तया ज्ञातस्यापि ब्रह्मण ऐक्यासम्भवेन विशिष्टैक्यस्यापि सम्भवात्, जन्मादिविशेषणान्विते ब्रह्मत्वस्य सत्त्वेन विशिष्टं ब्रह्मेत्युक्तौ दोषाभावात् । यदि च विशिष्टान्वयिनो विशेषणान्वयित्वनियमात्, जन्मादिविशिष्टे ब्रह्मत्वान्वये जन्मादावपि ब्रह्मत्वान्वयप्रसङ्गात् । नायं विशेषणपक्षो युक्त इत्याग्रहः तर्हि उपलक्षणत्वपक्षो भविष्यति । आकारान्तरप्रतिपत्तेस्सत्त्वादिति सिद्धान्त्यभिप्रायः, ततश्च परस्परविरुद्धयोर्विशेषणत्वोपलक्षणत्वपक्षयोः कथं भाष्ये अभ्युपगम इति चोद्यस्यानवकाश इति वदन्ति । केचित्तु विजिज्ञासस्वेत्यत्रोपासनस्य विधानात् जगत्कारणत्वस्योपासने अन्वयानन्वययोस्सत्त्वात् । भाष्ये विशेषणत्वोपलक्षणत्वाभ्युपगमो न विरुद्धः। श्रुतप्रकाशिकाचार्यैरपि 'इतरे त्वर्थसामान्या'दित्यत्र भाष्याभिप्रायस्याविष्कृतत्वाच्च तथैवाविरोधो नेय इति वदन्ति । अन्ये तु— विशिष्टनिष्ठं जगत्कारणत्वम्, विशेष्यनिष्ठन्तु सत्यत्वादिकमिति बहुशो ग्रन्थकृद्व्यवहारदर्शनात् । भाष्ये च जगत्कारणत्वोपलक्षितस्वरूपस्येति बहुशो व्यवहारदर्शनाच्च जगत्कारणत्वं चिदचिद्विशिष्टस्य ब्रह्मणो विशेषणभूतं लक्षणम्, शुद्धस्वरूपस्योपलक्षणम्,

त्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः। विशेषणत्वं हि व्यावर्तकत्वम् ॥ ननु 'देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते, एवमत्राप्येकमेव ब्रह्म भवति। नैवम्; तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः, अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम्। अत्र त्वनेनैव विशेषणेन लिलक्षयिषि-

---

* श्रुतप्रकाशिका *

गित्यत्राह (विशेषणत्वं हीति) विशेष्यतेऽनेनेति निर्वचनानुसारेण भेदकं विशेषणं. भेद्यं विशेष्यमिति प्रसिद्धेः, खण्डो मुण्डः पूर्णशृङ्गो नीलं शुक्लं पीतम् अजो गजो महिष इत्यादिषु तथा दर्शनाच्चेतिभावः। सिद्धान्तिच्छायया चोदयति (नन्विति) परिहरति (नैवमिति) उपसंहारः—पर्यवसानम्। अन्यथा—प्रमाणान्तरेणैक्यप्रतीत्यभावे सतीत्यर्थः। तत्रापि— देवदत्तादावपि। पक्षे वैषम्यमाह (अत्र त्विति) प्रमाणान्तरेणैक्यमनवगतमिति वदतोऽयं भावः। 'एकमेवाद्वितीयम्' इत्यादिभिरपि नैकत्वनिश्चयः, तत्राप्येकत्वादिविशेषणभेदेन बहुत्वापत्तेः। एकमित्यादिपदानामेको व्रीहिरित्यादिवन्निर्वाहसम्भवाच्चेति। ननु न केवलं प्रमाणान्तरेणैवैक्यप्रतीतिः, शाब्दी च विद्यते. तस्यां सत्यां धर्मिबहुत्वं न स्यात्।

* भावप्रकाशिका *

जगत्कारणत्वस्य शुद्धस्वरूपनिष्ठत्वाभावात्, तदभिप्रायेणैव विशेषणोपलक्षणाभ्युपगमः, न च शुद्धस्वरूपानिष्ठस्य विशिष्टनिष्ठस्य जगत्कारणत्वस्य कथं शुद्धस्वरूपोपलक्षणत्वमिति वाच्यम्; तटस्थस्यापि शाखाग्रस्य चन्द्रोपलक्षणत्वदर्शनादिति वदन्ति। पाराशर्यविजये तु विशेष्यनिष्ठत्वानिष्ठत्वाभ्यां विशेषणोपलक्षणभेदमाश्रित्य जगत्कारणत्वस्य ब्रह्मनिष्ठतया विशेषणत्वम्, प्रपञ्चगतजन्मादेस्तु ब्रह्मस्वरूपानिष्ठतया उपलक्षणत्वमिति प्रकारो दर्शितः। (ननु न केवलं प्रमाणान्तरेणैक्यप्रतीतिरिति) ऐक्यप्रतीतिः प्रमाणान्तरेणैवेति नियमो नास्ति, शाब्दी

तत्वात् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्त्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम् ॥ ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेत् ; न, अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्त्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेर्ब्रह्मव्यक्तयोऽपि बह्वयस्स्युः । अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां सम्भूय

* श्रुतप्रकाशिका *

अत्र चैकवचनान्तधर्मिवाचिपदैक्यं विशेष्यैक्यज्ञापकमिति शङ्कते ( ब्रह्मशब्देति ) तद्ब्रह्म तद्ब्रह्मेति मुहुर्मुहुरुक्तिर्वा, तानि ब्रह्माणीति बहुवचनं वा नास्तीति भावः । परिहरति ( नेति ) तत्कथमित्यत्राह ( अज्ञातेति ) एकवचनान्तधर्मिवाचिपदैक्यं विशेषणबहुत्वाधीनं विशेष्यबहुत्वं न बाधते, खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र बहुत्वप्रतीतेः । एकवचनान्तधर्मिवाचिपदैक्यं स्वतो विशेष्यैक्यप्रतिपादकम्, खण्डादिषु प्रत्यक्षबाधात् बहुत्वप्रतीतिरिति चेन्न ; अप्रत्यक्षेष्वपि गोषु खण्ड इत्यादिवाक्ये प्रयुक्ते बहुत्वप्रतीतेः, तस्माद्विशेषणबहुत्वं चेद्विशेष्यभेदापादकमित्यभिप्रायेणोक्तम् अज्ञातगोव्यक्तेरिति । अज्ञातगोव्यक्तेः—प्रत्यक्षेणादृश्यमानगोव्यक्तेरित्यर्थः । खण्डो मुण्ड इत्यादिवाक्यप्रयोगासम्भवव्युदासाय जिज्ञासोरित्युक्तम् । गोसामान्यज्ञाने सत्यदृष्टगोव्यक्तित्वाज्जिज्ञासासम्भवात्प्रयोगसम्भवः । सृष्टिस्थितिप्रलयाः किं प्रत्येकलक्षणानि, उत सम्भूय ? इति विकल्पमभिप्रेत्य प्रत्येकपक्षे दूषणमुक्तम् । सम्भूयेतिपक्षे दूषणमाह ( अत एवेति ) अत एव— विशेषणभेदस्य

* भावप्रकाशिका *

च विद्यते शब्दादपि सम्प्रतीत्यर्थः । सर्वात्मना अज्ञातगोव्यक्तित्वेन को गौरिति जिज्ञासाया एवानुदय इत्याशङ्क्याह ( प्रत्यक्षेणादृश्यमानगोव्यक्तेरिति ) ( वाक्यप्रयोगासम्भवव्युदासायेति ) अजिज्ञासुं प्रति वाक्यप्रयोगासम्भवादिति भावः । शाखाग्रमुपलक्षणमित्यस्यानन्तरं कालविशेषे देशविशेष उपलक्ष्याकारः, शाखाग्र-

लक्षणत्वमप्यनुपपन्नम् ॥ नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः । उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टं 'यत्रायं सारसः स देवदत्तकेदारः' इत्यादिषु ॥ ननु च [1]"सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रतिपन्नाकारस्य

* श्रुतप्रकाशिका *

स्वतो विशेष्यभेदापादकत्वादित्यर्थः । उपलक्षणपक्षं दूषयति ( नापीति ) कुत इत्यत्राह ( आकारान्तरेति ) व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः । व्यापकत्वमेवोपपादयति ( उपलक्षणानामिति ) उपलक्षणेनोपलक्ष्यप्रतिपत्तौ उपलक्षणमुपलक्ष्याकारः पूर्वप्रतिपन्नाकारश्चेत्याकारत्रयमवर्जनीयम् , सम्प्रतिपन्नस्थलेषु तद्दर्शनात् । यथा सारससम्बन्ध उपलक्षणम्, देवदत्तसम्बन्धित्वमुपलक्ष्यम्, केदारत्वं पूर्वप्रतिपन्नाकारः, अतोऽत्र तृतीयाकारप्रतिपत्त्यभावादुपलक्षणत्वमनुपपन्नमित्यर्थः । शाखाग्रे चन्द्र इत्यत्र कथमाकारत्रयमिति चेत् . उच्यते ; कालविशेषे देशविशेषसम्बन्धः उपलक्ष्याकारः , शाखाग्रमुपलक्षणम्, शाखाचन्द्रयोश्च ऋजुप्रदेशवर्तित्वं सम्बन्धः, स च सम्बन्धो वाक्यावगतः । आदित्यादिव्यावर्तकं चन्द्रशब्दबोध्यं चन्द्रसंस्थानं तृतीयाकारः । केदारत्वाद्याकारः प्रत्यक्षप्रतीतः , चन्द्रत्वं तु पूर्वानुभूतत्वाद्धीस्थम् , कुत्र चन्द्र इति बुभुत्सायामेवम् । कश्चन्द्र इति बुभुत्सायां शब्दवाच्यत्वमुपलक्ष्यम्, स्वारसिकेन वा शब्दोत्थापितबुभुत्सामूलेन वा प्रत्यक्षेण प्रतीतो वर्तुलादिः पूर्वप्रतिपन्नाकारः, अनेन निर्विशेषवस्तुवादे तूपलक्षणत्वमपि नोपपद्यते इत्युक्तं भवति । तृतीयाकारप्रतिपत्तिरस्तीति चोदयति ( ननु चेति ) दूषयति

ß भावप्रकाशिका ß

चन्द्रयोः ऋजुप्रदेशवर्तित्वं सम्बन्ध इति पाठश्चेत्सुश्लिष्टः ( स च सम्बन्धो वाक्यावगत इति ) वाक्यबोध्य इत्यर्थः । क्व चन्द्र इति बुभुत्सुं प्रति सम्बन्धस्यैव ज्ञाप्यत्वात्, चन्द्रशब्दबोध्यत्वं चन्द्रशब्दवाच्यत्वमित्यर्थः । अनयोरेतावान् विशेष इत्याह ( केदारत्वाद्याकार इत्यादिना ) केदारान् साक्षात्कुर्वन्नेव पृच्छति—को देवदत्त-

[1] तै. आन. १-१

जगज्जन्मादीन्युपलक्षणानि भवन्ति । न, इतरेतरप्रतिपन्नाकारापेक्षत्वेनोभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात्, अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति॥

—:(सिद्धान्तः ):—

एवं प्राप्तेऽभिधीयते—जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते । न चोपलक्षणो-

---

* श्रुतप्रकाशिका *

( नेति ) सत्यत्वादयः किं विशेषणतया लक्षणभूताः , उत उपलक्षणतया ? पूर्वस्मिन्कल्पे दूषणमुक्तम्, अन्यत्र चाकारान्तरप्रतिपत्त्यपेक्षायां वाक्यान्तरेण चेदनवस्था, स्वेन चेदात्माश्रय इति; अतो 'यतो वा इमानी'त्यादिवाक्येन आकारान्तरप्रतिपत्तिर्वक्तव्या, ततश्चान्योन्याश्रय इति भावः । ( अत इति ) विशेषणत्वोपलक्षणत्वायोगादित्यर्थः ॥ .... .... .... .... .... .... ....

सिद्धान्तमवतारयति ( एवं प्राप्तेऽभिधीयत इति ) एवम्— सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते तदाभिप्रेतस्तत्परिहार उच्यत इत्यर्थः । ज्ञाप्यबहिर्भूतो ज्ञाप्यप्रतीत्युपाय उपलक्षणम्, ज्ञाप्यान्तर्भूतो ज्ञाप्यप्रतीत्युपायो विशेषणम् , न चैकस्य ज्ञाप्यज्ञापकत्वविरोधः, घटादेरिन्द्रियसंयोगप्रतिसम्बन्धित्वेन ज्ञानोत्पत्तिहेतुत्वस्य विषयत्वस्य च दर्शनात् । एवं शब्दतो धीस्थतया स्वविशिष्टप्रतीतौ हेतुभूतं विशेषणमिति उभयथापि लक्षणत्वोपपत्तिं वक्ष्यन् " एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः " इतिवच्चरमोक्तमुपलक्षणपक्षे बुद्धिस्थतया प्रथममुपपादयितुं प्रतिजानीते ( जगदिति ) ननूपलक्षणपक्षे ऽनुपपत्तिरुक्तेत्यत्राह ( न चेति ) आकारान्त-

* भावप्रकाशिका *

केदार इति । चन्द्रमपश्यंस्तं मृगयमाण एव पृच्छति—क्व चन्द्र इति; अतो वैशिष्ट्यमिति भावः । ( शब्दोत्थापितेति ) चन्द्रो दृष्टो वेत्यादि शब्दोत्थापितेत्यर्थः ॥

( ज्ञाप्यबहिर्भूतो ज्ञाप्यप्रतीत्युपाय इति ) शाखाग्रस्य चन्द्रप्रतीतिदशायां प्रतीतेरुपलक्षणत्वम् , प्रकृष्टप्रकाशत्वस्य चन्द्रप्रतीतिदशायामपि विषयत्वमस्तीति प्रकृष्टप्रकाशविनिर्मुक्तस्य चन्द्रस्याप्रतीतेरिति भावः । ( शब्दतो धीस्थ-

पलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्मणाप्रतिपत्तिः। उपलक्ष्यं ह्यनवधिकातिशयबृहत्, बृंहणञ्च बृहतेर्धातोस्तदर्थत्वात्। तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः। यतो येन यदिति +प्रसिद्ध-

* श्रुतप्रकाशिका *

रम्– अकारविशेषः। स चोपलक्षणोपलक्ष्याकारातिरिक्त इत्यपुनरुक्तिः। पृथक् तृतीयाकारं दर्शयितुमाकारद्वयं विवक्षन् पूर्वमुपलक्ष्याकारमाह (उपलक्ष्यं हीति) अथर्वशिरसि "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति। श्रीमति वैष्णवे पुराणे च "बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते" इत्यादिनिर्वचनप्रसिद्धिद्योतको हिशब्दः। आकारत्रयपृथक्त्वद्योतनार्थाश्चशब्दाः तत्र तत्र ज्ञेयाः, कथं निरतिशयबृहत्त्वबृंहणत्वप्रतिपत्तिरित्यत्राह (बृहतेरिति) मनिन्प्रत्ययान्तस्य रूढिसहकृतस्य बृहतिधातोस्तदर्थत्वादित्यर्थः। यद्वा ब्रह्मशब्देन बृहत्त्वबृंहणत्वावगतिः कथमित्यत्राह– बृहतेरिति। बृहत्त्वस्य स्वरूपतो गुणतश्च विवक्षितत्वात् बृंहणत्वरूपबृहत्त्वमपि धात्वर्थान्तर्गतमितिभावः। उपलक्षणाकारमाह (तदुपलक्षणेति) ननु सारसस्य केदारेणेव जन्मादीनां ब्रह्मणा सह सम्बन्धो वक्तव्यः। किञ्च ब्रह्मण उपादानत्वे बाह्यमत इव निमित्तान्तराधिष्ठेयताप्रसङ्गेन सत्यसङ्कल्पत्वादिगुणान्वयलक्षणबृंहणत्वासिद्धिश्च स्यादित्येतच्छङ्काद्वयं परिहरन् तृतीयाकारोपस्थापकं वाक्यं चावतारयति (यतो येनेत्यादिना) कुत्र कथं प्रसिद्धिरित्यत्राह (प्रसिद्धि-

* भावप्रकाशिका *

तयेति) यत्पदजन्यपदार्थोपस्थितौ विषयीभूतं सद्वाक्यार्थप्रतीतिदशायां स्वविशिष्टप्रतीतिमादधाति तद्विशेषणम्, अन्यदुपलक्षणमिति भावः। (स्थूलसूक्ष्मात्मने नम इतिवदिति) इदं पुराणप्रक्रियायां स्पष्टम्। व्यतिरिक्तान्तरशब्दयोः पौनरुक्त्यमाशङ्क्याह (अकारविशेष इति) बृहद्बृंहणञ्चोपलक्षणभूताश्चेत्यादिचशब्दानामर्थमाह (आकारत्रयपृथक्त्वेति) तदितराकारद्वय-

+ प्रसिद्धवज्जन्मादिकारणनिर्देशेन– इति पा.

वन्निर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते । प्रसिद्धिश्च [1]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति" "तत्तेजोऽसृजत" इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन, तदपि 'सदेवेदमग्र एकमेवासी' दित्युपादानतां प्रतिपाद्य 'अद्वितीय'मित्यधिष्ठात्रन्तरं प्रतिषिध्य "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्येकस्यैव प्रतिपादनात् । तस्मात् यन्मूला जगज्जन्मस्थितिलयास्तद्ब्रह्मेति, जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति । जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन

* श्रुतप्रकाशिका *

श्चेति ) तच्च कथमित्यपेक्षायां तत्प्रतिपादनं पदानामन्वयमुखेन दर्शयति ( तदपीति ) तत्— निमित्तोपादानत्वरूपकारणत्वम् । उपादानत्वाधिष्ठात्रन्तरनिवारणयोरुपपादनं कृतं "तदैक्षत बहु स्याम्' 'असृजत" इति । रामकृष्णादिरूपेण बहुभवनव्यावृत्त्यर्थं जगद्रूपेण बहुभवनमिति दर्शितं 'तत्तेजो ऽसृजत'इत्यनेन । अत्र फलितं सम्बन्धमाह ( तस्मादिति ) यथा उपलक्षणेन सारसेनाधिकरणत्वेन सम्बन्धित्वं केदारस्य. यथा चन्द्रदेशस्य शाखायाश्च ऋजुभावः सम्बन्धः तथा ब्रह्मण उपलक्षणभूतजन्मादिभिर्हेतुहेतुमद्भावः सम्बन्ध इत्युक्तं भवति, यथा प्रसिद्ध्यनुवादरूपतया वाक्यस्य । निमित्तान्तरशङ्का चार्थात्परिहृता भवति ; एवं तृतीयाकारस्याक्षेपकमुपलक्षणसम्बन्धात्मकं निमित्तोपादानरूपकारणत्वमुक्तम् । अथ तदाक्षिप्तं तृतीयाकारमाह ( जगदिति ) यतश्शब्दस्मारितकारणवाक्येषु

* भावप्रकाशिका *

समुच्चयार्थ इत्यर्थः । (यद्वा ब्रह्मशब्देनेति ) ब्रह्मत्वस्य धात्वर्थत्वेपि बृंहणत्वस्य कथं

1 छा. उप. ६-२-१-३

प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथा प्रतिपन्नस्य

* श्रुतप्रकाशिका *

हि सार्वज्ञ्याद्यवगमः, अतो जगन्निमित्तोपादानताक्षिप्तेत्युक्तम्। गुणानामपरिच्छिन्नतया तद्विशिष्टस्य ब्रह्मशब्दवाच्यतायोग्यत्वज्ञापनार्थमाकारबृहत्त्वेनेत्युक्तम्। 'यः सर्वज्ञ' इत्यादिवाक्यावगतसार्वज्ञ्यादीनामुपलक्षणत्वाभावान्नान्योन्याश्रयः। विशेषणबहुत्वं तु न विशेष्यभेदापादकमिति वक्ष्यत इति न विरोधः। उपलक्षणपक्षानुपपत्तिपरिहारमुपसंहरति (इति चेति) इति च– अतश्चेत्यर्थः। उपलक्ष्यं हीत्यादिभाष्यस्यैवं वा योजना,– अनवधिकातिशयशब्दे तात्पर्यम्. उपलक्ष्यमनवधिकातिशयबृहत्त्वं बृंहणत्वं च, निरवधिकबृहत्त्वं च स्वरूपतो गुणतो विभूतितश्चानवधिकबृहत्त्वम्. बृहत्त्वबृंहणत्वविशेषः उपलक्ष्य इत्युक्तं भवति; ततश्चोपलक्ष्याकारैकदेशभूतं बृहत्त्वबृंहणत्वमात्रं पूर्वप्रतिपन्नाकारो भवतीति फलितम्, लोके तथा दर्शनात्। देवदत्तकेदारत्वं ह्युपलक्ष्यम्, न च देवदत्तसम्बन्धित्वमात्रम् घटपटादिष्वतिप्रसङ्गात्. तदेकदेशभूतकेदारत्वमात्रेण च पूर्वप्रतिपत्तिः, तस्मादुपलक्ष्यैकदेशभूतबृहत्त्वबृंहणत्वाकारेण पूर्वप्रतिपत्तिः, अनवधिकातिशयबृहत्त्वं बृंहणत्वमुपलक्ष्यमित्यभिप्रायेण ह्यनवधिकातिशयबृहद्बृंहणञ्चेत्युक्तम्, बृहत्त्वबृंहणत्वविशेषस्योपलक्ष्यत्वात् बृहत्त्वबृंहणत्वमात्रं पूर्वप्रतिपन्नाकार इत्यर्थसिद्धमिति हिशब्देन सूचितम्। कथं तत्प्रतिपत्तिरित्यत्राह– बृहतेर्धातोरिति। बृहत्त्वमात्रं पूर्वप्रतिपन्नाकार इत्यध्याहृतेन वाक्येन तदर्थत्वादिति पञ्चम्या अन्वयः। यद्वा न चेत्यादिना पूर्ववाक्येनान्वयः। उपलक्षणाकारमाह– तदुपलक्षणेति। तृतीयाकारगन्धमपि विवक्षुस्तत्प्रतिपादकं वाक्यमवतारयन्नुपलक्षणस्योपलक्ष्येण सम्बन्धं वदन्निमित्तान्तरशङ्कां च व्युदस्यति– यतो येनेत्यादिना। पूर्ववदर्थः। विवक्षितमन्यं तृतीयाकारमाह– जगदिति। इदानीम्– चशब्दस्तृतीयाकारान्तरसमुच्चये। यथा केदारत्वं सारसाधिकरणत्वदेवदत्तसम्बन्धित्वोपयोगि तथा सर्वज्ञत्वादयोऽप्यनवधिकातिशयबृहत्त्वबृंहणत्वजन्मादिकारणत्वोपयोगिनः। अथ विशे-

* भावप्रकाशिका *

धारत्वर्थमिति भावः। अस्मिन् पक्षे निरतिशयपरित्यागो भेदकः। (अनवधिकातिशयशब्दे तात्पर्यमिति) पूर्वपक्षे अनवधिकातिशयविशिष्टब्रह्मत्वमुपलक्ष्यम्,

लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः । जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः । लक्षणभूतान्यपि विशेषणानि स्वविरोधिभ्यो व्यावृत्तं वस्तु लक्षयन्ति । अज्ञातस्वरूपे वस्तुन्येकस्मिन्निलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति, विशेषणानामेकाश्रयतया प्रती-

* श्रुतप्रकाशिका *

षणतया लक्षणत्वमुपपादयति ( जगज्जन्मादीनामिति ) कथं न दोषः ? अपवादकप्रमाणाभावे विशेषणभेदस्य विशेष्यभेदावहत्वं दोषत्वेन ह्युक्तमित्यत्राह ( लक्षणभूतान्यपीति ) लक्षणभूतानि— व्यावर्तकभूतानीत्यर्थः । यद्वा लक्षणभूतानां विशेषणानां सजातीयविजातीयव्यावर्तनस्वभावत्वेऽपीत्यर्थः । स्वविरोधिभ्यो व्यावृत्तम्— नियतभिन्नाश्रयविशेषणाश्रयाद्व्यावृत्तम् , न स्वविरुद्धविशेषणाश्रयाद्व्यावृत्तमित्यर्थः । अयं ग्रन्थः पक्षविषयः । बहुत्वापवादकप्रमाणाभावे सति विशेषणत्वमेव विरोधित्वमित्यत्राह ( अज्ञातेति ) अयन्तु सपक्षविषयः, देवदत्तः श्यामो युवेत्याद्युदाहरणमत्राभिप्रेतम् । अप्रत्यक्षविषयेऽप्येकवचनान्तधर्मिवाचिपदैक्याद्विशेष्यैक्यं प्रतीयत इत्यर्थः । अत्र विशेष्यैक्यव्यवस्थापकं किमित्यपेक्षायां सपक्षे विशेष्यैक्यमुपपादयति ( विशेषणानामिति ) शब्दस्वारस्याद्विशेषणानामेकाश्रयान्वयप्रतीतेरविरुद्धविशेषणानामेकाश्रयवृत्तित्वोपपत्तेरित्यर्थः । अविरुद्धविशेषणत्वं विशेष्यैक्यव्यवस्थापकमित्युक्तम्भवति । यद्वा अज्ञातस्वरूप इत्यपि ग्रन्थः पक्षविषयः । पूर्वस्मिन् ग्रन्थे विशेषणानां विरुद्धविशेषणाश्रयात् स्वाश्रयभेदकत्वमुक्तम् । अस्मिंस्तु पक्षे ब्रह्मत्वं नोपलक्ष्यम् , अपि तु तद्वतोऽतिशय इत्यर्थः ।

* भावप्रकाशिका *

( इदानीम् चशब्द इति ) प्रतिपन्नं ब्रह्मेति चेत्यत्र चशब्द इत्यर्थः । लक्षणभूतान्यपि विशेषणानीत्यत्र असाधारणधर्मत्वपर्यन्तविवक्षायाः प्रकृतेः प्रयोजनाभावादाह ( व्यावर्तकभूतानीत्यर्थ इति ) लक्षणत्वविवक्षामभ्युपेत्यापि साध्याहारं व्याचष्टे ( यद्वा लक्षणभूतानामिति ) उत्तरग्रन्थेन पौनरुक्त्यमाशङ्क्याह ( अयं ग्रन्थः पक्षविषय इति )

तेरेकस्मिन्नेवोपसंहारात् । खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति, अत्र तु कालभेदेन जन्मा-

* श्रुतप्रकाशिका *

श्यत्वे सति भिन्नविशेषणत्वमेव भेदकत्वमित्यत्राह—अज्ञातेति । तत्राप्यविरुद्धविशे-षणभेदो न विशेष्यभेदक इत्यर्थः । कुत इत्यत्राह— विशेषणानामिति । देवदत्तः श्यामो युवा लोहिताक्षः इत्यादावविरुद्धविशेषणानामेकाश्रयत्वदर्शनात् पक्षीकृतेऽप्येकास्मिन्नेव विशेषणानामन्वयोपपत्तेरित्यर्थः । अविरुद्धविशेषणानां विशेष्यभेदानापादकत्वमुक्तम् विपक्षभूतखण्डादिषु बहुत्वनियामकमाह (खण्डत्वादयस्त्विति) ततः पक्षस्य वैषम्य-माह(अत्र त्विति) कालभेदेनेत्यस्यायमभिप्रायः,— विशेष्यब्रह्मबहुत्वेऽपि जगज्जन्मा-दीनां यौगपद्यव्याघातात् कालभेदेनाविरोध आश्रयणीयः, विशेष्यैक्येऽपि तथै-वाविरोध इति । अत्रायमर्थोऽनुसन्धेयः,— विशेषणबहुत्वं स्वत एव विशेष्य-भेदापादकम्, खण्डो मुण्ड इत्यादिषु दर्शनात् । देवदत्तः श्यामो युवेत्यादिषु प्रत्यक्षबाधादैक्यप्रतीतिः, तस्मात्प्रत्यक्षागोचरे ब्रह्मणि विशेषणबहुत्वायत्तं विशेष्य-बहुत्वमवर्जनीयमिति चेत्, एकवचनान्तधर्मिवाचिपदैक्यस्य स्वतो विशेष्यैक्य-परत्वं देवदत्तः श्यामो युवेत्यादिषु दृष्टम् । खण्डो मुण्ड इत्यादिषु प्रत्यक्षबाधा-द्बहुत्वप्रतीतिः, अतः प्रत्यक्षागोचरे ब्रह्मणि एकवचनान्तधर्मिवाचिपदैक्यादैक्यं सिद्धमेव । नैवम्, विशेषणभेदायत्तं विशेष्यबहुत्वमेकवचनान्तधर्मिवाचिपदैक्यं न बाधते, अपि तु प्रत्यक्षमेव बाधते, अदृश्यमानगोव्यक्तेः पुरुषस्य खण्डो मुण्ड इत्यादिवाक्यप्रयोगे सत्येकवचनान्तधर्मिवाचिपदैक्येपि बहुत्वप्रतीतेरिति हि पूर्व-पक्षस्थितिः । तत्रोत्तरमुच्यते— अज्ञातेत्यादिना । एकवचनान्तधर्मिवाचिपदैक्यं बहुत्वं बाधत एव, अदृश्यमानेऽपि देवदत्ते देवदत्तः श्यामो युवेत्यादिवाक्य-प्रयोगे विशेषणबहुत्वे सत्यपि विशेष्यैक्यप्रतीतेः, एवं प्रत्यक्षाप्रत्यक्षविभाग-विधुरं बहुत्वप्रतीतिरैक्यप्रतीतिश्च भवतः । अत्र तु बहुत्वैकत्वयोः को निर्णायक इति चेत्, नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि, अनियतभिन्नाश्रय-दृष्टविशेषणबहुत्वं नैक्यविरोधीति । अथ सत्यज्ञानादीनां लक्षणत्वोपपत्तिं पूर्वो-

* भावप्रकाशिका *

( भिन्नविशेषणत्वमेव भेदकत्वमिति ) भेदकत्वप्रयोजकत्वमित्यर्थः । ( जीवजातीय-

दीनां न निरोधः । "यतो वा इमानि भूतानि जायन्ते" इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते 'सत्यं ज्ञानमनन्तं ब्रह्म" इति । तत्र सत्यपदं निरुपाधिकसत्तायोगिब्रह्माह, तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनो व्यावृत्तः, नामान्तरभजनार्हावस्थान्तरयो-

* श्रुतप्रकाशिका *

क्तान्योन्याश्रयणपरिहारश्चाह ( यतो वा इति ) लक्षणवाक्येनानेन कारणत्वमेव लक्षणत्वेनोक्तमित्यस्य कारणवाक्यत्वम्, आदिशब्देन 'सदेवेत्यादीनि' कारणत्वप्रापकवाक्यानि गृह्यन्ते । ननु लक्षणभूतेनैव जन्मादिकारणत्वेन ब्रह्मणः सजातीयविजातीयव्यावृत्तिः सिद्धा, अन्यथा तस्य लक्षणत्वायोगात् । तत्कथं सत्यादिवाक्येन सकलेतरव्यावृत्ताभिधानोक्तिः ? उच्यते ; व्यावृत्तिर्द्विविधा । व्यक्त्यन्तरेष्वसम्भावितधर्मयोगरूपा तत्तज्जातीयासाधारणधर्मानन्वयरूपा च । तत्र विलक्षणधर्मयोगे व्यक्त्यन्तरेभ्योऽन्यत्वं सिद्ध्यति, न स्वतज्जातीयत्वम्, तज्जातीयत्वव्यञ्जकधर्मान्वयाधीनतज्जातीयत्वशङ्काया अनवगमात् । तदनन्वये तु तज्जातीयताव्यावृत्तिः सिद्ध्यति, यथा घटस्य संस्थानविशेषेण स्वेतरसमस्तवैलक्षण्ये सिद्धेऽपि पृथिवीत्वव्यवस्थापकगन्धवत्त्वयोगात्पृथिवीजातीयत्वं नापैति, तदयोगादबादिषु तज्जातीयत्वापगमः, एवं जगत्कारणत्वरूपविलक्षणधर्मान्वये सत्यपि ब्रह्मणोऽचिज्जातीयत्वजीवजातीयत्वशङ्कावतिष्ठत इति तज्जातीयताव्यावृत्तिस्सत्यज्ञानादिवाक्येन प्रतिपाद्यत इति तस्य सकलेतरव्यावृत्तस्वरूपबोधकतोक्तिर्युक्तेति । कथं व्यावृत्तस्वरूपाभिधानमित्यत्राह ( तत्रेति ) केनापि परिणामविशेषेण तत्तदवस्थस्य सत्ता सोपाधिकसत्ता, अतो निरुपाधिकसत्ता निर्विकारत्वम् । सत्यपदव्यावर्त्यमाह ( तेनेति ) कथमित्यत्राह ( नामान्तरेति ) निरुपपदं सत्यपदमसङ्कोचात्

* भावप्रकाशिका *

त्वशङ्कावतिष्ठत इति ) ननु जीवासम्भावितजगत्कारणत्वश्रवणेपि जीवजातीयत्वशङ्का भवति चेत्, सत्यत्वादिश्रवणेपि जीवजातीयत्वशङ्का तदवस्थैव, जीवस्यव्याप-

# गेन तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं

* श्रुतप्रकाशिका *

स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीत्यचित्संसृष्टजीवव्यावृत्तिः । ज्ञानशब्दार्थमाह ( ज्ञानपदमिति ) इदानीमस्मिन् विषय इत्याद्युपपदरहितं ज्ञानपदमसङ्कुचितत्वं नित्यत्वञ्च ज्ञानस्य दर्शयति, नित्यासङ्कुचितज्ञानत्वमेवाकारो यस्य तन्नित्यासङ्कुचितज्ञानैकाकारम् , तेन ब्रह्मणः कदाचित्क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः । नित्यासङ्कुचितज्ञानत्वमद्वारकं धर्मद्वारकं च परमात्मन आकारो भवति। "आत्मज्योतिः सम्राडिति होवाच' 'ब्रह्मणा विपश्चिता'' विज्ञातारमरे केन विजानीयात्" इत्यादिभिः स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात् । ज्ञानशब्दासङ्कोचेन सद्वारकाद्वारकज्ञानाकारत्वसिद्धिः । नन्वस्य ज्ञानशब्दस्य किं प्रवृत्तिनिमित्तम् ? विषयावगाहिज्ञानारूपद्रव्यत्वं चेत् अपर्यवसानात् ज्ञानधर्मकत्वमुक्तं स्यात्, न तु ज्ञानस्वरूपता । स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत्, ज्ञानस्वरूपत्वमुक्तं स्यात, न तु ज्ञानधर्मकत्वम् ; ततश्च 'तद्गुणसारत्वा'दितिसूत्रविरोधश्च । न च गवादिशब्दानां परमात्मपरत्वे गोत्वसंस्थानपिण्डजीवानामिव द्वारद्वारिभावात् ज्ञानाख्यद्रव्यज्ञानत्वगुणयोर्द्वयोरपि प्रवृत्तिनिमित्तत्वं घटते । न हि धर्मभूतज्ञानं स्वरूपभूतज्ञानंगतज्ञानत्वगुणे समवैति, येन द्वारद्वारिभावः स्यात् , धर्मभूतज्ञाने स्वरूपे चानुगतं ज्ञानत्वमेव प्रवृत्तिनिमित्तञ्चेद्गोशब्देन खण्डमुण्डपिण्डद्वयवत् ज्ञानव्यक्तिद्वयमुक्तं स्यादिति द्वारद्वारिभावेनानभिधानाच्चयोर्ज्ञानयोर्न धर्मधर्मिभावप्रतीतिः, ज्ञानत्वगुणविशेषितज्ञानद्रव्यविशिष्टतया ज्ञानत्वगुणविशिष्टतया च स्वरूपस्याभिधाने शब्दस्य युगपद्व्यापार-

* भावप्रकाशिका *

कासत्यत्वादिव्यावृत्त्या जीवत्वाभावसाधनवत् जीवत्वाभावव्याप्तजगत्कारणत्वेन जीवत्वाभावानुमानसम्भवादितिचेन्न; कारणत्वशङ्कितदोषव्यवच्छेदकतया सत्यादिलक्षणवाक्यमर्थवत्त्वमस्तीत्यत्र तात्पर्यात् । ( स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीति ) नन्वेवं परमात्मनोपि सत्यत्वं न स्यात् , धर्मभूतचिदचिद्विकारसत्त्वादिति चेन्न ; स्वरूपे वा धर्मभूतज्ञाने वा विकारशून्यत्वस्य तदर्थत्वात् । नन्वेवमपि परमात्मधर्मभूतज्ञानस्यापि सङ्कोचादिरूपपरिणामसत्त्वात् परमात्मनोपि सत्यत्वं न स्यादिति चेन्न; कर्मकृतविकाराभावस्यैव तदर्थत्वात् । ( ज्ञानत्वगुणे समवैतीति ) ननु ज्ञानारूपस्य

* श्रुतप्रकाशिका *

भेदः प्रसज्येत् । अतो ज्ञानपदेन स्वरूपतो धर्मतश्च ज्ञानाकारत्वमात्मनो न सिध्येत् । उच्यते, ज्ञानशब्दस्य स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तम्. न च तद्गुणसारत्वादितिसूत्रविरोधः, धर्मभूतज्ञानद्रव्याभिधानेऽपि ज्ञानत्वस्य प्रवृत्तिनिमित्तत्वात् । स्वरूपस्य च ज्ञानत्वं "प्रकाशवच्चावैयर्थ्यात्" इति सूत्रितम् । न च सद्वारकमद्वारकञ्च स्वरूपस्याभिधानेऽपि शब्दस्य युगपद्व्यापारभेदः साक्षाद्वा परम्परया वेति विशेषमनपेक्ष्य ज्ञानत्वमात्रस्य प्रवृत्तिनिमित्तत्वे सति शब्दशक्त्यसङ्कोचात्साक्षात्प्रणाड्या च ज्ञानत्वविशिष्टतावगमेन ज्ञानधर्मकत्वज्ञानस्वरूपत्वसिद्धेः । नच द्वारद्वारिभावेनानभिधानात् खण्डमुण्डव्यक्त्योरिव धर्मधर्मिभावासिद्धिः, "आत्मज्योतिः सम्राट्" 'ब्रह्मणा विपश्चिता' 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति' 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इत्यादिभिः परमात्मनो जीवस्य च ज्ञानधर्मकत्वस्य ज्ञानस्वरूपत्वस्य च सिद्धेः ज्ञानशब्दस्य चासङ्कोचेन ज्ञानात्मनोर्विशेषणांशे विशेष्यांशे च ज्ञानत्ववैशिष्ट्यबोधनसामर्थ्याच्च । यथा सपरिकरो राजा दृष्टः सपरिच्छदं गृहं क्रीतं सवत्सा गौः क्रीतेत्यादौ विशेषणांशस्य विशेष्यांशस्य च दृष्टत्वक्रीतत्वान्वय एकव्यापारेण शब्देन बोध्यते तद्वत् । न च विशेषणांशे विशेष्यांशे वा दृष्टत्वक्रीतत्वान्वय आर्थः विशेषणांशविशेष्यांशयोरन्यतरेण विनान्यतरस्य दृष्टत्वक्रीतत्वान्वयप्रतीत्युनुपपत्त्यभावात् । न हि प्रवाहस्य घोषं प्रति वासत्ववद्विशेषणांशेन विना विशेष्यांशस्य दृष्टत्वक्रीतत्वादिकमनुपपन्नम्, न च दर्शनक्रयादियोग्यतालक्षणेनार्थसामर्थ्येन विशेषणांशस्य तदन्वयप्रतीतिः, मण्डपक्षेत्रगोदोहनादीनां दर्शनक्रयादियोग्यानामपि तदन्वयाप्रतीतेः, तदप्रतीतिश्च बुभुत्सायां सत्यां सन्देहोदयात्सिद्धा । न च समभिव्याहारबलात् विशेषणांशस्य तदन्वयसिद्धिः, धार्मिको राजा दृष्ट इत्यत्र धर्मस्य दृष्टत्वाप्रतीतेः, न हि धर्मश्चक्षुर्विषयः, योग्यत्वे सति समभिव्याहारबलात्तदन्वयसिद्धिरिति चेत्, तर्हि विशेषणांशेऽपि तदन्वयस्य शाब्दत्वमुक्तं स्यात्,

छ भावप्रकाशिका छ

द्रव्यस्य ज्ञानत्वगुणसमवेतत्वाभावेपि ज्ञानत्वं ज्ञानाख्यद्रव्यसमवेतम्, तच्चात्मनि समवेतमिति द्वारद्वारिभावसङ्गच्छत इति चेन्न; तथासत्यात्मन्यद्वारकज्ञानत्वप्रति-

* श्रुतप्रकाशिका *

न ह्याकाङ्क्षासन्निधियोग्यतान्वयेन प्रतिपन्नत्वं शाब्दत्वं निवारयति । ननु सपरिकरो राजा दृष्ट इत्यादिषु विशेषणांशस्य विशेष्यांशस्य च शब्देनोपस्थापनात्तत्र विशेषणांशेऽपि विधित्सिताकारान्वय उपपन्नः, अत्र तु तदभावादुभयत्र विधित्सिताकारान्वयानुपपत्तिरिति । नैवम् ; ब्रह्मशब्देनैव विशिष्टवस्तूपस्थापनात् । तथाहि सद्विजिज्ञासस्वेति मुमुक्षोर्जिज्ञास्यतयोक्तं ब्रह्म तदैक्षतेत्यादीनि वाक्यानि सत्यसङ्कल्पत्वादिविशिष्टं कारणं वदन्ति, तच्छोधनप्रवृत्तसत्यादिवाक्यगतब्रह्मशब्दः सत्यसङ्कल्पत्वादिविशिष्टकारणविषयः । बृंहणत्वमपि हि ब्रह्मशब्दार्थः । तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वं चेतनानां 'स चानन्त्याय कल्पते' इत्युक्तज्ञानबृंहणहेतुत्वञ्च. ततश्च सत्यसङ्कल्पत्वादिविशिष्टार्थोपस्थापकब्रह्मशब्दप्रतिपन्नविशिष्टवस्तुविशेषकत्वात्, ज्ञानपदमसङ्कुचितशक्तितया विशेष्यांशे विशेषणांशे च स्वप्रवृत्तिनिमित्तभूतज्ञानत्वान्वयं प्रतिपादयति, सपरिकरो राजा दृष्ट इत्यादिषु पदान्तरसमभिव्याहृतशब्देन विशिष्टोपस्थापनम्, अत्र तु स्वोपजीव्यवाक्यान्तरस्थनिर्वचनसापेक्षब्रह्मशब्देनेति । भिदा विशिष्टवस्तुन्युपस्थापिते सति विशेषणांशस्य विशेष्यांशस्य च विधित्सिताकारान्वयित्वं तुल्यम्, स्वोपजीव्यवाक्यान्तरसापेक्षशब्देन विशिष्टवस्तुन्युपस्थापिते विधित्सिताकारस्योभयान्वयित्वञ्च दृष्टम्, यथा सानुचरो राजा समागतः मया च राजा सत्कृत इति, सवत्सा गौः स्थिता सा च दत्तेति ; अतः परमात्मनो ज्ञानशब्देन ज्ञानधर्मकत्वज्ञानस्वरूपत्वाभिधानं युक्तम्, आनन्दादिशब्देष्वप्येष एव न्यायः स्वतः प्रवर्त्तते, प्रमाणान्तरविरोधे सति तु निवर्तते; अतो यथोक्तार्थ उपपन्नः, अतः साक्षात्प्रणाड्या च नित्यासङ्कुचितज्ञानैकाकारत्वं दर्शयता ज्ञानपदेन

❀ भावप्रकाशिका ❀

यार्थिर्न स्यादिति भावः । ननु ब्रह्मशब्दोपस्थापितत्वेन धर्मस्यापि ज्ञानत्वबोधनेऽतिप्रसङ्गः, ब्रह्मत्वस्यापि ज्ञानरूपत्वप्रसङ्गात् । किञ्च ब्रह्मत्वस्यैव विधेयत्वेन ब्रह्मानुवादेन ज्ञानत्वस्य विधेयत्वासम्भवाच्च । सङ्कल्पादिषु ज्ञानरूपतया प्रतिपन्नेषु ज्ञानत्वबोधनस्य व्यर्थत्वाच्चेत्याशङ्कामुपसंहारव्याजेन निरस्यति ( अतो यथोक्तार्थ इति ) अयं भावः,— सत्यं ज्ञानमित्यत्रान्तोदात्ततया अर्श आद्यजन्तत्वेन ज्ञानगुणकत्वप्रतीतेः, आत्मा ज्योतिस्सम्राडित्यत्रापि स्वरूपस्य प्रकाशत्वप्रसिद्धेश्चाविरोधा-

नित्यासङ्कुचितज्ञानैकाकारमाह, तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्त-

* श्रुतप्रकाशिका *

मुक्तव्यावृत्तिसिद्धिमाह ( तेनेति ) अनन्तपदस्यार्थमाह (अनन्तेति) इहेदम्– नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः, इदमिदानीम्–नान्यदेति परिच्छेदायोग्यत्वं कालपरिच्छेदः, न तु देशकालाभावौ; एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः, किन्तु इदमिदं न भवतीति परिच्छेदानर्हत्वमेव , सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इतियावत् । ब्रह्मव्यतिरिक्ते भावरूपाज्ञानतत्कार्यजातेऽङ्गीकृते सति वस्त्वन्तराभावरूपो वस्त्वपरिच्छेदः परस्यानुपपन्नः । सत्यवस्त्वन्तराभावः स इति चेत्, तर्हि स्वनिष्ठवस्त्वन्तराभावः स इत्यभ्युपगमो वरम्, प्रमाणान्तराविरोधात्, सत्यवस्त्वन्तराभावो हि तत्तद्धर्मिग्राहकप्रमाणविरुद्धः। गुणतोऽप्यानन्त्यमाह ( सगुणत्वादिति ) गुणानां देशकालापरिच्छेदौ विद्येते न तूक्तलक्षणवस्तुपरिच्छेदाभावः, स तु स्वरूपस्यैव। यद्वा प्रकारान्तरेण वस्तुपरिच्छेदाभावमाह– सगुणत्वादिति । इदमियदिति वस्तु स्वभावतः परिच्छेदाभावो वस्त्वपरिच्छेदः, यथा तुल्यकालत्वे तुल्यपरिमाणत्वेऽपि दशवर्णस्वर्णापेक्षया षड्वर्णस्वर्णं तदपेक्षया कलधौतादि चापकृष्टम्, सोऽपकर्षो वस्तुपरिच्छेदः, तत्तदपेक्षया गुरुत्वोज्ज्वलत्वपवित्रत्वादिभिर्दशवर्णस्वर्णादिकं प्रकृष्टम्, तस्य प्रकर्षस्य निरतिशयत्वं वस्त्वपरिच्छेदः, ईदृशवस्त्वपरिच्छेदः स्वरूपस्य गुणानां च युज्यते, तेषामपि हेयप्रत्यनीकत्वादिस्वभावोत्कर्षस्य निरवधिकत्वात् समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्तुपरिच्छेद इत्युक्तं भवति , सर्ववस्तुसामानाधिकरण्यार्हत्वं चास्मिन्नन्तर्गतम्, तद्धि सर्वशरीरकत्वम्, तच्च नियमनधारणशेषित्वकाष्ठेति । अनन्तपदव्यवच्छेद्यमाह (तेनेति) ( सातिशयस्वरूपस्वगुणा इति ) स्वरूप-

* भावप्रकाशिका *

दिति भावः । ( वस्त्वपरिच्छेद इति ) मृषावादिमतं दूषयति ( इहेदं नान्य-

कोटिद्वयविलक्षणास्सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः, विशेषणानां व्यावर्त्तकत्वात् । ततः [1]'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति

* श्रुतप्रकाशिका *

मगुणत्वात्सातिशयम्, ज्ञानव्यतिरिक्त ऐश्वर्यादिगुणाश्च जगद्व्यापारानर्हतया सातिशयाः, ज्ञानं च नित्यं सर्वगतमपि तथात्वस्य परमात्मनित्येच्छाधीनत्वात्सातिशयम्, अपराधीनस्वरूपस्यातिशयस्य परस्मिन् विद्यमानत्वात् स्वाभाविकत्वेऽपि गुणानां सातिशयत्वमिति ज्ञापनार्थस्स्वशब्दः । एवं व्यावृत्तिकथनस्य हेतुमाह (विशेषणानामिति) अन्योन्याश्रयस्य परिहृतत्वं दर्शयति (तत इति) ततः— एवं व्यावृत्तिसिद्धेः । अवगतस्वरूपम्—अवगतासाधारणाकारम् । जन्मादिकारणत्वं ह्यसाधारणाकारः, तल्लक्षणत्वेनावगतमित्यर्थः । वस्तु— विशेष्यस्वरूपम् । ब्रह्मेति वा पाठः । कारणतया लक्षितस्य ब्रह्मणः कारणत्वशङ्कितदोषव्यावर्तकत्वाच्छोधकवाक्यानां लक्षणवाक्यपूर्वकत्वमस्ति, न तु तस्य शोधकवाक्यपूर्वकत्वमिति नान्योन्याश्रयणमित्यर्थः । सूत्रकारैः सत्यज्ञानादीनां लक्षणत्वेनानुक्तिनिदानं च अनेनैव दर्शितं भवति । विशेष्यांशस्य लक्षणं सत्यज्ञानादि, न तु विशिष्टस्य । विशिष्टस्यैवोपास्यत्वात्प्राप्यत्वाच्च जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति सूत्राकाराभिप्रायः । जगत्कारणं ब्रह्म जिज्ञास्यमित्युक्ते कारणत्वशङ्कितदोषव्यावर्तकतया तच्छेषभूतश्शोधकवाक्यार्थश्चास्मिन् सूत्रे सूत्रकाराभिप्रेतः । जिज्ञास्यत्वानुगुणस्य कारणत्वस्यैव लक्षणतया विवक्षितत्वात्, स्वरूपेण हेयास्पदस्य जिज्ञास्यत्वानुपपत्त्या जिज्ञास्यतायाः शोधकवाक्यार्थसापेक्षत्वात् सत्यज्ञानादिवाक्यविषयसूत्रान्तराभावात् 'प्राज्ञवत्' 'प्रकाशवच्च' 'प्रकाशादिवच्च' इति सूत्राणां सत्यादिवाक्यं दृष्टान्ततयोपजीव्यार्थान्तरोपपादनपरत्वाच्च, सत्यज्ञानादिवाक्यार्थश्चेहाभिप्रेत इत्यभिप्रायेण भाष्य-

* भावप्रकाशिका *

त्रेत्यादिना ) ( विशेष्यांशस्य लक्षणं सत्यज्ञानादीति ) ननु ज्ञानत्वस्य ब्रह्मशब्दा-

1 तै. आनन्द. १-१.

लक्ष्यत इति नान्योन्याश्रयणम् , अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् ॥

ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति , तन्मते " ब्रह्मजिज्ञासा " " जन्माद्यस्य यतः " इत्यसङ्गतं स्यात् , निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात् ; तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च ; एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुति-

* श्रुतप्रकाशिका *

कारैर्निखिलहेयप्रत्यनीकस्वरूपादित्यादि विशेषणमुक्तम् । अधिकरणार्थमुपसंहरति ( अत इति ) अतः जन्मादीनां विशेषणतया उपलक्षणतया च लक्षणत्वोपपत्तेः, जिज्ञास्यत्वोपयोगिशोधकवाक्यावगताकारविशिष्टमेव कारणवस्तु 'यतो वा इमानि' इत्यादिवाक्ये अर्थलभ्यमित्यभिप्रायेणाह ( निरवद्यमिति ) सर्वज्ञत्वादिगुणजातं कारणत्वाक्षिप्तं यत इत्यत्रानूद्यत इत्यभिप्रायेण तदुक्तिः । अस्य सूत्रद्वयस्य निर्विशेषवादिपक्षासङ्गतिमाह ( ये त्विति ) आद्यसूत्रासङ्गतिमुपपादयति ( निरतिशयेति ) अथर्वशिरसि श्रीविष्णुपुराणे चोक्तनिर्वचनमभिप्रेतम् । न निर्विशेषं ब्रह्मेति निरुक्तमिति भावः । द्वितीयसूत्रासङ्गतिं विवृणोति ( तच्चेति ) न हि जगतोऽध्यासो यत इति लिलक्षयिषितमिति भावः । एवं सूत्रासङ्गतिकथनेन तद्विषयवाक्यासङ्गतिरपि फलिता । उत्तरेषां सूत्राणां तत्तद्विषयवाक्यानामपि निर्विशेषपक्षाननुगुणत्वमाह ( एवमिति ) ( सूत्रगणेष्विति ) नैकैकं सूत्रं वाक्यं वा

* भावप्रकाशिका *

धर्मभूतविशेषणनिष्ठत्वस्य प्रागेव समर्थितत्वात् कथं तस्य विशेष्यमात्रनिष्ठत्वम् ? किञ्च सर्ववस्तुसामानाधिकरण्यार्हत्वस्यानन्त्यस्य केवलविशेष्यस्वरूपे अभावाच्च सदपि विशिष्टनिष्ठमेवेतिचेन्न; विशेष्यांशस्य लक्षणमित्यस्य चिदचिद्विशिष्टलक्षणं न भवतीत्येवार्थः । ननु धर्मभूतज्ञानविशिष्टस्यापि व्यावृत्तिरिति द्रष्टव्यम् । सर्व-

गणेषु च ईक्षणाद्यन्वयदर्शनात्सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम् , जगज्जन्मादि भ्रमो यतः तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः , भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् , साक्षित्वं हि

* श्रुतप्रकाशिका *

विरुद्धम् , अपि तु तत्तदधिकरणशरीरं तत्तद्विषयवाक्यजातं च विरुद्धमिति भावः । तर्काननुगुणत्वमाह ( तर्कश्चेति ) तर्कशब्दोऽनुमानपरः, प्रमाणानुग्राहकतर्कपरो वा। पराभिमतयोजनायामपि निर्विशेषवस्त्वसिद्धिमाह ( जगज्जन्मादीति ) ( स्वोत्प्रेक्षापक्षेऽपीति ) अयमभिप्रायः, ' यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' 'तदात्मानं स्वयमकुरुत' 'कटकमुकुटकर्णिकादिभेदैः ' ' आत्मकृतेः' परिणामात्" इतिश्रुतिस्मृतिसूत्रेषु परिणामवचनतदनुगुणदृष्टान्ततदुपपादनानि दृश्यन्ते, न तु विवर्तानुगुणं किमपि दृश्यते । नहि यथा सोम्यैकेन शुक्तिशकलेन सर्वं रजतजातं विज्ञातं स्यादिति श्रुतिः विवर्तादिति सूत्रं वा दृश्यते, तस्माज्जगज्जन्मादिभ्रमो यतस्तद्ब्रह्मेत्ययमर्थः स्वयगर्जितः, न तु श्रुतिसिद्ध इति । परोत्प्रेक्षितपक्षे तन्निर्विशेषत्वासिद्धिमुपपादयति ( भ्रममूलमिति ) ततः किमित्यत्राह ( साक्षित्वं

* भावप्रकाशिका *

वस्तु सामानाधिकरण्यार्हत्वस्य विशिष्टगतस्य विशेष्येपि सम्भवेन विशेष्यलक्षणतयोक्तौ दोषाभावात्, अतएव हि जगत्कारणत्वं विशिष्टनिष्ठमपि विशेष्ये सम्भवतीत्यभिप्रायेण जगत्कारणतयोपलक्षितस्य स्वरूपस्येत्याद्युक्तिरप्युपपद्यत इति द्रष्टव्यम् । ( पराभिमतयोजनायामपीति ) यद्यपि शङ्करभाष्ये एवमर्थो न वर्णितः तथापि गत्यभावाचेन तथा वक्तव्यमित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । किञ्च मिथ्याभूतस्य जगतो ब्रह्मलक्षणत्वं न सम्भवति, विरोधात् । नहि नित्यं कृतकत्वेन लक्षयितुं शक्यम्, नापि सत्यजगतस्तल्लक्षणत्वं सम्भवति, द्वित्वेनैकस्यैव सत्येन द्वितीयेनाद्वितीयस्योपलक्षणासम्भवादिति पूर्वपक्षे मिथ्याभूतजगत्कारणत्वस्यैव सत्यब्रह्म-

प्रकाशैकरसतयैवोच्यते। प्रकाशत्वन्तु जडाद्व्यावर्त्तकं स्वस्य च परस्य व्यवहारयोग्यतापादनस्वभावेन भवति, तथा सति सविशेषत्वम् तदभावे प्रकाशतैव न स्यात्। तुच्छतैव स्यात् ॥

इति जन्माद्यधिकरणम् ।

* श्रुतप्रकाशिका *

हीति) ततोऽपि किमित्यत्राह ( प्रकाशत्वं त्विति ) प्रकाशत्वम्—प्रकाशशब्दवाच्यत्वम् । ( व्यवहारयोग्यतापादनस्वभावेनेति ) व्यवहारयोग्यतापादनमेव स्वभावः, तेन भवति स्वपरव्यवहारयोग्यतापादनरूपस्वभाव एव प्रकाशत्वमित्यर्थः । तथाऽभ्युपगमे सविशेषपरत्वमाह ( तथेति ) अनभ्युपगमे दूषणमाह (तदभाव इति) ॥

इति जन्माद्यधिकरणम् ॥ २ ॥

* भावप्रकाशिका *

लक्षकत्वमुपपद्यते, यद्रजतमभात् सा शुक्तिरितिवदिति, तदुपपादनस्य तैः कृतत्वात्तदभिप्रायेण तदुक्त्युपपत्तेश्चेति द्रष्टव्यम् । साध्याविशेषं परिहरति ( प्रकाशशब्दवाच्यत्वमिति ) ॥ .... .... .... .... .... .... .... ....

इति जन्माद्यधिकरणम् ॥ २ ॥



—.( शास्त्रयोनित्वाधिकरणम् ):—

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्, तदयुक्तम्; तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह–

---

* श्रुतप्रकाशिका *

अथावान्तरसङ्गतिमाह ( जगज्जन्मादीति ) कथमयुक्तमित्यत्राह ( तद्धीति ) सामान्येन शब्दप्रतिपाद्यत्वे सिद्धे हि शब्दविशेषरूपवेदान्तवेद्यत्वसिद्धिरिति भावः। तच्च कुतः ? न हि प्रत्यक्षेण तदीक्ष्यत इत्यत्राह ( अनुमानेनेति ) ननु ईश्वरानुमाननिरासार्थं नेदमधिकरणमारम्भणीयम्, साधकबाधकप्रमाणान्तरगोचरस्य शास्त्रेण प्रतिपादनायोगाद्धि तन्निरासः, न चायमपेक्षितः, अनुमानेन कर्तृमात्रे सिद्धेऽपि तदप्रतिपन्नस्य निमित्तोपादानैक्यस्य गगनादिसर्गस्य च प्रतिपादनोपपत्तेः। अनुमानविरुद्धांशं न शास्त्रं प्रतिपादयतीति तत्प्रतिपादनायानुमाननिरास इति चेन्न, आगमविरोधस्यैवानुमानदूषणतयाऽनुमानेनागमप्रतिबन्धायोगादिति । उच्यते; शास्त्रं हि साधकान्तरसिद्धं बाधकान्तरबाधितं च न प्रतिपादयति, यथाहुः "असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा" ॥ इति। तत्र निमित्तत्वोपादानत्वे च शास्त्रेण प्रतीयेते, तत्र निमित्तमात्रस्यानुमानसिद्धत्वात्तदुक्तिरनुवादः स्यात्, अनुवादस्य प्रमाणान्तरसिद्धिसापेक्षत्वान्निमित्तानुवादोऽनुमानसापेक्ष एव भवति, अनुमानं चामूर्तद्रव्येतरनिष्ठोपादानव्यतिरिक्तकर्तृकत्वव्याप्तिमूलमिति धर्मिग्राहकानुमानविरोधेन निमित्तोपादानैक्यं गगनाद्युत्पत्तिं च शास्त्रं न प्रतिपादयितुमलम्; एवं कारणवाक्यानामंशे प्राप्तविषयत्वादंशान्तरे बाधितविषयत्वाच्च निमित्तोपादानैक्यादिकं न सिध्येदिति

❁ भावप्रकाशिका ❁

( अमूर्तद्रव्येतरनिष्ठेति ) कार्यत्वममूर्तद्रव्येतरनिष्ठम्, नतु वियदादिनिष्ठम्. तथा कार्यत्वमुपादानव्यतिरिक्तकर्तृपूर्वकत्वं व्याप्तञ्चेति व्याप्तेश्चेत्यर्थः। कार्यत्वस्य मूर्तद्रव्येतरनिष्ठत्वेन व्याप्तिस्साकल्येन तदाश्रयत्वम्; नतु सामानाधिकरण्यलक्षणाव्याप्तिः। कार्यत्वस्य तु उपादानव्यतिरिक्तपूर्वकत्वेन सामानाधि-

## ॥ शास्त्रयोनित्वात् ॥ ३ ॥

**शास्त्रं यस्य योनिः कारणं प्रमाणम्— तच्छास्त्र-योनि, तस्य भावः शास्त्रयोनित्वम्, तस्मात् ब्रह्मज्ञान-**

* श्रुतप्रकाशिका *

तत्सिद्धये निमित्तमात्रानुमाननिरासार्थमिदमधिकरणमारम्भणीयमिति । नन्वनुमानवादिभिरपि ईश्वरस्यागमगम्यत्वमङ्गीकृतम् , आगमानुग्राहकतया च अनुमानमुच्यत इति न तन्निरासोऽयुक्त इति चेत् , परतः प्रामाण्यवादिभिर्नैवं वक्तुं युक्तम् । अनुमानस्य शास्त्रानुग्राहकत्वे शास्त्रमेव प्राधान्येनेश्वरे प्रमाणं भवति, अनुग्राह्यं हि प्रधानम् , ईश्वरप्रोक्ततया च तैर्वेदप्रामाण्यमङ्गीक्रियते अत ईश्वरे सिद्धे तत्प्रणीतत्वाद्वेदप्रामाण्यसिद्धिः । तत्सिद्धावीश्वरसिद्धिरित्यन्योन्याश्रयः स्यात् । ननु महाजनपरिग्रहाद्वेदप्रामाण्यम् , वेदादीश्वरसिद्धिरिति नान्योन्याश्रय इति चेत् . न , तत्परिग्रहस्य भ्रान्तिमूलत्वव्युदासार्थं निर्दोषत्वज्ञानमूलत्वं वाच्यम् , निर्दोषत्वज्ञानं च गुणवद्वक्तृकत्वज्ञानादित्यन्योन्याश्रयः स्यादेव, आप्तोक्तत्वमनुमानतः सिद्धमिति नान्योन्याश्रय इति चेत् , तत एवानुमानाद्वेदवक्तृत्वेनेश्वरसिद्धेः किं वेदेनेति शास्त्रवैयर्थ्यपरिहाराय तन्निरासः कार्य इत्यधिकरणारम्भो युक्तः ।

॥ शास्त्रयोनित्वात् ॥ व्याख्यात्रन्तराभिमतषष्ठीतत्पुरुषयोजनाव्यावृत्त्यर्थमाह ( शास्त्रं यस्येति ) योनिशब्दस्योपादानपरत्वव्यावृत्त्यर्थं कारणमात्रपरत्वमाह ( कारणमिति ) कथं सर्वकारणस्य ब्रह्मणः शास्त्रं कारणमिति शङ्कायामुत्पत्तिकारणपरत्वव्यावृत्त्यर्थमाह ( प्रमाणमिति ) कारणवाचिनो योनिशब्दस्य कथं प्रमाणवाचित्वमित्यत्राह ( ब्रह्मज्ञानेति ) उत्पादक इव ज्ञापकेऽपि हेतुशब्दः

* भावप्रकाशिका *

करणलक्षणाव्याप्तिरिति द्रष्टव्यम् । यद्वा अमूर्तद्रव्येतरानिष्ठेत्यनेन अमूर्तद्रव्येतरत्वं विवक्षितम् । ततश्च कार्यत्वस्यामूर्तद्रव्येतरत्वोपादानाभिज्ञकत्वाभ्यां व्याप्तत्वादित्यर्थः । ( ईश्वरप्रोक्ततयेति ) वक्तृवाक्यार्थयथार्थज्ञानरूपगुणजन्यत्वादित्यर्थः । ( निर्दोषज्ञानमूलत्वं वाच्यमिति ) वस्तुतो निर्दोषं यज्ज्ञानं तन्मूलत्वं

कारणत्वाच्छास्त्रस्य ; तद्योनित्वं ब्रह्मणः । अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यं बोधयत्येवेत्यर्थः ॥

* श्रुतप्रकाशिका *

प्रयुज्यते, तद्वद्धेत्वभिप्रायेण योनिशब्दप्रयोगसम्भव इति भावः । प्रमाणान्तरवेद्यत्वात् ब्रह्म न शास्त्रवेद्यमिति पूर्वपक्षे सति शास्त्रवेद्यत्वादिति सिद्धान्तहेतोः साध्याविशिष्टत्वं स्यादिति शङ्कां परिहरन् पञ्चम्यन्तस्य हेतुवाचिपदस्य साध्यवाचिपदान्वयं च दर्शयति ( अत्यन्तेति ) ब्रह्मणः स्वरूपेणेन्द्रियसम्बन्धो नास्ति, न च तल्लिङ्गस्य, नापि लिङ्गलिङ्गस्य चेत्यभिप्रायेणोक्तम् अत्यन्तातीन्द्रियत्वेनेति । अत एव हि प्रत्यक्षादिप्रमाणाविषयतयेत्युक्तम् । यद्वा व्यक्तिरूपेण दृष्टत्वं व्याप्त्यौपयिकं दृष्टसजातीयत्वं च नास्तीति भावः । इन्द्रियप्रत्यक्षशब्दयोः करणतत्फलभूतज्ञानविवक्षया भिन्नार्थता । ( शास्त्रैकप्रमाणकत्वादिति ) अब्भक्ष इतिवदवधारणगर्भः शास्त्रयोनिशब्द इति भावः । ततश्च प्रमाणान्तराविषयत्वं सिध्यतीति प्रमाणान्तरागोचरत्वेन शब्देन प्रतिपादयितुं योग्यत्वात् ब्रह्म 'यतो वा इमानी'त्यादिवाक्यविशेषो बोधयतीत्युक्तम्भवति । पूर्वस्मिन् सूत्रे यत्साध्यं तदेवास्मिन् सूत्रे मुखभेदेन साध्यत इत्येवकाराभिप्रायः । अत्रापि 'यतो वा इमानी'त्यादिवाक्यद्वारा शास्त्रं विषयः, संशयोऽप्यर्थसिद्धः, साधारणविचारद्वयमनुसन्धेयम् । 'यतो वा इमानी'त्यादिवाक्यं किं ब्रह्मणि प्रमाणम् , उत न ? इति संशयः, तदर्थं किं ब्रह्म मानान्तरगोचरः, न वेति, तदर्थं किं सामान्यतो दृष्टमनुमानं जीवविलक्षणमवगमयति, नेति ; यदाऽवगमयति तदा मानान्तरगोचरत्वात् 'यतो वा इमानी'त्यादिवाक्यं न ब्रह्म प्रतिपादयतीति वेदान्तानां ब्रह्मणि प्रामाण्याभावात्तद्विचारानारम्भः पूर्वपक्षे फलितः । राद्धान्ते

* भावप्रकाशिका *

वाच्यमिति परिग्रहे ज्ञातव्यमित्यर्थः । .... .... .... .... ....

( साध्याविशिष्टत्वं स्यादिति ) शास्त्रवेद्यत्वात् शास्त्रवेद्यमित्युक्ते साध्या-

—:( पूर्वपक्षः ):—

## ननु शास्त्रयोनित्वं ब्रह्मणो न सम्भवति, प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः । अप्राप्ते तु शास्त्रमर्थवत् ॥ किं तर्हि तत्र प्रमाणम् ? न तावत्प्रत्यक्षम् । तद्धि द्विविधम्, इन्द्रियसम्भवं योगसम्भवं चेति । इन्द्रियसम्भवञ्च

* श्रुतप्रकाशिका *

तु सामान्यतो दृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो मानान्तरागोचरत्वात् 'यतो वा इमानी'त्यादिवाक्यं ब्रह्मणि प्रमाणमिति सर्ववेदान्तवाक्यानां तत्र प्रामाण्याद्विचारस्यारम्भणीयत्वं फलितम् ॥

सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थमसहमानः पूर्वपक्षी चोदयति ( नन्विति ) शास्त्रयोनित्वम्—शास्त्रप्रमाणकत्वम् । शास्त्रप्रमाणान्तरवेद्यत्वे कथं शास्त्रयोनित्वानुपपत्तिरित्यत्राह ( अप्राप्ते तु शास्त्रमर्थवदिति ) तुशब्दोऽवधारणे । "स्युरेव तु पुनर्वै चेत्यवधारणवाचिनः" इति हि नैघण्टुकाः । वैयर्थ्ये वा, अबुभुत्सितग्राहित्वेनायत्नसाध्यत्वात् प्रत्यक्षस्य ज्ञाता प्रयोजनबोधकत्वं न दूषणम् , शास्त्रस्य तु बुभुत्सितग्राहित्वेन यत्नसाध्यत्वात् ज्ञाता प्रयोजनबोधकत्वं दूषणम् , तथा सति वह्नौष्ण्यवायसदन्तसङ्ख्यावाक्येष्विव श्रवणादिप्रवृत्त्यनुपपत्तेः ॥ अस्मिन् पूर्वपक्षे सिद्धान्त्येकदेशी मीमांसकश्चोदयति । ( किं तर्हीति ) ईश्वरानुमाननिरासेन सिद्धान्तित्वम् , ईश्वरमात्रानभ्युपगमेन एकदेशित्वम्, किं तर्हि ? न किञ्चिदित्यर्थः । कथमित्यत्राह ( न तावदिति ) सर्वस्यापि प्रत्यक्षस्यासामर्थ्यं दर्शयितुं तस्य द्वैविध्यमाह ( तद्धीति ) प्रथमस्यापि द्वैविध्यमाह ( इन्द्रियस-

* भावप्रकाशिका *

विशिष्टता स्यादित्यर्थः ॥ .... .... .... .... .... .... ....

तुशब्दस्याप्राप्तमित्यनेनान्वयमभिप्रेत्यावधारणपरतया व्याख्याय शास्त्रमित्यनेनान्वयमभिप्रेत्य व्याचष्टे ( वैयर्थ्ये वेति ) ( शास्त्रस्य तु बुभुत्सितग्राह्यत्वेनेति ) यद्यपि शब्दः अबुभुत्सितमपि प्रतिपादयति , तथापि शब्दस्य तादृशविषये प्रयोजनपर्यवसायित्वं न स्यात् । ' स्वाध्यायविध्यध्यापितवेदभागस्यावश्यं प्रयो-

वाह्यसम्भवमान्तरसम्भवं चेति द्विविधम् । बाह्ये-न्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजनना-नीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुषविशे-षविषयबोधजननानि । नाप्यान्तरम् , आन्तर-

* श्रुतप्रकाशिका *

म्भवमिति ) ( आन्तरसम्भवं चेति ) आन्तरशब्देन मनो विवक्षितम् । प्रथमे अनुपपत्तिमाह ( बाह्येन्द्रियाणीति ) देशसन्निकर्षं विशिंषता विद्यमानशब्देन कालसन्निकर्षश्च सिद्धः, योग्यशब्देन स्वभावसन्निकर्ष उक्तः, अनेन धर्माधर्मादि-व्यावृत्तिः, स्वशब्देन चक्षुरादिकं प्रति शब्दादिव्यावृत्तिः । यद्वा स्वविषय-शब्देनैवातीन्द्रियस्येन्द्रियान्तरविषयस्य च व्यवच्छेदः, योग्यशब्देन तु तत्तदि-न्द्रियप्रतिनियतरूपादिजातीयेऽप्यनुद्भवादिवशादयोग्यस्य व्यवच्छेदः । द्वितीयं प्रतिवक्ति ( नापीति ) मनश्च न तद्विषयबोधजनकमित्यर्थः । आन्तरसुख-दुःखादि-इत्यत्रान्तरशब्दः आत्मतद्धर्मपरः, तद्ग्राहित्वादेव हि मनसोऽप्यान्तरत्वम्, सुखदुःखादीत्यान्तरशब्दविवरणम् , आदिशब्देनेच्छाद्वेषादेरात्मनश्च सङ्ग्रहः,

॥ भावप्रकाशिका ॥

जनपर्यवसायित्वस्य वक्तव्यत्वादिति भावः । ( ईश्वरमात्रानभ्युपगमेन एकदेशि-त्वमिति ) इदञ्च किं तर्हि प्रमाणमिति प्रमाणसामान्याक्षेप इत्यभिप्रायेणोक्तम् । अत आगमादृते कथमीश्वरस्सिध्यतीत्युपसंहारपर्यालोचनायान्तु सिद्धान्तिचोद्यत्व-मुपपद्यत इति द्रष्टव्यम् । ( देशसन्निकर्षं विशिंषतेति ) विद्यमानस्सन्निकर्षो यस्य स विद्यमानसन्निकर्षः , इत्येवं सन्निकर्षस्य विद्यमानत्वेन विशेषणेन विशे-षात् द्वयोरपि ग्रहणमित्यर्थः । अत्र सन्निकर्षशब्देन संयोगादिषड्विधसन्निकर्ष-ग्रहणेनानुपपत्तिगन्ध इत्यपि द्रष्टव्यम् । नच सन्निकर्षत्वाविशेषात्, स्वभावसन्नि-कर्षस्यापि ग्रहणं किं न स्यादिति वाच्यम्; योगशब्देन पृथङ्निर्देशात् . गोब-लीवर्दन्यायेन तद्व्यतिरिक्तसन्निकर्षग्रहणमिति भावः । (अनुद्भवादिवशादयोग्यस्य व्यवच्छेद इति ) नच तस्याप्यतीन्द्रियतया स्वविषयशब्देनैव व्यवच्छेद्यत्वमस्त्विति वाच्यम्, स्वविषयसजातीयतया विषयत्वमस्तीति तात्पर्यात् । यद्वा योग्यशब्देन

सुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः । नापि योगजन्यम् ; भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता? तदतिरिक्तविषयत्वे कारणाभावात् । तथा सति तस्य भ्रमरूपता । नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा ; अतीन्द्रिये वस्तुनि सम्बन्धावधारण-

* श्रुतप्रकाशिका *

व्यतिरिक्तेत्यनेन रूपादीनां बहिष्ट्वमेवोपपादितम् । योगजन्यस्यानुपपत्तिं दर्शयितुमाह ( नापि योगेति ) योगिप्रत्यक्षं किं पूर्वानुभूतानाधिकविषयं प्रमाणम्? उत अनुभूताधिकविषयम्? इति विकल्पमभिप्रेत्य अनधिकविषयत्वे दूषणमाह (भावनेति ) अनधिकविषयतया स्मृतिमात्रत्वान्न प्रमाणत्वमिति प्रमाणावान्तरविशेषत्वं दूरोत्सारितमित्यर्थः । अनधिकविषयत्वमुपपादयति ( तदतिरिक्तविषयत्वे कारणाभावादिति ) कारणम्—इन्द्रियसम्बन्धः प्रमितिकारणाभावान्न प्रामाण्यमित्यर्थः । अधिकविषयत्वे दूषणमाह ( तथा सतीति ) इन्द्रियसम्बन्धाभावेऽप्यनुभूताधिकविषयत्वे तस्य दोषमूलकत्वेन भ्रान्तितैवेत्यर्थः । द्विविधानुमानागोचरत्वमाह ( नापीत्यादिना ) नियतम्—व्याप्तम् । सिद्धान्तिच्छायया चोदयन्तं वादिनं

* भावप्रकाशिका *

पित्तगतपीतिमाभिभूतशङ्खश्वैत्यादिव्यावृत्तिः ( बहिष्ट्वमेवोपपादितमिति ) ततश्च सुखदुःखव्यतिरिक्तेत्यस्य न वैयर्थ्यमिति भावः । ( प्रमितिकारणाभावादिति ) अतिरिक्तविषयत्वे प्रमितत्वप्रयोजकाभावादित्यर्थः । ( अधिकविषयत्वे दूषणमाहेति ) दूषणान्तरमप्याहेत्यर्थः । इन्द्रियसम्बन्धाभावात् प्रमा च न भवेत् , दोषजन्यत्वावश्यम्भवाद्भ्रमश्च भवेदित्यर्थः । केचित्तु— प्रमितिकारणाभावान्न प्रामाण्यमित्यर्थ इति प्रमितिशब्दः प्रत्यक्षपरः, प्रत्यक्षप्रयोजकाभावान्न प्रत्यक्षत्वमित्यर्थः । तद्विषयप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य कारणत्वादिति भावः ।

विरहान्न विशेषतो दृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते । ननु च जगतः कार्य्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् । अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनञ्च । न च सावयवत्वेन जगतः कार्य्यत्वम् ॥ उच्यते— किमिदमेकचेतनाधीनत्वम् ? न

* श्रुतप्रकाशिका *

पूर्वपक्ष्येकदेशी चोदयति ( ननु चेति ) नैयायिकैकदेशिभिरुक्तानुमानवक्तृत्वात् पूर्वपक्ष्येकदेशित्वम्, सम्प्रदानम्—भोक्ता । प्रयोजनम्— विनियोगः । एककर्तृकत्वसिद्ध्यर्थमनुमानान्तरमाह ( अचेतनेति ) उपादानाद्यभिज्ञकर्तृकत्वे दृष्टान्तमाह ( सर्वं हीति ) एकचेतनाधीनत्वे च दृष्टान्तमाह ( अचेतनेति ) रुग्णपरशरीरव्यावृत्त्यर्थावरोगस्वशब्दौ, कार्यत्वे सिद्धे ह्युपादानाद्यभिज्ञकर्तृकत्वासिद्धिरित्यत्राह ( सावयवत्वेनेति ) अनेनाचेतनारब्धत्वहेतोश्चासिद्धिशङ्कापरिहारोऽपि फलितः । एवं पूर्वपक्ष्येकदेशिनोक्तमर्थं सिद्धान्त्येकदेशी दूषयति ( उच्यत इत्यादिना ) बुद्धिस्थत्वात्पाश्चात्यमनुमानं दूषयति । ( किमिदमिति ) एकचेतनाधीनत्वं नाम किं तदायत्तोत्पत्तिस्थितित्वम् ? उत तदायत्तप्रवृत्तित्वम् ? इति विकल्प्य प्रथमेऽपि तदायत्तोत्पत्तिस्थितित्वं नाम किं तदिच्छाधीनोत्पत्तिस्थितित्वम्, उत तद-

* भावप्रकाशिका *

ननु प्रत्यक्षप्रमायामेवेन्द्रियसन्निकर्षः कारणम्, न प्रत्यक्षत्वावच्छिन्न इत्याशङ्क्य दूषणमाहेत्याह अधिकविषयत्वे दूषणमाहेति व्याकुर्वन्ति । ( नैयायिकैकदेशिभिरिति ) वक्ष्यमाणानुमानमेव मुख्यनैयायिककर्तृकमिति भावः । ( रुग्णपरशरीरेति ) यद्यपि परशरीरस्याप्येकचेतनाधीनत्वमस्ति तथापि दृष्टमित्यस्य स्वशरीर एव

तावत्तदायत्तोत्पत्तिस्थितित्वम्, दृष्टान्तो हि साध्य-विकलः स्यात्, न ह्यरोगं स्वशरीरमेकचेतनायत्तो-त्पत्तिस्थिति, तच्छरीरस्य भोक्तृणां भार्यादिसर्वचेत-नानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः। किञ्च शरीरा-वयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेष-विशेषव्यतिरेकेण न चेतनमपेक्षते। प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न सम्भ-

* श्रुतप्रकाशिका *

दृष्टाधीनोत्पत्तिस्थितित्वमिति विकल्पोऽभिप्रेतः, तेषां विकल्पानां क्षेपार्थः किं-शब्दः। तत्र तदिच्छाधीनोत्पत्तिस्थितित्वं न दृष्टमिति साध्यवैकल्यं दूषणं प्रसिद्धमितिबुद्ध्या द्वितीयं शिरो दूषयति (दृष्टान्तो हीति) साध्यविकलत्वं विवृणोति (नहीति) कुत इत्यत्राह (तच्छरीरस्येति) यद्वा न तावदि-त्यादिग्रन्थस्तदिच्छाधीनोत्पत्तिस्थितित्वतददृष्टाधीनोत्पत्तिस्थितित्वयोः साधारणः। तत्रेच्छाधीनत्वपक्षे साध्यवैकल्यं स्फुटमिति तददृष्टाधीनत्वपक्षे साध्यवैकल्यं विवृणोति— न हीति। उत्पत्तिस्थिती हि सह दूषिते। अथ स्थितिं पृथग्विकल्प्य दूषयितुमाह (किञ्चेति) स्वावयवसमवेततारूपस्थित्युक्तिर्वैशेषिकादिमतानुसा-रेण। (न चेतनमपेक्षत इति) चेतनापेक्षा हि स्वरूपतो वा स्यात् अदृष्टद्वारेण वा इच्छाद्वारेण वा, तत्र स्वरूपमात्रमकिञ्चित्करम्, तत्सद्भावेऽपि विनाशदर्शनात्, अदृष्टाधीनत्वे प्रागेवोत्तरं दत्तमितीच्छाधीनत्वपक्षोऽनेन दूषितः, चेतनेच्छां नापेक्षत इत्यर्थः। आविनाशकालादशिथिलत्वलक्षणा स्थितिरप्यनेन दत्तोत्तरे-त्यभिप्रायेण तदनुक्तिः। अथोक्तप्रकारविकल्पदूषणेन निरस्तमपि शिरोऽन्तरं दूषणान्तरसद्भावादुपादाय दूषयति (प्राणनेति) प्राणनलक्षणा—पञ्चवृत्ति-

❀ भावप्रकाशिका ❀

वक्तव्यत्वमभिप्रेत्य तथोक्तमिति द्रष्टव्यम्। यद्यप्यारब्धमेकचेतनाधीनमित्युक्ता-वप्यदोपादचेतनारब्धमिति व्यर्थम्, तथाप्यचेतनस्य चेतनाधीनत्वमपेक्षित-

वतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे। तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत्, अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः। चेतनमात्राधीनत्वे सिद्धसाध्यता॥ किञ्च उभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः। न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः, सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात्। यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते। उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्का-

* श्रुतप्रकाशिका *

प्राणसहितत्वलक्षणा। (नोपलभामह इति) कालात्ययापदेश इत्यभिप्रायः। तदायत्तप्रवृत्तित्वमेकचेतनाधीनत्वमिति पक्षं शङ्कते (तदायत्तेति) अचेतनारब्धत्वहेतोरनैकान्त्यमाह (अनेकेति) अनेकचेतनसाध्येषु–अनेकचेतनप्रवर्त्त्येष्वित्यर्थः। चेतनैकत्वाविवक्षायां सिद्धसाध्यत्वमाह (चेतनमात्रेति) एवमेकचेतनाधीनत्वं निरस्तम्। कार्यत्वहेतोर्लाघवतर्कमुखेन सिद्धसाध्यतामाह (किञ्चेति) उभयवादिसिद्धानामिति लाघवस्य हेतुरुक्तः। "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः" इति ह्याहुः। सम्भवन्त्यां गतौ हि लाघवतर्कः, गत्यन्तरासम्भवे त्वधिककल्पनं न दोषायेत्यत्राह (नचेति) कुत इत्यत्राह (सर्वेषामिति) पूर्वकाले चेतनानां साक्षात्कारसामर्थ्यं दृश्यमाननीत्योपपादयति (यथेति) (इदानीमिति) एवं पूर्वकालेऽपीति भावः। धर्माधर्मसाक्षात्काराभावात्कर्तृत्वासम्भवमाशङ्क्याह (उपकरणेति) (यागादिशक्तिरूपेति) यागादिजन्यस्वात्मातिशयरूपेत्यर्थः।

* भावप्रकाशिका *

मित्येतदभिप्रायेण तथोक्तमिति द्रष्टव्यम्। सिद्धान्ते अवयवावयविनोरभेदेन अवयवसमवेतत्वाभावादाह (वैशेषिकमतेनेति) भाष्ये– शक्यक्रियमिति।

राभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः, तत्सा-
क्षात्कारानपेक्षणात्कार्य्यारम्भस्य । शक्तिमत्साक्षात्कार
एव हि कार्य्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवो-
पयुज्यते ; न साक्षात्कारः । नहि कुलालादयः
कार्य्योपकरणभूतदण्डचक्रादिवत्तच्छक्तिमपि साक्षा-
त्कृत्य घटमणिकादिकार्य्यमारभन्ते । इह तु चेतना-
नामागमावगतयागादिशक्तिविशेषाणां कार्य्यारम्भो
नानुपपन्नः ॥ किञ्च यच्छक्यक्रियं शक्योपादानादि-
विज्ञानञ्च ; तदेव तदभिज्ञकर्तृकं दृष्टम् । महीमही-
धरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिविज्ञानं
चेति न चेतनकर्तृकम् ; अतो घटमणिकादिसजाती-

* श्रुतप्रकाशिका *

कुत इत्यत्राह (तत्साक्षात्कारेति) तर्हि घटादिनिर्माणे मृदादिसाक्षात्कार-
नियमः कथमित्यत्राह (शक्तिमदिति) शक्तिमच्छब्देन शक्तिसम्बन्ध्युच्यते,
जन्यजनकभावस्य च सम्बन्धविशेषरूपत्वाच्छक्तिरूपादृष्टजनकयागादिषु शक्ति-
मच्छब्दप्रयोगः, शक्तेरपि अपेक्षितत्वसाम्यात्तत्साक्षात्कारोऽपेक्षितः, अन्यथा
अनवगतवस्तुशक्तयोऽपि पुरुषास्तैस्तत्कार्यं कुर्युरित्यत्राह (शक्तेस्त्विति) तुशब्दः
शक्तिमत इव शक्तेरपि ज्ञातव्यत्वेऽपि विशेषद्योतनार्थः । शक्तिसाक्षात्कारानुप-
योगमुपपादयति (न हीति) शक्तिसाक्षात्कारानपेक्षत्वेऽपि शक्तिज्ञानमात्रम-
पेक्षितम्, तच्च दण्डचक्रादिष्वन्वयव्यतिरेकवशात्सिध्यति, यागादौ तु कथमि-
त्यत्राह (इह त्विति) एवं सिद्धसाधनत्वमुक्तम् । अथ कार्यत्वहेतोरुपाधिद्वयेन
सोपाधिकत्वमाह (किञ्चेति) साधनाव्यापकत्वमाह (महीमहीधरेति)
साध्यसमव्याप्तत्वमाह (अत इति) सोपाधिकत्वे सति साध्येन हेतोर्व्याप्य-

* भावप्रकाशिका *

त्मदादिनेतिशेषः । (साध्यसमव्याप्तत्वमाहेति) यच्छक्यक्रियं शक्योपादानादि-

यशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्य्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति । किञ्च घटादिकार्य्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्त्तारं साधयन्नयं कार्य्यत्वहेतुः सिषाधयिषितपुरुषसार्वज्ञ्यसर्वैश्वर्य्यादिविपरीतसाधनाद्विरुद्धः स्यात् । न चैतावता सर्वानुमानोच्छेदप्रसङ्गः । लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिता विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो निवर्त्तन्ते । इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे अन्वयव्यतिरेकावगताविनाभावनियमा धर्माः सर्वे एवाविशेषेण प्रसज्यन्ते, निवर्त्तकप्रमाणाभावात्तथैवावति-

---

* श्रुतप्रकाशिका *

त्वासिद्धिः स्यादित्युपाधेर्दूषणत्वम् । अदृष्टवज्जीवकर्तृकत्वव्यावृत्यर्थं बुद्धिमत्कर्तृ पूर्वकत्वसाधन इत्युक्तम् । अथ कार्यत्वहेतोर्विशेषविरुद्धत्वमाह ( किञ्चेति ) अनीश्वरेण—कर्मवश्येन । परिग्रहवता—उपकरणवतेत्यर्थः । सर्वानुमानोच्छेदमाशङ्क्याह ( नचेति ) कथमित्यत्राह ( लिङ्गिनीति ) पक्षेऽपि तथा स्यादित्यत्राह ( इह त्विति ) तुशब्दाभिप्रेतं वैषम्यमाह ( निवर्त्तकेति ) सिद्धान्त्येक-

* भावप्रकाशिका *

विज्ञानं च तदेव हि तदभिज्ञकर्तृकं दृष्टम्—इति भाष्येण साध्यव्यापकत्वमुपपादितम् । घटमणिकादिसजातीयशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति इतिभाष्येणोपाधेरेव साधनत्वम्, केवलकार्यत्वहेतोरप्रयोजकत्वमिति प्रदर्शयता उपाधेस्साध्यव्यापकत्वमुक्तं भवतीति समव्याप्तिः प्रदर्शिता भवतीत्यभिप्रेत्य समव्याप्तिमाहेत्युक्तमिति द्रष्टव्यम् । ( विशे-

ष्ठन्ते ; अत आगमादृते कथमीश्वरस्सेत्स्यति ॥ अत्राहुः– सावयवत्वादेव जगतः कार्य्यत्वं न प्रत्याख्यातुं शक्यते । भवन्ति च प्रयोगाः– विवादाध्यासितं भूभूधरादि कार्य्यम्, सावयवत्वात्, घटादिवत् । तथा विवादाध्यासितमवनिजलधिमहीधरादि, कार्य्यम्, महत्त्वे सति क्रियावत्त्वात् घटवत् । तनुभुवनादि कार्य्यम्, महत्त्वे सति

* श्रुतप्रकाशिका *

देशिमतमुपसंहरति ( अत इति ) सिध्यति चेन्नागमादृते मानमित्यर्थः । अतः– सिद्धसाधनत्वसोपाधिकत्वविरुद्धत्वैर्दूषितत्वादित्यर्थः ॥ अथ साक्षात्पूर्वपक्षिणं प्रस्तौति ( अत्राहुरिति ) कार्यत्वहेतोः स्वरूपासिद्धिमाशङ्क्य व्युदस्यति ( सावयवत्वादिति ) ( सावयत्वादेवेति ) पूर्वं प्रस्तुतादेवेत्यर्थः । अनेन हेत्वन्तरसद्भावोऽपि सूचितः । एवं कण्ठोक्त्याऽभिप्रायेण च सिद्धान् हेतून् प्रयोगतो विवृणोति ( भवन्तीति ) विवादाध्यासितपदविवरणं भूभूधरादिपदम्, आदिशब्दोपात्तव्यक्तिसङ्ग्राहकं विवादाध्यासितपदम् । यद्वा पक्षीकृतेष्वेव सम्प्रतिपन्नांशव्यवच्छेदाय विवादाध्यासितशब्दः, सन्ति हि खातपूरणनिष्पाद्याः पृथिव्यंशाः सगरसुतादिनिष्पाद्याः समुद्रांशाः अश्मादिनिष्पाद्याः पर्वतादयश्च । प्रलयेऽपि जलधेरवस्थानात् सर्वाभावेऽपि स्रष्टुरशरीरावस्थानाच्च तयोरकार्यत्वशङ्काद्योतनाय प्रतिज्ञावाक्यावर्तनेन जलधितनुशब्दोपादानम् । द्वितीयतृतीयप्रयोगयोर्मध्ये महत्त्वपदेन परमाणुव्यावृत्तिः, क्रियावत्त्वमूर्त्तत्वशब्दाभ्यां गगनादिव्यावृत्तिः, अवनिमहीधरशब्दमध्ये जलधिशब्दनिवेशस्तद्वत्तयोरपि कम्पसद्भावज्ञापनार्थः, प्रसिद्धो ह्युत्पातादौ भूभूधरकम्पः । ननु तनुपक्षीकारो न युक्तः, अस्मदादिशरीरे सिद्धसाधनत्वादीश्वरशरीरे त्वाश्रयासिद्धेः । नैवम् ; तनोर्विशेषतः पक्षीकारनिर्व-

* भावप्रकाशिका *

षविरुद्धत्वमिति ) सिषाधयिषितसाध्यविशेषविरुद्धत्वमित्यर्थः । ( तयोरकार्यत्वशङ्काद्योतनायेति ) भूभूधरादितुल्यतया कार्यस्य विवादास्पदत्वद्योतनार्थमित्यर्थः । ( अस्मदादिशरीरे सिद्धसाधनत्वादिति ) कार्यत्वलक्षणसाध्यस्य सिद्ध-

मूर्त्तत्वात्, घटवदिति । सावयवेषु द्रव्येष्विदमेव क्रियते नेतरदिति कार्य्यत्वस्य नियामकं सावयवत्वा· तिरेकि रूपान्तरं नोपलभामहे । कार्य्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चोपलभ्यते

* श्रुतप्रकाशिका *

न्धाभावात् । तदुपादानन्तु स्वपक्षसम्प्रतिपन्नस्येश्वरशरीरस्यापि कार्यताज्ञापनार्थम् । यद्वा सावयवत्वादेवेत्यादेरयमाशयः, न सावयवत्वादुत्पत्तिमत्त्वं प्रसाध्य ततः सकर्तृकत्वं साध्यते, अपि तु सावयवत्वेनैव कृतिसाध्यत्वरूपकार्यत्वं साध्यते, कृतिश्च न निराश्रयेति तदाश्रयः कर्ता सामान्यतः सिध्यतीति । नन्वेवं तर्हि कार्यत्वात्सकर्तृकत्वे साध्ये हेतोः साध्याविशिष्टता स्यात्. न; कृतिसाध्यत्वं हेतुः, उपादानाद्यभिज्ञकर्तृकत्वं साध्यमिति वैषम्यात्, अत एव ह्युत्तरत्र क्रियत इत्युक्तम्, नोत्पद्यत इति, कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोतीत्यादि च; एवञ्च कृतिसाध्यत्वलक्षणे साध्ये शरीरस्यापि विवादपदत्वात्पक्षतोपपत्तिः । अथ सोपाधिकत्वं सामान्येन प्रतिक्षिपति (सावयवेष्विति) सावयवत्वमुपलक्षणम्, महत्त्वे सति क्रियावत्त्वं महत्त्वे सति मूर्त्तत्वं च सावयवत्वसमानाश्रयं तत्समव्याप्तमिति तयोरप्युपाधिपरिहारसिद्धिः । रूपान्तरम्– आकारान्तरम् । उपाधिं शङ्कते (कार्यत्वेति) परिहरति (नेति)

* भावप्रकाशिका *

त्वादितिभावः । (ईश्वरशरीरस्यापि कार्यताज्ञापनार्थमिति) नन्वसदादिशरीरस्य कार्यत्वेन सिद्धस्य न विवादाध्यासितत्वम्. ईश्वरस्यासिद्धतया न विवादाध्यासितत्वम्. ततश्च विवादाध्यासितं तनुभुवनादीति कथमुक्तमिति चेन्न, अस्मदादिशरीरे साध्यसिद्धावपि अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यसावयवत्वरूपपक्षतावच्छेदकावच्छेदेन कार्यत्वरूपसाध्यासिद्धेः नास्मदादिशरीरे अंशतस्सिद्धसाधनमित्यत्र तात्पर्यात् । एतदस्वरसादेवाह (यद्वा सावयवत्वादेवेत्यादेरिति) (शरीरस्यापि विवादपदत्वादिति) ननु शरीरे अदृष्टद्वारककृतिजन्यत्वस्य सिद्धत्वान्न विवादः, अदृष्टद्वारककृतिजन्यत्वे साध्ये तत एव ईश्वरस्य सिद्धत्वादनुमानान्तर-

इति चेत्. न; कार्य्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती कार्य्यानुमेये— इति अन्यत्रापि सावयवत्वादिना कार्य्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः । तथा हि घटमणिकादिषु कृतेषु कार्य्यदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण तस्य कार्य्यत्वं निश्चित्य तदानीमेव कर्त्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति ; अतस्तनुभव-

* श्रुतप्रकाशिका *

कार्यत्वेनानुमते– सपक्षे । अन्यत्र–पक्षे । सपक्षेऽपि घटादौ कार्यत्वानुमेये ज्ञानशक्ती, तद्वत् पक्षेऽपि कार्य्यत्वस्य प्रतिपन्नत्वात् ज्ञानशक्ती अनुमीयेते इति नाशक्यक्रियत्वं शक्यज्ञानत्वं चेत्यर्थः । तथैव दर्शयति ( तथा हीति ) किं तदकर्तुरपि शक्यक्रियत्वं शक्योपादानादिज्ञानत्वमुपाधिः ? उत तत्कर्तुः शक्यक्रियत्वं शक्योपादानादिज्ञानत्वम्? प्रथमे कल्पे सपक्षानुयायित्वाभावान्नोपाधित्वम् । द्वितीये कल्पे पक्षेऽपि विद्यमानत्वान्नोपाधित्वम् , सर्वसपक्षानुयायिपक्षेष्वविद्यमानो ह्युपाधिरित्यभिप्रायः । कर्त्तुस्तज्ज्ञानशक्तिवैचित्र्यमित्यनेनाभिप्रेतोऽयं विकल्पः । ततः किमित्यत्राह ( अत इति ) अतः– सावयवत्वादिहेतो-

* भावप्रकाशिका *

वैयर्थ्यमितिचेन्न ; उपादानाद्यभिज्ञत्ववेषेण तत्सिद्ध्यर्थमनुमानान्तरसार्थक्यसम्भवादितिभावः । अत एवोक्तं कर्ता सामान्यतस्सिध्यतीति । भाष्ये–सावयवेषु द्रव्येष्विति । सावयवेषु द्रव्येषु कार्यत्वस्य नियामकं सावयत्वातिरेक्तिरूपान्तरं नोपलभामह इति योजना । इदमेव क्रियते नेतरदिति नियामकं प्रदश्यते । नतु सावयवेष्विति निर्धारणे सप्तमीति मन्तव्यम्. सावयवेषु द्वैरूप्याभावादिति द्रष्टव्यम् । ( उपाधिपरिहारसिद्धिरिति ) साधनव्यापकत्वादुपाधित्वपरिहारसिद्धिरित्यर्थः । ( ज्ञानशक्ती अनुमीयेते इतीति ) शक्योपादानविज्ञानत्वादेस्सकर्तृकत्व-

नादेः कार्य्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्म्माणादिनिपुणः कश्चित्पुरुषविशेषः सिद्ध्यत्येव ॥ किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोरचेतनयोस्तयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः, वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् ।

* श्रुतप्रकाशिका *

निरुपाधिकत्वादित्यर्थः । एवं सावयवत्वात्कृतिसाध्यत्वरूपे कार्यत्वे साध्ये शक्यक्रियत्वादिक उपाधिः परिहृतः, अनेनोत्पत्तिमत्त्वात्सकर्तृकत्वे साध्ये उत्पत्तिमत्त्वहेतुरपि निरुपाधिको भवति । सावयवत्वादुत्पत्तिमत्त्वे साध्ये तृणाधेर्दूर्वादौ व्यभिचारश्च सिद्धः, नहि दूर्वादिरुत्पद्यमानोऽस्मदादेः शक्यक्रियः । सिद्धसाधनत्वनिरासार्थमनुमानान्तरप्रदर्शनार्थं चाह ( किञ्चेति ) धर्माधर्मनिमित्तेऽपीति सिद्धसाधनत्वशङ्कासूचनम्, अनधिष्ठितयोरनुपपत्तेरित्यन्वयव्याप्तिस्थेन्न व्यतिरेकव्याप्त्युक्तिः । दृष्टान्तमाह ( वर्द्धकिनेति ) वास्यादेर्यूपाद्यकरणस्य चेतनव्यतिरिक्तसहकार्यन्तराभावप्रयुक्तत्वशङ्काव्यावृत्त्यर्थं देशकालाद्यनेकपरिकरसन्निधानेऽपीत्युक्तम् । धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठितावेव कार्यकरौ । अचेतनत्वात् [स्वेतरसमस्तसंसारिचेतनसुखदुःखोपभोगसाधनत्वात्] वास्यादिवदित्यनुमानशरीरम्, जीवैर्धर्माधर्मसाक्षात्कारतत्पूर्वकतदधिष्ठानायोगात् जीवविलक्षणसिद्धिः, अनधिष्ठितस्य कार्यकरत्वायोगात् जीवैः साक्षात्कारतत्पूर्वकाधिष्ठानायोगाच्च सिद्धसाधनं च परिहृतम् । कर्तुरभावे कार्यानुत्पत्तिप्रसङ्गरूपस्य विपक्षे बाधकतर्कस्य पुरुषसुखादिप्रयोजकादृष्टेन कार्योत्पत्त्युपपत्तिरिति याऽन्यथासिद्धिः साऽप्यनेनैव परिहृता भवति । अचेतनस्याऽप्यनधिष्ठितस्य बीजादेरङ्कुरोत्पादकत्वदर्शनाद्व्यभिचार

ɣ भावप्रकाशिका ɣ

पर्यवसिततया नोपाधित्वमित्यपि तात्पर्यम् । ( सिद्धसाधनत्वनिरासार्थमिति ) कृतिजन्यत्वानुमाने धर्मादिद्वारककृतिमादाय सिद्धसाधनशङ्का स्यात् । धर्माधर्मपक्षक-

बीजाङ्कुरादेः पक्षान्तर्भावेण तैर्व्यभिचारापादानं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम्, तत एव सुखादिभिर्व्यभिचारवचनमपि तथैव । न च लाघवेनोभयवादिसम्प्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम् , तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् , दर्शनानुगुणैव हि सर्वत्र कल्पना । न च क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति, अतः प्रमाणान्त-

* श्रुतप्रकाशिका *

इति शङ्कां परिहरति ( बीजाङ्कुरेति ) कार्यत्वहेतोरङ्कुरादौ व्यभिचारशङ्कापरिहारश्चाङ्कुरशब्दोपादानेन फलितः । चेतनानभिसंहितपुलकाद्युत्पादकैश्चेतनानधिष्ठितैः स्वयमचेतनैः सुखादिभिरचेतनत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति ( तत एवेति ) आदिशब्देन दुःखादिकं चेतनानधिष्ठितं सुखाद्युत्पादकं मनःप्रभृति च विवक्षितम्, एतेन स्वेच्छामन्तरेणोत्पाद्यमानैः सुखदुःखविशेषैस्तत्कार्यैश्च पुलकाङ्गकम्पादिभिः कार्यत्वहेतोर्व्यभिचारश्च परिहृतो भवति । लाघवन्यायेन हेतोरन्यथासिद्धेः सिद्धसाधनत्वमाशङ्क्य परिहरति ( न चेति ) कुत इत्याकाङ्क्षायामीदृशशब्दाभिप्रेतं हेतुं विवृणोति ( तेषामिति ) एकेन्द्रियकल्पनस्य लाघवेऽप्येकेन्द्रियस्य शब्दादिसकलविषयग्रहणाशक्तेर्यनेकेन्द्रियकल्पनम्, तस्माल्लाघवार्थमशक्तस्य कार्यकरत्वकल्पनमयुक्तमिति भावः । तदेवोपपादयति ( दर्शनेति ) उपपन्नमेव हि कल्पनीयम् , न च जीवानां सूक्ष्मव्यवहितादिदर्शनशक्तिर्दृष्टेत्यर्थः । शक्तिमत्साक्षात्कार एवापेक्षितः, न तु शक्तिसाक्षात्कार इतीदमपि प्रत्युक्तं भवति सूक्ष्मव्यवहितेत्यादिना । शक्तिमतामपि परमाणवादीनां क्षेत्रज्ञेन साक्षात्कारासिद्धेः, ईश्वरे न तथाऽनुपपत्तिरित्याह ( न चेति ) अवान्तरानुमानेनेश्वरसिद्धिं निगमयति ( अत इति ) व्याप्तिबलात्कार्यानुगुणज्ञानशक्तिमान् कर्ता सिध्यतु,

* भावप्रकाशिका *

कवक्ष्यमाणानुमानेन सिद्धसाधनशङ्कापीतिभावः । ( अङ्कुरशब्दोपादानेनेति )

रतो न तत्सिद्धयनुपपत्तिः। समर्थकर्तृपूर्वकत्वनियत-कार्यत्वहेतुना सिद्ध्यन् स्वाभाविकसर्वार्थसाक्षात्कार-तन्नियमनशक्तिसम्पन्न एव सिद्ध्यति । यत्त्वनैश्वर्य्या-द्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतम्, तदनु-मानवृत्तानभिज्ञत्वनिबन्धनम्, सपक्षे सहदृष्टानां सर्वेषां कार्य्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः। एत-दुक्तं भवति– केनचित् किञ्चित्क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चा-पेक्षते, न त्वन्यासामर्थ्यमन्याज्ञानञ्च, हेतुत्वाभावात्। स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वो-त्पत्तावुपपन्नायां सम्बन्धितया दर्शनमात्रेणाकिञ्चित्कर-

* श्रुतप्रकाशिका *

तस्य कथं क्षेत्रज्ञवैलक्षण्यम्? ज्ञानं हि देहेन्द्रियादिसापेक्षमिति शङ्कायां पक्षधर्म-तावलसिद्धमर्थमाह ( समर्थेति ) अस्वाभाविकत्वे कर्मानुगुणपरिमितज्ञानशक्ति-मत्त्वं स्यादिति तद्व्युदासार्थः स्वाभाविकसर्वार्थसाक्षात्कारशब्दः । अथ कार्यत्वहेतोर्विरुद्धत्वं व्युदस्यति ( यत्त्वित्यादिना ) कथमित्यत्राह ( सपक्ष इति ) किं सहदर्शनमात्राच्छरीरादिप्राप्तिः ? उत हेतुत्वात्? नाद्यः, अति-प्रसङ्गात्। न द्वितीयः, हेतुत्वासिद्धेरित्यभिप्रायः । कार्यस्याहेतुभूतानामिति व्याप्त्यभावोऽप्यभिप्रेतः। ननु सर्वसपक्षेषु सहदृष्टत्वात्कार्यहेतुत्वं च कल्प्यम्, तथा सति कथं कतिपयाप्राप्तिः कतिपयप्राप्तिश्चोच्यते इत्यत्राह ( एतदुक्त-मिति ) विरोधविरोधं परिहर्तुमपेक्षितांशविवेकमाह ( केनचिदिति ) सपक्षे सहदृष्टत्वादज्ञानादेरपि हेतुत्वं कल्प्यतामित्यत्राह ( स्वनिर्माणेति ) ( अकिञ्चित्कर-

* भावप्रकाशिका *

तस्यापि पक्षान्तर्भावकथनादिति भावः। हेतुत्वाभावेपि व्याप्तत्वे तस्याप्यवश्य-म्भावादाह ( व्याप्त्यभावोप्यभिप्रेत इति ) मनसो वृत्तिमत्त्वाभावाद्विपक्षगामित्वं

स्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगादिति। किञ्च क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि? उत कतिपयविषयम्? न तावत्सर्वविषयम्, नहि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति। नापि कतिपयविषयम्, सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्, अतः कार्य्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम्, कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरी-

* श्रुतप्रकाशिका *

सेति) अनन्यथासिद्धान्वयव्यतिरेकाभ्यां हि हेतुत्वनिश्चयः, तत्र ज्ञानशक्तिनिर्वर्त्यात्किञ्चित्कारादधिकः कश्चित्तदन्याज्ञानासामर्थ्यनिवर्त्यः किञ्चित्कारो दृष्टश्चेत् स्यादनन्यथासिद्धिः। न चाधिकः किञ्चित्कारो दृष्टः, न च कल्प्यः, अज्ञानासामर्थ्यहेतुव्यतिरेके कार्यनिवृत्त्यभावात्. स्वविषयसामर्थ्योपादानादिज्ञानाभ्यां विना यथा कार्यानुदयस्तथाऽन्यासामर्थ्याज्ञानाभ्यां विना न कार्यानुदयो दृष्टः, अतो न तस्य हेतुत्वं कल्प्यम्, न हि सतिभावमात्रं हेतुत्वम्, किन्तु सत्येव भाव इति भावः। अकिञ्चित्करत्वमेव विकल्पमुखेनोपपादयति (किञ्चेति) (सर्वेष्विति) न हि कुड्यादिनिर्माणानुगुणज्ञानसामर्थ्याभावो घटनिष्पत्तिहेतुः, तदनुगुणज्ञानसामर्थ्यवतोऽपि घटादिनिष्पादकत्वदर्शनादित्यर्थः। यत्तु सपक्षे सहदृष्टत्वेन लिङ्गिनि प्राप्तविपरीतविशेषाणां धर्मिग्राहकप्रमाणप्रतिहतानां निवृत्तिः, न त्वितरेषामिति; इदमपि कार्यत्वस्यासाधकानामित्यनेन प्रत्युक्तम्, साध्यानुपयोगित्वेनान्यथासिद्धानां सह दृष्टानामपि धर्माणां व्यतिरेकाभावेन व्याप्तिशून्यत्वादप्राप्तेः, सहदृष्टेष्वपि कार्यानुपयोगिनां प्राप्तिर्न स्यात्। शरीरं हि कार्योपयोगीति शङ्कते (कुलालादीनामिति) परिहरति (नेति) कथमित्यत्राह

रस्यानुपपन्नमिति चेत्. नः सङ्कल्पमात्रेणैव परशरीरगत-भूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्य परप्रवर्त्तनरूपस्सङ्कल्प इति चेत् . न शरीरापेक्षस्सङ्कल्पः, शरीरस्य सङ्कल्पहेतुत्वाभावात्। मन एव हि सङ्कल्पहेतुः, तदभ्युपगतमीश्वरेऽपि, कार्य्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसः सङ्कल्पः सशरीरस्यैव, सशरीरस्यैव समनस्कत्वादिति चेत्. न; मनसो नित्यत्वेन देहापगमेऽपि मनस्सद्भावेनानैकान्तिकत्वात्, अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्य्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः

* श्रुतप्रकाशिका *

( सङ्कल्पेति ) शङ्कते ( कथमिति ) परिहरति ( नेति ) को हेतुरित्यत्राह ( मन एवेति ) तत्किमस्तीत्यत्राह ( तदिति ) कुत इत्यत्राह ( कार्यत्वेनेति ) ईश्वरस्य मनस्सम्बन्धोक्तिर्न्यायैकदेशिमतेन । पुनः शङ्कते ( मानस इति ) परिहरति ( नेति ) अनैकान्त्यात्– व्याप्त्यभावात् । अशरीरेऽपि मनस्सम्बन्धस्य विद्यमानत्वाद्वाऽनैकान्त्यम्। मनसो नित्यत्वेऽपि चेतनस्य कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वमस्ति, मनसि नित्ये सत्यपि मुक्तात्मनः कार्यकरत्वाभावात्, न हि मुक्तात्मनो बुद्धिसुखदुःखादिकं मनो जनयतीति चोद्यमस्ति। अत्र मीमांसकं प्रति प्रतिबन्द्या परिहारं हृदि निधाय पक्षधर्मतावलं दर्शयन्नीश्वरसिद्धिं निगमयति ( अतो विचित्रावयवेति ) अशरीरस्सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्च इत्याभ्यां पदाभ्यां प्रतिबन्द्या परिहाराभिप्रायो ज्ञातः, विभुद्रव्यसंयोगिनः परिस्पन्दवतो घटादेः स्पर्शवत्त्वनियमेऽपि,

* भावप्रकाशिका *

न सम्भवतीत्यत आह ( अनैकान्त्यात्–व्याप्त्यभावादिति ) मनस्सम्बन्धस्य श्रुतिमत्त्वादनैकान्तिकत्वमाह ( अशरीरेपि मनस्सम्बन्धस्येति ) ( विभुद्रव्येति )

क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्य्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिध्यति, अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणः नैतद्वाक्यं ब्रह्म प्रतिपादयति। किञ्च अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानञ्च ब्रह्म प्रतिपादयितुं शक्नोतीति ॥

---

* श्रुतप्रकाशिका *

विभुद्रव्यसंयोगिनः परिस्पन्दवतोऽपि मनसो न स्पर्शवत्त्वमङ्गीक्रियते. अयं प्राभाकरं प्रति परिहारः। महिमगुणशालिनस्तैजसस्य रूपोपलम्भनियमे दृष्टेऽपि चक्षुषि रूपोपलम्भो नाङ्गीकृतः, कार्यारम्भकस्य सावयवत्वव्याप्तिः परमाणुषु भग्ना, तस्मादनेकविरोधपरिहारायैकव्याप्तिभङ्गो न्याय्यः, अतो मनसः कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वं भोगसाधनमनस्त्वप्रयुक्तमित्यङ्गीकार्यमिति भावः। एवं साधकान्तरसिद्धत्वाज्जगत्कारणवस्तुनि शास्त्रस्याप्रामाण्यं निगमयति (अतः प्रमाणेति) निमित्तोपादानैक्यस्य गगनादिसृष्टेश्चानुमानाविषयत्वेन शास्त्रस्याधिकविषयत्वाद्ब्रह्मणि प्रामाण्यमाशङ्क्य तत्र बाधकान्तरबाधितत्वाच्छास्त्राप्रामाण्यमुच्यते (किञ्चेति) निमित्तमात्रमनुवदतः शास्त्रस्यानुमानसापेक्षत्वात्तद्विरुद्धनिमित्तोपादानैक्यं न शास्त्रं प्रतिपादयति, पक्षीकृतेषु क्षित्यादिषु द्रव्येषु सावयवत्वस्यैव कार्यत्वप्रयोजकतया निरवयवद्रव्यस्याकार्यत्वं पूर्वमेव प्रतिपन्नमिति

❀ भावप्रकाशिका ❀

विभुद्रव्यसंयोगित्वं परिस्पन्दवत्त्वञ्च स्पर्शवत्त्वे प्रत्येकं प्रयोजकमित्यर्थः। संयोगित्वमात्रस्य विभुषु निस्स्पर्शेष्वतिप्रसक्तत्वाद्विभुद्रव्येत्युक्तमिति द्रष्टव्यम्। भाट्टैर्मनसो विभुत्वाङ्गीकाराद्विभुसंयोगाश्रयत्वस्य मनस्यभावादित्यत आह (अयं प्राभा-

—:( सिद्धान्तः ):—

एवं प्राप्ते ब्रूमः— यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव. कुतः? शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः, यदुक्तं सावयवत्वादिना कार्य्यं सर्वं जगत्, कार्य्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति। तदयुक्तम्; महीमहार्णवादीनां कार्य्यत्वेऽप्येकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात्, न चैकस्य घटस्येव

* श्रुतप्रकाशिका *

पश्चाच्छास्त्रं निरवयवद्रव्योत्पत्तिं न प्रतिपादयति, श्रुतिलिङ्गादिष्वपि पौर्वापर्यं हि प्राबल्यदौर्बल्यहेतुरिति भावः। पूर्वपक्षसमाप्ताविति शब्दः॥ .... .... ....

सिद्धान्तं वक्तुमुपक्रमते (एवं प्राप्त इति) परमसाध्यं प्रतिजानीते (यथोक्तेति) आकाङ्क्षापूर्वकं हेतुमाह (कुत इति) शास्त्रैकप्रमाणकत्वात्— शास्त्रेतरप्रामाणागोचरत्वादित्यर्थः। हेत्वसिद्धिं परिहर्तुं पूर्वपक्षमनुभाषते (यदुक्तमिति) दूषयति (तदयुक्तमिति) पक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं वदता किं विपुलकार्याणां कर्तृकालैक्यनियममन्तर्भाव्य तदुच्यते? उत विपुलत्वमात्रेण? उतातीन्द्रियोपादानादिदर्शनवशात्? अथवा शरीरानपेक्षसृष्टिवशात्? इति विकल्पमभिप्रेत्य प्रथमं दूषयति (महीति) एकदैवैकेन निर्मितत्वाभावमुपपादयति (न चैकस्येत्यादिना) एवं कार्य्यत्वं घटादेरिव युगपदेककर्तृकत्व-

* भावप्रकाशिका *

करं प्रतीति) (महिमगुणशालिन इति) महत इत्यर्थः। (श्रुतिलिङ्गादिष्वपीति) यद्यपि शीघ्रप्रवृत्तप्रत्यक्षप्रतिपन्ने जगति स्वातन्त्र्यव्युदासकस्य 'ऐतदात्म्यमिदं सर्व'मित्यादेर्धर्मिग्राहकोपजीव्यप्रत्यक्षविरुद्धस्यापि प्रामाण्यवदुपजीव्यानुमानजातीयविरुद्धस्यापि अभिन्ननिमित्तोपादानस्य प्रतिपादनमस्त्विति नियमस्सम्भवति तथापि धर्मिण एवानुमानसिद्धत्वप्रतिक्षेपमुखेन परिहर्तुमेव पूर्वपक्षोत्थापनमिति मन्तव्यम्॥

(नियममन्तर्भाव्येति) नियमसिद्धवत्कृत्येत्यर्थः। (प्रथमं दूषयति)

सर्वेषामेकं कार्य्यत्वम्, येनैकदैवैकः कर्त्ता स्यात्। पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनि-

* श्रुतप्रकाशिका *

योग्यमिति शङ्काद्योतकमेकमितिपदम्, कार्यत्वस्यैकत्वं नाम एकसामग्रीपूर्वकत्वम्, तत्सिद्ध्यर्थमेकस्येत्युक्तम् । न ह्येका व्यक्तिरनेकसामग्रीसाध्या, एककार्यावच्छिन्नस्य सर्वस्य हेतोरेकसामग्रीत्वात् । एकत्वेऽप्यनेककर्तृकगोपुरादिव्यवच्छेदार्थमेकदैवैककर्त्रन्वययोग्यत्वं घटशब्देन विवक्षितम्, एकघटस्यैकं कार्यत्वं यादृशं दृश्यते तादृशं परिमितैकावयविनिष्ठं कार्यत्वमेवैकदैवैककर्तृकत्वसम्भावनापादकम्, तच्च महीमहीधरादीनां न दृश्यत इत्यर्थः । स्यादिति सम्भावितत्वमात्रमुच्यते, न ह्येकघटस्याप्येककर्तृकत्वनियमः, अनेकैरप्येकघटनिष्पादनसम्भवात् । ततः किमित्यपेक्षायां बहुषु विपुलेषु च कार्येषु तद्विपर्ययमाह (पृथग्भूतेष्विति) पृथग्भूतेष्वित्यत्र विपुलत्वमपि गर्भितम्, एकघटस्यैवेतिपूर्वमुक्तेः। बहुषु विपुलेषु च कार्येषु कर्तृकालैक्यनियमादर्शनान्मह्यादयोऽप्येकदैव एकेन निर्मिता इत्यत्र प्रमाणाभावः, प्रमाणाभावात्तदयुक्तमित्यध्याहारेण ग्रन्थान्वयः, न च कार्यत्वमेव कर्तृकालैक्ये प्रमाणम्, विकल्पासहत्वात्। किं कार्यत्वमात्रम्? उत विपुलकार्यत्वम्? उतासम्भावितजीवकर्तृकं पक्षासाधारणकार्य्यत्वम्? प्रथमेऽनैकान्त्यम्, द्वितीये विरुद्धत्वम्, विपुलकार्येषु कालदैर्घ्यकर्तृबहुत्वदर्शनात्। यद्वाऽनैकान्त्यमेव । तृतीये चासाधारणानैकान्त्यमिति भावः । कार्यत्वबलेन कर्त्तरि कल्पनीये विपुलतरसूक्ष्मतरपक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं लाघवन्यायात् कर्तुरेकत्वं च सिध्यतीत्यत्राह

* भावप्रकाशिका *

द्वितीयतृतीययोस्तु 'नच क्षेत्रज्ञानामिति'भाष्येण दूषणम्. चतुर्थस्य तु 'नच युगप'दितिभाष्येण दूषणं द्रष्टव्यम् । (शङ्काद्योतकमिति) शङ्कासम्भावकमित्यर्थः । (कार्यत्वस्यैकत्वं नामेति) अत्र केचित्– कार्यत्वस्यैकत्वं सामग्र्यैक्यात्, तस्याश्चैकत्वं कार्यैक्यादित्युपपादनात् । एकं कार्यत्वमेकत्वसमानाधिकरणं कार्यत्वमेककार्यत्वमित्यर्थः, नतु कार्यत्वे ऐक्यम्, अत एव पृथग्भूतेषु कार्येष्विति भाष्यमपि स्वरसम्; ततश्च कार्यैकत्वे हि एककालकर्तृकत्वसम्भावनापि, न च तदस्तीति भाव इत्याहुः । (कर्तृकालैक्यनियमादर्शनादिति) पञ्चम्या निर्णीतार्थ

यमादर्शनात् ॥ न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या कार्य्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैकः एव कर्त्ता भवितुमर्हतीति क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयितादृष्टसम्भावनया च तत्तद्विलक्षणकार्य्यहेतुत्वसम्भवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुप-

* श्रुतप्रकाशिका *

( नचेति ) विचित्रशब्देनास्मदाद्यशक्यत्वार्थमतिविपुलत्वमतिसूक्ष्मत्वं च विवक्षितम्। कुत इत्यत्राह (क्षेत्रज्ञानामेवेति) क्षेत्रज्ञातिरिक्ते कल्प्ये सति ह्यनेककल्पनादेककल्पनस्य न्याय्यत्वम्, क्षेत्रज्ञानामेव कर्तृत्वोपपत्त्या तदतिरिक्तो न कल्पयितव्य इत्यर्थः। उपचितपुण्यविशेषाणामिति सपक्षे शक्तिवैचित्र्योपपादनार्थमुक्तम्। अतिशयितादृष्टसम्भावनयेति पक्षविषयमुक्तम्। "सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः" इत्यादिभिः क्षित्यादिस्रष्टृत्वानुगुणातिशयितादृष्टसम्भावना. क्षेत्रज्ञानामेव योगेन सूक्ष्मव्यवहितादिदर्शनं पराभ्युपेतम्, अस्मदादिषु देवेषु च ज्ञानशक्तिवैचित्री दृश्यते, न च पक्षधर्मताबलमन्वयव्यतिरेकसिद्धान् धर्मान्निवर्त्तयितुमीष्टे, तस्यान्वयव्यतिरेकसिद्धधर्मप्रकर्षमात्रहेतुत्वात्, इतरथा ज्ञानचिकीर्षयोरपि हानप्रसङ्गात् तदतिरिक्तेति 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायादीश्वरकल्पनाददृष्टविशेषकल्पनमेव वरमिति भावः। अचेतनत्वाच्चेतनाधिष्ठितावेव धर्माधर्मौ कार्यकरौ, वास्यादिवदित्यनुपपन्नम्, ईश्वरज्ञानप्रयत्नादौ व्यभिचारेणान्यतरानैकान्त्यात्। अथ क्षेत्रज्ञस्य सर्गे शरीरसापेक्षत्वात्तस्य सर्वसंहारदशायां शरीराभावात्तदानीं

* भावप्रकाशिका *

इत्यत्र पञ्चम्या अन्वयो न सम्भवतीत्यभिप्रेत्य प्रमाणाभावादिति प्रथमान्तपदमध्याहृत्य व्याचष्टे ( बहुषु चेत्यादिना ) ( इतरासम्भावितेति ) असम्भावितजीवकर्तृकताकं पक्षासाधारणाकार्यत्वमित्यर्थः। ( अन्वयव्यतिरेकसिद्धान् धर्मानिति ) जीवत्वधर्माधर्मानीत्यर्थः। नन्वीश्वरज्ञानप्रयत्नयोः कथं व्यभिचारापादनम् ? स्वेन तदभ्युपगमादित्याशङ्क्याह ( अन्यतरानैकान्त्यादिति ) ( सर्वसंहारदशायामिति )

पत्तेः, न च युगपत्सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधिरोहतः, अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च, कार्य्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां विरोधाभावाच्च, अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्य्यत्वस्यानैकान्त्यम्, पक्षस्याप्रसिद्धविशेषणत्वं, साध्यविकलता च दृष्टान्तस्य,

* श्रुतप्रकाशिका *

शरीरानपेक्षः कर्त्ता जीवविलक्षणः स्यादित्यत्राह ( नचेति ) इदानीं क्रमेणोत्पत्तिविनाशौ दृश्येते तदा तूत्पत्तिविनाशयौगपद्यकल्पनमित्यत्राह ( कार्यत्वेनेति ) अत्र कार्यत्वं-- कृतिसाध्यत्वं, तृतीया चेत्थम्भावार्था, विरोधाभावान्-- व्याप्तिविरोधाभावादित्यर्थः, एवं परमतदूषणोपयुक्तार्थशिक्षा कृता । अथ फलितं दूषणं दर्शयति ( अत इति ) तदयुक्तमित्यारभ्योक्तार्थानां हेतुत्वपरोऽत-- श्शब्दः, चलनादिषु तृणादेरिव क्रियाश्रयत्वमात्रलक्षण कर्तृत्वव्यावृत्त्यर्थो बुद्धिमच्छब्दः । किं बुद्धिमदेककर्तृकत्वं साध्यम् ? उत ? सकर्तृकत्वमात्रम् ? प्रथमेऽपि किं सामान्यतो बुद्धिमदेककर्तृकत्वमात्रं साध्यम् ? उत सर्वज्ञसर्वशक्त्येककर्तृकत्वमिति विकल्पमभिप्रेत्य प्रथमे कल्पेऽनैकान्त्यम्, अनेककर्तृकरथगोपुरादिषु कार्यत्वस्य विद्यमानत्वादिति भावः । सर्वज्ञसर्वशक्तिककर्तृत्वपक्षे दूषणमाह ( पक्षस्येति ) न ह्यभिमत्त्वमिव सर्वज्ञसर्वशक्तिकर्तृकत्वमन्यत्र दृष्टम्, दृष्टान्तस्य

* भावप्रकाशिका *

सर्वसंहारदशायां स्वशरीरस्यापि संहृततया सर्गाद्यसमये संहृतत्वादित्यर्थः । ( इदानीं क्रमेणोत्पत्तिविनाशाविति ) यदा क्रमो दृश्यते न तदा दृष्टविरुद्धं यौगपद्यं कल्प्यते, अपि तु सर्गाद्यसमय इति भावः । कार्यत्वस्योत्पत्तिमत्त्वरूपस्य उत्पत्तिविनाशकल्पकत्वासम्भवमभिप्रयन्नाह ( कार्यत्वं कृतिसाध्यत्वमिति ) कार्यत्वेनेति तृतीयायाः क्रियानुपादानेन कारकतृतीयात्वासम्भवादध्याहारे तस्यैव दोषत्वञ्चाभिप्रेत्याह ( तृतीया चेत्थम्भाव इति ) केचित्तु कार्यत्वेनोत्पत्तिविनाशयोः कल्पनेपीत्यध्याहृत्य वा कल्प्यमानयोरिति वाध्याहृत्य व्याचक्षते ( व्यावृत्त्यर्थो बुद्धि-

सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः , बुद्धिमत्कर्तृकत्व-
मात्रे साध्ये सिद्धसाधनता । सार्वज्ञ्यसर्वशक्तियुक्तस्य
कस्यचिदेकस्य साधकमिदं कार्यत्वम् किं युगपदुत्पद्य-

* श्रुतप्रकाशिका *

साध्यविकलता , कार्येषु घटादिष्वदर्शनात् अप्रसिद्धविशेषणत्वसाध्यवैकल्ये द्वे अप्युपपादयति ( सर्वेति ) सर्वनिर्माणचतुरस्येत्युक्तत्वादिदं दूषणद्वयं सर्वज्ञसर्वशक्तिकर्तृकत्वपक्षस्येति ज्ञायते, पूर्वस्मिन्नेव पक्षे चेदप्रसिद्धविशेषणत्वं न घटते, न ह्येककर्तृकत्वमप्रसिद्धम् । सकर्तृकत्वमात्रपक्षे दूषणमाह ( बुद्धिमदिति ) सिद्धसाधनत्वं वेदान्तिना न वक्तव्यं क्षेत्रज्ञकर्तृकत्वानभ्युपगमादिति चेन्न, क्षेत्रज्ञानामपि द्वारकर्तृत्वाभ्युपगमात् , समष्टितत्त्वेषु न द्वारकर्तेति चेत् , न च तत्पक्षीकरणं , लौकिकप्रमाणाविषयत्वात् . आगमेन सिद्धानां तेषामपि पक्षीकार इति चेत् , तेन कर्ताऽपि सिद्ध इति सिद्धसाध्यतेति, मुखान्तरेण दूषयितुं हेतुं विकल्पयति ( सार्वज्ञ्येति ) अयमभिप्रायः, कर्तृमात्रव्याप्येन कार्य्यत्वमात्रेण न कर्तृविशेषसिद्धिरिति प्रागेवोक्तम् , अतः पक्षविशेषाधीनेन कार्यत्वविशेषेण कर्तृविशेषः साध्यः , कुम्भादिकार्यविशेषेण हि कुलालादिकर्तृविशेषानुमानं , न तु कार्यत्वमात्रेण , अतः पक्षाधीनः कार्यविशेषो निरस्यत इति ( किं युगपदिति ) पक्षप्रकर्षाधीनं हेतुवैशिष्ट्यं द्वेधा सम्भवेत् , परिदृश्यमानमह्यादिविपुलकार्याणां युगपदुत्पत्त्या वा ? क्रमभाविनां त्रिकालवर्तिनां कार्याणामानन्त्येन वा ? अत्र कीदृश्येन पक्षप्रकर्षेण हेतुविशेषो विवक्षित इत्यर्थः ।

* भावप्रकाशिका *

मच्छब्द इति ) कार्यानुकूलज्ञानादिमत्त्वलक्षणं कर्तृत्वमिह विवक्षितम् , नतु तदनुकूलव्यापारवत्त्वमात्रमिति भावः । भाष्ये 'साध्यविकलता च दृष्टान्तस्ये'त्यत्राप्रसिद्धविशेषणत्वेनैव दृष्टान्ते साध्यवैकल्यसिद्धिमपि मन्यमानाः केचित् . चोऽर्थः । ततश्च दृष्टान्तस्य साध्यविकलत्वात्पक्षस्य साध्यत्वे साध्ये अप्रसिद्धविशेषणत्वमिति हेतुहेतुमद्भावेन योज्यमिति व्याचक्षते ( युगपदुत्पत्त्या वेति ) महीमहीधरादिकमेककर्तृकं युगपदुत्पद्यमानकार्यत्वादिति वा । उत त्रैकाल्यवर्ति-

मानसर्ववस्तुगत? मुत क्रमेणोत्पद्यमानसर्ववस्तुगतम्? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्धता, अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः शास्त्रविरोधश्च; कुम्भकारो जायते रथकारो जायत इत्यादि-

* श्रुतप्रकाशिका *

प्रथमं दूषयति ( युगपदिति ) कृत्स्नप्रलयासिद्धेः भूधरादीनां युगपदुत्पत्तौ प्रमाणाभावात्तन्निबन्धनं कर्तृवैलक्षण्यसाधकहेतुवैलक्षण्यमसिद्धमित्यर्थः । द्वितीयं दूषयति ( क्रमेणेति ) यद्यप्येकैकेन कुलालादिना जन्मसहस्रेणाप्यनन्तकार्यनिष्पादनसम्भवस्तथाऽपि तत्तज्जन्मसमानकालकुविन्दादिकृतानां कार्याणां तत्कर्तृकत्वाभावात् सर्वकार्याणामेककर्तृकत्वन्नास्ति. अतस्त्रैकाल्यवर्तिसमस्तवस्तुनिष्ठत्वविशेषितं कार्यत्वं कर्तृभेदेनैव व्याप्तमिति कर्त्रैक्यसाधने विरुद्धमित्यर्थः । ( अत्राप्येककर्तृकत्वसाधन इति ) विशिष्टकार्यत्वव्यापकतयाऽभिमतस्य घटपटरथादिदृष्टस्य भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थः । भिन्नकर्तृकतया प्रत्यक्षसिद्धेषु प्रत्यक्षविरोधः, अन्यत्र द्वीपान्तरवर्ती घटः एतद्व्यतिरिक्तकुलालकर्तृकः, एतद्व्यापारागोचरहेतुकत्वे सति घटत्वात्, सम्प्रतिपन्नकुलालान्तरोत्पादितघटवत्. द्वीपान्तरवर्तिघटहेतूनां दण्डादीनामेतद्व्यापारागोचरत्वमेतस्य तत्र गमनाभावनिर्णयात्, अत एवमादिभिरनुमानैर्विरोधः. शास्त्रविरोधमुपपादयति ( कुम्भकार इति ) कुम्भकारो जायते रथकारो जायत इत्यर्थोपादानम्, न तु पाठक्रमः, नहि

* भावप्रकाशिका *

समस्तकार्यत्वादिति वा हेतुशरीरमिति भावः । ( विरुद्धमित्यर्थ इति ) इदमुपलक्षणम् । सर्वकार्यत्वस्य पक्षीकृतमहीमहीधरादौ वा सपक्षघटादौ वा अभावेन स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्चेति द्रष्टव्यम् । ( भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थ इति ) यद्यपि यथाश्रुतेनानुपपत्तिस्तथापि साध्याभावव्याप्यत्वरूपविरुद्धप्रत्याख्यानप्रकारत्वात् तथोक्तमिति ध्येयम् । ननु कुम्भकारशब्दनिर्दिष्ट एव रथकारशब्देनापि गृह्यताम्, माभूत् कुम्भरथयोर्भिन्नकर्तृकत्वमित्याशङ्क्याह ( नहि

श्रवणात्। अपिच—सर्वेषां कार्य्याणां शरीरादीनां सत्त्वादिगुणकार्य्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयं. कार्य्यवैचित्र्यहेतुभूताः कारणगता विशेषाःसत्त्वादयः। तेषां कार्य्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण। पुरुषस्य च तद्योगः कर्ममूल इति कार्य्यविशेषारम्भायैव, ज्ञानशक्तिवत्कर्त्तुः कर्मसम्बन्धः कार्य्यहेतुत्वेनैवावश्याश्रयणीयः, ज्ञान-

* श्रुतप्रकाशिका *

कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तिः पृथग्वक्तव्या, एकसञ्ज्ञात्वेन पुनरुक्तिप्रसङ्गादिति भावः। प्रकारान्तरेण विरुद्धत्वमाह ( अपि चेति ) सुखादेः सत्त्वादिगुणकार्यत्वं शास्त्रदृष्टमिति तच्छास्त्रप्रामाण्यवादिनाऽङ्गीकार्यमिति मत्वाऽनिष्टमापादयति. न तु पराभ्युपगमात्, सुखादिशब्देन सुखदुःखमोहा विवक्षिताः, सुखाद्यन्वयः शरीरादीनां. सुखादिहेतुत्वाऽवस्थान्वयः सत्त्वादिमूलत्वम्—सत्त्वादिगुणकद्रव्योपादानत्वमित्यर्थः। के ते सत्त्वादयः? कथं च तेषां सुखादिहेतुत्वम्? इत्यत्राह ( कार्यवैचित्र्येति ) कारणगता विशेषाः कारणशब्दो निमित्तोपादानसाधारणपरः, ततः किं कर्तुर्गुणवश्यत्वस्येत्यत्राह ( तेषां कार्याणामिति ) पुरुषेण कार्याणान्तन्मूलत्वापादनं सत्त्वादियुक्तस्वकीयान्तःकरणविकारद्वारेणेत्यर्थः। ततः किमित्यत्राह ( पुरुषस्य चेति ) कार्यानुपयोगिनो हि धर्मानवाप्नुवन्तीति पूर्वपक्षिणोक्तं, सत्त्वादीनां तु कार्य्योपयोगित्वात्तदधीनः कर्मसम्बन्धोऽवर्जनीय इति भाववानाह ( ज्ञानशक्तिवादिति ) सुख-

* भावप्रकाशिका *

कुम्भरथयोरिति ) ( सत्त्वादिगुणकद्रव्योपादानत्वमित्यर्थ इति ) अत्रोपादानशब्दः कारणमात्रपरः, उत्तरत्र कारणशब्दो निमित्तोपादानसाधारण इत्युक्तेः ( के सत्त्वादय इति ) के सत्त्वादय इत्यस्यायमर्थः,—कार्यगतसुखादिहेतुत्वलक्षणवैचित्र्यात् कारणमपि यद्वैजात्यं वक्तव्यम् तत्तु सत्त्वादिभ्योन्यत् किं वा स्यात्। किञ्च सत्त्वादिरूपत्वेपि तादृशं सत्त्वादिलक्षणं कारणवैचित्र्यमुपादानगतमेवास्तु, ननु

शक्तिवैचित्र्यस्य च कर्ममूलत्वात्, इच्छायाः कार्य्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्याससत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्त्तारः; न तद्विलक्षणः कश्चिदनुमानात्सिद्धयति ॥ भवन्ति च प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकम्, कार्य्य-

* श्रुतप्रकाशिका *

दुःखमोहादीनां सत्त्वरजस्तमोहेतुकत्वं शास्त्रसिद्धम्, सुखादिहेतुभूतशरीराद्युपादानस्य निमित्तस्य च कर्तुः सत्त्वादिगुणान्वयश्च शास्त्रसिद्धः "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥" इत्यादिभिर्दृश्यते। अतः सत्त्वादिगुणकं शरीराद्युपादानं द्रव्यं सत्त्वादिगुणान्वयविकृतान्तःकरणः पुरुषोऽधितिष्ठति, गुणान्वयश्च कर्ममूल इति कर्मवश्यत्वप्रसङ्ग इत्यर्थः। हेत्वन्तरेणापि कर्मसम्बन्धमाह (ज्ञानेति) न ज्ञानशक्तिवैचित्र्यात् विचित्रसर्गः, अपि तु इच्छामात्रादिति चेत्तत्राह (इच्छाया इति) विषयविशेषविशेषिताया इच्छायाः सर्गक्षेमादिविषयत्वम्, तत्रापि विचित्रसर्गादिविषयत्वं च सत्त्वादिमूलत्वेन कर्ममूलमित्यर्थः। एवं कर्तृत्वक्षेत्रज्ञत्वयोर्व्याप्तिदर्शनान्न तद्विलक्षणसिद्धिरित्याह- (अत इति) प्रतितर्कानाह (भवन्ति चेति) (तनुभुवनादीति) इदं

* भावप्रकाशिका *

निमित्तभूतकर्तृगतमिति। के सत्त्वादय इत्यत्र गर्भिततच्छब्दद्वयस्यापि निवर्तकं कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादय– इति भाष्यम्, तस्य चायमर्थः,– सत्त्वादिव्यतिरिक्ते कारणगतवैजात्ये प्रमाणाभावात्, सत्त्वादिकमेव वैजात्यम्, तच्च वैजात्यमविशेषात् उभयविधकारणनिष्ठमिति। निमित्तभूते आत्मन्यपि सत्त्वादिसम्बन्धोऽवश्यम्भावीति। भाष्ये– अन्तःकरणविकारेति चिकीर्षादिमुखेनेत्यर्थः। उद्भूतसत्त्वगुणयुक्तमृत्पिण्डदर्शनेन उद्भूतसत्त्वगुणयुक्तकुलालस्य सत्त्वगुणवशेन राग उत्पद्यते, ततो घटादि करोति, ततश्च चिकीर्षालक्षणो रागः कर्तुस्सत्त्वयोगायत्तः। सत्त्वगुणयोगश्च कर्मसम्बन्धायत्त इति भावः। भाष्ये– तद्युक्तपुरुषान्तःकरणेति। तद्युक्तो यः पुरुष इत्यर्थः। विषय-

त्वात्, घटवत्। ईश्वरः कर्त्ता न भवति, प्रयोजनशून्यत्वात्, मुक्तात्मवत्। ईश्वरः कर्त्ता न भवति, अशरीरत्वात् तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्। विमति-

* श्रुतप्रकाशिका *

प्रत्यनुमानं प्रतितर्को वा, अन्ये प्रतितर्का एव, कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः। कर्तृत्वे सापेक्षत्वप्रसङ्गः— कर्तृत्वे सशरीरत्वप्रसङ्गः इत्यर्थः। अशरीरहेतोर्व्यभिचारमाशङ्क्य परिहरति (नचेति) अनादेः— बीजाङ्कुरवत् प्रवाहानादेरित्यर्थः। अधिष्ठानं देहेन प्रथमसम्बन्धश्चेत्सूक्ष्मस्थूलशरीरप्रवाहानादितया परिहृतः, यथा बालशरीरविशिष्टेन युवशरीरपरिग्रहः, तद्वदेव। अधिष्ठानं प्रेरणं चेत् स्वपरनिर्वाहकन्यायात्परिहृतः, शरीरव्यतिरिक्तप्रेरणस्य शरीरापेक्षा, न शरीरस्येति। शरीरत्वप्रयुक्तं शरीरान्तरनिरपेक्षप्रेरणत्वम्, तथा जगत ईश्वरशरीरत्वे न सशरीरत्वात् कर्मवश्यत्वप्रसङ्गः, यथा देहः स्वज्ञानोत्पत्तौ करणं कर्म च भवति। यथा च घटः स्वविषयज्ञानोत्पत्तौ स्वसत्तया हेतुः पश्चात्तद्विषयश्च भवति। तथा स्वविषयप्रेरणेऽपि शरीरमिति न कर्मकर्तृविरोधः, न चाङ्कुरादौ शरीरस्य योग्यानुपलब्धिः, पिशाचसिद्धादिशरीरवददृश्यत्वोपपत्तेः; देशान्तरस्थेन वा शरीरेण सङ्कल्पद्वारा विषादेरिव प्रेरणोपपत्तेश्च। प्रतितर्कान्तरमाह (विम-

* भावप्रकाशिका *

विशेषविशेषिताया इत्येतद्व्याख्येयं पदम्। तस्य व्याख्यानं सर्गक्षेमादिनियत्वमिति, न त्वभ्याहृत्य व्याचष्ट इति मन्तव्यम्। न तद्विलक्षणत्वसिद्धिरित्याहेति पाठः। (अन्ये प्रतितर्का इति) ईश्वरपक्षका इत्यर्थः। प्रतितर्केषु पराभ्युपगममादायापि तत्पक्षीकृत्य प्रतितर्कप्रयोगस्सम्भवतीति भावः। ननु, जगतोऽपीश्वरं प्रति साक्षात् प्रयताधिष्ठेयत्वेन शरीरत्वान्न तदधिष्ठाने शरीरापेक्षेति पूर्वपक्ष्याशङ्कां निरस्यति (तथा जगत इति) (कर्मवश्यत्वप्रसङ्ग इति) सिद्धान्ते तु श्रुत्या अपहतपाप्मत्वसिद्धिरितिभावः। (न चाङ्कुरादाविति) योग्यानुपलब्धिबाधितत्वात्सकर्तृकत्वे सशरीरत्वप्रसङ्गो नापादयितुं शक्यत इत्यर्थः। (प्रेरणोपपत्तेश्चेति) इदमुपलक्षणं, बाधस्तर्केऽननुगुण इत्यपि द्रष्टव्यम्। (सङ्कल्पा-

विषयः कालो न लोकशून्यः, कालत्वात्, वर्तमानकालवत्–इति॥ अपिच– किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति ? । न तावदशरीरः , अशरीरस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति। मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात्। नापि सशरीरः, विकल्पासहत्वात्। तच्छरीरं किं नित्यम् ? उतानित्यम् ?। न तावन्नित्यम् , सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम् , तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेत्. न, अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्. न, अनवस्थानात्॥ स किं सव्यापारो वा नि-

* श्रुतप्रकाशिका *

तीति ) अत्र सूर्यपरिवृत्तिसङ्ख्याविशेषावच्छेदात् पूर्वत्वेन परत्वेन च कालस्य पक्षीकृतत्वान्नाश्रयासिद्धिरिति। अनुमानं मुखान्तरेण दूषयति ( अपि चेत्यादिना ) दूषणं वक्तुं विकल्पयति ( किमिति ) धीस्थं चरमशिरो दूषयति ( न तावदिति ) अशरीरस्य मनसा कर्तृत्वं स्यादिति प्रागुक्तं दूषयति ( मानसानीति ) कुत इत्यत्राह ( मनस इति ) अपिशब्देन स्वपक्षे नित्यत्वानभ्युपगमः सूचितः। सशरीत्वपक्षं दूषयति ( नापीति ) विकल्पासहत्वं विवरितुं विकल्पयति ( तदिति ) प्रथमं दूषयति ( न तावदिति ) जगतः-- भूभूधरादेः। द्वितीयं दूषयति ( नापीति ) हेतुमाह ( तद्व्यतिरिक्तस्येति ) तच्छरीरहेतोः शरीरान्तरस्याभावादित्यर्थः। दूषणपरिहाराय परोक्तं शङ्कते ( स्वयमेवेति ) स्वयंशब्द ईश्वरपरः। परिहरति ( नेति ) तदयोगात्– हेतुत्वायोगात्। पुनः शङ्कते ( अन्येनेति ) अनवस्थया दूषयति ( नेति ) प्रामाणिकपरम्परा न दोष इति चेत्. शरीरित्वप्रयुक्तकर्मवश्यत्वं स्यादिति भावः। कर्मवश्यत्वप्रसङ्गस्य प्रागुक्तत्वादिहा-

र्व्यापारो वा ?। अशरीरत्वादेव न सव्यापारः। नापि निर्व्यापारः कार्यं करोति, मुक्तात्मवत्। कार्य्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्; दृष्टान्तस्य च साध्यहीनता। अतो दर्श-

* श्रुतप्रकाशिका *

प्यनवस्थादूषणस्य कर्मवश्यत्वप्रसङ्गपर्यन्तत्वमभिप्रेतमित्यवगम्यते। मुखान्तरेण विकल्प्य दूषयति (स किमिति) अशरीरस्य निर्व्यापारत्वे निर्व्यापारस्य कार्यकरणे च दृष्टान्तो मुक्तात्मा, व्यापारश्च प्रयत्नो विवक्षितः, इच्छाविशेषस्य हेतुत्वे हि गुणवश्यताप्रसङ्गः पूर्वमुक्तः, इच्छामात्रमेव व्यापार इत्यत्राह (कार्यं जगदिति) मात्रशब्देन सत्त्वादिगुणान्वय–तन्मूलकर्मसम्बन्धव्यावृत्तिः। ननु, कर्मवश्यत्वादिकं न कर्तुः प्रसञ्जनीयम्, अव्यापकत्वात्। न हि त्वत्पक्षेण वाऽस्मत्पक्षेण वा व्याप्तिः, ईश्वरे त्वया मयापि तदनभ्युपगमात्. नैवम्, आगमादृतेऽपीश्वरः सिध्यतीतिवदन्तम्प्रत्यागममसन्तं कृत्वाऽस्मदादिभिरुच्यमानत्वात्। यदीश्वरप्रतिपादकागमबलान्मदुक्तव्याप्तिभङ्गेनेश्वरानुमानं स्थाप्यते, तदानीमनुमानस्यागमानपेक्षप्रामाण्यासिद्धिरित्यप्राप्तग्राहित्वमागमस्य सिध्येत्। यद्वा अलौकिकप्रमाणैकवेद्यत्वाभावे सति कर्तृत्वस्य कर्मवश्यत्वादिव्याप्यत्वात्. शास्त्रयोगिमुक्तेश्वरप्रत्यक्षाण्यलौकिकशब्दोक्तानीति। अनुमानदूषणमुपसंहरति (अत इति)

* भावप्रकाशिका *

विशेषावच्छेदादिति) द्विपरार्धकालादित्यर्थः। (कर्मवश्यत्वप्रसङ्गपर्यन्तत्वमिति) नन्वस्य अनवस्थायास्सर्गाद्यसमयोत्पत्तिप्रतिबन्धकतया तत एव दूषितत्वसम्भवात्, कर्मवश्यत्वपर्यन्तत्वाभिप्रायः किमर्थः। यदि च प्रलयदशायामपि बीजाङ्कुरन्यायेन शरीरसत्त्वम् तदा प्रलयत्वव्याघात इति चेत्. सत्यम्; अदृष्टादिवदनन्यगत्या ईश्वरशरीरस्यापि सत्त्वमुपेयम्, इतरथा जगत्सर्गासम्भवात् इति यदि परो ब्रूयात्, तदा कर्मवश्यत्वपर्यन्तं दूषणं देयमित्यत्र तात्पर्यात्। संयोगलक्षणव्यापारस्य मुक्तेऽपि सम्भवादाह (व्यापारश्च प्रयत्न इति) (मात्रशब्देन सत्त्वादिगुणान्वयेति) सर्गादिविषयविशेषानालिङ्गितेच्छामात्रस्य व्यापारत्वे

नानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः ॥ शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयम् सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरन्निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्य्यत्वं चानुपलब्धमशक्यप्रतिपादनमित्युक्तम् ; तदप्यविरुद्धमिति [1]"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [2]"न वियदश्रुते" रित्यत्र प्रतिपादयिष्यते। अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् "यतो वा इमानि" इत्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ।

* श्रुतप्रकाशिका *

परस्य ब्रह्मण ईश्वरानतिरिक्तज्ञापनार्थः सर्वेश्वरशब्दः, अनेन "तमीश्वराणां परमं महेश्वरमिति श्रुतिः स्मारिता भवति। देवताविशेषनिर्णयार्थं "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक" इति श्रुतिस्मारणार्थः पुरुषोत्तमशब्दः। उक्तदोषास्तदानीमपि प्राप्नुयुरित्यत्राह (शास्त्रन्त्विति) सर्वविजातीयत्वं दर्शयति (सार्वज्ञ्येति) सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रशब्दो ब्रह्मविशेषणं गुणविशेषणं वा, तद्वितितिरूपत्वादन्येषां गुणानाम्। एकैकमनवधिकातिशया गुणा अपरिमिताः— .... .... .... .... ....
निःसंख्याता इत्यर्थः ॥

* भावप्रकाशिका *

सत्त्वादिगुणान्वयकर्मसम्बन्धयोरपि व्यावृत्तिः फलतीति भावः ॥

१ द्वा. १-अ. ४-पा २३. | २ द्वा. २-अ. ३-पा. १

इति शास्त्रयोनित्वाधिकरणं समाप्तम् ।

यद्यपि प्रमाणान्तरागोचरं ब्रह्म। तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

तत्तु समन्वयात् ॥ ४ ॥

* श्रुतप्रकाशिका *

यथा मृत्तिकाया घटनिष्पादनशक्तत्वेपि कुलालस्य च निर्माणशक्तौ सत्यामपि दण्डचक्रपरिकरापेक्षाऽस्त्येव तथा शब्दस्य परिनिष्पन्नब्रह्मप्रतिपादनशक्तत्वेऽपि ब्रह्मणोऽपि शब्देन प्रतिपत्तुं शक्यत्वेऽपि बुभुत्साख्यपरिकरापेक्षा प्रमित्युत्पादने विद्यते, यत्नसाध्यत्वाद्बुभुत्साऽपेक्षिता, सा चाज्ञातत्वपुरुषार्थत्वप्रयुक्ता, तत्रावान्तरपेटिकारूपेण प्रथमेन सूत्रद्वयेन शब्दद्वारकमर्थद्वारकं च शक्तिमत्त्वं प्रतिपादितम्। अथ सूत्रद्वयान्तरमवान्तरपेटिकान्तरं बुभुत्साहेतुनिरूपणपरम्, तत्र प्रथमेन तृतीयसूत्रेणाज्ञातत्वरूपो बुभुत्साहेतुरुक्तः। अथ प्रयोजनत्वरूपो बुभुत्साहेतुरुच्यते चतुर्थेन। अर्थे प्रतिपन्ने हि प्रयोजनाप्रयोजनत्वचिन्ता प्रतिपत्तिश्च लक्षणत इति जन्मादिसूत्रं द्वितीयमभूत्। जन्मादिकं लक्षणं चेन्मानान्तरात्तत्सिद्धिः स्यादिति शङ्कायाः सङ्गतत्वात् 'शास्त्रयोनित्वा'दिति सूत्रं तृतीयमभूत्। अज्ञातत्वेऽप्यप्रयोजने बुभुत्सानुदयात् प्रयोजनरूपत्वमत्र निरूप्यत इति क्रमोऽयमेव, तत्रावान्तरसङ्गतिमाह (यद्यपीति) अज्ञातत्वन्नाम बुभुत्साहेतुर्यद्यप्यस्तीत्यर्थः। प्रयोजनं सुखं दुःखनिवृत्तिश्च, शास्त्रस्य तत्पर्यवसायित्वं तदुपायप्रवृत्तिनिवृत्तिबोधनद्वारा, तच्च न सिद्धपरत्वेऽस्ति. तस्य प्रवृत्तिनिवृत्तिरूपत्वाभावात्, तस्मात्प्रयोजनपर्यवसायित्वाभावेन बुभुत्साख्यपरिकराभावात्सिद्धे शास्त्रं न प्रमितिं जनयतीत्यर्थः। एवं शङ्कायां सूत्रमुदाहरति (तत्तु सयन्वयादिति) इहापि साधारणविचारद्वयमर्थसिद्धम्, ब्रह्मणः शास्त्रप्रमाणकत्वं सम्भवति नेति द्वितीयविचारः, तदर्थं प्रवृत्तिनिवृत्तिरूपप्रयोजनशून्यानां वेदान्तवाक्यानां ब्रह्मपरतयाऽन्वयः सम्भवति नेति, तदर्थं किं शब्दस्य प्रामाण्यं प्रवृत्तिनिवृत्तिपर-

* भावप्रकाशिका *

सङ्गतिं वक्तुमारभते (यथा मृत्तिकाया इति) (सा चाज्ञातत्वेति) स्फीतालोकम-

४ अधिकरणम्

प्रसक्ताशङ्कानिवृत्त्यर्थः तुशब्दः, तत्– शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव, कुतः समन्वयात्– परमपुरुषार्थतयाऽन्वयः समन्वयः, परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात्। [1]एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः,

* श्रुतप्रकाशिका *

तया ? उत पुरुषार्थपरतया ? इति। शब्दस्य प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्ये ब्रह्मणः सिद्धरूपस्य शास्त्रप्रमाणकत्वाभावात्तद्विचारानारम्भः। शब्दस्य पुरुषार्थपरतयैव प्रामाण्ये पुरुषार्थभूतब्रह्मणः शास्त्रप्रमाणकत्वात्तद्विचारस्यारम्भणीयत्वं फलितम्। एवमर्थसिद्धौ विषयसंशयावभिप्रेत्य सूत्रं व्याचिख्यासुः तत्र वाक्यार्थयोजनायामेव पदयोजनामन्तर्भावयिष्यन् पृथग्व्याख्येयम्– तुशब्दं व्याचष्टे (प्रसक्तेति) सर्वेषां सूत्राणां तत्तच्छङ्कायामवतरणेऽपि अस्मिन् सूत्रे– तुशब्दः प्रदर्शनार्थः, तदिति व्याख्येयं पदम्, तद् व्याचष्टे (शास्त्रप्रमाणकत्वं ब्रह्मण इति) सम्भवत्येवेत्येतत्तुशब्दफलितम्, हेतुपदस्याकाङ्क्षां दर्शयति (कुत इति) समन्वयशब्दस्योत्तरत्र विस्तरेण व्याख्यास्यमानत्वादिदानीं सङ्क्षेपेण व्याचष्टे (परमपुरुषार्थतयेति) कस्य केन कीदृशोऽन्वयः ? इत्यपेक्षायामाह (परमेति) शास्त्रेण परमपुरुषार्थभूतस्य ब्रह्मणोऽभिधेयतयाऽन्वयादित्यर्थः, शास्त्रस्य धीस्थत्वाच्छास्त्रेणेति कण्ठोक्त्यभावः। ब्रह्म शास्त्रप्रमाणकमिति प्रतिज्ञाते सति पक्षनिष्ठतया हेतोर्वक्तुमुचितत्वात्समन्वयो ब्रह्मकर्तृकतया व्याख्यातः, न तु शास्त्रकर्तृकतया। कथं तथाविधान्वयः ? इत्यपेक्षायामेतदुपपादयति (एवमिति) इवशब्द एवार्थः, एवमेवेत्यर्थः. औपनिषदः पदसमुदायः परमपुरुषार्थभूते ब्रह्मणि प्रतिपादकत्वेन समन्वित एव हीत्यर्थः। पदसमुदायो वा-

* भावप्रकाशिका *

ध्यवर्तिघटे काकदन्ते वा बुभुत्सानुदयादिति भावः। सूत्रान्तरेषु तुशब्दः कुतो नोपादीयत इत्याशङ्क्याह (तुशब्दः प्रदर्शनार्थ इति) सर्वत्र सिद्धान्तसूत्रे तुशब्दोऽध्या-

१ एवमेव - इति पाठान्तरम्॥

[1]"यतो वा इमानि भूतानि जायन्ते" [2]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। "तदैक्षत बहु स्यां प्रजायेति तत्तेजोऽसृजत" [3]"ब्रह्म वा इदमेकमेवाग्र आसीत्" [4]"आत्मा वा इदमेक एवाग्र असीत्"

* श्रुतप्रकाशिका *

क्यमित्यर्थः। औपनिषदवाक्यबहुत्वेऽपि तेषां वाक्यैकवाक्यभावेनैकार्थपरतयैकराशित्वव्यञ्जनायैकवचनम्, समन्वित इति वाक्यकर्तृकत्वेनोक्तिः फलितार्थाभिप्राया, न तु सूत्रयोजनाभिप्राया, ब्रह्मणि समन्वितानामित्युत्तरत्राप्येवमेव, प्रतिपत्तिक्रमानुरोधेन प्रथमं लक्षणवाक्यमुपादत्ते (यतो वा इति) अथ प्रापकं कारणवाक्यमाह (सदेवेत्यादिना) सच्छब्दस्य बृहदबृहत्साधारणत्वाद्विशेषकवाक्यमुपादत्ते (ब्रह्म वा इति) यत्कारणं तद्ब्रह्मेति लक्षणवाक्येनोक्ते सतः कारणत्वे च कथिते तस्य सतो ब्रह्मत्वं सिध्यतीति न बृहत्त्वनिश्चयः। ब्रह्म वा इति वाक्याधीन इति चेन्न, लक्षणवाक्यस्य कारणानुवादित्वेन प्रापकवाक्योपजीवित्वादुपजीव्येषु प्रापकवाक्येष्वेव विशेषनिर्धारणज्ञापनार्थं हि—ब्रह्म वा इति वाक्यमुपात्तम्, सद्ब्रह्मशब्दयोरीक्षणान्वयलिङ्गादचिद्व्यावृत्तवस्तुपरत्वेऽपि तयोः शब्दयोः साधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्तीति शब्दशक्त्यैव विशेषज्ञापनार्थम्—आत्मा वा इति वाक्योपादानम्, ब्रह्मशब्दस्य साधारणत्वं नाम बहुष्वर्थेषु प्रयुज्यमान-

७ भावप्रकाशिका ७

हर्तव्य इति . अत्रत्यतुशब्देन सूच्यत इत्यर्थः। (विशेषनिर्धारणज्ञापनार्थं हीति) ननु ब्रह्मविदाप्नोतीतिवाक्यं श्रुतवतः किं ब्रह्मेति बुभुत्सायां 'यतो वा इमानी'त्यादिवाक्यं प्रवृत्तम्, तस्य चानुवादरूपतया पुरोवादिवाक्ये पर्यालोच्यमाने तत्र यदि 'ब्रह्म वा इदमग्र आसीत्, इति वाक्यमुपन्यस्यते. तदा ब्रह्मशब्दः कथमर्थप्रत्यायकस्स्यात् अनिर्धारितब्रह्मशब्दार्थस्य तज्जिज्ञासोर्ब्रह्मशब्दश्रवणे तत्रापि जिज्ञासाया एवोदयादिति चेत् . सत्यम्; असौ न जानाति इदं ब्रह्मशब्दार्थीभूतं निरतिशय-

१ तै भृ. १- अनु ॥
२ छा. ६-प्र. २-ख. १-३ ॥
३ बृ ३-अ. २-ब्रा. १२ ॥
४ ऐतरेय. १-अ. १-ख. १ ॥

[1]"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" [2]"एको ह वै नारायण आसीत्" [3]"सत्यं ज्ञानमनन्तं ब्रह्म"

* श्रुतप्रकाशिका *

त्वम्. न तु प्रवृत्तिनिमित्तसाधारण्यम्, प्रवृत्तिनिमित्तभूतस्य निरतिशयबृहत्त्वस्य भगवद्व्यतिरिक्तगामित्वसन्देहसहत्वं वा, न हि स्वारसिकात्मशब्दैकार्थ्ये प्रतिपन्ने सति निरतिशयबृहत्त्वस्याचिद्गामित्वसन्देहः, सद्विद्यायां 'स आत्मे'त्यात्मशब्द उपसंहारस्थ इत्युपक्रमस्थेनैवात्मशब्देन विशेषनिश्चयार्थम्– आत्मा वा इति वाक्यमुपात्तम्, यतो वा इमानीत्यादिप्रकरण एव "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यानन्दशब्देन कारणे निर्दिष्टेऽपि "यदेष आकाश आनन्दो न स्या"दित्याकाशशब्दसामानाधिकरण्यादानन्दशब्देनाचिद्व्यावृत्तिनिश्चयः प्रतिबद्ध इत्यभिप्रायेणाचिद्व्यावृत्तेः सुखेन प्रतिपत्त्यर्थमात्मा वा इति वाक्योपादानम्; सर्वशाखाप्रत्ययन्यायेन विनाऽपि प्रकरणादेव ब्रह्मशब्द आत्मपर इति ज्ञापनार्थम्, एतदधिकरणापेक्षितानान्दरूपताप्रतिपादकप्रकरणस्थतया तज्ज्ञापनार्थं, चोपादत्ते (तस्माद्वा एतस्मादात्मन इति) "सत्यं ज्ञानमनन्तं ब्रह्मे"ति हि तत्र प्रकृतम्। "अन्योऽन्तरात्मा आनन्दमयः" "आनन्दं ब्रह्मणो विद्वान्" इति तत्र वक्ष्यते। अथ "छागो वा मन्त्रवर्णात्" इति न्यायात्सामान्यशब्दानां देवताविशेषे पर्यवसानं दर्शयति (एको ह वा इति) "सेयं देवतैक्षत" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवम्" 'स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' 'ईशानो भूतभव्यस्य' तमीश्वराणां परमं महेश्वर"मित्यादिषु श्रुतानां देवतादिशब्दानां पूर्वपूर्वापेक्षया

* भावप्रकाशिका *

बृहदिति. तथापि सद्ब्रह्मात्मशब्दानां समानप्रकरणपठितानां छागपशुन्यायेन विशेषपर्यवसानं सम्भवतीत्यत्र तात्पर्यम्. ननु कथं ब्रह्मशब्दस्य साधारणत्वम्? कथं वा तदपेक्षयात्मशब्दस्य विशेषपरत्व? मुच्यत इत्याशङ्क्याह (ब्रह्मशब्दस्य साधारणत्वं नामेति) आत्मशब्दस्य ब्रह्मशब्दानिवर्त्यसंशयनिवर्तकतया विशेषरूपत्वमाह (नहि स्वारसिकेति) (साक्षात्कारणवाक्यस्थत्वाभावादिति) सेयं

१ बृ. ३-अ. २-ब्रा. ११. | २ ऐतरेय. १-अ. ख. १. | ३ तै. आन. १-अनु.

* श्रुतप्रकाशिका *

विशेषशब्दानामपि साक्षात्कारणवाक्यस्थत्वाभावात्, तेषु च रूढिमतामऽपि देवतादिशब्दानां व्यक्तिविशेषे रूढत्वाभावादीशादि-शब्दानां च "जगत ईशो नान्यो हेतुर्विद्यते ईशनाये"ति समभिव्याहृतषष्ठ्यन्तपदनिर्देशादिभिरवयवार्थविवक्षायाःस्फुटतरत्वेन निमग्नरूढितया साधारणत्वाच्च चरमविशेषशब्दप्रदर्शनेन तेषामपि तत्पर्यवसानमर्थसिद्धं स्यादित्यभिप्रायेण च 'सेयं देवते'त्यादिवाक्यान्यनादृत्य "एको ह वै नारायण" इत्यादिवाक्यमुदाहृतम्। हिरण्यगर्भादयश्शब्दा आकाशप्राणादिशब्दवदयोग्यार्थाः, शिवादिशब्दाश्च बह्वर्थेषु प्रयोगात्साधारणा इति सदादिशब्दवन्न विशेषोपस्थापनक्षमा इत्यभिप्रायः। "वचनानि त्वपूर्वत्वात्, "विधिस्तु धारणेऽपूर्वत्वात्" इति न्यायेन "यदाग्नेयोऽष्टाकपालः उपरि देवेभ्यो धारयति" इति वाक्यवदिदं महोपनिषद्वाक्यमपि अप्राप्तार्थोपस्थापकत्वादाकाशप्राणादिवाक्यवदयोग्यार्थोपस्थापकत्वाभावाच्चानन्यापेक्षं स्वार्थं प्रतिपादयति "न सन्न चासच्छिव एव केवल" इति वाक्यविरोधादिदं वाक्यमयोग्यार्थमिति चेत्. न, "सदेव सोम्येद"मिति वाक्यविरोधेन "न सन्नचास"दित्यादिवाक्यस्यायोग्यार्थत्वप्रसङ्गात्, साधारणस्य सच्छब्दस्य शिवपर्यवसानाविरोधान्नात्रायोग्यार्थत्वमिति चेत्. तर्हि शिवशब्दस्य च बहुष्वर्थेषु प्रयोगात्साधारणस्य नारायणपर्यवसानाविरोधान्नात्रायोग्यार्थत्वम्, ब्रह्मशिवादीनां हि कार्यत्वमिन्द्रादीनामिव बह्वीभिः श्रुतिभिः प्रतिपाद्यते। यजुषि "अजस्य नाभावध्येकमर्पितं यस्मि-

ध भावप्रकाशिका ध

देवतैक्षतेतिवाक्यमपि 'अग्र आसी'दिति अग्रादिपदाभावात् न साक्षात्कारणवाक्यमिति भावः। एतदस्वरसादाह (देवतादिशब्दानां व्यक्तिविशेषरूढत्वाभावादिति) (निमग्नरूढितयेति) योगरूढिमतां शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने रूढिर्नोन्मिषति 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' इति श्लोके सरःप्रतिसम्बन्ध्यग्रपदोपादानेन सरोरुहशब्दरूढ्यनुन्मेषात्, तस्य यौगिकार्थमात्रसमर्पकत्वात्, पद्मानीति पद्मत्वजातिवाचिपदमुपात्तम्, इतरथा पद्मसरोरुहयोः पौनरुक्त्यप्रसङ्गात्। ननु 'एको हवै नारायण आसीत्' इति महोपनिषद्वाक्ये हवैश्रवणे नानुवादरूपत्वप्रतीतेः, पुरोवादसाकाङ्क्षतया अनिर्णायकत्वमाशङ्क्याह (वचनानि त्वपूर्वत्वादिति) सोमे शेषभक्षो नास्ति

* श्रुतप्रकाशिका *

न्निदं भुवनमधिश्रितं विश्वकर्मा ह्यजनिष्ट देवः" स प्रजापतिरेकः "पुष्कर पर्णे समभवत् "तस्माद्विराडजायत विराजोऽधिपुरुषः," महोपनिषदि "तत्र ब्रह्मा चतुर्मुखोऽजायत" सुबालोपनिषदि "अद्भ्यःपृथिवी तदण्डमभवत् तत्संवत्सरमात्रमुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्ठादाकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुष इत्यारभ्य" "सोऽग्रे भूतानां मृत्युमसृजत् तस्य ब्रह्माऽबिभेत् सो ब्रह्माणमेव विवेशे"ति ; अत्र परमपुरुषात्मनः पुरुषो ब्रह्मा समुत्पन्न इति श्रुतः ; पुरुष–शब्दद्वयश्रवणान्मृत्युभयवत्त्वश्रवणाच्च । श्वेताश्वतरे "वेदाहमेतम्पुरुषं महान्तं" "महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः" यो ब्रह्माणं विदधाति पूर्व"मिति च हिरण्यगर्भोत्पत्तिरवगम्यते। तथा महोपनिषदि "व्यक्तः शूलपाणिः पुरुषोऽजायत" । सुबालोपनिषदि "ललाटात्क्रोधजो रुद्रोऽजायत" बृहदारण्यके, "ब्रह्म वा इदमेक एवाग्र आसीत् तदेकं सन्नव्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान" इति । तथा शतपथे "अभूद्वा इदं प्रतिष्ठे"त्यारभ्य 'भूतानां

* भावप्रकाशिका *

वचनाभावात् "पुरस्तादैन्द्रावयवं भक्षयति वषट्कर्तुः प्रथमभक्षः हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसिभक्षान् भक्षयन्ति' इत्यादीनां भक्षानुवादेन गुणान्तरविधिपरतया भक्षविधानाभावादिति पूर्वपक्षं कृत्वा भक्षस्य प्राप्त्यभावेन तदनुवादेन गुणान्तरविधानायोगादितीमानि वचनानि गुणविशिष्टभक्ष्यविधिपराणीति सिद्धान्तितम्। वचनानि त्वपूर्वत्वादिति। 'विधिस्तु धारणे पूर्वत्वा'दिति उपरि हि देवेभ्यो धारयतीति जीवदाग्निहोत्रे समिध उपरिधारणमाचारप्राप्तमनूद्यते . लोके ह्यभ्यर्हितं हि वस्तु आचारादाच्छाद्यैव नीयमानं दृष्टमिति उपरिधारणमनूद्यते । अत एव हि शब्दोप्युपपद्यत इति पूर्वपक्षे समिध उपर्याच्छादनासमर्थतया उपरिधारणस्याचारप्राप्तत्वाभावाद्धिशब्दस्वारस्यपरित्यागेनाप्राप्तमुपरिधारणं विधीयत इति सिद्धान्तितम्। ( तदेकं सन्नव्यभवदिति ) तदेकं, ब्रह्मक्षत्रादिपरिपालयित्रादि शून्यं सत्, नव्यभवत्. विभूतिमान्नाभूत्. कर्मणेन पर्याप्तमासीदिति यावत्, श्रेयोरूपम्, प्रशस्तरूपं, अत्यसृजत, अतिशयेन तमसृजत, देवत्रा देवेष्वित्यर्थः "देवमनुष्यपुरुषेति" सप्तम्यर्थे त्राप्रत्ययः।

* श्रुतप्रकाशिका *

च प्रजापतिःसम्वत्सरायादीक्षिपत । भूतनाम्पतिर्गृहपतिरासीदुषाः पत्नी"त्यादिकमुक्त्वा "भूतानाम्पतिः सम्वत्सर उषसि रेतोऽसिञ्चत्। सम्वत्सरे कुमारोऽजायत सोऽरोदीत्। तं प्रजापतिरब्रवीत्। कुमार! किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीत् । अनपहतपाप्मा वा अहमस्मि अविहितनामानाममेधेहि पाप्मनोपहत्या इति तमब्रवीत् रुद्रोऽसीति तदस्य तन्नामाऽकरोत् अग्निस्तद्रूपमभवत्" इत्यारभ्य शर्वपशुपतिप्रभृति नामकरणं पृथिवीसलिलादिमूर्तिप्रदानं चोक्तम्, रुद्रवाक्यादेवानपहतपाप्मत्वं च तस्य श्रुतम्। तत्रैव च शतरुद्रीयब्राह्मणे "प्रजापतेर्विस्रस्ता देवता उदक्रामन् तमेक एव देवो न जहान् महामन्युरेव सोऽस्मिन्नन्तर्हितो ऽनिच्छन् सोऽरोदीत् तस्य यान्यश्रूणि प्रास्कन्दन् तान्यस्मिन्मन्यौ प्रातिष्ठन् स एष शतशीर्षा रुद्रः समभवदिति ; अत्र प्रजापतेः क्रुद्धस्य क्रोधजाश्रुसम्भवत्वं मन्युरूपस्य रुद्रस्याभिहितम्; क्रोधस्य चाश्रुहेतुत्वं प्रसिद्धम् "तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः। दीप्ताभ्यामिव दीपाभ्यां सार्चिस्स्नेहबिन्दव" इति। तथा शैलालिब्राह्मणे, "प्रजापतिर्वै प्रजाकामः स तपोऽतप्यते"त्यारभ्य अग्निवाय्वादित्यचन्द्राणामुत्पत्तिं तेषां रेतःस्कन्दनं चोक्त्वा "स प्रजापतिर्हिरण्मयं च सममकरोदिषुमात्रमूर्ध्वमेवं तिर्यञ्चन्तस्मिन् रेतःसमसिञ्चत्। तत उदतिष्ठत् सहस्राक्षः सहस्रपात्। तत्सहस्रेण प्रतिहिताभिस्स प्रजापतिं पितरमभ्यायच्छत्। तमब्रवीत् कथमभ्यायच्छसीति नाम मे कुर्वित्यब्रवीत्। न वा इदमविहितेन नाम्ना अन्नमत्स्यामि इति शर्वो वै त्वमित्यब्रवीत्। भव एवेति यद्भव" इत्यारभ्य भवशर्वादिनामकरणं सलिलादिमूर्त्तिप्रदानं चोक्त्वा "स एषोऽष्टनामाऽष्टधा विहितो महादेव" इति नामाष्टकमूर्त्यष्टकवत्त्वं प्रजापतिना विहितमिति स्पष्टतरमुक्तम्। तलवकारिणां कर्मारम्भे "इदं कर्म करिष्यामि तन्मे समृध्यतान्तन्म उपपद्यतां विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय मोत्राय कर्माधिपतये नम" इति ; तथा छन्दोगानां च कर्मारम्भे, "तस्मै विरूपाक्षाय दन्ताञ्जये तुद्राय विश्ववेदाय सहस्राक्षाय ब्रह्मणः पुत्राय नमः" इति च तन्त्रद्वयेन रुद्रस्य ब्रह्मपुत्रत्वमभिहितं, घृतसूक्ते च "यो ब्रह्मा ब्रह्मण उज्जहार प्राणैश्वरः कृत्तिवासाः

* भावप्रकाशिका *

क्षत्राणि, क्षत्रियानीत्यर्थः। कानि पुनस्तानि क्षत्राणीत्यत्राह (इन्द्रो वरुण-

* श्रुतप्रकाशिका *

पिनाकी"ति ब्रह्मण उद्भूतत्वं रुद्रस्योक्तम्, उज्जाहार– उद्भूबेत्यर्थः । अतो हिरण्यगर्भादीनां कार्यत्वावगमेन तद्वाचिशब्दानामयोग्यार्थत्वान्नारायण एव सदादिशब्दाः पर्यवस्यन्ति । ननु "हिरण्यगर्भः समवर्त्तताग्रे" "न सन्न चासच्छिव एव केवलः" "एको ह वै नारायण आसीत्" "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते" इति । त्रयाणामपि देवतानां कारणत्वकार्यत्वयोरविशेषेण श्रवणात्, अयोग्यत्वशङ्कायाः त्रिष्वपि तुल्यत्वात् जन्मन ऐच्छिकत्वेनायोग्यत्वपरिहारस्य त्रिष्वपि सुवचत्वात्कारणैकत्वावधारणस्यानुरोद्धव्यात्वाद्रूढेरपरित्यागस्य स्वतः प्राप्तत्वाच्च, त्रयाणामप्यैक्याश्रयणेन परमकारणत्वमभ्युगन्तव्यम् . नैवम्, त्रयाणामविशेषेण कार्यत्वश्रवणाभावादेव त्रिष्वप्ययोग्यत्वशङ्कायाः तुल्यत्वाभावात्, तस्य हि प्रकरणस्योपक्रमे "कश्च ध्येय" इति ध्येयविधिपरत्वमवगतमिति कार्यत्वमनूद्यते । अनुवादश्च प्रापकानुरोधेन स्यात्, लक्ष्मीपतिविषय उत्तरनारायणानुवाके भगवदुत्पत्तिरवताररूपा श्रूयत इत्यस्मिन् वाक्ये भगवदवतारानुवादः । ब्रह्मशिवयोस्त्ववतारश्रुत्यभावादिन्द्रवरुणादितुल्योत्पत्तिरनूद्यते इति नाविशेषेण कार्यत्वश्रवणम् । किञ्चोत्पत्तिश्चेत्कर्माधीनदेहसङ्गतिरित्युत्सर्गसिद्धम्, तच्च ब्रह्मशिवयोरनपोदितम्. नारायणे त्ववतारश्रुत्याऽपोदितम् । 'प्रजापतिर्देवानसृजत ते पाप्मना सन्धिता अजायन्ते"ति प्रजापतिसृष्टदेवानां सामान्येन पाप्मसम्बन्धः श्रुतः । विशेषतो रुद्रस्यानपहतपाप्मत्वं शतपथे स्ववाक्यादेव दर्शितम् । "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारारायणः "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम एष हि सर्वेभ्यः पाप्मभ्यः उदितः" "अपहतपाप्मा विजरो विमृत्युः" "स उत्तमः पुरुष" इति पुण्डरीकाक्षस्याकर्मकृतविग्रहवत्त्वं चोक्तम् । एवं वैषम्यस्य स्फुटत्वेन उत्पत्तिसाम्यशङ्काया दूरविध्वस्ततया योग्यार्थनारायणादिशब्दानामिवायोग्यार्थब्रह्मशिवादिशब्दानां रूढिपरित्यागाभावोऽनुपपन्नः । यदि रुद्रस्य परमकारणत्वं तदुत्पत्तेरवताररूपत्वं चास्तिकत्तमैर्भवद्भिरुच्यत तर्हि भवतामिन्द्रे कः प्रद्वेषः "इन्द्रो मायाभिः पुरुरूप ईयते" "ब्रह्मविष्णुरुद्रास्ते सर्वे सम्प्रसूयन्त" इति कार्यत्वकारणत्वे हि ब्रह्मशिवयोरिवेन्द्रस्यापि श्रूयेते । अत इन्द्रस्य परमकारणत्वं, तदुत्पत्तेः परमकारणभूतेन्द्रावताररूपत्वं, चाश्रित्येन्द्रशब्दस्य योग्यार्थत्वं किमिति नाभ्युपगम्यते ।

* श्रुतप्रकाशिका *

"प्रजापतिरिन्द्रमसृजते"ति तस्य सृज्यत्वश्रवणात्त्वाष्ट्रवधरूपब्रह्महत्याऽभिभूतत्वश्रवणात् तत्प्रायश्चितादिश्रवणाच्चेति चेत् . इन्द्रस्य जन्मवृत्तापकर्षयोगः कृष्णस्य वसुदेवगृहजन्म कालयवननिमित्तपलायनवल्लीला किन्न स्यात्। इन्द्रस्य परमकारणवस्त्वैक्ये सति उत्तरनारायणप्रतिपाद्यत्वम्, तस्मिन्सति जन्मवृत्तापकर्षसंयोगस्य लीलात्वम्, तस्मिन्सति इन्द्रशब्दस्य योग्यार्थत्वम्, तस्मिन्सति इन्द्रस्य परमकारणवस्त्वैक्यमिति चक्रकाश्रयप्रसङ्गात् । एकस्मिन्नेव वाक्ये सोमवरुणयमादिवत् सृज्यत्वप्रतीतेश्च नैवमिति चेत् . तर्हि रुद्रस्य परमकारणवस्त्वैक्ये सति उत्तरनारायणप्रतिपाद्यान्तर्भावः, तेन जन्मकर्मापकर्षस्य लीलात्वम्, तेन शिवादिशब्दानां योग्यार्थत्वं तेन परमकारणवस्त्वैक्यमिति चक्रकप्रसङ्गात्, सोमवरुणादिवत्तस्मिन्नेव वाक्ये सृज्यत्वसंहार्यत्वश्रवणाच्च शिवादिशब्दानामयोग्यार्थत्वं दुष्परिहरम्। भगवज्जन्मनोऽवताररूपत्वे तु न चक्रकप्रसङ्गः, 'तस्माद्विराडजायते'ति कारणतयोक्तस्य परमपुरुषस्य महापुरुषशब्देनोत्तरनारायणे प्रत्यभिज्ञातस्य 'लक्ष्मीपतेरजायमान' इत्यादिवाक्येनावतारस्य प्रतिपादितत्वात्कार्यकारणविषयशिवादिशब्दानां भिन्नार्थत्वान्नायोग्यार्थत्वमिति चेत् . किङ्कार्यविषयशिवादिशब्दानां प्रसिद्धरुद्रपरत्व ? मुत कारणविषयाणाम् ? । प्रथमे प्रसिद्धरुद्रस्याकाशादिवत्सृज्यत्वात्तद्व्यतिरिक्तविषयशिवादिशब्दानां योग्यार्थनारायणपदोपस्थापितविशेषपरत्वमवर्जनीयम्, कारणविषयशिवादिशब्दाः प्रसिद्धरुद्रपराः, कार्यविषयास्तु तदतिरिक्तविषया इति चेत्. कारणेन्द्रशब्दः प्रसिद्धेन्द्रपरः कार्यविषयेन्दुशब्दस्तदतिरिक्तपर इति किन्न स्यात् । वृत्रवधादिकर्तरि इन्द्रशब्दव्युत्पत्तिरिति चेत् . त्र्यक्षस्शूलपाण्यादिपर्यायत्वेन शिवादिशब्दव्युत्पत्तेः, "त्र्यक्षः शूलपाणिः पुरुषोऽजायत" उमापतिः पशुपतिश्शितिकण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिव" इति शूलपाण्यादिशब्दानां कार्यविषयतया प्रयोगाच्च। कारणविषयशिवादिशब्दानां प्रसिद्धरुद्रपरत्वमयुक्तम्, कारणविषयाणां नारायणादिशब्दानां प्रसिद्धविष्णुपरत्वं तु युक्तम् . अवतीर्णस्य च धर्म्यैक्ये प्रमाणस्य दर्शितत्वादर्थभेदाभावात्। अर्थभेदे सति हि कार्यकारणविषयनारायणादिपरेषु कस्य प्रसिद्धार्थता, कस्य तदतिरिक्तविषयतेति विचारसम्भवः । कार्यकारणभूतरुद्रधर्म्यैक्ये त्विन्द्रधर्म्यैक्य

[1]'आनन्दो ब्रह्मेत्ये'वमादिः। न च व्युत्पत्तिसिद्धपरिनिष्प-

* श्रुतप्रकाशिका *

इव चक्रकापत्तिरवर्जनीयेत्युक्तम्, अतः कार्यकारणविषयशिवादिशब्दानामर्थभेदाङ्गीकारेण कारणविषयशिवादिशब्दाः प्रसिद्धेतरार्थविषया इति नारायणमेवाभिदधति, नारायणादिशब्दानां प्रसिद्धार्थस्य योग्यतयाऽर्थभेदाभावाद्धर्म्यैक्यस्य प्रमाणप्रतिपन्नत्वाच्च, अतो महोपनिषत्प्रतिपादिते नारायण एव सद्ब्रह्मादिशब्दाः पर्यवस्यन्तीति भावः। अथ कारणतया निर्दिष्टस्य ब्रह्मणः शङ्कितदोषव्यावर्तकं शोधकवाक्यमाह— (सत्यमिति) उक्तगुणविभूत्यादिविशिष्टस्य ब्रह्मणः पुरुषार्थत्वज्ञापनायाह (आनन्दो ब्रह्मेति) आनन्दत्वं ह्यनुकूलत्वम्, अनुकूलत्वं च स्वत इष्टत्वम्, तदपीष्टसाधनत्वनिवर्त्यप्रातिकूल्यत्वाभ्यां विनाऽपीष्टत्वम्, तच्च विषयगतम्। तद्विषयज्ञानस्याप्यनुकूलत्वादानन्दत्वम्। भगवतो मुक्तानां निरतिशयभोग्यत्वेनानुकूलतया स्वरूपतो धर्मतश्चानन्दत्वम्, स्वविषयज्ञानस्य स्वरूपस्य च स्वात्मानं प्रत्यनुकूलत्वाचानन्दत्वम्, इत्येवमादिकौपनिषदः पदसमुदाय इति पूर्वेणान्वयः। एवमन्वितेषु वाक्येषु प्रस्तुतपुरुषार्थत्वोपयोगित्वेन

* भावप्रकाशिका *

इत्यादि) शङ्के (कार्यकारणविषयेति) ननु ब्रह्मणः कथमानन्दरूपत्वम्, आनन्दो हि धर्मभूतज्ञानावस्थाविशेष इत्याशङ्क्याह (आनन्दत्वं हीति) (निवर्त्यप्रातिकूल्येति) मुक्तानां स्वस्य चानुकूलमिति अनिष्टनिवर्तकेत्यर्थः (भगवतो मुक्तानामिति) यो यस्यानुकूलः स तस्यानन्दः, ततश्च सविभूतिकं ब्रह्म मुक्तानां स्वस्य चानन्द इत्यर्थः। ननु मुक्तान् प्रत्यानन्दत्वमस्तु, ब्रह्मणो नैतावता तत्प्रतिपादकवाक्यस्य पुरुषार्थपर्यवसायित्वम् अस्मदानन्दरूपत्वाभावादिति चेन्न, अस्मान् प्रत्यप्यस्त्येवानुकूलत्वम्, उपायदशाप्रभृतिभगवज्ज्ञानं प्रीतिरूपमित्युक्तेः, वक्ष्यति चापरोक्षरूपस्यापि सुखरूपत्वादित्यादि, परन्तु मुक्तिदशायां निरतिशयानुकूलत्वम्, अधुना नेत्येतावान्विशेषः। ननु सर्ववस्तूनामपि मुक्तान् प्रत्यनुकूलतया आनन्दत्वमस्तीति भगवतः को विशेष इति चेन्न, सत्यपि सर्वेषामानन्दत्वे भगवति निरतिशयानुकूलत्वसत्वेन विशेषोपपत्तेः (स्वविषयज्ञानस्य स्वरूपस्य चेति) इदमुपलक्षणम्,

---

१ तै. भृ. ६ अनु॥

न्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वं स्वविषयावबोधपर्य्यवसायित्वात्सर्वप्रमाणानाम् ।

* श्रुतप्रकाशिका *

कोऽर्थः प्रतिपन्नः । स च किमापातप्रतिपन्नः ? उत तात्पर्यभूमिः ? । न प्रथमः तस्य तात्त्विकत्वनिश्चयायोगात् । न द्वितीयः प्रवृत्तिनिवृत्त्यभावेन तदयोगादिति शङ्कायां—प्रवृत्तिनिवृत्त्यन्वयः प्रामाण्यव्यापकः. अतस्तद्व्याप्यं प्रामाण्यं तद्विरहे न सिध्यतीति किमुच्यते । किं वा प्रवृत्तिनिवृत्त्यन्वयः प्रयोजनव्यापकः, प्रयोजनञ्च प्रामाण्यव्यापकमिति प्रवृत्तिनिवृत्त्यन्वयविरहे तद्व्याप्यप्रयोजनाभावात्तद्व्याप्यं प्रामाण्यं न सिध्यतीत्युच्यत इति विकल्पमभिप्रेत्य प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वन्नास्तीत्याह ( नचेति ) व्युत्पत्तिसिद्धेति प्रथमसूत्रार्थानुवादः । सिद्धवस्तुनो पुरुषार्थत्वान्न शास्त्रं प्रतिपादयितुं शक्नोति । प्रतिपन्नेऽपि न तत्र तात्पर्यम्, सिद्धे व्युत्पत्त्यभावादिति न वाच्यं, सिद्धे वस्तुनि व्युत्पत्त्युपपादनादिति भावः, प्रमाणान्तरगोचरत्वप्रयुक्तान्यपरत्वशङ्काव्युदासाय उदाहृतकारणवाक्यप्रतिपन्नमर्थमाह ( अखिलेति ) शोधकवाक्यप्रतिपन्नं कारणवाक्यैश्च सिद्धमर्थमाह ( अशेषेति ) साङ्ख्याभिमतप्रकृतिपुरुषपरत्वं दुर्वचमिति भावः । पुरुषार्थपरत्वाभावादन्यपरत्वव्युदासायाह ( आनन्दस्वरूपेति ) अन्यपरत्वं तात्पर्याभावः— ब्रह्मणि प्रामाण्याभाव इत्यर्थः । प्रवृत्तिनिवृत्त्यन्वयविरहे कथं प्रामाण्यमित्यत्राह ( स्वविषयेति ) प्रमाणानि हि स्वविषयावबोधे पर्यवस्यन्ति, न तु प्रवृत्तिनिवृत्त्योरित्यर्थः । अथ प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजन-

* भावप्रकाशिका *

विभूतिगुणयोश्चेत्यपि द्रष्टव्यम् ( प्रवृत्तिनिवृत्त्यन्वयः प्रामाण्यव्यापक इति ) किं प्रयोजनान्तरपर्यवसायित्वसत्वेपि प्रवृत्तिनिवृत्तिरूपप्रयोजनान्तरपर्यवसायित्वस्य प्रामाण्यव्यापकत्वात् प्रवृत्तिनिवृत्तिप्रयोजनाभावात् न प्रामाण्यमित्य-

न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः, प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्, पुरुषार्थान्वयप्रतीतेः। तथा स्वरू-

* श्रुतप्रकाशिका *

व्यापकत्वमभ्युपगम्य प्रयोजनस्य प्रामाण्यव्यापकत्वाभावमाह (न च प्रयोजनेति) तदुपपादयति (-प्रयोजनं हीति) हिशब्दो हेतौ। यद्वा प्रयोजनस्य प्रामाण्यव्यापकत्वाभावप्रसिद्धिर्हिशब्दाभिप्रेता. यथा तन्त्रटीकायाम्-- "न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजन"मिति सुवर्णदर्शनता कल्प्येतेति. तथा हेतुत्वमर्थसिद्धम्. प्रयोजनव्यापकत्वं प्रवृत्तिनिवृत्त्यन्वयस्यास्तु, तेन तन्निवृत्तौ प्रयोजनमेव निवर्तते, न तु प्रामाण्यम्, प्रयोजनस्य प्रामाण्यव्यापकत्वाभावादित्यर्थः। न चेत्यत्र चशब्दो व्यापकद्वयनिषेधसमुच्चये। यथा प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वमयुक्तं तथा प्रयोजनस्य च प्रामाण्यव्यापकत्वमयुक्तमित्यर्थः। प्रत्यक्षादिषु प्रयोजनस्य प्रामाण्यव्यापकत्वाभावेऽपि शास्त्रे प्रयोजनस्य प्रामाण्यव्यापकत्वमस्तीति शङ्कायां प्रयोजनव्याप्यत्वं शास्त्रप्रामाण्यस्यास्तु, तथापि प्रयोजनस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्याह (न च प्रवृत्तीति) वाक्यस्येत्यध्याहारः। कुत इत्यत्राह (पुरुषार्थान्वयप्रतीतेरिति) इदं पक्षविषयम्। प्रवृत्तिनिवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयप्रतीतेरित्यर्थः। न

* भावप्रकाशिका *

भिप्रायः। किंवा प्रवृत्तिनिवृत्त्यभावे प्रयोजनपर्यवसायित्वस्यैवाभावात्तस्य च प्रामाण्यव्यापकत्वात् तदभावे प्रामाण्याभाव इति विकल्पद्वयार्थः। अत्र केचित्, प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वमिति भाष्ये द्वावर्थौ प्रतीयेते, प्रवृत्तिनिवृत्ती एव प्रयोजने, प्रयोजनाभावच्च न प्रामाण्यमिति। तत्र प्रयोजनाभावात् न प्रामाण्यमित्यंशं स्वविषयावबोधित्वादित्यादिना दूषयित्वा प्रवृत्तिनिवृत्त्योरेव प्रयोजनत्वमित्यमुमंशं दूषयति। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वमित्यपि भाष्यं योजयन्ति। (चशब्दो व्यापकद्वयनिषेधसमुच्चये इति) न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिरित्यत्र चकारो भिन्नक्रमः, प्रमाणप्रवृत्तिः प्रयोजनानुगुणा च न, प्रवृत्तिनिवृत्त्यनुगुणा च न भवतीति भाष्यार्थं

पपरेष्वपि 'पुत्रस्ते जातो नायं सर्पः' इत्यादिषु हर्षभय-
निवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ॥

—( पूर्वपक्षः ):—

अत्राह– न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति.
प्रवृत्तिनिवृत्त्यन्वयविरहिणश्शास्त्रस्यानर्थक्यात्। यद्यपि

* श्रुतप्रकाशिका *

चेत्यत्र चशब्दो व्याप्यत्वनिषेधद्वयसमुच्चये । यथा प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्ति तथा प्रयोजनस्यापि प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्यर्थः । प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वाभावः स्वविषयावबोधेत्यादिना सिद्धः । सपक्षत्वाभिमते लौकिकेऽपि सिद्धपरवाक्ये पुरुषार्थान्वयं दर्शयति ( तथेति ) यथा प्रवृत्तिपरत्वं निवृत्तिपरत्वं वा न प्रयोजनपर्यवसायित्वम्, किन्तु पुरुषार्थपरत्वमेव, तथा प्रवृत्तिनिवृत्तिपरत्वं सिद्धवस्तुपरत्वं वा न प्रयोजनपर्यवसायित्वम्, अपि तु साध्येन वा सिद्धेन वा पुरुषार्थेनान्वितत्वमेव वाक्यस्य प्रयोजनपर्यवसायित्वमित्युक्तं भवति, पुरुषार्थान्वयप्रतीतेरित्युक्तत्वात्; एवं सूत्राक्षरयोजनार्थं सङ्क्षेपेणार्थ उक्तः ॥ .... .... .... .... ....

अथ तात्पर्यार्थं वक्तुं पूर्वपक्षं विस्तरेणावतारयति ( अत्राहेति ) एतावत्यधिकरणार्थ उक्ते लब्धस्वरूप्यप्रसङ्गः पूर्वपक्ष्याहेत्यर्थः । ब्रह्मणः शास्त्रप्रतिपाद्यत्वाभावं प्रतिजानीते ( न वेदान्तेति ) सौत्रतच्छब्देन शास्त्रयोनित्वस्य परामृष्टत्वात्पूर्वपक्षिणा तदभावोऽपि प्रतिज्ञात इति हि ज्ञायते । प्रतिज्ञामुपपादयति ( प्रवृत्तिनिवृत्त्यन्वयविरहिण इति ) तदन्वयाभावे प्रति-

ॐ भावप्रकाशिका ॐ

इति भावः । ( व्याप्यत्वनिषेधद्वयसमुच्चय इति ) न प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वमित्यत्र चकारो भिन्नक्रमः, प्रयोजनशून्यत्वं नेत्यर्थः । चशब्देन प्रमाणशून्यत्वञ्च समुच्चीयते, ततश्च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रामाण्यशून्यत्वप्रयोजनशून्यत्वयोर्निषेधे प्रामाण्यप्रयोजनयोः प्रवृत्तिव्याप्यत्वनिषेधः फलिष्यति, एतदभिप्रायेण व्याप्यत्वनिषेधद्वयसमुच्चय इत्युक्तम्। (प्रवृत्तिपरत्वमिति) प्रवृत्तिनिवृत्तिपरत्वमात्रमेवेत्यर्थः, एवमुत्तरेष्वपि द्रष्टव्यम्, प्रत्येकं व्यभिचारादिति भावः।

प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्य्यवस्यन्ति, तथापि शास्त्रं प्रयोजनपर्यवसाय्येव। न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः। न च किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्, "अर्थार्थी राजकुलं गच्छेत् मन्दाग्निर्नाम्बु पिबेत्, स्वर्गकामो यजेत, न कलञ्जं भक्षयेत्" इत्येवमादिषु। यत्पुनः सिद्धवस्तुपरेष्वपि

* श्रुतप्रकाशिका *

पादनमेव न पूर्येतेति भावः। तथाच वार्त्तिकं "यावत् खलु प्रमातॄणां प्रवर्तननिवर्तने। शब्दा न कुर्वते तावन्न निरकाङ्क्षबोधनम्" ॥ इति। (शास्त्रस्येति) शासनाद्धि शास्त्रम्, शासनं च प्रवर्तननिवर्तनात्मकम्, तत्र वार्तिकं "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रं तूपपद्यते ॥" इति। पूर्वोक्तं प्रमाणानां स्वविषयावबोधित्वमाशङ्क्य तत्प्रमाणविशेषे व्यवस्थापयन् शास्त्रस्य प्रयोजनपर्यवसानावश्यम्भावमाह (यद्यपीति) तदुपपादयति (न हीति) न केवलमनुपलब्धिरेव, अनुपपत्तिरप्यस्तीत्याह (न किञ्चिदिति) किञ्चित्-स्वसम्बन्धिपरसम्बन्धि वा, अल्पं प्रभूतं वा, वाक्यप्रयोगादेर्यत्नसाध्यत्वात् यत्नस्य च प्रयोजनेन विनाऽनुपपन्नत्वादित्यर्थः। वाक्यानां प्रयोजनपर्यवसायित्वादेव हि पुनरुक्तेः प्रयोजनाभावात् दूषणत्वम्. निष्प्रयोजनवाक्यप्रयोगस्य-च्छ्रवणं वाऽनुपपन्नं स्यात्। ततः किं प्रस्तुतस्य प्रयोजनपर्यवसायिनां वाक्यानां प्रवृत्तिनिवृत्तिपरत्वस्य, सिद्धपरत्वेऽपि हि प्रयोजनपर्यवसायित्वमुपपद्यत इत्यत्राह (तच्चेति) प्रवृत्तिनिवृत्तिपरत्वेन लोकवेदयोः प्रयोगं दर्शयति (अर्थार्थीत्यादिना) प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि प्रयोजनपरं वाक्यं दृष्टमिति शङ्कायां सिद्धपरत्वेनोक्तं वाक्यं दूषयितुमनुवदति (यत्पुनरिति) विकल्पयति

॥ भावप्रकाशिका ॥

ब्रह्मप्रतिपादनस्य सिद्धत्वेन तत्प्रतिक्षेपासम्भवादाह (प्रतिपादनमेव

'पुत्रस्ते जातो नायं सर्पो रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्। तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः ? उत तज्ज्ञानात् ? इति विवेचनीयम्। सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्, तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्य्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्, तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्य्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥ अत्र कश्चिदाह— वेदान्तवाक्यान्यपि कार्य्यपरतयैव

* श्रुतप्रकाशिका *

( तत्रेति ) प्रथमकोट्यनुपपत्त्या द्वितीयशिरोऽभ्युपगमं शङ्कते ( सतोऽपीति ) दूषयति ( तर्हीति ) तस्मादिति पूर्वपक्षोपसंहारः ॥ जरन्मायावादिपक्षौ द्वौ विद्येते, तत्रैको निष्प्रपञ्चीकरणनियोगवादः, अन्यो ध्याननियोगवादः, एतन्मतद्वयं ध्याननियोगवादिमुखेन शाङ्करादिमतं च दूषितवन्तमधिकरणपूर्वपक्षिणं प्रति सिद्धान्तं वक्ष्यन्निदानीं निष्प्रपञ्चीकरणनियोगवादं प्रस्तौति ( अत्र कश्चिदाहेति ) तं प्रतिजानीते ( वेदान्तेति ) कार्य्यपरस्य वाक्यस्य

* भावप्रकाशिका *

न पूर्यतेति ) प्रामाण्यं न निर्वहतीति भावः। भाष्ये— ज्ञानादेव पुरुषार्थः सिद्ध्यतीत्यर्थपरत्वाभावेनेति। ननु इयं मर्यादा प्रवृत्तिपरवाक्येपि सुवचा, तत्रापि स्वरूपसत इष्टसाधनत्वस्याभावेपि प्रवृत्तिसम्भवात् विषयसद्भावेन प्रमाणं स्यादिति चेन्न, बहुवित्तव्ययायाससाध्येपि फले कर्मणि प्रवर्त्तकस्य वेदस्य प्रतारकत्वप्रसङ्गेन तत्रेष्टसाधनत्वस्य तात्त्विकत्वस्यैव वक्तव्यत्वात्। प्रकृते स्वतः फलहर्षजनकत्वेन तावतापि सफलस्य सिद्धवाक्यस्य स्वार्थसत्यत्वे तात्पर्याभावादिति

ब्रह्मणि प्रमाणभावमनुभवन्ति । कथं ? निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्मानाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चप्रविलयद्वारेण विधिविषयत्वमिति । कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः ? [1]"न दृष्टेर्द्रष्टारं पश्येः । न मतेर्मन्तारं मन्वीथाः" इत्यादिः ।

* श्रुतप्रकाशिका *

सिद्धवस्तुनि प्रमाणभावः कथमित्यभिप्रयन्नाह ( कथमिति ) उत्तरमाह ( निष्प्रपञ्चमिति ) कुर्यादित्यत्रेतिशब्दः प्रकारपरः । निष्प्रपञ्चीकरणविधिना ब्रह्मणः कोऽन्वय इत्यपेक्षायामन्वयमाह ( ब्रह्मण इति ) विषयत्वेनान्वय इत्यर्थः । सिद्धस्वरूपस्य ब्रह्मणो विधिविषयत्वानुपपत्तिशङ्कापरिहारार्थं प्रपञ्चप्रविलयद्वारेणेत्युक्तम् । अत्र सिद्धस्य साध्यत्वमाकारभेदादविरुद्धमिति गर्भितम् । इह त्वितिशब्दः समाप्तौ , कथमित्यस्योत्तरत्वेन इत्थमिति वार्थः । विधिं दर्शयितुमाकाङ्क्षामुत्थापयति ( कोऽसाविति ) कतिपयनाशेऽप्यशक्तस्य विश्वप्रपञ्चनाशनविधिरशक्य इत्यभिप्रायः । विधिः— विधिवाक्यम्. आविधिकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपो विलयः शक्य इत्यभिप्रायेण वाक्यमुपादत्ते ( न दृष्टेरिति ) दृष्टिव्यतिरिक्तत्वाविशेषाज्ज्ञेयनिषेधोऽपि फलितः , आदि-

* भावप्रकाशिका *

भावः । ( ध्याननियोगवादिमुखेन शाङ्करादिमतं चेति ) अयं भावः , येन निष्प्रपञ्चीकरणनियोगोऽस्मिंश्चाप्यधिकरणे ध्याननियोगश्च दूषितः , तन्मतमेव ध्याननियोगवादिमुखेनास्मिन्नधिकरणे पूर्वपक्षिणा दूष्यत इति । ( विधिरशक्य-इत्यभिप्राय इति ) विधिवाक्यमशक्यार्थकमित्यभिप्रायः । उत्तरत्र विधिशब्दस्य विधिवाक्यमिति व्याख्यास्यमानत्वात् विधिशब्दस्य नियोगार्थत्वभ्रान्तिं व्युदस्यति ( विधिः— विधिवाक्यमिति ) न च नियोगपरत्वे को दोष इति वाच्यम् , न दृष्टेर्द्रष्टारमिति विधिवाक्यप्रदर्शकोत्तरवाक्याननुगुणत्वप्रसङ्गात् । ( आवि-

१ बृ. ५-अ. ४-ब्रा २-वा ॥

द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्य्यादित्यर्थः । स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धमिति ॥ तदयुक्तम्– नियोगवाक्यार्थवादिना हि नियोगो नियोज्यविशेषणं विषयः करणमितिकर्त्तव्यता

* श्रुतप्रकाशिका *

शब्दोपात्तैः श्रुत्यन्तरैः कण्ठोक्तश्च , आत्यन्तिकनिवृत्तेरसिद्धत्वाद्विधेयत्वं च युक्तमिति भावः । शून्यशब्देनात्यन्तिकनिवृत्तिर्विवक्षिता । मात्रशब्देन द्रष्टृदृश्यकल्पकाविद्यानिवृत्तिः, तत एव ह्यात्यन्तिकत्वसिद्धिः, सिद्धस्य ब्रह्मणो विधेयत्वं कथमिति शङ्कायां प्रपञ्चप्रविलयद्वारेणेति पूर्वं विवक्षितमर्थं विस्तरेणाह ( स्वतः सिद्धस्यापीति ) यद्वा पूर्वं भावार्थव्यतिरिक्तस्य विधिविषयत्वानुपपत्तिः परिहृता , इह तु स्वतःसिद्धस्येत्यादिना प्रपञ्चविलयद्वारेण सिद्धरूपस्यापि विधिविषयत्वानुपपत्तिः परिहृतेति भिदा । भावार्थादन्यत्वं स्वर्गादेरप्यस्ति , न तस्य सिद्धत्वम्, साध्यं हि तत् ॥ अधिकरणपूर्वपक्षी मीमांसकस्तं दूषयति ( तदयुक्तमिति ) कथमित्यत्राह ( नियोगेति ) विशिंषन् विषय इति व्युत्पत्त्या विषयो यागादिः , कृतिसाध्यापूर्वप्रतिपत्तिवेलायां कृत्यवच्छेदकत्वेन सविषयः ,

* भावप्रकाशिका *

धिकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपो विलय इति ) बुध्या निवृत्तिः बुद्धिनिवृत्तिरित्यर्थः । निष्प्रपञ्चतारूपेण नाध्यस्तत्वमित्युत्तरभाष्यानुगुण्यात् , ( आदिशब्दोपात्तैरिति ) 'उदरमन्तरं कुरुते ' नेह नानास्ति ' इत्यादिश्रुत्यन्तरैरित्यर्थः । ननु भावार्थान्यत्वप्रयुक्तशङ्कायामेव साध्यत्वप्रयुक्तशङ्काप्यन्तर्भवति । भावार्थान्यत्वस्यासाध्यत्वनियतत्वादित्याशङ्क्याह ( भावार्थादन्यत्वं स्वर्गादेरप्यस्तीति ) विशिंषन् हि विषय इति पाठस्समीचीनः । विषयशब्दस्य विपूर्वात् सिनोतेर्निष्पन्नत्वात् । ( कृतिसाध्यापूर्वप्रतिपत्तिवेलायामिति ) अपूर्वस्याक्रियारूपत्वेन साक्षात्कृतिसाध्यत्वाभावात् यागद्वारा कृतिसाध्यमपूर्वमिति प्रतीयते । ततश्च 'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ' इत्युक्तरीत्या यागविषयकृतिसाध्यमपूर्वमित्यपूर्वप्रतीतौ अपूर्वकृतिविषयत्वेन यागस्य भानात् अपूर्वं प्रति यागस्य

प्रयोक्ता च वक्तव्याः । तत्र हि नियोज्यविशेषणमनुपादेयम् । तच्च निमित्तं फलमिति द्विधा । अत्र किं नियोज्यविशेषणम्? तच्च किं निमित्तं फलं वेति विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभवश्चेन्नियोज्यविशेषणम्; तर्हि न तन्निमित्तम्, जीवनादिवत्तस्यासिद्धत्वात् । निमित्तत्वे

* श्रुतप्रकाशिका *

स एव कार्यनिष्पत्तौ करणम् । वक्तव्याः—न त्वया वक्तुं शक्यमिति भावः । प्रथमं नियोज्यविशेषणं दूषयितुमाह ( तत्रेति ) तत्र—तेषु वक्तव्येषु । नियोज्यविशेषणमनुपादेयम्—उपादेयम्, विधेयम्, तद्व्यतिरिक्तमित्यर्थः । विकल्प्य दूषयितुं विशेषणद्वैविध्यमाह ( तच्चेति ) ततः किमित्यत्राह ( अत्रेति ) अत्र—निष्प्रपञ्चीकरणनियोगे । नियोज्यविशेषणस्वरूपं शङ्कते ( ब्रह्मस्वरूपेति ) निमित्ततां दूषयति ( तर्हीति ) कुत इत्यत्राह ( जीवनादिवदिति ) 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र जीवनस्य सिद्धत्वाद्यथा निमित्तत्वं न तथेत्यर्थः । पुत्रजन्मादिवद्यदा सिध्येत्तदा निमित्तं भविष्यतीत्यत्राह ( निमित्तत्वे चेति ) अपवर्गोत्तर-

* भावप्रकाशिका *

विषयत्वम्, तत्र च फलं प्रत्यकरणस्य तत्कामकृतिविषयत्वासम्भवात्, यागस्यापूर्वफले प्रतिकरणत्वमपि अभिधानापर्यवसानलक्षणोपादानप्रमाणतोऽवगम्यते । नचाग्नेयादियागस्य कथं फलापूर्वे प्रतिकरणत्वं फलापूर्वयोरक्रियारूपत्वादिति शङ्क्यम्, तयोरक्रियारूपत्वेपि तदुद्देशप्रवृत्तकृतेः क्रियारूपत्वेन तत्र करणत्वोपपत्तेः, यदेव फलापूर्वभावनयोः कारणत्वं तदेव फलापूर्वकरणत्वमिति व्यपदिश्यते. न च प्रयत्नरूपभावनानिष्पाद्यस्य यागस्य कथं निष्पादिकायां भावनायां करणत्वमिति वाच्यम्; भावनायाः फलशिरस्कत्वस्य यागाधीनत्वात् तथा व्यवहारात् । नहि तस्या भावनाया यागविषयत्वाभावे फलशिरस्कत्वसिद्धिः, अतस्तद्रूपेण करणत्वात् फलभावनाकरणत्वमिति व्यवहारः । नच फलभावनाकरणस्य कथमपूर्वभावनाकरणत्वमितिवाच्यम्; तयोरेकलोलीभावनापूर्वभावनाया एव फलभावनात्वोपपत्तेरिति द्रष्टव्यम् । ( पुत्रजन्मादिवद्यदा सिध्येदिति )

च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः। नापि फलम्, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्॥ कश्चात्र नियोगविषयः? ब्रह्मैवेति चेत्- न, तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च। निष्प्रपञ्चं ब्रह्म सा-

* श्रुतप्रकाशिका *

कालमपि नानुष्ठानप्रसङ्गः, यावन्निमित्तमनुष्ठाननियमाभावात्। परिकरशून्येषु तन्नियमाभावो दृष्टः, तस्मात्करणकलेवरविरहेण न तदानीमनुष्ठानमिति चेत्, हन्त स्वदूषणमेव स्वयमाविष्करोषि. तथाहि; सप्रपञ्चतयाऽनुभवस्य यथार्थानुभवरूपत्वाभावादपवर्गोत्तरभाव्येव याथार्थ्यानुभवः, तदानीं करणकलेवराभावेऽपि विषयानुष्ठानं शक्यं न वा? अशक्यत्वे विधेयत्वमेव न स्यात्, अतः शक्यमिति वक्तव्यम्, अतो निमित्तस्य नित्यत्वात् नैमित्तिकस्य नित्यं शक्यत्वाच्च नित्यं तदनुष्ठानप्रसङ्ग इति भावः। फलतया विशेषणत्वे दूषणमाह (नापीति) नियोगविषयानुपपत्तिं वक्तुमाह (कश्चेति) शङ्कते (ब्रह्मैवेति) दूषयति (नेति) हेतुमाह (तस्येति) अभव्यरूपत्वात्- असाध्यत्वात्। अभावार्थत्वाच्च-भावार्थाः कर्मशब्दाः, क्रियारूपत्वाभावादित्यर्थः। साध्यत्वं फलस्याप्यस्तीति

* भावप्रकाशिका *

अत्र केचित्- याथात्म्यानुभवस्य स्वरूपाभिन्नत्वात् निमित्तमस्त्वित्याशङ्क्याह, निमित्तत्वे चेत्यप्यवतारिकामाहुः। (भावार्थाः कर्मशब्दा इति) कर्मशब्दो वाचको येषां ते तथोक्ताः, कर्मशब्दवाच्या इत्यर्थः। केचित्तु- अभावार्थत्वाच्च क्रियारूपत्वाभावादित्यर्थः। भावार्थाः कर्मशब्दा इति पाठः, भावार्थाः कर्मशब्दा इत्येतद्भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतेति जैमिनिसूत्रोपादानम्. तस्य चायमर्थः,- भावो भावना सोऽर्थो येषां ते तथोक्ताः, क्रियावाचिन इत्यर्थः। कर्मशब्दाः-कर्म कृति, साध्यं यागः, तद्वाचिन इत्यर्थः। ततश्च ये भावनावचनास्सन्तः कर्मवचनाः, यजेतेत्यादयः तेभ्य एव क्रिया प्रतीयेत, अपूर्वं प्रतीयेतेत्यर्थः। ततश्च भावः भावना इत्यादिशब्दानां भावनाव-

ध्यमिति चेत्; साध्यत्वेऽपि फलत्वमेव । अभावार्थत्वान्न विधिविषयत्वम् । साध्यत्वं च कस्य ?। किं ब्रह्मणः ? उत

* श्रुतप्रकाशिका *

तद्व्यावर्त्तकं भावार्थत्वम् , तदुभयाभावादिति यावत् । निष्प्रपञ्चताकारेण साध्यत्वं शङ्कते ( निष्प्रपञ्चमिति ) प्रतिवदति ( साध्यत्वेऽपीति ) ( फलत्वमेवेति ) विषयत्वं चेत् फलव्यतिरिक्तत्वं स्यात् , फलव्यतिरिक्तत्वाभावाद्विषयत्वमयुक्तमिति तात्पर्यम् । हेत्वन्तरं कण्ठोक्त्या दर्शयन् विषयत्वं दूषयति ( अभावार्थत्वान्न विधिविषयत्वमिति ) विशिष्टस्य विषयत्वानुपपत्तिरुक्ता । अथ विशेष्यांशस्य विशेषणांशस्य च विषयत्वानुपपत्तिं वक्ष्यन् विकल्पयति ( साध्यत्वं चेति ) यद्वा, विशिष्टस्य साध्यत्वाभ्युपगमेन विषयत्वं दूषितम् , अथ विशिष्टस्य साध्यत्वं दूषयितुं विकल्पयति— साध्यत्वं चेति । विशिष्टस्य साध्यत्वानुपपत्तिर्हि विशेषणस्य विशेष्यस्य उभयस्य च साध्यत्वानुपपत्त्या स्यात्, तत्र उभयस्येति

* भावप्रकाशिका *

चनत्वमात्रमस्ति ; नच ते अपूर्वप्रत्यायकाः । कर्मवचनत्वमात्रञ्च याग इत्यादिशब्दानामप्यस्ति . न च ते अपूर्ववचनाः , अतो द्वयमपि प्रयोजकम् , ततश्च ब्रह्मशब्दस्य क्रियावाचिनोऽपूर्ववाचित्वाभावात् न ब्रह्मणो नियोगविषयत्वमिति जैमिनिसूत्रसम्मतिः प्रदृश्यत इत्याहुः । ( साध्यत्वं फलस्याप्यस्तीति ) असाध्यत्वमात्रे उपन्यस्ते साध्यत्वमात्रमेव विषयत्वप्रयोजकमिति शङ्का स्यात् , न च तद्युज्यते , स्वर्गादावतिप्रसक्तत्वात् , अतो द्वयमपि प्रयोजकमित्यर्थः । यद्यपि भावार्थत्वमात्रमेव विषयत्वप्रयोजकमिति शक्यतेऽभ्युपगन्तुम् , अत एव भाष्ये वक्ष्यति 'अभावार्थत्वान्न विधिविषयत्व'मिति । तथाप्यभावरूपत्वादित्युपक्रमात् वाक्यस्य न पाश्चात्येन भावरूपत्वादित्यनेन तद्वैयर्थ्यं सुवचम् । यथा अदृणां काण इत्यत्राक्ष्णोत्यस्येति भावः । ( हेत्वन्तरं कण्ठोक्त्येति ) अत्र साध्यत्वे विफलत्वमेव , अभावार्थत्वान्न विधिविषयत्वमिति एकग्रन्थोऽस्तु । ननु कण्ठतात्पर्याभ्यां हेतुद्वयपरत्वमित्यपि केचिद्योजयन्ति । अभावार्थत्वान्न विधिविषयत्वमिति पूर्वभाष्यानुसारेण साध्यत्वञ्च कस्येति भाष्यं विषयत्वनिराकरणपरतया व्याचष्टे ( विशिष्टस्य विषयत्वानुपपत्तिरुक्तेति ) साध्यत्वशब्दस्वारस्यपरित्यागे

प्रपञ्चनिवृत्तेः ?। न तावद्ब्रह्मणः, सिद्धत्वादनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः । न तर्हि ब्रह्मणः साध्यत्वम्। प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्-न, तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः, स च फलम् । अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रय-

* श्रुतप्रकाशिका *

विकल्पानुक्तिः शिरोद्वयेन तुल्यदूषणत्वात् । प्रथमं दूषयति ( न तावदिति ) कुत इत्यत्राह ( सिद्धत्वादनित्यत्वप्रसक्तेश्चेति ) सिद्धत्वान्न साध्यत्वम् , साध्यत्वाङ्गीकारे तु भावरूपत्वे सति साध्यत्वादनित्यत्वप्रसक्तेश्चेत्यर्थः । द्वितीयं शङ्कते ( अथेति ) दूषयति ( न तर्हीति ) प्रपञ्चनिवृत्तेस्साध्यत्वे ब्रह्मणः साध्यत्वाभावान्न विधिविषयत्वमित्यर्थः । प्रपञ्चनिवृत्तेर्विधिविषयत्वमाशङ्क्य दूषयति ( प्रपञ्चेत्यादिना ) तस्याः फलत्वमुपपादयति ( प्रपञ्चनिवृत्तिरेव हीति ) प्रपञ्चनिवृत्तिर्मोक्षोऽस्तु, ततः किं विषयत्वानुपपत्तेरित्यत्राह ( स चेति ) प्रपञ्चनिवृत्तेर्मोक्षरूपत्वान्मोक्षस्य च फलत्वात् फलभूताया न विषयत्वमित्यर्थः । दूषणान्तरमाह ( अस्य चेति ) अस्या इति वक्तव्येऽपि फलत्वविवक्षया अस्येत्युक्तिः । फलत्वं विषयत्वं चेत्याकारद्वयाभ्युपगमे प्रपञ्चनिवृत्तिः फलत्वान्नियोगसाध्या , विषयत्वात्प्रपञ्चनिवृत्त्या नियोगसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥

* भावप्रकाशिका *

कारणाभावात् व्यवहितसाध्यत्वनिराकरणपरतया व्याचष्टे ( यद्वेति ) ( आकारद्वयाभ्युपगम इति ) अयं भावः , निष्प्रपञ्चनियोगवादिनो हि द्वयी गतिः , प्रपञ्चनिवृत्तिः विषयः अपवर्गः फलमित्येका, उक्तञ्च शाङ्करभाष्ये , तन्मतोपन्यासो यथा , स्वर्गकामस्य यागोनुष्ठातव्य उपदिश्यते एवमपवर्गकामस्य प्रपञ्चविलयः , यथा च तमसि अवस्थितं घटादितत्त्वं बुभुत्समानेन तत्प्रत्यनीकं तमः प्रविलाप्यते तथा ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकः प्रपञ्चः प्रविलापयितव्य इति प्रपञ्चनिवृत्तिरेव फलं ज्ञानं विषय इति द्वितीया गतिः,

त्वम् ॥ अपिच– किं निवर्त्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा ? । मिथ्यारूपत्वे ज्ञाननिवर्त्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनम्, नियोगस्तु निवर्त्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्त्तक इति चेत्, तत्त्ववाक्यादेव जातमिति नियोगेन न प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य

* श्रुतप्रकाशिका *

निष्प्रपञ्चीकरणपक्षे मुखान्तरेण दूषणमाह ( अपि चेति ) यद्वा , नियोगविषयदूषणेनान्योन्याश्रयेण नियोगश्च दूषितो भवति, मुखान्तरेणापि नियोगं दूषयति– अपि चेति । दूषयितुं विकल्पयति ( किमिति ) प्रथमं दूषयति ( मिथ्येति ) साफल्यं शङ्कते ( नियोगस्त्विति ) दूषयति ( तदिति ) तत्त्ववाक्यात्--प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वपरवाक्यादित्यर्थः । नियोगस्य निष्फलत्वदूषणोक्त्या नियोज्यविशेषणं च दूषितं भवति, नियोगसाध्यफलस्यैव फलतया नियोज्यविशेषणत्वादिह तदयोगाच्च । दूषणान्तरमाह ( वाक्यार्थज्ञानादेवेत्यादिना ) पूर्वं विकल्पितशिरोद्वये द्वितीयं शिरो दूषयितुमाह ( प्रपञ्चस्येति )

* भावप्रकाशिका *

इदञ्च शाङ्करभाष्ये ‘ तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगस्स्यात् ’ इति । तत्र ज्ञानविषयनियोगपक्षे ज्ञानस्य मिथ्याभूतप्रपञ्चनिवृत्तौ नियोगद्वारकत्वासम्भवादिति दूषणस्य स्पष्टत्वात् प्रपञ्चनिवृत्तेरेव विषयत्वमिति पक्षः परिशिष्यते , तत्रापि प्रपञ्चनिवृत्तिव्यतिरेकेण नियोगसाध्यस्य ब्रह्मतत्त्वावबोधस्याभावात् तयोरैक्यं सिद्धवत्कृत्यान्योन्याश्रयेण दूषयतीति, किं निवर्तनीयः प्रपञ्च इत्यादिना नियोगस्य दूष्यमाणत्वात् , पूर्वत्र विषयस्य दूषितत्वात् उभयोरेकविषयत्वाभावेनापिचेत्युक्तिरयुक्तेत्याशङ्क्य अवान्तरदूष्यभेदेपि निष्प्रपञ्चीकरणप्रधानदूष्यैक्यादपिचेत्युक्तिरुपपद्यत इत्यभिप्रयन्नाह ( निष्प्रपञ्चीकरणपक्ष इति ) अवान्तरदूष्यैक्यपरत्वसम्भवे तत्त्यागानौचित्यात् पूर्वोक्त-

निवर्त्यत्वे प्रपञ्चनिवर्तको नियोगः किं ब्रह्मस्वरूपमेव? उत तद्व्यतिरिक्तः? । यदि ब्रह्मस्वरूपमेव निवर्त्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति। नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः। तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः। प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वान्न नियोगनिष्पाद्यं मोक्षाख्यं फलम्। किञ्च, प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्त्तव्यताभावात्, अनुपकृतस्य च करणत्वायोगान्न करणत्वम्। कथमितिकर्त्तव्यताऽभाव इति चेत्, इत्थम्; अस्येतिकर्त्तव्यता भावरूपा? अभावरूपा वा?। भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्य्यभेदभिन्ना। उभयविधा च न सम्भ-

* श्रुतप्रकाशिका *

प्रपञ्चस्य सत्यत्वे न नियोगनिवर्त्यत्व इत्यर्थः । किमित्यादिना विकल्प्य प्रथमं दूषयति ( यदीत्यादिना ) द्वितीयं दूषयितुं तदभ्युपगमं शङ्कते ( अथेति ) दूषयति ( तस्येति ) तस्येत्यादिना नष्ट इत्यन्तेन प्रयोक्तृदूषणं च कृतं भवति. प्रपञ्चनिवृत्तीत्यादिना प्रपञ्चसत्यत्वेऽपि फलाभावोक्तिमुखेन नियोगो दूषितः। करणमितिकर्त्तव्यतां च दूषयति ( किञ्चेति ) इतिकर्त्तव्यताया अभावं विवरितुमाह ( कथमिति ) प्रतिवक्ति ( इत्थमिति ) भावरूपत्वपक्षे द्वैविध्यमाह ( भावरूपा चेति ) करणशरीरनिष्पत्तिरवघातवत्प्रोक्षणवच्च दृष्टादृष्टार्थतया

ᳲ भावप्रकाशिका ᳲ

रयोरपि नियोगविषयत्वमित्याह ( यद्वा नियोगविषयेति ) ( अनुग्राहको हि कर-

वति। न हि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्त्तकः कोऽपि दृश्यत इति दृष्टार्थो न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः सम्भवति, अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्. तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावादेव न

* श्रुतप्रकाशिका *

द्विधेति चाभिमेतम्। ततः किमित्यत्राह (उभयविधेति) उभयविधा— निष्पादिका अनुग्राहिका च। निष्पादकपक्षे प्रथमं दृष्टार्थत्वे दूषणमाह (न हीति) कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पादकाभावरूपा दृष्टार्थो न सम्भवतीत्यर्थः। अदृष्टार्थो अस्ति चेत् प्रपञ्चसत्यत्वप्रसङ्गः अप्रामाणिकत्वं चेति स्फुटमिति न कण्ठोक्तम्। अथानुग्रहं दूषयति (नापीति) तदसम्भवमुपपादयति (अनुग्राहकेति) अनुग्राहको हि करणानन्तरभावी, कृत्स्नप्रपञ्चनिवृत्तिरूपकरणानन्तरमनुग्राहकस्तिष्ठति चेत् करणमेव न सिद्धं स्यात्, यदा करणसिद्धिः न तदानीमनुग्राहको विद्यत इत्यनुग्राहकासम्भव इत्यर्थः। इतिकर्त्तव्यतासद्भावमुखेन करणसिद्धिं शङ्कते (ब्रह्मण इति) दूषयति (तेनैवेति) करणादिनिष्पाद्यम्— करणनिष्पाद्यो नियोगः, नियोगनिष्पाद्यं फलमित्यादिशब्दार्थः। करणं चेत्स्वकार्यकरं स्यात्, तदभावात्करणत्वमयुक्तमित्यर्थः। अथाभावरूपेतिकर्तव्यतां दूषयति (अभावरूपत्व इति) अभावादेव— अभावरूपेतिकर्त्तव्यताया अप्रामाणिकत्वादेवेत्यर्थः। निवृत्तिरूपशमादीनां नाभावरूपेतिकर्तव्यतात्वम् तेषां ज्ञाननिष्पादकत्वेन प्रपञ्चनिवृत्तिरूपकरणनिष्पादकत्वायोगादिति भावः। अत्राभावादेवेत्येवकारेण पूर्वमदृष्टार्थभावरूपेतिकर्तव्यताया अप्रामाणिकत्वस्या-

* भावप्रकाशिका *

णानन्तरभावीति) यद्यपि प्रयाजादिर्न करणानन्तरभावी, तथापि प्रयाजाद्यपूर्वैः

करणशरीरं निष्पादयति। नाप्यनुग्राहकः, अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति॥ अन्योऽप्याह— यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्, तथापि ब्रह्मस्वरूपं सिद्ध्यत्येव। कुतः? ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति [1]"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [2]"य आत्माऽपहतपाप्मा— सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" [3]"आत्मेत्येवोपासीत" [4]'आ-

* श्रुतप्रकाशिका *

भिप्रेतत्वं गम्यते। दूषणमुपसंहरति (अत इति) विधिः— नियोगः; निष्प्रपञ्चीकरणविषयो नियोग इत्यर्थः, अतः प्रवर्तकवाक्येनैव ब्रह्मस्वरूपसिद्धिरिति वक्तुं न शक्यमिति फलितम्॥ अथ ध्याननियोगवादिपक्षमुपक्षिपति (अन्योऽप्याहेति) ब्रह्मणि वेदान्तवाक्यानां स्वातन्त्र्येण प्रामाण्याभावमङ्गीकृत्याह (यद्यपीति) तर्हि कथं तत्सिद्धिरित्यत्राह (तथापीति) व्याघाताभिप्रायेणाह (कुत इति) हेतुमाह (ध्यानविधीति) ध्यानविधिः कः? तस्य सामर्थ्यं कथमित्यत्राह (एवमेव हीति) यथा वाक्यानां ध्यानपरत्वेऽपि परिनिष्पन्नं सिध्यति तथैवेत्यर्थः। ध्यानविधिवाक्यान्याह (आत्मा वा इति) निदिध्यासितव्य इत्युपासनमुक्तम्, द्रष्टव्य इति तस्य दर्शनरूपत्वम्, विजिज्ञा-

* भावप्रकाशिका *

आग्नेयादेरनुग्रहः करणोत्पत्त्यनन्तरभाव्येवेति द्रष्टव्यम्। (अभावादेवेत्येवकारेणेति) (द्रष्टव्य इति) तस्य दर्शनरूपतेति क्वचित् कोशे पाठो दृश्यते, तस्य न सम्यक्त्वं पश्यामः, नहि ध्याननियोगवादिना तथाप्यभ्युपगम्यते, तन्मतमनुवदता वाचस्पतिनाप्युक्तम्, 'तत्र चात्मदर्शनं न विधेयम्, तद्धि दृशेरुपलब्धिवचनत्वात् श्रवणं वा स्यात्, प्रत्यक्षं वा, प्रत्यक्षमपि लौकिकाहंप्रत्ययः,

१ बृ. ४-अ. ६-ब्रा ५-वा.
२ छा. ८-प्र. ७-ख. १-वा.
३-४ बृ. ३-अ. ४-ब्रा. ७-१५ वा.

त्मानमेव लोकमुपासीत" इति । अत्र ध्यानविषयो हि नियोगः स्वविषयभूतध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति । स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा । स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण [1]"सत्यं ज्ञानमनन्तं ब्रह्म" [2]"सदेव सोम्येदमग्र आसीत्" इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपे-

* श्रुतप्रकाशिका *

सितव्य इति सामान्यशब्दः । आत्मेत्यैक्योपासनमुक्तम्, आत्मानमिति स्वस्य जगत्तादात्म्योपासनम् । सामर्थ्यं दर्शयति ( अत्रेति ) ध्येयमाक्षिप्तमस्तु, तत् ब्रह्मेति कथं ज्ञायत इत्यत्राह ( स च ध्येय इति ) आकाङ्क्षायां सन्निहितमेव योग्यं चेत् तत् परित्यक्तुं न युक्तम्, गामानयेत्यादिषु हि तथा दृष्टमिति भावः । स्वरूपमात्रप्रतिपादकानां कारणशोधकवाक्यानामपि विध्यपेक्षितसमर्पकत्वेनैव प्रामाण्यमित्याह ( स किंरूप इति ) शोधितस्वरूपस्य ध्येयत्वात्सत्यादिवाक्यं प्रथममुपात्तम्, तदनुगुणार्थतया सदेवेति कारणवाक्यं पश्चादुदाहृतम् (ध्यानशरीरा-

* भावप्रकाशिका *

भावनाप्रकर्षपर्यन्तजं वा तत्र श्रवणं न विधेयम्, स्वाध्यायविधिनैव सिद्धत्वात् कर्मश्रवणवत् । नापि लौकिकं प्रत्यक्षम्, तस्य नैसर्गिकत्वात्, न चौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयम्, तस्य उपासनविधानादेव वाजिनवदनुनिष्पादित्वात्, तस्मादौपनिषदात्मोपासना अमृतत्वकामं नियोज्यं प्रति विधीयते, द्रष्टव्य इत्यादिविधयस्तु विधिस्वरूपा न विधय इति तदिदमुक्तम्, तदुपासनाच्च शास्त्रदृष्टो मोक्षः फलं भविष्यतीति वर्णितम् । तद्विरोधप्रसङ्गात् तद्ध्याननियोगेन तत्साक्षात्कारफलेनेत्युत्तरभाष्यतद्व्याख्यानानुगुण्याभावाच्चायं ग्रन्थो लेखकस्खलनकृत इति प्रतिभाति । केचित्तु, एतद्ग्रन्थानुसारात् ध्याननियोगवादिनां तादृशमपि मतमस्तीति वदन्ति । ( तत्

१ तै. आन. १-३ अनु. | २ छा. ६-प्र. १-ख. १-वा.

ऽपि तात्पर्य्यमस्त्येव ; अतः 'एकमेवाद्वितीयम्' [1] 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' [1] 'नेह नानाऽस्ति किञ्चन' इत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यम्, तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते, भेदाभेदयोः परस्परविरोधे सत्यनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते । तत्र ब्रह्मध्याननियोगेन त-

* श्रुतप्रकाशिका *

नुप्रविष्टेति ) "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति भावः। ( अस्त्येवेति ) स्ववाक्यप्रतिपन्नस्वर्गादिफलविषयस्य 'यस्मिन्नोष्ण'मित्यादिवाक्यस्येव विधिशेषतया प्रामाण्यमिति भावः । ध्येयब्रह्मस्वरूपं हि ध्यानशरीरानुप्रविष्टम्, प्रपञ्चमिथ्यात्वस्य ध्यानशरीराननुप्रवेशात्कथं भेदनिषेधे तात्पर्यमित्यत्राह ( अत इति ) अतः— विधिशेषभूतस्य सिद्धार्थे तात्पर्यसद्भावात्। अद्वितीयं ब्रह्म ध्येयम्, भेदनिषेधश्रुतयश्च ब्रह्मणोऽद्वितीयत्वपराः, ब्रह्मणोऽद्वितीयत्वमेव भेदमिथ्यात्वमिति ध्यानशरीरानुप्रविष्टे भेदनिषेधे तात्पर्यमस्तीत्यर्थः । भेदग्राहिप्रमाणविरोधान्न शास्त्रमद्वितीयं ब्रह्म प्रतिपादयति, 'आदित्यो यूपः' इत्यादिवदिति शङ्कां परिहर्तुं प्रत्यक्षादिभिर्विरुद्धप्रतीतिमभ्युपगच्छति ( प्रत्यक्षादिभिरिति ) शङ्कां परिहरति ( भेदाभेदयोरिति ) भेदप्रतीतेरन्यथासिद्धत्वादनन्यथासिद्धशास्त्रावगतमैक्यं तात्त्विकमित्यर्थः । तर्हि विषयः करणं प्रयोक्ता फलमित्यादि वक्तव्यम्, नियोगनिवर्त्यत्वे प्रपञ्चसत्यत्वप्रसङ्गः, नित्यप्राप्तत्वात् ब्रह्मभावो न फलमित्यत्राह ( तत्रेति ) ध्याननियोगेनेति ध्यानस्य विषयत्वमुक्तम् । नियोगान्मोक्षश्चेन्न ज्ञानान्मोक्ष इति शङ्कां व्युदस्यति

* भावप्रकाशिका *

ब्रह्मेति कथं ज्ञायत इति ) यद्यपि स आत्मेति कथं ज्ञायत इति वक्तुमुचितम्, भाष्यानुगुण्यात्, तथापि ब्रह्मात्मशब्दयोस्समानप्रकरणे पाठेन ऐक्यं सिद्ध-

१ छा ६-प्र. ८-ख. ७-वा ॥ | १ कठ. ४-वल्ली. ११ ॥

त्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदा-द्वितीयज्ञानैकरसब्रह्मभावरूपमोक्षः प्राप्यते । न च वाक्यात् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनुपलब्धेर्विविधभेददर्शनानुवृत्तेश्च । तथा च सति श्रवणादिविधानमनर्थकं स्यात् ॥ अथोच्येत– 'रज्जुरेषा न सर्प्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवद्बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेन. नियोग-

* श्रुतप्रकाशिका *

( तत्साक्षात्कारफलेनेति ) नियोगस्योपायत्वं ज्ञानद्वारकमित्यर्थः । निरस्तेत्यादिना अविद्यानिवृत्तिः फलमित्युक्तम्, तदेव फलतया नियोज्यविशेषणम्. उपासकः प्रयोक्ता । शमादिरितिकर्त्तव्यतेत्यादि अस्माकं सिद्धमिति भावः । वाक्यार्थज्ञानमात्रान्मोक्षवादिनं दूषयति ( न चेति ) प्रत्यक्षविरोधमाह ( अनुपलब्धेर्विविधभेददर्शनानुवृत्तेश्चेति ) शास्त्रविरोधमाह ( तथा च सतीति ) ॥ अथ साक्षान्मायावादिना स्वमतं पश्चाद्विवक्षता प्रथमं ध्याननियोगवादिपक्षप्रतिक्षेपमाशङ्कते ( अथोच्येतेति ) बन्धस्य ज्ञानमात्रनिवर्त्यत्वं सोपपत्तिकमाह ( रज्जुरेषेति ) निवर्त्यमिथ्यात्वं ह्युभयसम्मतम् , अत एव नियोगनैरपेक्ष्यमाह ( नेति ) अन्यथाऽनिष्टमाह ( नियोगेति ) मोक्षानित्यत्वस्य तदनिष्टता-

* भावप्रकाशिका *

मिति भावः । भाष्ये— ध्याननियोगेन तत्साक्षात्कारफलेनेति । अत्र चोदयन्ति, ध्याननियोगवादिमते मोक्षस्यैव फलत्वमिति हि तत्प्रक्रिया , नतु साक्षात्कारः फलमिति , तथा शाङ्करभाष्ये अनुपन्यासादिति। ते प्रतिवक्तव्याः, ध्याननियोगवादिनां त्रयी गतिः , ब्रह्मभावः फलम्, अविद्यापनयो वा साक्षात्कारो वा इति । आद्यपक्षस्यातिदुर्बलतया अयमेव पक्षो भाष्यकृता उपन्यस्तः, अत एव तन्मतं दूषयता वाचस्पतिनाप्युक्तं 'ब्रह्मभूयस्याविद्यापिधानापनयनमात्रेण सम्भवादविद्यापनयस्य च वेदान्तार्थज्ञानादेव सिद्धेः ,

साध्यत्वे मोक्षस्यानित्यत्वं स्यात्स्वर्गादिवत् । मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम् । किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम् । तस्मान्न धर्म्मसाध्यो मोक्षः । तथा च श्रुतिः [1]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" इति अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात् न धर्मसाध्यमशरीरत्वमिति विज्ञायते ।

* श्रुतप्रकाशिका *

माह ( मोक्षस्येति ) नियोगो विपरीतफलप्रदश्चेत्याह ( किञ्चेति ) द्वारेणेत्यन्तेन प्रसञ्जनीयप्रसञ्जकयोर्व्याप्तिर्दर्शिता, अवर्जनीयमित्यन्तेन प्रसङ्गः । ततः किमित्यत्राह ( तस्मादिति )तस्मात्– संसारफलत्वप्रसङ्गात् । व्यापकस्य संसारफलत्वस्य निवृत्त्या व्याप्यं धर्मसाध्यत्वञ्च निवृत्तमित्यर्थः । मोक्षस्याशरीररूपत्वश्रुत्या च नियोगासाध्यत्वमाह ( तथा चेति ) अशरीरत्वरूपे मोक्षे धर्माधर्मफलरूपप्रियाप्रियसम्बन्धविरहश्रवणान्मोक्षस्य धर्मसाध्यत्वाभावः फलित इत्याह ( इत्यशरीरत्वरूप इति ) एवं नियोगसाध्यत्वे मोक्षस्य धर्माधर्मफलसम्बन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति । यथा नियोगविशेषस्य पापनिवृत्तिः फलमुच्यते तद्वन्नियोगविशेषस्य बन्धनिवृत्तिफलत्वं सम्भवती-

* भावप्रकाशिका *

साक्षात्कारकारणमनस्सहकारिसंस्कारजनकत्वस्य उपासनायामन्यतस्सिद्धेर्न विधिरिति । ( मोक्षस्याशरीररूपत्वश्रुत्या चेति ) अशरीरत्वलक्षणमोक्षस्य धर्माधर्मफलभूतप्रियाप्रियविरहप्रतिपादकश्रुत्येत्यर्थः । उत्तरग्रन्थानुरोधादिति द्रष्टव्यम् । फलित इत्याह इत्यशरीरत्वरूप इति पाठो दृश्यते , तत्राशरीरत्वरूपेति प्रतीकग्रहणमुचितम्. नत्वितिकरणयुक्तस्य इतिकरणस्य , तथा च श्रुतिः 'न

[1] छा. प्र. १२-ख ११. ॥

न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम् , अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथाहुः श्रुतयः [1]"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [2]"अप्राणो ह्यमनाः शुभ्रः" [3]"असङ्गो ह्ययं पुरुषः" इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः । तथा च श्रुतिः [4]"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति ॥ अपिच— उत्पत्तिप्राप्ति-

* श्रुतप्रकाशिका *

त्यत्राह ( न चेति ) नियोगविशेषफलविशेषशब्दाभ्यां प्रायश्चित्तपापक्षयौ विवक्षिते। कुत इत्यत्राह ( अशरीरत्वस्येति ) अशरीरत्वस्य स्वरूपत्वे श्रुतिमाह ( यथाहुरिति ) ( अप्राण इति ) प्राणमनस्सम्बन्धाभावादशरीरत्वं सिद्धम्, सशरीरस्य हि प्राणमनस्सम्बन्ध इति भावः । अतः अशरीरत्वस्यात्मस्वरूपत्वावगमादित्यर्थः । न केवलं कर्मफलसम्बन्धविरहादशरीरत्वस्य स्वाभाविकत्वाच्च नियोगसाध्यत्वाभावः सिद्धः, अपि तु कण्ठोक्तश्चेत्याह ( तथा च श्रुतिरिति ) अन्यत्र धर्मात्—धर्मादन्यत्र , धर्मेण विना ; अनेन धर्मसम्बन्धराहित्यमुक्तम्, सम्बन्धश्च साध्यसाधनभाव इति भावः। अत्र कृताकृतशब्देन क्रियमाणमुच्यते, भूतभव्यशब्दाभ्यां भूतभविष्यती। मुखान्तरेण मोक्षस्य नियोगसाध्यत्वं दूषयति ( अपि चेति ) साध्यत्वस्य वैविध्यं वदंस्तदसम्भवमाह ( उत्पत्तीति ) मोक्षशब्देन किं निवृ-

* भावप्रकाशिका *

ह वै सशरीरस्य' इति। इति पूर्वान्वितत्वात् ( अन्यत्र धर्मादिति ) यद्यपि शङ्करोपनिषद्भाष्यादौ अन्यत्र धर्माच्छास्त्रीयाद्धर्मानुष्ठानात् तत्फलात्तत्कारकेभ्यश्च पृथग्भूतम् , तथा अन्यत्राधर्मात् अधर्मानुष्ठानतत्फलादिथिलक्षणम्.

१ कठ. २-वल्ली. २२ ॥
२ मुण्ड. २-मुण्ड. १-ख. २-वा ॥
३ बृ. ६ अ. ३-ब्रा. १५ वा ॥

विकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति। न तावदुत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात्। नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात्। नापि विकार्य्यः, दध्यादिवदनित्यत्वप्रसङ्गादेव। नापि संस्कार्य्यः, संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साधयति। न तावद्दोषापनयनेन, नित्यशुद्धत्वाद्ब्रह्मणः। नाप्यतिशयाधानेन, अनाधेयातिशयस्वरूपत्वात्। नित्यनिर्विकार-

* श्रुतप्रकाशिका *

त्ताविद्यं स्वरूपं विवक्षितम्, उताविद्यानिवृत्तिः? इति विकल्पे स्वरूपस्य विवक्षितत्वे चतुर्विधसाध्यत्वानुपपत्तिमाह (न तावदित्यादिना) निवृत्तेरुत्पाद्यत्वेऽप्यविनाशित्वं प्रध्वंसाभावरूपत्वादिति वक्ष्यते (संस्कारो हीत्यादि) अत्र नित्यशुद्धशब्देन परमार्थदोषानन्वयोऽभिप्रेतः। नित्यशुद्धस्य निर्विशेषस्य वस्तुनो दोषापनयनगुणाधानरूपसंस्कारविषयत्वं नित्यशुद्धत्वानाधेयातिशयत्वाभ्यां नास्तीत्युक्तम्। अथ क्रियाविषयत्वाभावात् संस्कारविषयत्वाभाव उच्यते (नित्येत्यादिना) निर्विकारत्वेन क्रियाविषयत्वाभावः कथम्? इत्थम्,—यद्यत्क्रियाविषयभूतं तद्धि सविकारं दृष्टम्,

* भावप्रकाशिका *

अन्यत्रास्मात्कृताकृतात्— कृतम् कार्यम्, अकृतम् कारणम्. तस्मादप्यन्यत्र। अन्यत्र भूताच्च— अतिक्रान्तकालात्. भव्याच्च—भविष्यत्कालात् वर्त्तमानकालाच्चान्यत्र, कालत्रयापरिच्छिन्नं यत्पश्यसि तद्वदेत्यर्थ इति व्याख्यातम्। तथापि तदविरुद्धत्वादिदमपि तदभिमतमिति वा ग्रन्थान्तरस्थत्वाद्वा तथाऽनूदितमिति द्रष्टव्यम्। ननु मोक्षस्य नित्यत्वेनानुत्पाद्यत्वे वाक्यार्थज्ञानस्य मोक्षहेतुत्ववादिमतेपि वाक्यार्थज्ञानोत्पाद्याया बन्धनिवृत्तेरपि अविनाशित्वरूपनित्यत्वं नोपपद्यतेत्याशङ्क्याह (निवृत्तेरुत्पाद्यत्वेपीति) (निर्विकारत्वेन क्रियाविषयत्वाभावः कथमिति) अत्र केचित्— निर्विकारत्वस्य क्रियाविषयत्वाभावहेतुत्वस्य भाष्ये अप्रतिपादितत्वेनास्याश्शङ्काया अवकाशाभावान्नि-

त्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषय-
तया न निर्घर्षणेनादर्शादिवदपि संस्कार्य्यत्वम्। न च
देहस्थतया स्नानादिक्रियया आत्मा संस्क्रियते ,
किन्त्वविद्यागृहीतस्तत्सङ्गतोऽहङ्कर्त्ता । तत्फलानुभवो-

* श्रुतप्रकाशिका *

यदा दर्प्पणो हस्ततले निर्घृष्यते तदा दर्पणाश्रया क्रिया , यदा दर्पणे पाणिर्निर्घृष्यते तदा पाण्याश्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पणोदाहरणम् । क्रियाविषयत्वाभावेऽपि संस्कार्यत्वं दृष्टमित्यत्राह ( न चेति ) तर्हि कस्संस्क्रियत इत्यत्राह ( किन्त्विति ) अविद्यागृहीतः— अविद्याकल्पितः ,

* भावप्रकाशिका *

त्यनिर्विकारत्वेन स्वाश्रयाया' इत्यादिभाष्यस्य ह्ययमर्थः , नित्यनिर्विकारत्वेन स्वाश्रयायाः क्रियाया असम्भवात् . अन्याश्रयक्रियां प्रति मण्याश्रयक्रियां प्रत्यादर्शस्येवान्यस्याविषयत्वादिति । इतरथा पुरोवादरूपशाङ्करभाष्यवैरूप्यापत्तेः । तत्र हि शाङ्करभाष्ये क्रियाश्रयत्वानुपपत्तेरात्मनो यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते , यद्यात्मा क्रियया विक्रियेत अनित्यत्वमात्मनः प्रसज्येत . 'अविकार्योयमुच्यते' इत्यादीनि वाक्यानि बाध्येरन्. तस्मान्न स्वाश्रया क्रिया आत्मनस्सम्भवति , अन्याश्रयायास्तु क्रियाया अविषयत्वान्नात्मा संस्क्रियेतेत्युक्तम् . तद्व्याकुर्वता वाचस्पतिना 'न तावद्ब्रह्मधर्मः क्रिया, तस्याः स्वाश्रयविकारहेतुत्वेन नित्यत्वव्याघातात् । अन्याश्रया तु कथमन्यस्योपकरोति , अतिप्रसङ्गात् । नहि दर्पणे निर्घृष्यमाणे पाणिर्विशुद्धो दृष्ट इति , ततश्च तदनुरोधान्निर्विकारत्वात्क्रियाश्रयत्वप्रतिषेध एवोचितः . न तु तेनैव विषयत्वप्रतिषेधः , अतश्च तदानुगुण्येन भाष्यस्याप्यर्थो वर्णनीयः. तथा अन्याश्रयक्रियां प्रति विषयत्वमसम्भावितमिति वक्तव्ये दर्पणस्य दृष्टान्तत्वाय परसमवेतक्रियाविषयत्वसमर्थनपरोत्तरग्रन्थस्यापि न साङ्गत्यमिति। तन्न ; शाङ्करमतस्यैवाविरुद्धयुक्तियुक्तमार्गान्तरोपन्यासे दोषाभावात् ( तदा दर्पणाश्रया क्रियेति ) नच 'घर्षणभिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर आदर्शतले सम

ऽपि तस्यैव। न चाहङ्कर्तैवात्मा, तत्साक्षित्वात्। तथा च मन्त्रवर्णः [1]"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति; [2]"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" [3]"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः

* श्रुतप्रकाशिका *

तेनातिशयाधानानुगुणविकारित्वं सूचितम् । यद्वा अविद्यागृहीत इति शुध्यशुध्यादिभ्रमवत्तया शुद्धिसापेक्षत्वं दर्शितम् । अहङ्कर्तुरपि देहाद्विलक्षणत्वात् कथं देहगतस्नानादिभिस्तस्यातिशय इत्यत्राह ( तत्सङ्गत इति ) तत्सङ्गतः— देहसङ्गतः । आत्मनः फलभोक्तृत्वात्स एव संस्कार्य इत्यत्राह (·तत्फलेति ) फलभोक्ताऽहमर्थश्चेत्स एवात्मेत्यत्राह ( न चाहमिति ) हेतुमाह ( तदिति ) यो यस्य साक्षी स हि न तद्भवतीति भावः । साक्षित्वे मानमाह ( तथा चेति ) तयोरन्य इत्यादेरयमर्थः ,— अहङ्कारज्ञप्त्यात्मनोरेकः फलभोक्ता अन्योऽनश्नन्निति अहङ्कर्तैव भोक्तेति स्पष्टं दर्शयति ( आत्मेन्द्रियेति ) आत्मा:—देहः, देहादिसम्बन्धस्य भोक्तृत्वादात्मनोऽशरीरत्वाप्राणत्वामनस्कत्वादिश्रवणादनश्नन्नित्यभोक्तृत्वश्रवणाच भोक्तुर्विलक्षण आत्मेत्यभिप्रायः । यद्वा आत्मशब्दः संविदात्मपरः , ततश्च तद्युक्तस्य भोक्तृत्वात् तस्य भोक्तृत्वं नास्तीत्यहङ्कारस्यैव भोक्तृत्वमित्यभिप्रायः। एको देव इत्यत्र केवलशब्देन फलान्वयराहित्यं विवक्षितमिति। तस्यात्रोपयोगः । निर्गुणः—अगुणवश्यत्वादभोक्तेत्यर्थः । साक्षी—

* भावप्रकाशिका *

चेत' इत्युक्तस्य घर्षणस्य निश्चलेपि दर्पणे सम्भवोऽस्तीति वाच्यम् ; संयोगविभागप्रचयानुकूलचेष्टाया एव घर्षणशब्दवाच्यत्वमिति तात्पर्यात् ( तत्सङ्गतः— देहसङ्गत इति ) तदभेदाभिमानीतियावत् । ( केवलशब्देन फलान्वयराहित्यं विवक्षितमिति ) ( तस्यात्रोपयोग इति ) इदमुपलक्षणम् . ' एको देवः '

१ मुण्ड ३-मुण्ड. १-ख. १ वा ॥
२ कठ ३-वल्ली ४ वा ॥
३ श्वे. ६-अ. ११ ॥

साक्षी चेता केवलो निर्गुणश्च"। '[1] स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इति च। अविद्यागृहीतादहङ्कर्त्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते, तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः। यद्येवं किं वाक्यार्थज्ञानेन क्रियत इति चेत्. मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः। तथा

* श्रुतप्रकाशिका *

अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयाऽवस्थानान्न भोक्तेति भावः। (स पर्यगादिति) शुक्रम्— अविचारहितम्, वासनारहितं वा। शुद्धम्—अपापविद्धम्—कर्मफलरहितं कर्मरहितं च। पर्यगात्— गत्यर्था बुद्ध्यर्थाः, अमन्यतेत्यर्थः। उदाहृतश्रुतिर्मितिपक्षाकारोपेतमात्मस्वरूपं वदति (अविद्येति) अहङ्कर्त्तुर्निष्कृष्यत इत्यन्वयः। मुक्तेरसाध्यत्वं निगमयति (तस्मादिति) ज्ञानवैयर्थ्यं शङ्कते (यद्येवमिति) परिहरति (मोक्षेति) प्रतिबन्धनिवृत्तेरेव साध्यत्वं श्रुतिसिद्ध-

ॐ भावप्रकाशिका ॐ

'स पर्यगात्' इति मन्त्रद्वयं ह्यनाधेयातिशयत्वनित्यशुद्धत्वयोः प्रमाणतयोपन्यस्तमिति. उक्तञ्च शाङ्करभाष्ये— 'इमौ मन्त्रौ अनाधेयातिशयतां नित्यशुद्धताञ्च ब्रह्मणः प्रतिपादयतः' इति। अत एवोत्तरभाष्ये आत्मनस्स्वरूपमनाधेयातिशयं निष्कृष्यत इति वक्ष्यति, ततश्च केवल इत्यस्य फलान्वयराहित्यमात्रे न तात्पर्यं वर्णनीयम्. कर्तृत्वादिबन्धराहित्यस्यापि प्रतिपिपादयिषितनित्यशुद्धत्वोपयुक्तत्वादिति द्रष्टव्यम्। (अमन्यतेत्यर्थ इति) आत्मानमिति शेषः। यद्यपि " स पर्यगात् ' स आत्मा ' यस्तु सर्वाणि भूतानि" इत्यादौ प्रकृत आत्मा पर्यगात्— परितस्समन्तादगात् सर्वगत इत्यर्थः। शुक्रमित्यादयश्शब्दाः पुल्लिङ्गत्वेन परिणेयाः। स इत्युपक्रमानुसारात्। अकायः— लिङ्गशरीररहितः। अव्रणः— अक्षतः। अस्नाविरः— सिरारहितः। अव्रणास्नाविराभ्यां स्थूलदेहराहित्यमुक्तम्. शुक्रमिति वाह्यशुद्धिविरह उक्तः, शुद्ध इत्यान्तर-

१ ईशा. ८॥

च श्रुतयः [1]"त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" इति, [2]"श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु" [3]"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्याद्याः। तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते, निवृत्तिस्तु साध्यापि प्रध्वंसाभावरूपा न विनश्यति। [4]"ब्रह्म वेद ब्रह्मैव भवति" [5]"तमेवं विदित्वाऽतिमृत्युमेति" इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानं प्रतिरुणद्धि। न च विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्य्या-

* श्रुतप्रकाशिका *

माह (तथा चेति) प्रतिबन्धनिवृत्तेः साध्यत्वं निगमयति (तस्मादिति) प्रतिबन्धनिवृत्तेः साध्यत्वेनानित्यत्वं स्यादित्यत्राह (निवृत्तिस्त्विति) अयं परिहारो नियोगसाध्यत्वपक्षेऽपि तुल्य इति चेत्. न, नियोगसाध्यत्वे प्रपञ्चसत्यत्वं स्यादित्यभिप्रेतमित्युक्तत्वात्। नियोगसाध्यत्वपक्षे श्रुतिस्वारस्यहानिमाह (ब्रह्मेति) श्रुतिस्वारस्यमेव विलम्बं न सहत इति भावः। कथं नियोगव्यवधानप्रतिरोधः? विधिशेषतया हि ब्रह्मणः सिद्धिः, तत्सिद्ध्यर्थं नियोगः स्वीकार्य इति शङ्कायां नियोगशेषत्वं विदिकर्मत्वेन ध्यानकर्मत्वेन चोभयथाऽपि न सम्भवतीत्याह (न च विदीति) वेदनं ज्ञानम्, उपासनम्— ज्ञान-

❀ भावप्रकाशिका ❀

रागाद्यभावः। अपापविद्धः—धर्माधर्मादिरहित इति शङ्करादिभिर्व्याख्यातम्. तथापि

१ प्रश्न. ६-प्रश्न ८ ॥
२ छा. ७ प्र. १-ख. ३-दा ॥
३ छा. ७-प्र. २६-ख. २ ॥
४ मुण्ड. ३-मुण्ड. २-ख. ९ ॥
५ श्वे. ३-अ. ८ ॥

नुप्रवेशः, उभयविधिकर्मत्वप्रतिषेधात् । [1]"अन्यदेव तद्विदितादथो अविदितादपि" [2]"येनेदं सर्वं विजानाति तं केन विजानीयात्" इति । "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति च ॥ न चैतावता शास्त्रस्य निर्विषयत्वम्, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्; अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपाद-

* श्रुतप्रकाशिका *

विशेषः, अत्र वेदनशब्दो निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति, विवक्षावशात्, अतो निष्प्रपञ्चीकरणनियोगवादस्यापि दूषणं फलितम् । विद्युपासिकर्मत्वाभावे श्रुतिमाह ( अन्यदिति ) विदितात्–ज्ञेयात् . अविदितात्– ज्ञातुरित्यर्थः । अन्यदेवेति विदिकर्मत्वनिषेधः, तदेवेति ध्यानकर्मत्वनिषेधः, विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्ध्या शास्त्रस्य निर्विषयत्वमाशङ्क्य परिहरति ( न चेति ) "ब्रह्म वेद' 'ब्रह्म वित्' इत्यादिभिर्ब्रह्मणो वेद्यत्वं प्रतीयत इत्यत्राह ( न हीदन्तयेति ) इदन्तया–प्रमेयतया । ( अपि त्विति ) प्रत्यगात्मस्वरूपं

७ भावप्रकाशिका ७

तदविरुद्धत्वादिदमपि ग्राह्यमेव, ( अविदितात्–ज्ञातुरित्यर्थ इति ) यद्यपि विदिताविदितशब्दौ कार्यकारणपरतयापि व्याख्यातौ, तथा व्याख्याने ज्ञेयवैलक्षण्या-नुक्तेरसङ्गतिं मत्वा तथा व्याख्यातमिति द्रष्टव्यम् । भाष्ये– येनेदं सर्वं विजानाति तं केन विजानीयादिति । येन प्रमात्रा इदं सर्वं लोको विजानाति, तं केन करणेन विजानीयात्, करणस्य ज्ञेयविषयतया ज्ञातकार्यप्रवृत्तेः न ज्ञाता ज्ञेयः, किमुत साक्षीत्यर्थ इति परेषां व्याख्या । तदेव ब्रह्मेति । 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इति विषयत्वमुक्त्वा तदेव प्रमातृत्वादिकल्पनाशून्यमेव ब्रह्म विद्धि, नतु यदुपाधिविशिष्टदेवताम् इदमित्युपासते जनाः नेदं ब्रह्म त्वं विद्धीत्यर्थः । भाष्ये– न चैतावता शास्त्रस्य निर्विषयत्वमिति । ब्रह्मणश्शास्त्रयोनित्वभङ्गो नास्ती-

१ केन. १-ख. ३ ॥ | २ बृ ४-अ. ४-ब्रा. १४ ॥

यदविद्याकल्पितज्ञानज्ञातृज्ञेयविभागं निवर्त्तयति । तथा च शास्त्रम् १"न दृष्टेर्द्रष्टारं पश्येः" इत्येवमादि । न च ज्ञानादेव वन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्, स्वभावप्रवृत्तसकलेतरविकल्पविमुखी-

* श्रुतप्रकाशिका *

निर्विशेषमविषयतया प्रतिपादयतीत्यर्थः । शास्त्रस्य भेदनिवृत्तिपरत्वं दर्शयति (तथाचेति) ज्ञानादेव वन्धनिवृत्तिश्चेच्छास्त्रप्रत्यक्षविरोधस्स्यादित्याशङ्क्य शास्त्रविरोधं तावत्परिहरति ( न च ज्ञानादिति ) ( श्रवणादिविध्यानर्थक्यमिति )

* भावप्रकाशिका *

त्यर्थः, पुरोवादिशाङ्करभाष्यानुरोधात् । ( प्रमेयतयेति ) नन्वेवं हि पुरोवादिशाङ्करभाष्यम्— अविषयत्वे ब्रह्मणश्शास्त्रयोनित्वानुपपत्तिरिति चेन्न ; अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य, नहि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति, किन्तु प्रत्यगात्मत्वेनाविषयतां प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति । तथा च शास्त्रम्— "यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । 'न दृष्टेर्द्रष्टारं पश्येः । न मतेर्मन्तारं मन्वीथाः" इति चैवमादीनि । अस्य च ग्रन्थस्य वाचस्पतिना वर्णितोऽयमर्थः,—सर्वमेव हि वाक्यं नेदन्तया वस्तुभेदं वोधयितुमर्हति । नहीक्षुक्षीररसादीनां मधुररसविशेषः इदन्तया शक्य आख्यातुम् । किं वहुना. गामानयेत्यादिवाक्येपि विवक्षितव्यक्तिविशेषो नाभिधातुं योग्यः, ततश्च प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी तथा कैव कथा प्रत्यगात्मन्यलौकिके, अदूरविप्रकर्षेण तु कथञ्चित्प्रतिपादनाच्छास्त्रयोनित्वम्. अदूरविप्रकर्षश्चेत्थम् ,— तत्त्वमसीतिसामानाधिकरण्येन त्वंपदार्थस्य प्रत्यगात्मनः प्रमातृत्वाद्यविषयभूतोदासीनतत्पदार्थाभेदप्रतिपादने जीवकर्तृत्वादीनामपि मिथ्यात्वे वेद्यवेदितृवेदनादिभेदापनयसम्भवेन निरस्तभेदतया ब्रह्मणः प्रतिपाद्यत्वसम्भवाच्छास्त्रयोनित्वमुपपद्यते. उपन्यस्तश्चात्र श्लोको वाचस्पतिना "विगलित-

१ बृ ५-अ. ४-ब्रा. २ ॥

॥ भावप्रकाशिका ॥

परागर्थत्वं पदस्य भवेत्तदस्त्वमिति च पदेनैकार्थत्वे त्वमित्यपि यत्पदम् । तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मतां त्यजति सकलान् कर्तृत्वादीन् पदार्थमलानिजान् ॥" इति । तस्य च श्लोकस्यायमर्थः— तदःपदस्य— तत्पदस्येत्यर्थः । विगलितपरागर्थत्वम् प्रत्यगर्थत्वमित्यर्थः । तत्कदेत्यत आह— त्वमिति च पदेनैकार्थत्वे त्वमिति । प्रमातृत्वादिशून्येन ब्रह्मणा प्रमातृत्वादिमत्तया प्रतिभासमानस्य अभेदे बोधिते जीवस्य प्रमातृत्वादिराहित्यं सिध्यति. प्रमातृत्वस्यासत्यत्वे प्रमातुरभावेन प्रमायास्तद्विषयस्य मिथ्यात्वेन निर्भेदत्वं ब्रह्मणस्सिध्यतीति । ततश्चेक्षुक्षीरादिरसभेदस्य शाब्दत्वप्रवादतुल्योयं ब्रह्मणश्शास्त्रयोनित्वप्रवाद इति । अपरश्चानन्दगिरिणार्थो वर्णितः । तथा हि—शास्त्रजन्यवृत्त्यभिव्यक्तचैतन्यविषयत्वलक्षणशास्त्रयोनित्वाभावेपि शास्त्रजन्यज्ञानजन्याविद्याध्वंसरूपातिशयवत्त्वेन शास्त्रजन्यज्ञानविषयत्वलक्षणं शास्त्रयोनित्वमुपपद्यत इति ; एवञ्च पुरोवादानुगुणयमनादृत्य कथमेवं व्याख्यायत इति चेत् . सत्यम् ; व्याख्याद्वयमपि न व्याख्येयस्वारस्यानुगुणम्, किन्तु 'यस्यामतं तस्य मतम्' इत्यादिप्रमाणानुसारेण शास्त्रप्रमेयत्वेनैव ब्रह्म प्रतिपादयति, नतु प्रमेयत्वेनेत्ययमर्थ एव व्याख्येयस्वारस्यानुगुणः, एतदेवाभिप्रेत्याचार्यैरिदन्तयेत्यस्य प्रमेयतयेत्यर्थो वर्णितः । केचित्तु—प्रमेयतयेत्यर्थ इत्यस्यापि व्याख्याद्वयान्यतरपरत्वमेवास्त्विति मन्यन्ते । न दृष्टेर्द्रष्टारमिति । दृष्टेश्चक्षुर्जन्याया मनोवृत्तेर्द्रष्टारं स्वभावभूतया नित्यदृष्ट्या व्यासारम्. दृश्यया अनया दृष्ट्या न पश्येरित्यर्थः । ततश्च यस्यामतमित्यादिवदयमपि परेषां दृश्यत्वनिषेधपरोऽभिमतः । भाष्ये— नच ज्ञानादेव बन्धनिवृत्तिरित्यादि । अत्र केचित्— समनस्केन्द्रियार्थसन्निकर्षबललब्धस्फीतालोकमध्यवर्तिघटानुभववत् शब्दसामर्थ्योत्पादितब्रह्मात्मज्ञानस्य कर्तुमकर्तुमन्यथाकर्तुमशक्यस्यापुरुषतन्त्रस्य विधातुमशक्यतया अविधेयज्ञानादेव निवृत्तिरित्यभ्युपगमे श्रवणमननादीनामपि यथावस्थितवस्तुविषयाणां वस्तुतन्त्रत्वेन पुरुषतन्त्राभावाद्विधिर्न स्यादिति तद्विधिवैयर्थ्यमित्येतावानर्थः . पुरोवादानुसारात् । एवं हि शाङ्करभाष्यम्— 'या तु प्रसिद्धेऽभावभिबुद्धिर्न सा चोदनातन्त्रा, पुरुषतन्त्रा वा ? किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रा वा ? एवं यथा भूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्, तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात् कुण्ठीभवन्ति, उप-

करणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम् , बन्धस्य मिथ्या-

* श्रुतप्रकाशिका *

श्रवणमननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति न विरोधः । कुत इत्यत्राह (स्वभावेति) स्वभावप्रवृत्तशब्देनादिप्रवृत्तत्वं विवक्षितम् । अप्रत्यक्षविरोधं परिहरति (न च ज्ञानमात्रादिति) कथमित्यत्राह (बन्धस्येति) कथं स्थित्यनुपपत्तिः ?

छ भावप्रकाशिका छ

लादिप्रयुक्तक्षुरतैक्ष्ण्यादिवत् अहेयानुपादेयवस्तुविषयत्वात् , किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि वचनानि . स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूम इति । ततश्च तदनुसारेणैवमर्थो वर्णनीय इति । केचित्तु न तद्वाक्यानुवादोऽयम् , अपि तु यत्पुनरुक्तं श्रवणात्प्राचीनयोरपि मनननिदिध्यासनयोर्दर्शनात् न स्वरूपपर्यवसायित्वम् , अवगतिमात्रार्थत्वे मनननिदिध्यासनयोर्वैयर्थ्यप्रसङ्गादिति, तन्न ; श्रवणवन्मनननिदिध्यासनयोरपि ब्रह्मावगत्यर्थमपेक्षितत्वेन तयोरपि रागप्राप्तत्वादिति तदनुवाद इति मन्यन्ते ( पूर्वपक्षिणोक्तमिति ) श्रवणादिविधेश्शङ्कराभिमतत्वात् तदानर्थक्यापादानं कर्तुं शक्यमिति भावः । भाष्ये-- स्वभावप्रवृत्तेत्यादि । अयं भावः , अन्यतरप्राप्ता एव श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते , नचानुवादोऽप्यप्रयोजनः , प्रवृत्तिविशेषकरत्वात्, तथाहि ; तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि मनस्समाधातुमर्हति , आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उत्पाद्यत इति प्रवृत्तिविशेषकरतानुवादानामस्तीति सप्रयोजनतेति । भाष्ये--सर्पविषनाशमपेक्षत इति । सर्पस्य नित्यनष्टत्वात् . यदि च मिथ्याभूतस्य ज्ञाननिवर्त्यत्वाभ्युपगमात्सर्पनाशोऽस्त्येवेति तदपेक्षा भयनिवृत्तेर्दृष्टेति भाविबन्धनिवृत्तेस्सशरीरत्वसापेक्षत्वमिति , तर्हि तस्य सशरीरत्वमपि नष्टमेव , शरीराभिमानस्य नष्टत्वेन सशरीरत्वस्यापि निवृत्तत्वात् । नहि सशरीरत्वाभिमानवत्त्वमन्तरेण सशरीरत्वं नाम किञ्चिदस्ति, शरीरस्यात्मनश्च सम्बन्धान्तरादर्शनात् । नच तत्कृतधर्माधर्मार्जितत्वात् वास्तवं सशरीरत्वमिति वाच्यम्, आत्मनस्साक्षितया धर्माधर्मकर्तृत्वाभावात् . ततश्च देहात्माभिमा-

रूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः, अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्। नहि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते, यदि शरीरसम्बन्धः पारमार्थिकः तदा हि तद्विनाशापेक्षा, स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते, ज्ञानकार्य्यादर्शनात्। तस्मात् शरीरस्थितिर्भवतु वा मा वा; वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ; अतो न ध्याननियोगसाध्यो मोक्ष इति

* श्रुतप्रकाशिका *

बन्धो ह्यनुवर्त्तत इति शङ्का यस्य तु बन्ध इत्यादिना परिहरिष्यते। उक्तादेव हेतोः शरीरपातानपेक्षत्वमाह (अत एवेति) दृष्टान्तेनोपपादयति (न हीति) दृष्टान्ते दर्शितमर्थं व्यतिरेकमुखेन दार्ष्टान्तिके विवृणोति (यदीति) पारमार्थिकत्वविपर्ययमाह (स त्विति) विप्रतिपन्नमपारमार्थिकम्, ब्रह्मव्यतिरिक्तत्वात् शुक्तिरूप्यवदिति भावः। ज्ञानोत्तरकालस्थितिरनुपपन्ना चेत्कथं बन्धस्यानुवृत्तिरित्यत्राह (यस्य त्विति) यस्य त्वनिवृत्तः— अनिवृत्त इति प्रतीतिः, तस्य ज्ञानमेव न जातम्, तत्कार्यादर्शनादिति। कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्याप्यत्वाद्बन्धनिवृत्तिं प्रति तत्त्वज्ञानस्य सामग्रीत्वात्तदभावेन ज्ञानाभावः कल्प्यत इति न प्रत्यक्षविरोध इत्यर्थः। ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिं निगमयति (तस्मादिति) (शरीरस्थितिर्भवतु वा मा वेति) दग्धपटे पटप्रतिभासवत् शरीरप्रतिभासोऽनुवर्त्तेत वा निवर्त्तेत वेत्यर्थः। (मुक्त एवासाविति) बन्धस्य च्छिन्नमूलतया दग्धपटवदकार्यकर इति भावः। बन्धनिवृ-

* भावप्रकाशिका *

त्तत्वमेव सशरीरत्वम्, तच्च विद्यमानेपि शरीरे सशरीरत्वं गतमेवेति तत्प्रयुक्तं बन्धवत्त्वम्, तथा च ब्रह्मविद्विषया श्रुतिः, तथा "अहिनिर्ल्वयनिर्वल्मीके मृता

न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः, अपि तु [1]"सत्यं ज्ञानमनन्तं ब्रह्म' [2]'तत्त्वमसि' [3]'अयमात्मा ब्रह्म" इति तत्परेणैव पदसमुदायेन सिध्यतीति ॥ तदयुक्तम्; वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथापि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते। रज्ज्वादावपरोक्षसर्पप्रतीतौ वर्तमानायां नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्, आप्तोपदेशस्य तु भयनिवृत्ति-

* श्रुतप्रकाशिका *

चेन्नियोगनैरपेक्ष्यसाधकहेतुभिर्विधिशेषतया न ब्रह्मणः सिद्धिरित्याह (अत इति) अतः—वाक्यार्थज्ञानमात्रसाध्यत्वात्। तर्हि ब्रह्मणः कथं सिद्धिरित्यत्राह (अपित्विति) (तत्परेणैवेति) भेदनिषेधपरैर्वाक्यैर्निर्विशेषतया सिद्ध्यतीत्यर्थः। यद्वा सिद्धरूपार्थपरेणैवेत्यर्थः। (सिध्यतीति) ब्रह्मेत्यर्थलब्धम् ॥ एतद्ध्याननियोगवादी दूषयति (तदयुक्तमित्यादिना) कुत इत्यत्राह (वाक्यार्थेति) प्रपञ्चमिथ्यात्ववादिना ज्ञानाद्बन्धनिवृत्त्यनुपपत्तिः कथमुच्यत इत्यत्राह (यद्यपीति) ज्ञाननिवर्त्यत्वोपगमेऽपि वैषम्यमाह (तथापीति) परोक्षज्ञानस्यापरोक्षभ्रमाबाधकत्वे दृष्टान्तमाह (रज्ज्वादाविति) आदिशब्देन भूदलनादि गृह्यते। सर्पविपरीतज्ञानम्—रज्जुज्ञानम्। तेन भयानिवृत्तिश्चेदाप्तोपदेशानर्थक्यं स्यादित्यत आह (आप्तोपदेशस्येति) अनेन प्रथमसूत्रे प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्तत

* भावप्रकाशिका *

प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते। अथायमशरीरो मृतोऽप्राणो ब्रह्मैव तेज एव" इति। सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना

१ तै आन. १-अनु ॥
२ छा. ६-प्र. ८-७ ॥
३ माण्डूक्य. १-म. २ ॥

हेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन । तथा हि ; रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो नायं सर्पो रज्जुरेषेत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्त्तते । न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति, निवृत्तप्रतिबन्धे तत्परेऽपि

* श्रुतप्रकाशिका *

इति भाष्यार्थो ज्ञायते, आप्तोपदेशस्य भयादिकार्यनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षज्ञाननिमित्तप्रवृत्तिद्वारकमिति हि तस्य भाष्यस्यार्थः । इममर्थं दृष्टान्ते दर्शयति ( तथा हीति ) अस्त्वपरोक्षज्ञानमेव तादृशभ्रमविरोधि , शब्द एवापरोक्षज्ञानं जनयतीत्याशङ्क्याह ( न चेति ) हेतुमाह ( तस्येति ) व्याप्तिं दर्शयति ( ज्ञानेति ) न चानिन्द्रियत्वेऽप्यालोकादेरपरोक्षज्ञानजनकत्वं दृष्टमिति हेतोर्व्यभिचारः, इन्द्रियप्रधानकज्ञानसामग्र्यननुप्रविष्टत्वस्य विवक्षितत्वात् । एतच्च ज्ञानसामग्रीष्वित्यनेन सूचितम् । ज्ञानसामग्रीषु– सपरिकरास्विन्द्रियलिङ्गशब्दसदृशानुपपत्त्यनुपलब्धिष्वित्यर्थः । ( इन्द्रियाण्येवेति ) आलोकादिसहकृतानीति शेषः । इन्द्रियमेव योगिनो व्यवहितादिकं ज्ञापयति , तथा विवक्षितपुरुषविशेषस्य वाक्यमपरोक्षज्ञानं जनयतीत्याशङ्क्य परिहरति ( न चेति ) अस्य– पुरुषस्य । हेतुमाह ( निवृत्तेति ) अनभिसंहितेत्यादिपदद्वयं हृदि निधाय विशेषणद्वयमाह ( निवृत्तप्रतिबन्धे तत्परेपीति ) स्वविषयनियमातिक्रमादर्शनेने-

* भावप्रकाशिका *

इव सप्राणोऽप्राण इवेति . अहिनिर्लयनि–अहिकञ्चुकः । ( इन्द्रियप्रधानकज्ञानसामग्र्यननुप्रविष्टत्वस्येति ) ज्ञानसामग्रीणां मध्ये इन्द्रियप्रधानकसामग्र्येवापरो-

* श्रुतप्रकाशिका *

त्यत्र विषयशब्दः साध्यपरः, स्वसाध्यज्ञानातिक्रमदर्शनेनेत्यर्थः । शब्दसाध्यं ज्ञानं परोक्षमेव, शब्दस्तु स्वसाध्यं परोक्षज्ञानं नातिक्रामतीति यावत् । मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात् शब्दस्य तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वान्न योगिमनस्साम्यमिति भावः । ननु शब्देनाप्यपरोक्षज्ञानं जायते, दशमस्त्वमसीतिवाक्येन दशमोऽहमित्यपरोक्षज्ञानोत्पत्तिदर्शनादिति . तन्न ; उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेण प्रत्यक्षत्वारोपात्, तदा ह्युपदेशात्पूर्वभाविनवकपरिसङ्ख्यानजनितसंस्कारवशेनाविलम्बिता ह्यपेक्षाबुद्धिर्जायते, यथा घटोऽयमित्युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या, न तु घटोऽयमिति वाक्यजन्या, वाक्यं त्वापरोक्ष्यनिमित्तचक्षुर्व्यापारहेतुः, तथा दशमस्त्वमसीतिवाक्यं दशमोऽहमितिबुद्धिनिमित्तस्य पूर्ववासितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः, न त्वपरोक्षावभासहेतुः, तत्तत्प्रतीतिसामग्रीव्यवहितस्य वाक्यस्य तत्तत्सामग्रीत्वाभावात्, विमतं प्रत्यक्षज्ञानं न वाक्यजन्यम्, प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्ययवत्, विमतं वाक्यं न प्रत्यक्षज्ञानजनकम्, वाक्यत्वात्सम्प्रतिपन्नवदिति, एवं सामग्रीशैघ्र्येणान्यथासिद्ध्या परिहारो वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिहेतुत्वेनेति भाष्येणाभिप्रेतः । न च वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थप्रत्यक्षतामात्रेण विशिष्टानुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम् ; अहंसमानाधिकृतशब्दोल्लिखितप्रतीतेरपरोक्ष-

* भावप्रकाशिका *

क्षज्ञानसामग्री, अतो न व्यभिचार इति भावः । ननु ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षज्ञानजनकानीत्ययुक्तम् । इन्द्रियाणां सामग्रीत्वानाश्रयत्वेन ज्ञानसामग्रीष्विति निर्धारणासम्भवादित्याशङ्क्याह (आलोकादिसहकृतानीतिशेष इति) इन्द्रियघटितैव सामग्रीत्यर्थः । शब्दस्याविषयस्य कस्याप्यभावात् विषयनियमस्याप्रस्तुतत्वाच्चाह (विषयशब्दस्साध्यपर इति) ननु प्रत्यक्षसामग्र्याः कथं शीघ्रभावित्वम् ? दशमत्वप्रत्यक्षे कारणीभूताया अपेक्षाबुद्धेरभावादित्याशङ्क्याह( तदा ह्युपदेशादिति ) ( नच वाक्यजन्येऽपीति ) अयं भावः, ज्ञानस्यापरोक्षत्वं नेन्द्रियजन्यत्वरूपम्, सुखादिप्रत्यक्षाव्यापनात् तस्य साक्षिरूपस्येन्द्रियाजन्यत्वात्,

पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ॥ न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात्; वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निवृत्ते वाक्यार्थज्ञानमिति । न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वम-

* श्रुतप्रकाशिका *

त्वनियमश्च नास्ति, सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य पुण्यकृदहं पापकृदहमित्यादिप्रतीतेः पुण्यपापयोरापरोक्ष्यादर्शनात्, धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षत्वे लैङ्गिके पर्वतोऽग्निमानिति ज्ञाने अग्नेरपि प्रत्यक्षत्वप्रसङ्गः । तदेतदखिलं स्वविषयनियमातिक्रमादर्शनेन तदयोगादित्यत्राभिप्रेतम्; एवं शब्दस्यापरोक्षज्ञानहेतुत्वं दूषितम् ॥ अथ ध्यानस्य वाक्यार्थज्ञानोपायतामन्योन्याश्रयणेन दूषयति (न चेत्यादिना) अन्योन्याश्रयणपरिहाराय ध्यानपूर्वभाविज्ञानमर्थान्तरविषयम्, पाश्चात्यज्ञानमर्थान्तरविषयमिति भिन्नविषयताश्रयणमयुक्तमित्याह (न च ध्यानेति) कुत इत्यत्राह (तथा सतीति) कथमुपायत्वहानिरित्यत्राह (न ह्यन्यध्यानमिति) एकविषयत्वेऽपि निवर्तकस्य वाक्यार्थज्ञानस्य ध्यानापेक्षा स्यात्, ध्यानस्य वाक्यार्थज्ञानापेक्षा कथमित्यत्राह (ज्ञातार्थेति) ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यम्, न तु ध्यानं पश्चाद्भाविवाक्यजन्यज्ञानमूलमित्येवं ध्यानवाक्यार्थज्ञानयोः सामग्रीभेदेनान्योन्याश्रयणपरिहारमाशङ्क्य सामग्रीभेदो

ध भावप्रकाशिका ध

अपित्वपरोक्षार्थविषयत्वमेव वृत्तेरापरोक्ष्यम्. अर्थस्य चापरोक्ष्यमनावृतसंविद्भेद एव. ततश्च घटं पश्यतो घटोयमिति व्याक्यजन्या लिङ्गजन्यापि वा प्रतीतिरपरोक्षैव. ततश्च दशमस्त्वमसीति वाक्यजन्याप्यपरोक्षाहमर्थप्रतीतिरपरोक्षैवेत्य-

वर्जनीयम् , ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम्, निवर्त्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयम् , भिन्नविषयं वा । एकविषयत्वे तदेवेतरेतराश्रयत्वम् । भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासम्भवः । किञ्च ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनन-

---

* श्रुतप्रकाशिका *

न सम्भवतीत्याह ( ध्येयेति ) हेत्वन्तरासम्भवात्– ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः । तत्परिहाराय वाक्यभेदमाशङ्क्य तथा वाक्कुमयुक्तमित्याह ( न चेति ) विकल्प्य दूषयति– ( ध्यानमूलमिति ) ( एकविषयत्वे तदेवेतरेतराश्रयत्वमिति ) वाक्यान्तरेण ज्ञानोत्पत्तौ तस्य तत्त्वमसिवाक्यजन्यज्ञानतुल्यविषयत्वात्तथापि ज्ञानस्य निदिध्यासनापेक्षा स्यात् , ध्यानस्य च वाक्यार्थज्ञानापेक्षा स्यादित्यन्योन्याश्रयणमित्यर्थः । वाक्ययोर्भिन्नविषयत्वे दूषणमाह ( भिन्नेति ) ध्यानस्य च वाक्यार्थज्ञानविरोधित्वमेवेत्याह ( किञ्चेति ) ध्यात्रादीत्यादिशब्देन शमादिर्गृह्यते ( दृष्टद्वारेणेति ) अदृष्टद्वारेणोपयोगस्त्वत्यन्तभीरुभिः परैर्निरसनीयद्वैतवासनायाः सत्यत्वप्रसङ्गभयात्परित्यक्त इति ध्याननियोगवादिनोऽभिप्रायः । वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिनिरासेन जीवन्मुक्ति-

* भावप्रकाशिका *

भ्युपगमेपि दशमत्वांशेनापरोक्षरूपता , तदंशे अपरोक्षत्वाभावादिति . नच विशेष्यांशेपि वा शाब्दापरोक्षाभ्युपगमे तदिष्टसिद्धिरितिवाच्यम् ; विशेषणांशे ज्ञानस्याप्रत्यक्षत्वे विशेष्यांशेपि अप्रत्यक्षत्वात् , एकस्या एव ज्ञानवृत्तेः प्रत्यक्षा-

निदिध्यासनविधीनामानर्थक्यमेव ॥ यतो वाक्यादापरोक्ष्यज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्त्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता। का चेयं जीवन्मुक्तिः? सशरीरस्यैव मोक्ष इति चेत्, माता मे वन्ध्येतिवदसङ्गतार्थं वचः, यतः सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति। न, मिथ्येतिप्रत्ययेन सशरीरत्वं निवृत्तं चेत्, कथं सशरीरस्य मुक्तिः? अजीवतोऽपि मुक्तिस्सश-

* श्रुतप्रकाशिका *

निरासः सिध्यतीत्याह (यत इति) दूरोत्सारिता—वाक्यादपरोक्षज्ञानसम्भवेऽपि व्याघातादिना जीवन्मुक्तिरुत्सारिता, वाक्यादापरोक्ष्यासम्भवाद्दूरोत्सारितेति भावः॥ (का चेयमिति) किंशब्दः क्षेपे, विकल्पाभिप्रायेण प्रश्नपरो वा। तत्स्वरूपं शङ्कते (सशरीरस्येति) व्याहतिमाह (मातेति) व्याहतिमुपपादयति (यत इति) व्याहतिपरिहारार्थं तन्मतं शङ्कते (अथेति) सशरीरत्वनिवृत्तिरिति निर्देशेन सशरीरत्वस्य छिन्नमूलता जीवन्मुक्तिवादिनाऽभिप्रेता। दूषयति (नेति) शरीरस्य सत्यत्वानभ्युपगमात् तस्य प्रध्वंसरूपा स्वरूपनिवृत्तिरनभिमता, अतः प्रतिभासनिवृत्तिर्वा प्रतिभासतात्त्विकताभिमाननिवृत्तिर्वा विवक्षिता स्यादित्यभिप्रायेण प्रथमं कल्पमनूद्याभिमतासिद्ध्या दूषयति (मिथ्येतीति) सशरीरत्वम्—सशरीरत्वप्रतिभासः। अनन्तरग्रन्थे प्रतिभासनिर्देशात्। (कथं सशरीरस्य मुक्तिरिति) सशरीरस्य मुक्तिरुक्ता स्यादित्यर्थः। तदेवोपपादयति

* भावप्रकाशिका *

प्रत्यक्षरूपत्वाभावादिति भावः। (अतः प्रतिभासनिवृत्तिर्वेति) ननु सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, इत्युक्तौ प्रतिभासनिवृत्ति-

रीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्तिरिति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत्. न, ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद्बाधकज्ञानस्य, कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात्, द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किञ्च

* श्रुतप्रकाशिका *

( अजीवतोऽपीति ) मिथ्याप्रतिभासशब्देन भ्रान्तिज्ञानं विवक्षितम्, जीवदजीवन्मुक्त्योर्विशेषाभावाच्च शरीरस्य मुक्तिरुक्ता स्यादित्यर्थः। द्वितीयं शिरः शङ्कते ( अथेति ) अत्र पूर्वं सशरीरत्वप्रतिभासे वर्त्तमान इत्यादिग्रन्थाभिप्रेतार्थो विवृतो भवति। दूषयति ( नेति ) कथमित्यत्राह ( ब्रह्मेति ) अविद्याकर्मादीत्यादिशब्देन वासना गृह्यते। तेनैव बाधितः—बाधकज्ञानेन बाधित इत्यर्थः। द्विचन्द्रज्ञानादौ हि बाधितानुवृत्तिर्दृष्टेत्यत्राह ( द्विचन्द्रज्ञानादाविति ) न हि रज्जुयाथात्म्यज्ञानेन शुक्तौ रजतभ्रमो निवर्त्तत इति भावः। प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन ज्ञानबाध्यत्वाभावाद्भ्रमानुवृत्तिरुक्ता, अत्र तु चन्द्रैकत्वज्ञानाविषयत्वेन दोषस्याबाधितत्वात् द्वित्वज्ञानानुवृत्तिरुक्तेति भिदा, जरन्मायावादिनोऽपि कृत्स्नमिथ्यात्वस्याभ्युपगतत्वात् एवं वैषम्यमुक्तम्। जीवन्मुक्तेः श्रुतिविरोधमाह ( किञ्चेति ) स्मृतिविरोधमाह ( सैषेति ) वेदशब्देन

⁂ भावप्रकाशिका ⁂

पक्षस्यानुत्थित्या कथमस्य विकल्पस्यावकाशः? विरोधादिति चेन्न; सशरीरत्वप्रतिभासे विद्यमाने यस्मायं प्रत्ययो मिथ्येति प्रत्यय उत्पन्नस्तस्य तदनन्तरभाविनीया सशरीरत्वप्रतिभासनिवृत्तिरित्येवम्परतया योजनासम्भवात् ( एवं वैषम्यमुक्त-

[1] "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता [2] "वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्" इति ।

* श्रुतप्रकाशिका *

त्रिवर्गसाधनकर्माण्युच्यन्ते, तत्फलमुच्यते इमं लोकममुं चेति । बुद्धे—वाक्यार्थज्ञाने जाते सति । क्षेमप्रापणम्— मोक्षः । तच्छास्त्रैर्विप्रतिषिद्धम्— शास्त्रैरिति बहुवचनस्यायम्भावः ,— वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः " एवं वर्तयन् यावदायुषम्" इत्याप्रयाणादिनुवृत्तिपरैर्मोक्षस्य शरीरपातमात्रसापेक्षत्वपरैः "तयोर्ध्वमायन्नमृतत्वमेति" इति नाडीविशेषनिष्क्रमणपरैरर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकैः शास्त्रैर्विरोध इति ( विप्रतिषिद्धमिति ) विशेषेण प्रतिषिद्धम् , न तुल्यबलैः प्रतिरुद्धम्, अपितु प्रबलैः पराहतम्, प्राबल्यञ्च भूयसां स्यात् बलीयस्त्वमिति न्यायादिति भावः । प्रत्यक्षविरोधमपि स्मृतिरेवाह ( बुद्धे चेदिति ) एतेन परं व्याख्यातम्—एतेन शास्त्रप्रत्यक्षविरोधेन, औडुलोमिमतानुसारेणोक्तमन्यदपि व्याख्यातम्, सर्वमप्यपास्तमित्यर्थः । यद्वा यथेदानीं दुःखोपलब्धिस्तथा प्रेत्यापीत्यर्थः । यद्वा यथा दुःखनिवृत्तिर्नोपलभ्यते तथा सुखनिवृत्तिरपि नेत्यर्थः । जीवन्मुक्तिनिरासार्थमुदाहृतेन वचनेन वाक्यार्थज्ञानमात्रान्मोक्षश्चार्थान्निरस्त

* भावप्रकाशिका *

मिति ) ननु पूर्ववत्पारमार्थिकत्वापारमार्थिकत्वाभ्यां वैषम्यमुक्तमिति भावः । ( औडुलोमिमतानुसारेणेति ) प्राक् भिन्नस्यैव जीवस्य मुक्तिकाले एकीभाव इत्याद्यनुसारेणेत्यर्थः । औडुलोमिमते प्रत्यक्षविरोधादर्शनादाह ( यद्वा यथेदानीमिति ) वसिष्ठावान्तरतपःप्रभृतीनां प्रेत्यापि शरीरान्तरपरिग्रहदुःखानुभवदर्शनादिति

१ छा ६-प्र. १४-खं २ ॥ | २ आपस्तम्बधर्मं. २-प्रश्न.९-पटल. २१-ख ॥

अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतस्सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति ; तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किञ्च न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते, किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन । नियोगस्तु तदापरोक्ष्यज्ञानं जनयति ॥ कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्, कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् ? । मनोनैर्मल्यद्वारेणेति चेत्, ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पा-

* श्रुतप्रकाशिका *

इत्याह (अनेनेति) जीवन्मुक्तिनिरासमुपसंहरति (अत इति) जीवन्मुक्तिनिरासेन स्वमतस्थैर्यसिद्धिमाह (तस्मादिति) वाक्यार्थज्ञानमात्रान्मोक्षवादिनोक्तश्चोद्यपरिहारो ममापि तुल्य इत्याह (न च नियोगेति) नियोगनिवर्त्यत्वे प्रपञ्चसत्यत्वं स्यादित्याशङ्क्याह (किञ्चेति) ध्याननियोगपक्षानुपपत्तिपरिहारस्य विवक्षितत्वात् किञ्चशब्दप्रयोगः । नियोगस्य निवर्त्तकत्वं ज्ञानद्वारकमिति न निवर्त्यसत्यत्वमित्यर्थः । नियोगस्य ज्ञानोत्पत्तौ किञ्चित्कारबुभुत्सया पृच्छति (कथमिति) न खलु ज्ञाने दृष्टः किञ्चित्कारो नियोगेन सम्भवति, अतः स वक्तव्य इति भावः । प्रतिबन्द्या परिहरति (कथं वेति) (वेदनोत्पत्तिहेतुत्वमिति) इच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतम् । 'विविदिषन्ती'ति ह्युदाहरिष्यते । परिहारं शङ्कते (मन इति) तत्साम्यमाह (ममापीति) पुनराशङ्कते (मम त्विति) मनो हि साधारणकारणम्, तस्मिन् सत्यप्यसाधारणकारणमपेक्षितम्, तन्ममास्ति,

* भावप्रकाशिका *

भावः । ननु प्रपञ्चसत्यत्वशङ्कापरिहारप्रवृत्तत्वे किञ्चशब्दानुपपत्तिरित्याशङ्क्याह

द्यते। तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत्. ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः। केनावगम्यत इति चेत्. भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणमनननिदिध्यासनैस्सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते ?। [1] "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" [2] "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [3] "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिः शास्त्रैरिति चेत्. ममापि 'श्रोतव्यो

* श्रुतप्रकाशिका *

त्वया तु वक्तव्यमिति चेदित्यर्थः। वैशेषिकाद्यभिमतमानसप्रत्यक्ष इव प्रकृष्टादृष्टसहकृतमनोमात्रकारणके 'तत्सर्वं धर्मवीर्येण यथावत्सम्प्रपश्यसि' इत्यादिसिद्धे योगिप्रत्यक्ष इव च मन एवासाधारणकारणमिति परिहरति (ध्यानेति) मनोमात्रस्य साधारणकारणत्वेऽपि निर्मलतरस्य मनोविशेषस्यासाधारणकारणत्वं युक्तमिति भावः। तज्ज्ञापकं प्रश्नं शङ्कते (केनेति) ज्ञापकस्यास्यलक्षणं स्वपक्षे वैषम्यं दर्शयितुं पृच्छति (भवतो वेति) निदिध्यासनेन विषयविमुखीकृतमनस्कस्य शास्त्रेण निवर्त्तकज्ञानोत्पत्तौ प्रमाणतया पराभिमतानि श्रुतिवाक्यानि शङ्कते (विविदिषन्तीति) 'ब्रह्म वेद ब्रह्मैव भवती'ति वेदनशब्देन वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः। मनसो ज्ञानसाधनत्वे प्रमाणं दर्शयति (ममापीति) न चक्षुषेत्यादिवाक्यं मनस एव साधनत्वे स्वरसम्. ब्रह्म वेदेत्यत्र वेदनशब्दस्य वाक्यार्थज्ञानपरत्वं तु न स्वरसतः प्रतीयते। न च श्रुत्यन्तरैकार्थ्येन तत्परत्वा-

ॐ भावप्रकाशिका ॐ

(ध्याननियोगपक्षेति)। (मिथ्यात्वनिबन्धना इति) मिथ्याभूतस्य ध्याननियो-

१ बृ. ६-अ. ४-ब्रा. २२ ॥
२ बृ. ६-अ. ५-ब्रा. ६ ॥
३ मुण्ड. ३-मु. २-ख. ९ ॥

मन्तव्यो निदिध्यासितव्यः [1]'ब्रह्मविदाप्नोति परम्' [2]'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन" [3]'हृदा मनीषा मनसा ऽभिक्लृप्तः" इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति। निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् ॥ [4]"नेदं यदिदमुपासते" इत्युपास्यत्वं प्रतिषिद्धमिति चेत्, नैवम्, नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते। यदिदं जगदुपासते

* श्रुतप्रकाशिका *

वगमः, वाक्यार्थज्ञानस्योपायत्वकण्ठोक्तिच्छ्रुत्यन्तराभावादित्यभिप्रेतम्, मिथ्यात्वनिबन्धनाः सर्वे चोद्यपरिहाराः समानाः, परोक्षज्ञानस्याप्यपरोक्षभ्रमनिवर्तकत्वं शास्त्रप्रत्यक्षविरोधौ श्रुतिस्वारस्यहानिश्च भवतां पक्षेऽधिकं दूषणमिति वैषम्यज्ञापनाय कथमित्यादिना प्रतिबन्दीमुखेन तत्तच्छङ्कापरिहारः कृतः। इतिशब्दो नानन्तरवाक्यशेषः, अपि तु प्रकरणशेषः। उपास्यत्वप्रतिषेधं शङ्कते (नेदमिति) परिहरति (नैवमिति) तस्य वाक्यस्यैवं निर्वाहो न युक्त इत्यर्थः। उपास्यत्वनिषेधः प्रतीयत इत्याह (नात्रेति) कस्तर्ह्यर्थ इत्यत्राह (अपि त्विति) कथं वैरूप्यप्रतिपादनमित्यत्राह (यदिदमिति) 'यदिदमुपासते' इत्यत्र इदमंशे निषेधस्य तात्पर्यमिति भावः। 'मनो ब्रह्मेत्युपासीते'त्यादिना विहितप्रतीकोपासनोपास्यानि हि परिच्छिन्नानि, नेदं ब्रह्म, किन्त्वपरिच्छिन्नं तदेव

* भावप्रकाशिका *

गनिवर्त्यत्वं न सम्भवति. सत्यत्वप्रसङ्गादित्येतद्यज्ञदानादिसाध्यत्ववादिनस्तवापि समानम्. यदि च यज्ञादीनां नैर्मल्यद्वारेण वाक्यावगतिहेतुत्वम्, नतु प्रपञ्चनिवृत्त्यावविद्यापनये वा, तर्हि ममापि समानमिति भावः। (अपि तु प्रकरणशेष)

---

१ तै. आन. १-अनु ॥
२ मुण्ड. ३-मु. १-ख. ८।
३ कठ. ६वल्ली ४ ॥
४ केन. १-ख. ५ ॥

प्राणिनः, नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि, यद्वाचाऽनभ्युदितं येन वागभ्युद्यत इति वाक्यार्थः। अन्यथा तदेव ब्रह्म त्वं विद्धीति विरुध्यते । ध्यानविधिवैयर्थ्यं च स्यात्; अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥ यदपि कैश्चिदुक्तम्– भेदाभेदयोर्विरोधो न विद्यत इति । तदयुक्तम्; न हि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन् वस्तुनि सङ्गच्छेते । अथोच्येत– सर्वं हि वस्तुजातं प्रतीति-

* श्रुतप्रकाशिका *

परं ब्रह्मेत्यर्थः । अनेन 'अन्यदेव तद्विदिता' दित्यादिकमपि जगद्वैरूप्यपरमिति व्याख्यातं भवति । यद्वाचानभ्युदितम्– वक्तुमशक्यम्, अपरिच्छिन्नम्, अन्यथेति स्ववाक्यविरोध उक्तः, ध्यानविधिवैयर्थ्यमिति वाक्यान्तरविरोध उक्तः । स्वपक्षमुपसंहरति ( अत इति )॥ अथायमेव ध्याननियोगवादी भास्करमतं दूषयितुं तदभिमतं भेदाभेदाविरोधमनुवदति ( यदपीत्यादिना ) प्रथमं सङ्क्षेपेण दूषयति ( तदयुक्तमिति ) नियमेन भिन्नाधारत्वलक्षणः सहानवस्थानलक्षणश्चेति विरोधो द्विधा, आदिशब्देन तृणदहनादेरिव नाश्यनाशकभावो विवक्षितः। तद्वद्भेदाभेदयोरपि विरोधोऽस्तीत्याह ( न हीति )॥ अथ भेदाभेदमतं विस्तरेण प्रस्तौति ( अथोच्येतेति ) वक्ष्यमाणौपयिकमर्थं शिक्षयति ( सर्वं हीति )

* भावप्रकाशिका *

इति ) पूर्वप्रकृतकृत्स्नोपसंहारपर इतिशब्द इत्यर्थः । ( भास्करमतं दूषयितुमिति ) जगतो परमार्थभूतस्य कृत्स्नस्येत्युक्तिमसहमानस्य ब्रह्मपरिणामिनित्यतां वदतो भास्करस्य मतं दूषयितुमित्यर्थः, इयञ्च सङ्गतिरुत्तरभाष्ये स्पष्टयिष्यते ( विरोधो द्विधेति ) एकस्मिन् देशे कदाप्यनवस्थानं हि नियमेन भिन्नाधारत्वम्, यथा शीतोष्णस्पर्शयोर्जलतेजोगतयोः । सहावस्थाननियमस्तु एकस्मिन् काले

व्यवस्थाप्यम्, सर्वं च भिन्नाभिन्नं प्रतीयते । कारणात्मना जात्यात्मना चाभिन्नम् । कार्य्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च, कार्य्य-कारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते, प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते; यथा 'मृदयं घटः, खण्डो गौः मुण्डो गौः' इति । न चैकरूपं किञ्चिदपि वस्तु लोके दृष्टचरम्, न च तृणादेर्ज्वल-नादिवदभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः, मृत्सुवर्णगवाश्वाद्यात्मनावस्थितस्यैव घटमुकुटखण्ड-वडवाद्यात्मना चावस्थानात् । न चाभिन्नस्य भिन्नस्य

---

* श्रुतप्रकाशिका *

शीतोष्णादिष्वपि विरोधः प्रतीत्यधीन इति भावः । ततः किमित्यत्राह ( सर्वं चेति ) कथं भिन्नाभिन्नत्वमित्यत्राह ( कारणात्मनेति ) पूर्वोक्तद्विविधविरोधोपलम्भ-स्थलवैरूप्यं वक्तुमाह ( छायेति ) ततः किमित्यत्राह ( कार्येति ) अविरोधेनो-पलब्धिमाह ( प्रत्युतेति ) उपलब्धिमभिनयेन दर्शयति ( यथेति ) अद्विरूप-वस्त्वनुपलब्धिमाह ( न चेति ) नाश्यनाशकत्वलक्षणस्तृतीयविरोधो नास्तीत्याह ( न च तृणादेरिति ) वस्तुविरोधशब्देन नाश्यनाशकत्वलक्षणविरोधो विव-क्षितः । तादृशविरोधाभावमुपपादयति ( मृत्सुवर्णेति ) जातिगतोऽभेदो व्यक्ति-गतश्च भेद इति कथमेकस्य भेदाभेदाविति शङ्कायां जातिव्यक्त्योः परस्पर-भेदाभेदमुपपादयति ( न चाभिन्नस्येति ) अभिन्नस्य- जातेः, भिन्नस्य- व्यक्ते-

❀ भावप्रकाशिका ❀

एकस्मिन् देशे अनवस्थानम्, यथा कालभेदेन एकाधिकरणयोरपि तमःप्रका-शयोरितिभिदा । भाष्ये- कार्यकारणयोर्जातिव्यक्त्योश्चेति । कार्य्यकारणात्मनो-र्जातिव्यक्तिरूपयोश्चेत्यर्थः । ( अभिन्नस्य जातेरिति ) इदमुपलक्षणं कारण-

च वस्तुनो ऽभेदो भेदश्चैक एवाकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्। न हि विष्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु इयं मृत् अयञ्च घटः, इदं गोत्वम् इयं व्यक्तिः, इति विवेक्तुं शक्नोति, अपि तु मृदयं घटः खण्डो गौरित्येव प्रत्येति। अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्य्यं व्यक्तिश्चेति विविनक्तीति चेत्, नैवम्; विविक्ताकारानुपलब्धेः। न हि सुसूक्ष्ममपि निरीक्षमाणैः इदमनुवर्तमानमिदं च

---

* श्रुतप्रकाशिका *

रित्यर्थः। जातेरभेद एवाकारः, व्यक्तेर्भेद एवाकार इति किमीश्वराज्ञया स्वीक्रियते? न हि प्रमाणतर्कानादरेण हठात्कश्चिदर्थः स्वीकार्य इति भावः। प्रतीतिबलादभ्युपगतिं शङ्कते (प्रतीतत्वादिति) तथा स्वमतस्याभ्युपगन्तव्यतामाह (प्रतीतत्वादेवेति) त्वदुक्तादेवेत्येवकाराभिप्रायः (द्वैरूप्यमपीति) अनिष्टमपीत्यपिशब्दस्याभिप्रायः। प्रतीतत्वमेवोपपादयति (न हीति) इयं जातिः इयं व्यक्तिरिति विविक्ते हि अत्राभेदोऽत्र च भेद इति वक्तुं युक्तम्, न तथा विविच्यत इत्यर्थः। तर्हि कथं प्रतीतिरित्यत्राह (अपि त्विति) एकमेव वस्तु जात्यात्मना व्यक्त्यात्मना च भिन्नमभिन्नञ्च प्रतीयत इत्यर्थः। मृदयं घट इत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययो भेदाभेदसाधकयुक्तिरुक्ता भवति। अनुवृत्तिव्यावृत्तिभ्यां विवेकं शङ्कते (अनुवृत्तीति) परिहरति (नैवमिति) विविक्ताकारानुपलब्धिं विवृणोति (नहि सुसूक्ष्ममपीति) विविक्ताकारोपलम्भे सति यस्मिन्नंशेऽनुवृत्तिबुद्धिबोध्यत्वम् अस्मिन्नंशे व्यावृत्तिबुद्धिबोध्यत्वमिति

* भावप्रकाशिका *

स्यापि, एवं व्यक्तेरित्यत्रापि कार्यस्याप्युपलक्षणं द्रष्टव्यम्। व्यक्तेराकारस्वसम्भवं

व्यावर्त्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा सम्प्रतिपन्नैक्ये कार्य्ये विशेषे चैकत्वबुद्धिरुपजायते; तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते । एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते, अतो द्व्यात्मकमेव वस्तु प्रतीयते इति कार्य्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् । अथोच्येत— मृदयं घटः खण्डो गौरितिवत् देवोऽहं मनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात; अत इदं भेदाभेदोपपादनं निजसदननिहितहुत-

* श्रुतप्रकाशिका *

ज्ञातुं शक्यमित्यर्थः । आकारभेदः— अंशभेदः । तर्हि कथमुपलम्भ इत्यत्राह (यथा सम्प्रतिपन्नेति) विशेषः— व्यक्तिः । यथा कार्यैकत्वं व्यक्त्येकत्वञ्च सम्प्रतिपन्नं तथा कार्यकारणयोश्च जातिव्यक्त्योश्चैकत्वबुद्धिर्जायत इत्यर्थः । एकत्वबुद्धिरित्यनेन एकशब्दानुविद्धप्रत्यय उक्तो भवति । सहोपलम्भनियमः प्रथमपिण्डग्रहणे अभेदेन ग्रहणं चार्थादुक्तं भवति, न विवेक्तुं शक्नोतीत्युक्तेः । एवं जातिव्यक्त्योरन्योन्यं भेदाभेदः उक्तः । अथ पिण्डानां परस्परभेदाभेद उच्यते (एवमेवेति) देशकालवैलक्षण्यं स्पष्टम् । नीलत्वखण्डत्वादिराकारवैलक्षण्यम् । अत्यन्तभेदः— अभेदासहो भेद इत्यर्थः । अत्र चोद्यमाशङ्कते (अथोच्येतेति) देहात्मनोः सद्भ्यात्मनैकत्वेऽभिमतेऽपि देहरूपेण आत्मरूपेण वा तयोरैक्यस्याप्रामाणिकत्वात्तयोर्भिन्नाभिन्नत्वमनिष्टमिति भावः । परिहरति

ॐ भावप्रकाशिका ॐ

मनसि निधायाह (आकारभेदः—अंशभेद इति) (भिन्नाभिन्नत्वमनिष्टमिति भाव इति) यद्येवं खण्डमुण्डयोरपि खण्डत्वेनैक्यप्रसङ्ग इत्येवापादनसम्भवात् ।

वह्ज्वालायत इति , तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम् । तथा हि, अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति । देवाद्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्प्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति । खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केनचित् क्वचिद्बाधो दृश्यते, तस्मान्नातिप्रसङ्गः , अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः , अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः । कथमवगम्यत इति चेत् . "तत्त्वमसि' 'नान्योऽतोऽस्ति

* श्रुतप्रकाशिका *

( तदिदमिति ) अबाधितं सामानाधिकरण्यं भेदाभेदसाधकम् , अबाधितश्च भेदाभेदस्तत्त्वमित्यजानतोक्तमित्यर्थः । तदुपपादयति ( तथा हीति ) परिहारौपयिकमर्थं शिक्षयति ( अबाधित इति ) ततः किमित्यत्राह ( देवादीति ) जातिव्यक्त्योरपि तथा स्यादित्यत्राह ( खण्ड इति ) एवं लौकिकार्थानां भेदाभेद उक्तः । तदुपजीव्य वैदिकेष्वप्यर्थेषु जीवब्रह्मणोर्भेदाभेदमाह ( अत एवेति ) अतः—भेदाभेदयोरविरुद्धत्वादित्यर्थः । ब्रह्मांशत्वेनेत्यत्र "अंशो नानाव्यपदेशात्" इति सूत्रं स्मारितम् । अचिद्ब्रह्मणोर्भेदाभेदः स्वाभाविक इति भास्करयादवयोरुभयोरप्यभिमतम् । चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकाविति यादवमतव्यावृत्त्यर्थमाह ( तत्रेति ) ( कथमिति ) भेदाभेदसद्भावे तत्राभेदस्यैव स्वाभाविकत्वे च किं प्रमाणमित्यर्थः । अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथममन्यथा चेति सूत्रांशविषयवाक्यमाह ( तत्त्वमसीति ) दाशकितवेत्याद्यंशविषयमाह

ॐ भावप्रकाशिका ॐ

देहात्मपर्यन्तधावनं किमर्थमितिचेत् . मैवम् ; देवोऽहमिति सामानाधिकरण्यवत्

द्रष्टा" [1]"अयमात्मा ब्रह्म" इत्यादिभिः श्रुतिभिः [2]"ब्रह्मेमे द्यावापृथिवी" इति प्रकृत्य [3]"ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्" इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च। [4]"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" [5]'ज्ञाज्ञौ द्वावजावीशनीशौ' [6]'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः' [7]'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" [8]"स कारणं करणाधिपाधिपः" [9]"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" [10]'य आत्मनि तिष्ठन्' [11]'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद' "प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याति [12]"तमेव विदित्वातिमृत्युमेति" इत्यादिभि-

* श्रुतप्रकाशिका *

( ब्रह्मेम इति ) नानाव्यपदेशादित्यंशस्य विषयमाह ( नित्यो नित्यानामिति ) (क्रियागुणैरात्मगुणैश्चेति) क्रियागुणाः— संसारहेतुगुणाः, आत्मगुणाः—मोक्षहेतुगुणाः, तैस्संयोगहेतुरित्यर्थः। अत्र भेदस्यौपाधिकत्वं कथमवगम्यत इत्यत्राह

ॐ भावप्रकाशिका ॐ

खण्डो मुण्ड इति सामानाधिकरण्यप्रतीत्यभावेन तदापादनायोगादिति भावः।

१ बृ. ६-अ. ४-ब्रा. ५ ॥
२—३ ... ... ... ...
४ श्वे. ६-अ. १३ ॥
५ श्वे. १-अ. ९ ॥
६ श्वे. ५-अ. १२ ॥
७ श्वे. ६- अ. १६ ॥
८ श्वे. ६-अ. ९ ॥
९ श्वे. ४-अ. ६ ॥
१० बृ. ५-अ. ७-ब्रा. २२-माध्यन्दिनपाठः
११ बृ. ६-अ. ३-ब्रा. २१-३५ ॥
१२ श्वे. ३-अ. ८ ॥

भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ; तत्र [1]"ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्। [2]"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते। ननु च [3]"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च [4]"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" [5]"भोगमात्रसाम्यलिङ्गाच्च" इति। नैतदेवम्, [6]"नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात्, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति

* श्रुतप्रकाशिका *

(तत्रेति) तत्स्वरूपापत्तिव्यपदेशो भेदनिषेधश्चाभेदस्यानौपाधिकत्वज्ञापकावित्यर्थः। मुक्तौ भेदनिषेधादेव भेदस्यौपाधिकत्वमप्यर्थसिद्धम्। मुक्तौ भेदं दर्शयंश्चोदयति (ननु चेति) सहशब्दो भोक्तृसाहित्यपर इति चोदयितुरभिप्रायः। भोग्यसाहित्यबुद्ध्या परिहरति (नैतदिति) भेदप्रतीतिं परिहरिष्यन् मुक्तौ भेदस्य श्रुतिविरुद्धतां दर्शयति (नान्य इति) भेदप्रतीतिं परिहरति (सोऽश्नुत इति) सोऽश्नुत इति वाक्येनोक्तंभवतीत्यन्वयार्थः। ब्रह्मणा सह गुणानश्नुते, गुणांश्च ब्रह्म

* भावप्रकाशिका *

(तैस्संयोगहेतुरित्यर्थ इति) जीवान् कर्मभिस्संयोजयतीत्यर्थः। (तद्वाक्यान्तरावगम्यमिति) यद्यपि ब्रह्मणेतीत्थम्भावे तृतीया, सहशब्दश्च यौगपद्यपरः। ततश्च ब्रह्मणा उपलक्षितः ब्रह्मत्वं प्राप्तः सह युगपत् सर्वान् कामानश्नुत इत्यर्थः।

१ मुण्ड. ३-मु. २-ख ९॥
२ बृ. ४-अ. ४-ब्रा. १४॥
३ तैत्त. आन १-अनु॥
४-५ शारी. ४-अ. ४-पा-१७-२१॥
६ बृ. ५-अ. ७ ब्रा. २३॥

सर्वैः कामैः सह ब्रह्माश्नुते सर्वगुणान्वितं ब्रह्माऽश्नुते इत्युक्तं भवति, अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। 'जगद्व्यापारवर्ज'मित्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यन्यूनताप्रसङ्गो वक्ष्यते, अन्यथा [1]"सम्पद्याविर्भावः स्वेन शब्दात्" इत्यादिभिर्विरोधात्। तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्माद्ब्रह्मणः परस्परञ्च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतञ्च तथाप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदस्सम्भवत्येव। नच भिन्ने ब्रह्मणि

* श्रुतप्रकाशिका *

चानुभवतीति। किं ब्रह्म पृथग्भूतोऽश्नुते? उतापृथग्भूत इत्यपेक्षायां तद्वाक्यान्तरावगम्यम्, अतो नात्र भेदप्रतीतिरिति यावत्। एतदुपपादयति (अन्यथेति) अप्राधान्यं भोक्त्रन्तरापेक्षया दोषः, भोग्यभूतस्वगुणापेक्षया तु न दोष इति भावः। परोदाहृतसूत्रस्य स्वाभिमतमर्थमाह (जगदिति) ब्रह्मणो मुक्तस्य च भेदे सति जगद्व्यापारवर्जत्वप्रसङ्गान्न भेद इति सूत्रार्थ इत्यर्थः। तदुपपादयति (अन्यथेति) अभेदस्य स्वाभाविकत्वं निगमयति (तस्मादिति) मुक्तौ भेदनिषेधादर्थसिद्धं भेदस्य औपाधिकत्वमेवकारेणाभिप्रेतम्। उपाधिः क इत्यपेक्षायामाह (भेदस्त्विति) औपाधिकत्वरूपवैषम्यपरस्तुशब्दः, शङ्काद्योतको वा। ब्रह्मणो विभुत्वनिरवयवत्वाभ्यां जीवगत उपाधिर्ब्रह्मण्येवेति तदसंसृष्टप्रदेशाभावात् जीवेश्वरभेदो न सम्भवतीत्यत्राह (यद्यपीति) अन्योन्याश्रयमाशङ्क्याह (न चेति) ईश्वरांशे कर्मकृतबुद्ध्याद्युपाधिसम्बन्धाभावादुपाधिसंयोगस्य भेदपूर्वकत्वम्। प्रवाहानादितया

* भावप्रकाशिका *

"सोऽश्नुते सकलान् कामान् क्रमेण च सुरर्षभाः। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः॥" इति स्मृतेः। ततश्च ब्रह्मसुखेऽनुभूयमाने सर्वमपि वैषयिकसुखं

१ शारी. ४-अ ४-पा. १-सू:

बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम् ; उपाधेस्तत्संयोगस्य च कर्मकृतत्वात् तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति—पूर्वकर्मसम्बद्धाज्जीवात्स्वसम्बद्ध एवोपाधिरुत्पद्यते, तद्युक्तात्कर्म, एवं बीजाङ्कुरन्यायेन कर्मोपाधिसम्बन्धस्यानादित्वान्न दोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः। भेदस्त्वौपाधिकः। उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत् भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्तदभ्युपगमे अनवस्थानाच्च, अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति॥ अत्रोच्यते,—

---

* श्रुतप्रकाशिका *

परिहरति (उपाधेरिति) कथमुपाधितत्संयोगकर्मणां प्रवाहानादित्वम्? तेन चान्योन्याश्रयपरिहारः कथम्? इति शङ्कायां तद्विवृणोति (एतदुक्तमिति) (तद्युक्तात्कर्मेति) कर्मवश्यत्वं हि जीवत्वम्, उपाधिना जीवत्वं जीवभावादुपाध्यन्तरमित्यनादिरित्यर्थः। फलितमर्थमाह (अत इति) अचिदंशे वैषम्यमाह (उपाधीनां पुनरिति) पुनस्त्वर्थः। वैषम्ये हेतुद्वयमाह (उपाधीनामिति) भिन्नाभिन्नत्वपक्षमुपसंहरति (अतो जीवकर्मेति)॥ अथ भेदाभेदपक्षं ध्याननियोगवादी दूषयति (अत्रोच्यत इत्यादिना) पूर्वं यदपि कैश्चिदुक्तमिति प्रक्रान्तस्य पक्षस्योत्था-

* भावप्रकाशिका *

ब्रह्मानुभवाम्बुधिलवकणिकायमानमिति मृषावादिभिरभेदपरतया व्याख्यातम्; तथापि तस्यार्थस्य भास्करानभ्युपेतत्वात्. तदभिमतयोजनायामस्य वाक्यस्य भेदाभेदोदासीनत्वाद्वाक्यान्तरावगम्यमित्युक्तमितिभावः। भिन्ने ब्रह्मण्युपाधिसंयोग इत्येतदुपपादयति (ईश्वरांश इति) उपाधिसंयोगस्य भेदपूर्वकत्वमितिच्छेदः। उपाधिसंयोगस्य भेदपूर्वकत्वाभावे ब्रह्मण्युपाधिसम्बन्धस्स्यादिति भावः। (सङ्गति-

अद्वितीयसच्चिदानन्दब्रह्मध्याननियविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते। भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र यदुक्तम्—भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति। तदयुक्तम्; कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात्तस्य भेदः। तद्विपरीतत्वञ्चाभेदः। तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति। कारणात्मना जात्यात्मना चाभेदः, कार्य्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेत् न;

* श्रुतप्रकाशिका *

पकं सङ्गतिस्थलं दर्शयितुमाह (अद्वितीयेति) तत्सङ्गतिस्थलं दर्शयति (तत्र यदुक्तमिति) भेदाभेदविषयप्रतीतिं दूषयिष्यन् पूर्वं तयोर्विरोधमुपपादयितुं तत्स्वरूपमाह (कस्माच्चिदिति) विलक्षणत्वम्—अन्यत्वम्. इदमिदं न भवति इदमिदम्भवतीति हि भेदाभेदविषयप्रतीतिः। ततः किमित्यत्राह (तयोरिति) भेदाभेद इति न कस्यचिद्धर्मस्य संज्ञा, लोकप्रसिद्ध्यनुगुणोऽर्थो भेदाभेदशब्दस्य स्वीकृतश्चेत् भावाभावयोर्विरोधोऽवर्जनीय इत्यर्थः। किञ्च अनेन क्वचिदपि विरोधो नास्तीति वक्तुं न शक्यम्, त्रिविधविरोधोपलब्धेः। यदि भावाभावयोर्न विरोधस्तर्हि भिन्नाभिन्नत्वं भवति न भवतीति स्वपरवचसोरपि विरोधाभावस्स्यात्,। परोक्तं पिण्डद्वयभेदाभेदस्याकारभेदादविरोधमनुवदति (कारणात्मनेति) विकल्प्य

* भावप्रकाशिका *

स्थलं दर्शयितुमाहेति) ध्याननियोगवादिनो भास्करमतनिरसनमस्थानविजृम्भितमितिशङ्कां व्युदसितुमित्यर्थः। भाष्ये— तद्विपरीतत्वञ्चेति। तद्रहितत्वञ्चेत्यर्थः। (त्रिविधविरोधोपलब्धेरिति) भिन्नाधारत्वसहानवस्थाननाश्यनाशक-

विकल्पासहत्वात् । आकारभेदादविरोधं वदतः किमेक-
स्मिन्नाकारे भेदः ? आकारान्तरे चाभेद इत्यभिप्रायः ?
उताकारद्वययोगिवस्तुगतावुभावपि ? इति । पूर्वस्मिन्
कल्पे व्यक्तिगतो भेदः, जातिगतश्चाभेद इति नैकस्य
द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्
तर्ह्याकारभेदाद्विरोधः परित्यक्तः स्यात् । एकस्मिँश्च
विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीये तु
कल्पे अन्योन्यविलक्षणमाकारद्वयमप्रतिपन्नञ्च तदा-
श्रयभूतं वस्त्विति । तृतीयाभ्युपगमेऽपि त्रयाणामन्यो-
न्यवैलक्षण्यमेवोपपादितं स्यात्; न पुनरभेदः । आका-
रद्वयनिरुह्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्ना-

श्रुतप्रकाशिका *

दूषयति ( नेत्यादिना ) ( एकस्मिन्नाकार इति ) आकारशब्दः पदार्थपरः ( पूर्वस्मिन् कल्प इति ) तत्र जातिव्यक्त्योः किं परस्परं भेदः ? उताभेदः ? उत भेदाभेदः ? इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति ( व्यक्तिगत इति ) द्वितीयमनुवदति ( जातिरिति ) दूषयति ( तर्हीति ) विरोधस्तिष्ठत्येवेत्यर्थः । तृतीयं दूषयति ( एकस्मिँश्चेति ) जातिव्यक्तिर्भवति न भवतीति भावाभावविरोधः स्थित एवेत्यर्थः । कण्ठोक्तपूर्वविकल्पे द्वितीयं शिरो दूषयति ( द्वितीये तु कल्पे इति ) अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य वस्तुनोऽप्रतिपन्नत्वं नामैकं दूषणमधिकम् , तदिदमप्रतिपन्नञ्चेत्यनेनाभिप्रेतम् । प्रतिपन्नत्वाभ्युपगमेऽपि दूषणमाह ( तृतीयाभ्युपगमेऽपीति ) ( न पुनरिति ) अन्यथा त्रित्वाभावादित्यर्थः । अत्र तृतीये वस्तुन्याकारद्वयेन भेदाभेदयोर्निर्वाह्यत्वेनाविरोधित्वं शङ्कते ( आकार-

७ भावप्रकाशिका ७

स्वरूपत्रिविधविरोधोपलब्धेरित्यर्थः । व्यक्तेराकारत्वासम्भवादाह ( आकारशब्दः पदार्थपर इति ) भाष्ये— निरुह्यमाणेतिपाठः । अङ्गावयवहलपरत्वाभावेन हल

भिन्नत्वमिति चेत्. स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत् ?। अविलक्षणं तु कथन्तराम्? आकारद्वयतद्वतोश्च ह्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था स्यात्। न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते। यतः इदमित्थमिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः। तत्र प्रका-

* श्रुतप्रकाशिका *

द्वयेति) इदमाकारद्वयं स्वाश्रयेण भिन्नम्? उताभिन्नम्? उत भिन्नाभिन्नम्? इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति (स्वस्मादिति) स्वशब्दत्रयमप्याश्रयपरम्। भेदाभेदयोरेकाश्रयत्वेन हि विरोधः। अविरोधनिर्वाहकाकारद्वयं हि न भेदाभेदयोराश्रयभूतम्, अतो न तदविरोधनिर्वाहकम्, अभिगतं पैङ्गल्यमौज्ज्वल्याद्याकारद्वयम् अग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः। द्वितीयं शिरो दूषयति (अविलक्षणमिति) पूर्वमाकारद्वये सम्भवति तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः, अत्र त्वाकारद्वयमेव नास्तीति नितरां विरुद्धधर्मसमावेशायोग इत्यभिप्रायेण कथन्तरामित्युक्तम्। तृतीयं शिरोदूषयति (आकारद्वयतद्वतोरिति) आकारद्वयस्य तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकमाकारद्वयान्तरमपेक्षितम्, तस्यापि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत्तदविरोधनिर्वाहकाकारद्वयान्तरमपेक्षितमित्यनवस्था स्यादित्यर्थः। अथ किं दृष्टेऽनुपपन्नं नामेति शङ्कायां भेदाभेदविषयप्रतीतिं दूषयति (न चेति) हेतुमाह (यत इति) तस्यां प्रतीतौ प्रकारप्रकारिणौ विविच्य दर्शयति (तत्रेति)

ॐ भावप्रकाशिका ॐ

इति दीर्घत्वाप्रसक्तेः। यद्वा अग्नौ परिचरन्यातिसूत्रे ऊहोध्येर्थकस्य कथं वह्न्यर्थत्वमिति चेत्. ऊहेस्तदर्थत्वात्सिद्धमितिवार्तिककृतोक्तत्वात्. ऊहेरस्य रूपस्य सम्भवात्। न चोपसर्गाद्ध्रस्व ऊहतेरिति ह्रस्वत्वं शङ्क्यम्. ण्यन्ताद्ध्रस्वत्वाप्रसक्ते-

रांशो जातिः, प्रकार्यंशो व्यक्तिरिति नैकाकारा प्रतीतिः, अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति। तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वा-

* श्रुतप्रकाशिका *

अनेनेदमपि परिहृतम्, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यं सहोपलम्भनियमः एकशब्दानुविद्धप्रत्ययः प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदप्रतीतिश्चेति हेतुचतुष्टयम्. अपृथक्सिद्धविशेषणत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुः, अपृथक्सिद्धिश्च प्रकारप्रकारिणोः सम्बन्धनियमादेवोपपन्ना, अतः प्रकारप्रकारिभावप्रतिपन्नभेदविरुद्धाभेदकल्पनाया नावकाशः, सम्बन्धनियम एव सहोपलम्भनियमहेतुश्च, एकोऽयं गौरिति प्रत्ययोऽप्येको दण्डीतिवद्विशेष्यैक्यविषयः, न तु विशेषणविशेष्यैक्यविषयः, प्रथमपिण्डग्रहणेऽपि प्रकारप्रकारिभावात् भेदेनैव प्रतीतिः। किञ्च सहत्वमपि भेदसाधकम्, द्वयोरेव हि साहित्यम्, सहोपलम्भनियमश्च, सम्प्रतिपन्ने भिन्ने अभिन्ने च न दृष्ट इत्यसाधारणानैकान्तिकत्वान्नोभयसाधकः। भिन्नेष्वभिन्नेषु चादृष्टस्य भेदाभेदसाधकत्वेऽभ्युपगम्यमाने नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं गन्धवत्त्वं पृथिव्या नित्यत्वानित्यत्वसाधकं स्यात्। किञ्च, साधननियमः साध्यनियमहेतुरिति सहत्वनियमो भेदनियमहेतुरेव। अत्र जातिरत्र व्यक्तिरिति प्रदेशभेदाग्रहणं जातेः पिण्डे व्याप्यवृत्तित्वात्। तच्च सहोपलम्भनियमान्तर्गतम्, देशतः कालतश्चोपलम्भनियमो हि सहोपलम्भनियमः, अतो देशतः कालतश्च सम्बन्धनियमकृतः सहोपलम्भनियमः। किञ्च सहोपलम्भनियमोऽसिद्धः, इदं रजतमित्यत्र शुक्तित्वजातिव्यतिरेकेणाधिष्ठानभूतव्यक्तिप्रतीतेः, अतो नैक्यसाधकत्वमिति। लौकिकवस्तुनि भेदाभेदयोर्विरुद्धत्वमुपजीव्य वैदिकेऽपि तत्सद्भावमाह (अत एवेति) भेदाभेदयोर्विरोधेनैकस्मिन् वस्तुनि तयोरनुपपन्नत्वादित्यर्थः। भेदाभेदनिरासमुपजीव्याभेदस्यैव तात्त्विकतामाह (तस्मादिति) दोषसम्बन्धमुखेन चोदयति

* भावप्रकाशिका *

रिति द्रष्टव्यम्। (मत्त्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमिति) अयं प्रपञ्चः

दनाद्यविद्यामूल एव भेदप्रत्ययः । नन्वेवं ब्रह्मण एवाज्ञत्वम् तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः। ततश्च [1]"यः सर्वज्ञः सर्ववित्" [2]"एष आत्माऽपहतपाप्मा" इत्यादीनि शास्त्राणि बाध्येरन्। नैवम्; अज्ञानादिदोषाणामपरमार्थत्वात् । भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गस्तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः। न हि ब्रह्मणि निरवयवे अच्छेद्ये सम्बध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा सम्बध्यन्ते, अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्य्याणि कुर्वन्ति॥ यदि मन्वीत— उपाध्युपहितं ब्रह्म जीवः, स चाणुपरिमाणः, अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्, स चावच्छेदोऽनादिः, एवमुपाध्युपहितेंऽशे सम्बध्यमानाः दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति ।

* श्रुतप्रकाशिका *

(नन्विति) अपरमार्थतया परिहरति (नैवमिति) परोक्तदोषः परस्यैवेत्याह (भवतस्त्विति) तदुपपादयति (न हीति) अङ्गुल्यादेरिव छेदो न सम्भवतीति अच्छेद्यत्वं ब्रह्मणः, तस्य हेतुर्निरवयवत्वम्। भित्त्वा—अच्छिन्नत्वेऽपि पाणिपादादिवत्प्रतिनियतप्रदेशभेदेनेत्यर्थः । प्रदेशभेदेन छेदनेन वा ब्रह्मणि सम्बन्धमुपाधयो नार्हन्ति, निरवयवत्वादच्छेद्यत्वाच्चेत्यर्थः । निरवयवत्वेऽप्यच्छेद्यत्वेऽपि गगनवदुपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिं शङ्कते (यदि मन्वीतेति) उपाध्यवच्छेदाज्जीवभावः जीवभावादुपाध्यवच्छेदः कर्मणा जीवभावस्तस्मात्कर्मेति चान्योन्याश्रयपरिहारायानादित्युक्तम् । दूषयितुमाह

१ मुण्ड. १-मु. १-ख. ९-वा. | २ छा. ८-प्र. १-ख. ५ वा.

अयं प्रष्टव्यः, किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः ? उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः ? उतोपाधिसंयुक्तं ब्रह्मस्वरूपम् ? अथोपाधिसंयुक्तं चेतनान्तरम् ? अथोपाधिरेव ? इति । अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्पते । आदिमत्त्वं च जीवस्य स्यात् । एकस्य सतो द्वैधीकरणं हि छेदनम् । द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः । उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ च स्याताम् । आकर्षणे चाच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण

---

* श्रुतप्रकाशिका *

( अयं प्रष्टव्य इति ) विकल्पयति ( किमिति ) अणुशब्दस्य सूक्ष्मपरत्वाभिप्रायसम्भवात् तृतीयकल्पोदयः । चतुर्थपञ्चमौ कल्पावाभ्यां [ विकल्पाभ्यां ] विना गतिर्नास्तीत्यभिप्रायेण कृतौ, न तु पराभ्युपगत्या । ब्रह्मशब्दस्य जीवेऽप्युपचारवृत्तेः चतुर्थः कल्पः । उपाधिब्रह्मणोर्भिन्नाभिन्नत्वाभ्युपगमात् पञ्चमः । प्रथमं शिरो दूषयति ( अच्छेद्यत्वादिति ) दूषणान्तरमाह ( आदिमत्त्वमिति ) तदुपपादयति ( एकस्य सत इति ) द्वितीयं दूषयति ( द्वितीये त्विति ) दूषणान्तरमाह ( उपाधाविति ) आकर्षणेन विना तत्परिहारासम्भवात् तदाशङ्क्याह ( आकर्षणे चेति )

* भावप्रकाशिका *

प्रथमसूत्र एव द्रष्टव्यः । ( सूक्ष्मपरत्वाभिप्रायसम्भवादिति ) नन्वणुशब्दस्याणवश्चेयादिसूत्रेष्विव सूक्ष्मवाचित्वाभिप्रायसम्भवेऽपि इह परिमाणशब्दप्रयोगात् सूक्ष्मपरत्वाभिप्रायसम्भव इति चेन्न ; अत्र परिमाणशब्दस्याविवक्षितत्वं कथमिति तात्पर्यम् । ( भिन्नाभिन्नत्वाभ्युपगमात्पञ्चम इति ) अतश्चोपाधेरेवोपहितब्रह्मत्वोक्तिस्सङ्गच्छत इति भावः । कथं चार्वाकमतपरिग्रह इत्याशङ्क्याह

आकर्षणं स्यात्। निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत्; तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वेन प्रतिसन्धानं स्यात्। प्रदेशभेदादप्रतिसन्धाने नैकस्यापि स्वोपाधौ गच्छति प्रतिसन्धानं न स्यात्। तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे चार्वाकपक्ष एव परिगृहीतः स्यात्। तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्। अतः प्रवृत्तिनिवृत्ति-

---

* श्रुतप्रकाशिका *

अनुपपत्त्या तदनभ्युपगममाशङ्क्य पूर्वोक्तदूषणेन व्युदस्यति ( निरंशस्येति ) दूषणान्तरमाह ( अच्छिन्नेति ) तत्परिहारमाशङ्क्याह ( प्रदेशभेदादिति ) तृतीयं शिरो दूषयति ( तृतीये त्विति ) (अनुपहितब्रह्मासिद्धिः स्यादिति) निर्दोषमङ्गलगुणकत्वश्रुतीनामनुपहितब्रह्मविषयत्वं हि पराभ्युपेतम्, जीवेश्वरभेदाभावप्रसङ्गो जीवानां परस्परभेदाभावप्रसङ्गश्चेत्यर्थः। चतुर्थपञ्चमौ दूषयति (तुरीये त्वित्यादिना) ( चरम इति ) अचिद्द्रव्यस्यैव चेतनत्ववचनात्तस्य चेतनब्रह्मतादात्म्यानुपपत्तिश्चेत्यभिप्रायः। भेदाभेददूषणमुपसंहरन् स्वमतसिद्धिमाह ( तस्मादिति ) ध्यानविधिशेषतया ब्रह्मणः सिद्धिमुपसंहरति ( अत इति)॥ ध्याननियोग-

* भावप्रकाशिका *

( अचिद्द्रव्यस्यैव चेतनत्ववचनादिति ) दूषणान्तरमाह ( तस्य चेतनब्रह्मेति ) ननु

प्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति ॥ तदप्ययुक्तम् –ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात् । एतदुक्तं भवति, ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते ? उत स्वतन्त्राण्येव ? । एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्य्यं न सम्भवति, भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिप्रयोजनविरहादनवबोधकत्वमेव । न च वाच्यम्–ध्यानं नाम स्मृतिसन्ततिरूपम् । तच्च स्मर्त्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्त्तव्यविशेषाकाङ्क्षायाम् [1]" इदं सर्वं यदयमात्मा " [2] " ब्रह्म

* श्रुतप्रकाशिका *

वादिपक्षं मीमांसको दूषयति ( तदप्ययुक्तमिति ) न केवलं निष्प्रपञ्चीकरणविधिवाद एवानुपपन्नः, इदमपि मतमनुपपन्नमित्यपिशब्दस्य भावः । कुत इत्यत्राह ( ध्यानेति ) ध्यानविधिशेषत्वे कथमर्थसत्यत्वे तात्पर्यायोगः ? विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्यं स्यादित्यत्राह ( एतदुक्तमिति ) दूषयितुं विकल्पयति ( ब्रह्मस्वरूपेति ) प्रथमं शिरो दूषयति ( एकेति ) एकवाक्यत्वम्– महावाक्यैकत्वम् । द्वितीयं दूषयति ( भिन्नेति ) अनवबोधकत्वं दुःखसाध्यश्रवणादौ प्रवृत्त्ययोगात् । एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणः

* भावप्रकाशिका *

प्रवृत्तिनिवृत्तिविरहादनवबोधकत्वमित्ययुक्तम् । निष्प्रयोजनानामपि काकदन्तादिवाक्यानां बोधकत्वदर्शनादित्याशङ्क्याह ( दुःखसाध्यश्रवणादाविति ) काकदन्तादिवाक्यानां स्पष्टार्थतया श्रवणैरपेक्षितार्थप्रत्यायकत्वेऽपि वेदान्तेषु

१ बृ. ४-अ. ४-ब्रा. ६-वा ॥ | २ बृ. ४-अ. ५-ब्रा. २९-वा ॥

सर्वानुभूः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि ब्रह्मस्वरूपतद्विशेषादीनि समर्पयन्ति । तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति; ध्यानविधेः स्वर्त्तव्यविशेषापेक्षत्वेऽपि १ "नाम ब्रह्म" इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्य्यवसानात् स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्य्यन्तता सिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम् ॥

* श्रुतप्रकाशिका *

सिद्धिमाशङ्क्याह (न च वाच्यमिति) कुत इत्यत्राह (ध्यानविधेरिति) "नाम ब्रह्मेत्युपासीत" इत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन विशिष्टासत्यत्वमवर्जनीयम्, इह च तथैवेत्यर्थः । सार्थसङ्ग्रहं पूर्वपक्षमुपसंहरति (अत इति) ननु प्रथमसूत्रे विधिशेषतया ब्रह्मणि प्रामाण्यसमर्थनमेतदधिकरणपूर्वपक्षे विधिशेषतया तत्सिद्धिप्रतिक्षेपश्च कथं घटते? इत्थम्; तत्र तु फलत्वेन सिद्धिरुक्ता, फलतया सिध्यतः पारमार्थ्याभावे स्वर्गादेरप्यसत्यत्वप्रसङ्गात् तत्पारमार्थ्यं सिध्यतीति, फलतया तत्सिद्धिसमर्थनं साधीयः, अत्र तु ध्यानविधिकर्मत्वेन तत्सिद्धिर्व्युदस्ता, न तु फलतया तत्सिद्धिरित्यविरोधः ॥ .... ....

* भावप्रकाशिका *

श्रवणमन्तरेण बोधकत्वाभावात् श्रवणस्य च प्रयोजनाधीनबुभुत्सासाध्यत्वात्, प्रयोजनाभावे अर्थावबोधकत्वं न सम्भवतीति भावः । (प्रथमसूत्रे विधिशेषतयेति) कार्यार्थत्वेपि वेदस्य ब्रह्मविचारः कर्तव्य एवेति अभ्युच्चयतया तदधिकरणभाष्ये उक्तम्. नतु तत्सूत्रकाराभिमत इत्यपि द्रष्टव्यम् ॥ .... ....

—:( सिद्धान्तः ):—

तत्र प्रतिपद्यते-- "तत्तु समन्वयात्" इति। समन्वयः— सम्यगन्वयः, पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयात्, तत्— शास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः ।

* श्रुतप्रकाशिका *

एवमुपन्यस्तं पूर्वपक्षमभिप्रेत्य सूत्रकारेणैतत्सूत्रं प्रणीतमित्याह (तत्रेति) प्रतिपद्यते—सिद्धान्तः प्राप्नोति, ज्ञायत इति वार्थः । समन्वयशब्दं विस्तरेण व्याचष्टे (समन्वय इत्यादिना) कस्य केनान्वय इत्यपेक्षां पूरयन् वाक्यार्थं योजयति (परमेति) परमपुरुषार्थत्वोपपादकमनवधिकेतिपदम्, पुरुषेणार्थ्यत्वं हि पुरुषार्थत्वम्, आनन्दरूपतया पुरुषार्थत्वम्, तस्यानवधिकातिशयत्वात्परमपुरुषार्थत्वमिति भावः । स्वयमननुकूलस्य सुखसाधनस्यापि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिश्चानवधिकेत्यादिपदेन सिद्धा । तच्छब्दं व्याचष्टे ( शास्त्रप्रमाणकत्वमिति ) पूर्वपक्षव्यावर्तकतुशब्दलभ्यमर्थमाह ( सिध्यत्येवेति ) तत्त्वमस्यादिस्वरूपोपदेशपरवाक्यार्थज्ञानमात्रेणाविद्यानिवृत्तिं तन्मुखेन वाक्यस्य प्रयोजनपर्यवसानञ्च वदतो मृषावादिनो ध्यानविध्यानर्थक्यं स्यात्, वाक्यार्थज्ञानोपयोगित्वस्य दूषितत्वात् । मीमांसकपक्षे ब्रह्मणोऽसिद्धिरित्युभयविधदोषास्पृष्टेनाकारेण वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपिपादयिषुस्तत्र प्रथमं ब्रह्मणः स्वतः सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषार्थत्वाधिक्यं प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रयन् प्रवृत्तिनिवृत्तिपरत्वविरहवतः पुरुषार्थपर्यवसानाभावनिबन्धनामप्रामाण्यशङ्कां

* भावप्रकाशिका *

प्रतिपत्तिशब्दस्य ज्ञाने प्रसिद्धिमभिप्रेत्याह (ज्ञायत इति वार्थ इति) इदमुपलक्षणम्, सूत्रकारः प्रतिपद्यते जानातीत्यर्थः । कर्तरि कर्मणि च रूपस्याविशिष्टत्वादित्यपि वदन्ति । व्याख्यातस्य व्याख्यानमनर्थकमित्याशङ्क्याह (विस्तरेण व्याचष्ट इति) पूर्वत्र सम्यगन्वय इत्यादेरनुपन्यासात्सङ्क्षेप इति भावः । भाष्ये— अभिधेयतयान्वयादिति । अभिधेयत्वलक्षणान्वयादित्यर्थः । ततश्चान्वयशब्दस्याभिधेयत्वलक्षणो-

निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलानुप्रवेशेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति-- अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वरूपाववोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुषयक्षराक्षसपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलता-

---

* श्रुतप्रकाशिका *

परिहरति ( निरस्तेति ) राजकुलवासी-- राजकुलप्रसूतः, राजकुलान्तरज्ञो वा । कौलेयकाः-- श्वानः, श्वोपजीविनो म्लेच्छा वा लक्ष्यन्ते । यद्यपि वाक्यगणस्थाने राजकुलवासी पुरुषः प्रतीयते तथाप्यर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थाने तन्निर्देशः फलितः, स्वतो निरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनमनुपपन्नमित्यर्थः । ब्रह्मणः कथमनवधिकानन्दरूपतया पुरुषार्थत्वाधिक्यम्? कथं च प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यम् ? स्वरूपपरवाक्यस्य पुरुषार्थपर्यवसानं कुत्र दृष्टम्? तथा सति कथं ध्यानविधिसाफल्यम्? इत्याकाङ्क्षायामाह ( एतदुक्तमिति ) ब्रह्मणः पुरुषार्थताधिक्यमाह ( अनादीत्यादिना ) कर्मभिरनुभवप्रतिबन्धात् क्षेत्रज्ञानां तस्य पुरुषार्थत्वज्ञानाभावः, न तु तत्र तद्वैकल्यादित्यभिप्रायेणोक्तम् अनादिकर्मेति । देवासुरादिपरिगणनं तेषां व्यवस्थितभोग्यत्वप्रदर्शनार्थम्। योग्यानुपलब्धिशङ्काव्युदासायानुभवसम्भव इत्युक्तम्। तद्विषयज्ञानानुकूलत्वं

* भावप्रकाशिका *

ऽन्वयोर्थः । समित्यस्य परमपुरुषार्थरूपत्वं विवक्षितमिति भावः । ( अर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थान इति ) प्रयोजनलम्भकस्यापि वाक्यगणस्य स्वयं प्रयोजनत्वाभावेन प्रयोजनवतो वाक्यार्थप्रतिपत्तुरेव तत्स्थाननिवेश इति भावः । ( योग्यानुपलब्धिशङ्काव्युदासायेति ) परस्य ब्रह्मणोऽनवधिकातिशयानन्दजनकत्वं

दूर्वादीनां स्त्रीपुन्नपुंसकभेदभिन्नानां चेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्य्यवसायि, प्रवृत्तिनिवृत्तिनिष्ठन्तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्य्यवसायि । एवम्भूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायां [1] "ब्रह्मविदाप्नोति परम्" [2] "आत्मानमेव लोकमुपासीत" इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते । यथा स्ववेश्मनि निधिरस्तीति वाक्येन निधि-

श्रुतप्रकाशिका *

हि तदनुकूलत्वेन विना न सम्भवति , अतोऽनवधिकातिशयानन्दजननत्वोक्त्या ब्रह्मणोऽनवधिकातिशयानुकूलत्वं सिध्यतीत्यानन्दत्वमुपपादितं भवति । स्वरूपेत्यादिना सर्वप्रकारभोग्यत्वमुक्तम्, तेन पुरुषार्थत्वाधिक्यं सिद्धम् । प्रवृत्तीत्यादिना प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम् , इष्टसुखलवसाधनतयोपादेयत्वात् दुःखात्मकतया स्वतो भोग्यत्वाभावाच्च ध्यानादिविध्यानर्थक्यं परिहरति ( एवम्भूतमिति ) परोक्षज्ञानस्यापि सुखरूपत्वात्स्वरूपपराणि वाक्यानि पुरुषार्थपर्यवसायीन्येव , तदापरोक्ष्याकाङ्क्षिणस्तत्साधनज्ञापकत्वात् ध्यानविधायीनि वाक्यानि न निष्फलानीत्यर्थः । इममर्थं दृष्टान्तेन दर्शयति ( यथेति ) एवं परोक्षज्ञानजनकस्यैव वाक्यस्य पुरुषार्थपर्यवसायित्वेऽपि फलविशेषापेक्षया ध्यानप्रवृत्तिर्युक्ता, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत' "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिषु दर्शपूर्णमासादीनामेकैकस्य स्वर्गसाधनत्वेऽपि फलविशेषापेक्षया कर्मान्तरारम्भ एकस्यैव कर्मण आवृत्तिश्चोपपद्यते, यथा पुत्रजन्मश्रवणसञ्जातहर्षस्यापि पश्चात्तन्मुखापरोक्ष्यसुखाशया

[1] तैत्त. आन. १-अनु | [2] बृ. ३-अ. ४ ब्रा. १५ ॥

सद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने च प्रयतते, यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्र-भवनान्निष्क्रान्तो मार्गाद्भ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयञ्चाज्ञातपितृकः केनचित् द्विजवर्येण वर्द्धितो-ऽधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकर-स्तिष्ठन् 'पिता ते सर्वलोकाधिपतिर्गाम्भीर्यौदार्यवा-

* श्रुतप्रकाशिका *

प्रवृत्तिरुपपद्यते तथात्रापीत्यभिप्रायः । अत्र निधिराजकुमारदृष्टान्तद्वयं चिदचिद्विभागादुक्तम्, उभयगतं भोग्यत्वं ब्रह्मण्यस्तीति ज्ञापनाय। "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः" इति श्रुतिः । निधिरस्तीतिवाक्यस्य पुरुषार्थपरत्वं दर्शयति (तृप्तस्सन्निति) "अविज्ञाताः कुमारकाः" "भगवतोऽहं पुत्रः प्रेष्यः शिष्यश्च" "माता पिता भ्राता" 'भूतानां योऽव्ययः पिता' 'एक इन्द्रो जगतो बभूव' 'राजाधिराजः सर्वेषाम्" इत्यादिश्रुतिस्मृत्यनुसारेण सर्वविधभोग्यत्वप्रदर्शनाय राजकुमार इति भगवति राजत्वं चेतनेषु पुत्रत्वञ्चोपवर्णितम्, अत्र कुशलवसमाधिर्द्रष्टव्यः । बालक्रीडासक्त इत्यनेन चेतनानां बाह्यविषयप्रावण्यं सूचितम्, नरेन्द्रभवनान्निष्क्रान्त इत्यनेन भगवत्सकाशबहिष्ठत्वं दर्शितम्, परमव्योमालाभश्च. मार्गाद्भ्रष्ट इत्यनेन कर्मज्ञानाद्युपायानन्वयः ख्यापितः । द्विजवर्येण वर्द्धित इत्यनेन भगवज्ज्ञाननिष्पत्तियोग्यतासिद्धिहेतुभूताध्ययनादि-निष्पादकाचार्यसम्बन्धोऽभिप्रेतः । षोडशवर्षः— भोक्तृत्वावस्थो भोग्यतावस्थश्चेति भावः । सर्वकल्याणगुणाकरः— "निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः" इत्याद्युक्तैर्भगवदभिमतैर्गुणैः पूर्णता सूचिता । पिता त इत्यादिना भगवद्गुणगणाः सूचिताः । गाम्भीर्यादय उपासकं प्रति सौलभ्योपयुक्ता गुणाः, शौर्यादयः परत्वान्तर्गताः । गाम्भीर्यम्—सम्प्रदानलाघवदीयमानगौरवानपेक्षत्वम्, औदार्यम्—

* भावप्रकाशिका *

बाधितम्. इदानीं तदनुपलब्धेरिति शङ्काव्युदासार्थमित्यर्थः । (सम्प्रदानलाघवेति) सम्प्रदानं प्रतिगृहीता कर्मणायमभिप्रैति स सम्प्रदानमितिस्मरणात्. यद्यपि

त्सल्यसौशील्यशौर्यवीर्यपराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत् तदानीमेवाहं तावत् जीवतः पुत्रो मत्पिता च सर्वसम्पत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति, राजा च स्वपुत्रं जीवन्त-

* श्रुतप्रकाशिका *

दातृप्रतिगृहीतृविभागबुद्धिविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम् ; आत्मात्मीयं दत्त्वापि "ऋणं प्रवृद्धमिव मे" इति स्थितिर्वा। वात्सल्यम्—दोषेष्वपि गुणत्वबुद्धिः , यथा मातुर्वत्से। सुशीलं हि नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वम्, तद्वत्ता सौशील्यम्। शौर्यम्—शत्रुमध्ये स्वगृह इव प्रवेशसामर्थ्यम्. 'शूरं भीरुं कविं जडम्' इति भीरुत्वप्रतियोगि हि शौर्यम्। वीर्यम्— अश्रान्तिः। पराक्रमः—विक्रमणम्। अत्रानुक्तमपि धैर्यमनुसन्धेयम्, तच्च शत्रुभिर्व्यर्थं तृणवन्मन्यमानत्वम् । दिदृक्षुरिति "स महात्मा सुदुर्लभः" इति भगवदभिप्रायस्सूचितः। पुरवर इत्यनेन ब्रह्मपुराख्यशरीरान्तास्स्थितिरभिप्रेता , त्रिपाद्विभूतिसम्बन्धो वा। अभियुक्ततमशब्देन भगवज्ज्ञानप्रदो गुरुर्विवक्षितः, तस्येतरवैलक्षण्यं केनचिदित्यभिप्रेतम् । यदा अध्ययनादिकारयिता गुरुरेव ब्रह्मोपदेष्टा सम्भवति तदायमभियुक्ततमशब्दः पूर्वनिर्दिष्टद्विजवर्यमेवाभिधत्ते , तदसम्भवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्रायः । अत्र केनचिदित्यनेन पूर्वेणैव वा अन्येनैव वेति च तात्पर्यं ग्राह्यम्, शृणोति चेदित्यनेन भगवज्ज्ञानस्य दुर्लभत्वमभिप्रेतम्, निरतिशयहर्षसमन्वितो भवतीत्यनेन वाक्यस्य पुरुषार्थपरत्वं दर्शितम् । राजा चेति राज-

* भावप्रकाशिका *

दशरूपकादौ "गाम्भीर्यं यत्प्रभावेन विकारो नोपलभ्यते" इत्येवं प्राप्तेष्वपि महत्सु सुखरोपहर्षेषु तत्सूचकविकारराहित्यरूपमित्येवं वर्णितम् , तथापि तस्य परमात्मन्यप्रसक्तत्वादेवं वर्णितमिति द्रष्टव्यम्। ( तदसम्भवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्राय इति ) "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुतेः। अस्याश्च श्रुतेरयमर्थः,— आचार्यः— उपनीयाध्यापयिता, तत्सकाशादवाप्तविद्या

**मरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा अवाप्तसमस्तपुरुषार्थो भवति। पश्चात्तदुपादाने च प्रयतते ।**

* श्रुतप्रकाशिका *

स्थानीयोऽप्युपासको विवक्षितः, अनेन सर्वविधभोग्यत्वस्य भगवति पुष्कलत्वात् गुणवत्पुत्रगतभोग्यत्वमपि तत्र विद्यत इति ज्ञापितम्। न हि भगवतो ज्ञानं परोक्षरूपम्, अवाप्तसमस्तपुरुषार्थो भवतीत्यनेन च वाक्यस्य प्रयोजनपर्यवसायित्वं दर्शितम्। राजा चेत्यादिग्रन्थस्यापातप्रतिपन्नार्थोऽप्यविरुद्धः। ध्यानविधेरवैयर्थ्यं दृष्टान्तद्वयेनापि सिद्धमिति ज्ञापयितुमुक्तं पश्चात्तदुपादाने च प्रयतत इति पश्चात्तावुभौ सङ्गच्छेते चेति च। अत्र पूर्वमेव अर्थार्थी राजकुलं गच्छेत् मन्दाग्निर्नाम्बु पिबेदितिवाक्योदाहरणादिह निधिदृष्टान्तोपन्यासाच्चायमप्यर्थोऽर्थसिद्धः, किं क्रियोत्तीर्णकार्यपरतयैव वाक्यस्य प्रयोजनपर्यवसायित्वम्? उत क्रियाकार्यं वा तदुत्तीर्णं वा प्रवर्त्तकमर्थमभिदधत एव तात्पर्यावसायित्वमिति मतम्?। न प्रथमः, अर्थार्थी राजानं सेवेतेत्यादीनां सप्रयोजनत्वात्। न द्वितीयः, निधिमद्भूभागलक्षणरत्नपरीक्षणपराणां शास्त्राणां प्रयोजनशालित्वात्।

* भावप्रकाशिका *

साधुतां प्राप्नोतीति। ततश्च तदसम्भवेऽन्यतो ग्राह्या, अत एव श्वेतकेतोरनाचार्यादपि पितुस्सकाशाद्ब्रह्मविद्याश्रवणम्. तदाचार्यस्याब्रह्मवित्त्वात्; अत एव "न वै नूनं भगवन्तस्त एतदवेदिषुः यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन् भगवांस्त्वेव मे तद्ब्रवीतु" इति स्वाचार्यस्याज्ञानमुद्घाट्य पितरमेव ब्रह्मविद्यां प्रार्थितवानिति। आचार्यस्यासम्भवेऽन्यतो ब्रह्मविद्या ग्राह्येति भावः। (आपातप्रतिपन्नार्थोऽप्यविरुद्ध इति) परव्योमनिलये भगवत्यपि ईदृशवृत्तान्तविज्ञापयितॄणामाचार्याणां सम्भवात्। नच सर्वज्ञे तस्मिन् वृत्तान्तविज्ञापनस्य वैफल्यमिति वाच्यम्; प्रभुधर्मत्वेन तस्याप्युपपत्तेः, इतरथा ब्रह्मादीनां क्षीराब्धिगमनविज्ञापनादीनां वैफल्यप्रसङ्गात्। केचित् आतपादिपीडारहिते भगवल्लोके मण्डपोद्यानवापीकूपादीनामपि वैयर्थ्यप्रसङ्गात्, तत्रत्यानां सर्वेषामपि सर्वसाक्षात्कारसमर्थतया द्वारपालादीनामपि वैयर्थ्यप्रसङ्गादित्याहुः। (पूर्वमेवार्थार्थीति) पूर्वमेव अर्थार्थीत्यादिलौकिकवाक्यस्योदाहृतत्वात्, क्रियातिरिक्त-

पश्चात्तावुभौ सङ्गच्छेते चेति । यत्पुनः परिनिष्पन्न-वस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यव-सानात् बालातुराद्युपच्छन्दनवाक्यवन्नार्थसद्भावे प्रामा-ण्यमिति । तदसत्; अर्थसद्भावाभावे निश्चिते ज्ञातो-

* श्रुतप्रकाशिका *

न च तत्रापि खननधारणादिविधिपरत्वं वाक्यानां कल्प्यम्, तयोः रागप्राप्तत्वात् खननादिप्रकारस्य लोकसिद्धत्वाच, अप्राप्ते हि शास्त्रमर्थवत् । दुष्टरत्नवर्जनमप्य-नर्थजिहासाप्राप्तम्, वाक्यानि तु निधिमत्त्वगुणदोपज्ञापनमात्रपर्यवसायीनि, अतः प्रवर्त्तकार्थपरतयैव प्रयोजनपर्यवसानमिति नियमो भग्न इति । अथ पूर्व-पक्षिणोक्तमनुभाषते ( यत्पुनरिति ) वेदान्तवाक्यानां नार्थसद्भावे प्रामाण्यमस्तीति प्रतिज्ञा, तदर्थमर्थसद्भावाभावेऽपि पुरुषार्थपर्यवसानादिति हेतुर्विवक्षितः । दूष-यति ( तदसदिति ) कुत इत्यत्राह ( अर्थसद्भावाभाव इति ) इदं वाक्यं

७ भावप्रकाशिका ७

कार्यमात्रपरत्वं पूर्वपक्षिणापि न सुवचमिति भावः । ( दुष्टरत्नवर्जनमप्य-नर्थजिहासाप्राप्तमिति ) ततश्च तद्वर्जनं न बोधनीयमिति भावः । नच व्याक-रणस्य सुशब्दापशब्दविभागज्ञापकत्वम् साधुभिरेव भाषितव्यमिति नियमज्ञा-पकत्वञ्च यथा, एवं रत्नेष्वपि सदसद्विवेचनं धार्याधार्यविधिनिषेधपरत्वञ्च रत्नशास्त्रस्याप्यस्त्विति वाच्यम्, स्मृतिवचनत एव सद्दशधारणदुष्टरत्ननिषेधयोः सिद्धेः रत्नशास्त्रस्य सदसद्विवेकमात्रपरत्वादिति भावः । भाष्ये— अर्थसद्भावा-भावे निश्चिते इति । नन्वर्थसद्भावाभावनिश्चयेपि कल्पितकथासु हर्षा-दीनां दर्शनात् कथं तदभावनिश्चयस्य हर्षप्रतिबन्धकत्वम् ? सत्यपि वा तद-भावनिश्चयस्य प्रतिबन्धकत्वे प्रकृते तदभावनिश्चयाभावमात्रमपेक्षितम्, न तु वस्तुसत्यत्वनिश्चयोपि; ततश्च कथं वस्तुसत्यत्वं सिध्येत्? । किञ्च वेदान्तानां सिद्धार्थपरत्वे प्रयोजनानवाप्तेः । "आम्नायस्य क्रियार्थत्वादानर्थक्यम-तदर्थानाम्, तस्मादनित्यमुच्यते, विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युः" इति पूर्वोत्तरपक्षसूत्रोक्तन्यायेन वेदान्तानां कर्मविधिशेषतया कर्मप्राशस्त्य एव

ऽप्यर्थः पुरुषार्थाय न भवति । बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः, तेषामेव तस्मिन्नेव ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत ततस्तदानीमेव

* श्रुतप्रकाशिका *

पक्षविषयम्, पक्षदृष्टान्तसाधारणं वा । हेतुत्वं गर्भितम्, अर्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानाभावादित्यर्थः । अर्थासद्भावेऽपि पुरुषार्थो दृश्यत इति शङ्कायां तत्रार्थासद्भावनिश्चयाभावमुपाधिमाह ( बालातुरादीनामिति ) तदेवोपपादयति ( तेषामेवेति ) ततः किमित्यपेक्षायां सपक्षे दर्शितमर्थं पक्षे

* भावप्रकाशिका *

तात्पर्यम्, ननु प्रतीयमाने सिद्धार्थ इति पूर्वपक्षे प्राप्ते पिता ते सुखमास्ते नायं सर्पो रज्जुरित्यादिवत् सप्रयोजनतया निरतिशयानन्दे ब्रह्मणि तात्पर्यमस्तीति ब्रह्मणि तात्पर्यविषयत्वस्य समर्थितत्वात्, तत एवार्थसत्यत्वशङ्काया अनुत्थानात्, कथं बालातुराद्युपच्छन्दनवाक्यसाम्यशङ्कावैदिकम्मन्यस्य पूर्वपक्षिण उत्तिष्ठेत्, नहि वैदिकः कश्चित् वेदतात्पर्यविषयस्यासत्यत्वं शङ्कते, इयं हि शङ्का कर्मविधिशेषत्वपक्षे परं युज्यते, तत्र हि "सोरोदीत्' 'आत्मनो वपामुदखिदत्" इत्यादाविव कर्मप्राशस्त्यमात्रपरतया प्राशस्त्यद्वारभूते तात्पर्याभावेन तत्सत्यत्वानवश्यम्भावात्. 'औषधं पिब शिखा वर्धिष्यते' इत्यादिबालाद्युपच्छन्दनवाक्यसाम्यमिति । ननु सप्रयोजनत्वात् ब्रह्मणि तात्पर्यमिति सिद्धान्तिपक्षेपि वेदतात्पर्यविषयत्वेपि असत्यत्वशङ्काया उत्थाने कर्मकाण्डे तच्छङ्कां को वारयेत् । नहि विधिभागव्यावृत्तो वेदान्तभागे कश्चिद्धेतुरस्ति । किञ्च ब्रह्मप्रतिपादकवेदान्तवाक्यानां श्रोतृहर्षजनकत्वेन स्वातन्त्र्येण प्रामाण्ये "वायुर्वै क्षेपिष्ठा देवता' यन्न दुःखेन सम्भिन्नम्" इत्यादिवाक्यानामपि तादात्विककुतूहलजनकत्वेन प्रामाण्यसम्भवात् " विधिना त्वेकवाक्यत्वात् " इति सूत्रोक्तन्यायो नाश्रयणीयस्स्यात्, तत्रापि दुःखासम्भिन्नसुखरूपे प्रतीते स स्वर्गः केन प्राप्यत इत्याकाङ्क्षायां ज्योतिष्टोमादिविधिप्रवृत्तिरित्यपि सुवचत्वादिति चेत्. उच्यते; इत्थं शङ्कापरिहारौ, तादात्विकहर्षमात्रपर्यवसायिनां वाक्यानां स्वार्थे तात्पर्यस्य प्रामाण्यस्य वा अनुपलम्भात् वेदान्तवाक्येष्वपि हर्षमात्रपर्यव-

हर्षादयो निवर्त्तेरन् । औपनिषदेष्वपि वाक्येषु ब्रह्मा-
स्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थ-

* श्रुतप्रकाशिका *

स्फुटीकरोति ( औपनिषदेष्वपीति ) बालातुराद्युपच्छन्दनवाक्येष्विवात्राप्यर्थ-सद्भावभ्रान्त्या पुरुषार्थपर्यवसानं स्यादिति चेत्. 'पयः पिब कषायं पिब शिखा वर्द्धिष्यते पांसुषु लुठसि चेन्न दन्ता उद्भिद्यन्ते' इत्यादीनां प्रवृत्तिनिवृत्तिपरवाक्यानामिव "स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" इत्यादिवाक्यानामप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं किं न स्यात् ? अपौरुषेयत्वाद्वेदवाक्यस्य विप्रलिप्सामूलवाक्यस्येव भ्रामकतया पुरुषार्थपर्यवसानमयुक्तम् , तथा सति शास्त्रस्य निरूपकाधिगन्तव्यत्वात् स्वपुत्रशिष्यादीनामध्यापनादौ प्रवृत्तिर्नोपपद्यत इति चेत् . अपौरुषेयत्वमध्यापनादिप्रवृत्तिवैयर्थ्यं च वेदान्तवाक्येष्वपि तुल्यम् ।

* भावप्रकाशिका *

सायिषु स्वार्थे तात्पर्यं वा प्रामाण्यं वा न स्यादिति चेत्तर्हि प्रवृत्तिनिवृत्तिपर्यवसायिषु विप्रलम्भवाक्येषु स्वार्थे प्रामाण्यादर्शनात् विधिभागेष्वपि स्वार्थे प्रामाण्यं न स्यात् . यदि च विधिभागानां न प्रवृत्तिमात्रपर्यवसायित्वम्, अपि तु स्वर्गादिफलपर्यवसायित्वमेव . ज्योतिष्टोमादिकं कर्मानुष्ठाय स्वर्गादिकं फलं लभतामिति हि वत्सलतरायाः श्रुतेराशय इति चेत्तर्हि वेदान्तभागेष्वपि एतदर्थश्रवणेन हृष्टस्सन्नुपासनादिकमनुष्ठायापवर्गं लभतामित्येवाशय इति समस्समाधिरिति । नच स्वर्गादिवाक्येष्वपि स्वातन्त्र्यप्रसङ्ग इति वाच्यम् , तत्र प्रतिपन्नाया विध्येकवाक्यतायास्त्यागे हेत्वभावात् . स्वरूपोपदेशपरवेदान्तवाक्येष्वसन्निहितविध्येकवाक्यताकल्पने प्रमाणाभावादिति । पाराशर्यविजयेतु सद्विद्यायामुपासनाविध्यभावेन प्रवृत्तिपर्यन्तत्वाभावात् , हुंफडादिवददृष्टार्थत्वम् , अत इतरेषामपि वेदान्तानां तथात्वमिति पूर्वपक्षं कृत्वा सद्विद्यायामपि 'तस्य तावदेव चिरम्' इतिवाक्ये उपासनविधिस्सगर्ध्यतेऽस्मिन्नधिकरण इत्युक्तम् । भ्रामकतयेति क्वचित्पाठो दृश्यते । तत्राण्यन्तत्वेनोदात्तोपदेशस्य 'मान्तस्यानाचमेः' इति वृद्धिनिषेधप्रसङ्गेन ण्यन्तत्वे 'मितां ह्रस्वः' इति ह्रस्वत्वप्रसङ्गेन च भ्रामकेतिरूपासिद्धावपि 'प्रज्ञादिभ्यश्च' इति प्रज्ञादित्वात् स्वार्थे अणि रूप-

पर्य्यवसानं न स्यात्। अतः "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम्॥ .... .... .... .... ....

* श्रुतप्रकाशिका *

कर्मविधीनां देहातिरिक्तात्मज्ञानसापेक्षत्वात् वेदान्तवाक्यानां कर्मविधिशेषत्वेन अध्यापनादिप्रवृत्त्युपपत्तिरिति चेत्. न, असत्यपि देहात्मभेदे तत्सद्भावभ्रान्तिहेतुत्वशङ्कायां सत्यां तन्मुखेन प्ररोचनानुपपत्त्या विधिशेषतयाऽध्यापनाद्यनुपपत्तेः। तर्कानुगृहीतनिर्दोषश्रुतिसिद्धदेहात्मभेदस्तात्त्विक इति चेत्. तत्पुरुषार्थभूतस्य परमात्मनः प्रतिपाद्यत्वेऽपि तुल्यम् । देहात्मभेदसाधकहेत्वन्तरसंवादाच्च भ्रान्तिहेतुत्वनिश्चय इति चेत्. तर्हि तेनैव हेत्वन्तरेण देहात्मभेदसिद्धिरितितज्ज्ञापनाय वेदान्तवाक्यानामपेक्षितत्वाद्विधिशेषतया तदध्यापनादिकं नोपपद्यते; एवं निरूपकाधिकारस्य शास्त्रस्यार्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानानुपपत्तौ प्रवर्त्तकवाक्यानां प्रतिबन्दीत्वमभिप्रेत्य औपनिषदेश्वपीत्यादिभाष्यं प्रवृत्तम् । मुक्तस्य हेतोर्विपर्यये पर्यवसानं दर्शयन्नधिकरणार्थमुपसंहरति (अत इति) कारणवाक्यानामर्थमाह (निखिलेति) निखिलशब्दः परैर्नित्यतयाऽभिमतानामाकाशादीनामपि कार्यत्वज्ञापनार्थः । एकशब्दो निमित्तोपादानैक्यद्योतकः । यतो वा इमानीत्यादिवाक्ये शोधकवाक्यार्थश्च गर्भित इत्यभिप्रायेणाह (निरस्तेति) अत्र निखिलशब्देन चिदचिद्गताः क्लेशकर्मादयो जन्मादयश्च विवक्षिताः । कदाचिद्दोषसम्बन्धार्हत्वव्यावर्त्तकेन गन्धशब्देन सदा तत्प्रत्यनीकत्वमुक्तं भवति। कारणत्वापेक्षिकान् गुणानाह (सार्वज्ञ्येति) एतदधिकरणसिद्धमर्थमाह (अनवधिकेति) (बोधयतीति) अध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्यापेक्षितत्वात्प्रेक्षावदधि-

* भावप्रकाशिका *

सिद्धिर्द्रष्टव्या। यद्वा मितां ह्रस्व इति सूत्रे केचिद्वेत्यनुवर्तयन्तीतिकाशिकायामुक्तत्वात् साधुत्वं द्रष्टव्यम्। (कर्मविधीनामिति) कर्मविध्यपेक्षितदेहाति-

* श्रुतप्रकाशिका *

कार्यस्य शास्त्रस्यार्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्तेस्तदुपपत्त्यर्थं प्रवर्तकवाक्यानामिव अर्थसद्भावे प्रामाण्यमङ्गीकार्यमिति यथोक्तलक्षणं ब्रह्म 'यतो वा इमानि' इत्यादिवाक्यं प्रतिपादयतीत्यर्थः ॥ .... .... .... ....

शास्त्रारम्भसिद्ध्यर्थैषा चतुस्सूत्री मृषावादिनां पक्षे न सङ्गच्छते, तत्पक्षे विषयप्रयोजनानुपपत्त्या शास्त्रस्यानारम्भणीयत्वात् । तथा हि, विषयः किं ब्रह्म ? उत भेदमिथ्यात्वम् ? उत जीवब्रह्मणोरैक्यम् ? । न प्रथमः, ब्रह्मणो वेद्यत्वानभ्युपगमात्, वेद्यत्वे घटादेरिवाननुभूतित्वप्रसङ्गस्य स्वोक्तत्वाच्च, व्यावहारिकं वेद्यत्वमस्तीति चेत्, घटस्यापि वेद्यत्वं व्यावहारिकमिति तद्वदेवाननुभूतित्वप्रसङ्गो दुर्वारः, वास्तववेद्यत्वाभावस्य

* भावप्रकाशिका *

रिक्तात्मसमर्पकत्वेन कर्मविधिशेषतया सप्रयोजनत्वादध्यापनाद्युपपत्तिरित्यर्थः ॥

( शास्त्रारम्भसिद्ध्यर्थैषा चतुस्सूत्रीति ) इदञ्च सिद्धान्ताभिप्रायेण, मृषावादिमते प्रथमाधिकरणस्यैवारम्भार्थत्वात्, तन्मते हीत्थं चतुस्सूत्री व्याख्याता ; विवरणकारमते प्रत्यग्ब्रह्मैक्यं शास्त्रस्य विषयः, तच्च न सम्भवति, कर्तृत्वादेर्विरुद्धधर्मत्वेनैक्यायोगात्, सत्यत्वादेव कर्तृत्वादिबन्धनिवृत्तेर्न प्रयोजनत्वं सम्भवतीति पूर्वपक्षं प्रापय्य कर्तृत्वादेर्मिथ्यात्वाद्विषयप्रयोजने सिध्यत इति सिद्धान्तितम् । वाचस्पतिना तु प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहंधीसिद्धत्वेनासन्दिग्धतया तस्य न विषयत्वमुपपद्यते । अविद्यानिवृत्तेश्च न प्रयोजनत्वं. ब्रह्मज्ञाने सत्यप्यविद्यानिवृत्तेरदर्शनादिति पूर्वपक्षं कृत्वा ज्ञानानन्दैकरसासंसार्यात्मस्वरूपस्य शास्त्रविषयतयाभिमतस्याहमिति ज्ञाने विषयत्वाभावात् शास्त्रविषयत्वमुपपद्यते, तज्ज्ञानस्याविद्यानिवृत्तिप्रयोजनत्वञ्चोपपद्यत इति सिद्धान्तितं जिज्ञासासूत्रे । जन्मादिसूत्रे तु 'यतो वा इमानी'ति श्रुत्युक्तजगत्कारणत्वं ब्रह्मणो न लक्षणं भवितुमर्हति, प्रपञ्चस्य सत्यत्वे तेन निर्विशेषब्रह्मावगत्यसम्भवात्, असत्यत्वे च कृतकत्वेन नित्यस्येव असता प्रपञ्चेन सत्यस्य ब्रह्मणो लक्षयितुमशक्यत्वाज्जगत्कारणत्वं लक्षणं न सम्भवतीति प्राप्ते यद्रजतमभात् सा शुक्तिरित्यादौ मिथ्याभूतेनापि रजतेन सत्यायाश्शुक्तेरिव मिथ्याभूतेनापि जगज्जन्मादिना सत्यस्य ब्रह्मणो लक्षणं सम्भवत्येव, तत्र च जगज्जन्मादिकं चन्द्रस्य शाखाग्रमिव तटस्थलक्षणम्, प्रकृष्टप्रकाशादिवत्सत्यत्वादिकं स्वरूपलक्षणमिति वर्णितम् । शास्त्रयोनित्वादित्यत्र जगज्जन्मादिकारणत्वाद्विसं

* श्रुतप्रकाशिका *

ब्रह्मणि साध्यत्वे घटस्य व्यतिरेकदृष्टान्तत्वं न घटते, घटस्य वास्तववेद्यत्वाभावविरहाभावात्। अनुभूतिः परमार्थतो न वेद्या, अनुभूतित्वात्, यत्परमार्थतो वेद्यं तन्नानुभूतिः, यथा घट इत्युक्ते व्यतिरेकदृष्टान्तः साध्याव्यावृत्तो हि स्यात्, न हि घटः परमार्थतो वेद्यः। वेद्यत्वेऽननुभूतित्वप्रसङ्गमनादृत्य ब्रह्मणो वेद्यत्वाङ्गीकारेऽपि ब्रह्मणः शास्त्रविषयत्वमयुक्तम्, प्रत्यक्षस्य सन्मात्रग्राहित्वमभ्युपगच्छतस्तव मते शास्त्रानर्थक्यप्रसङ्गात्, "अप्राप्ते हि शास्त्रमर्थवत्"। न द्वितीयः, दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्वमभिमन्यमानस्य तव शास्त्रानर्थक्यप्रसङ्गात्, तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्यस्यैव शास्त्रेण प्रतिपादनायोगात् शास्त्रस्य निर्विषयत्वं स्यात्, अप्राप्ते हि शास्त्रमर्थवत्. साधकस्येव बाधकस्याप्यगोचरत्वं ह्यप्राप्तत्वम्। ज्वालाभेदानुमानवैषम्यं च त्रिविधं प्रागेव प्रपञ्चितम्, प्रमाणान्तरविरोधश्च तात्पर्यलिङ्गमिति तद्विरुद्धेऽर्थे तात्पर्यासम्भवश्च प्रागेवोक्तः, अतो भेदमिथ्यात्वस्य विषयत्वमयुक्तम्। तृतीयश्च कल्पोऽनुपपन्नः, ब्रह्मणोऽपि वेद्यत्वप्रसङ्गात्। न हि घटपटयोरेकत्वमुच्यते शास्त्रेण, अपि तु जीवब्रह्मणोरेकत्वम्, तदानीं ब्रह्मशब्देन ब्रह्मण्यनवबोधिते कथं तस्य जीवस्य चैक्यं वक्तुं शक्यते? । नहि जीव एक इत्युक्ते जीवब्रह्मणोरैक्यं सिध्यति, घट एक इत्युक्ते घटपटैक्यवत्। यदैक्योपदेशवाक्येषु 'अयमात्मा ब्रह्म' इत्यादिषु ब्रह्मणः

❁ भावप्रकाशिका ❁

सार्वज्ञ्यं सर्वार्थप्रकाशकवेदकर्तृकत्वेनापि दृढीकृतं प्रथमवर्णके। द्वितीयवर्णके तु जगत्कर्तुरनुमानत एव सिद्धेः, तन्निर्विशेषत्वस्य प्रपञ्चमिथ्यात्वानुमानादेव सिद्धेर्ब्रह्मण औपनिषदत्वं न सम्भवतीति पूर्वपक्षं कृत्वा ईश्वरानुमानानां प्रपञ्चमिथ्यात्वानुमानस्य च प्रत्यनुमानप्रतितर्कपराहततया निर्विशेषब्रह्मणः शास्त्रैकप्रमाणकत्वमित्युक्तम्। समन्वयसूत्रे तु अस्मदुक्तरीत्या विध्येकवाक्यत्वनिरासकतया एकं वर्णकम्. सिद्धव्युत्पत्तिसमर्थनपरतया अपरं वर्णकमिति। (वास्तववेद्यत्वाभावविरहाभावादिति) पारमार्थिकवेद्यत्वस्यासत्त्वेन वेद्यत्वाभावरूपसाध्यस्यैव सत्त्वादित्यर्थः (साध्याव्यावृत्तो हि स्यादिति) साध्यवानेव स्यादित्यर्थः। (त्रिविधं प्रागेव प्रपञ्चितमिति) प्रमाणान्तरेण भेदवासनाया दोषत्वानिश्चयादन्योन्याश्रयः बाध्यबाधकयोस्तुल्यदोषत्वम् मूलोच्छेदित्वञ्चेति त्रिविध-

* श्रुतप्रकाशिका *

शब्दबोध्यत्वं सोढव्यम्, तर्हि प्राधान्येन ब्रह्मण एव शास्त्रप्रतिपाद्यत्वं किमिति नाभ्युपगम्यते? 'सर्वे वेदा यत्पदमामनन्ति' इत्यारभ्य 'तद्विष्णोः परमं पदम्' इत्यादिश्रुत्यस्वारस्यमेव तदनभ्युपगमफलम् । किञ्च उपदिश्यमानमैक्यं किं ब्रह्मस्वरूपानतिरिक्तम्? उतातिरिक्तम्? । अनतिरिक्तत्वे स्वरूपवेद्यत्वपक्ष एव स्यात्, तथा चोपदेशवैयर्थ्यादिदोषप्रसङ्गः, स्वरूपमात्रस्य प्रतिपन्नत्वात् । अतिरिक्तत्वे तत्किं परमार्थभूतम्? उतापरमार्थभूतम्? । प्रथमे सविशेषत्वभङ्गः । द्वितीये ज्वालैक्यदेहात्मैक्यापारमार्थ्ये ज्वालाभेददेहात्मभेदपारमार्थ्यवज्जीवब्रह्मभेदपारमार्थ्यं स्यात् । किञ्च, जीवब्रह्मणोरैक्यं नाम किमन्तःकरणस्य संविदश्चैक्यम्? उत संविदवच्छिन्नान्तःकरणस्य संविदश्च? उतान्तःकरणावच्छिन्नसंविदः केवलसंविदश्च?। न प्रथमः, जडाजडयोरैक्यानुपपत्तेः। नापि द्वितीयतृतीयौ, विशिष्टैक्येऽभ्युपगम्यमाने विशेषणत्वेन विशेष्यत्वेन वा तदन्तर्भूतस्यान्तःकरणस्यापि संविदैक्यप्रसङ्गात्, तयोश्च अजडत्वजडत्वाभ्यां सत्यत्वानृतत्वाभ्यां चैक्यमयुक्तमित्युक्तम् । अन्तःकरणोपलक्षितज्ञप्त्यैक्यं विषय इति चेत्. तदुपलक्षितज्ञप्तेः केनैक्यमुपदिश्यते? किं स्वात्मनैव? उत ज्ञप्त्यन्तरेण?। न प्रथमः, उपदेशवैयर्थ्यात्- न हि कस्यचिद्वस्तुनः स्वस्मादभिन्नत्वमुपदेष्टव्यम् स्वस्माद्भेदप्रसङ्गाभावात् । ज्ञप्त्यन्तरेण चेत्- किं परमार्थतो भिन्नेन? उताभिन्नेन?। न प्रथमः, अनभ्युगमादनुपपन्नत्वाच्च, अभिन्नेन चेत् भेदप्रतीतिरस्ति वा, न वा? न चेदैक्योपदेशवैयर्थ्यम्। अस्ति चेत् भेदमिथ्यात्वोपदेश एवैक्योपदेशः स्यात् । भेदमिथ्यात्वस्यानुमानसिद्धत्वाभिमानाच्छास्त्रस्य निर्विषयत्वं स्यात्। भेदपारमार्थ्ये दृश्यत्वानुपपत्तिरित्यादितर्कानुगृहीतं शास्त्रं भेदमिथ्यात्वे प्रमाणमिति न शास्त्रस्य निर्विषयत्वमिति चेत्. न, धर्मश्चेद्धिंसात्वं न स्यादिति तर्कानुगृहीतेन "न हिंस्या"दितिशास्त्रेण वैधपश्वालम्भनस्याधर्मत्वप्रतिपादनानुपपत्तिवच्छास्त्रसिद्धभेदस्य शास्त्रेण मिथ्यात्वप्रतिपादनानुपपत्तेः सम्बन्धिभेदभिन्नानां संयोगेच्छादीनामिव ज्ञप्तीनामपि परस्परभेदस्य प्रत्यक्षादिसिद्धत्वात् तद्विरुद्धत्वादयोग्यस्य ज्ञप्तिभेदमिथ्यात्वस्य शास्त्रेण प्रतिपादनानुपपत्तेश्च "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहम-

❁ भावप्रकाशिका ❁

मित्यर्थः । ( संविदविच्छिन्नान्तःकरणस्येति ) संविद्विशिष्टस्येत्यर्थः । विशिष्टैक्ये-

* श्रुतप्रकाशिका *

स्मीति" यदा सुप्तः स्वप्नं न कथञ्चन पश्यति' 'प्राणेभ्यो देवा देवेभ्यो लोकाः" देवाः- इन्द्रियाणि. लोकाः आलोकनानि. संविदः । एवमादिशास्त्रसिद्धः प्रत्यक्षादिसिद्धश्च कालतो विषयत आश्रयतश्च ज्ञप्तीनां परस्परभेदः, अन्तःकरणवृत्तिभेदविषया सा श्रुतिरिति चेन्न. स्वाप्नश्रुतेर्वृत्तिगोचरत्वे सति संविदैक्यम्. संविदैक्ये सति ज्ञप्तिभेदश्रुतेर्वृत्तिगोचरत्वमित्यन्योन्याश्रयणप्रसङ्गात् ज्ञातृज्ञेयावच्छिन्नतया प्रतीयमानस्य ज्ञानस्यान्तःकरणक्रियात्वे त्रितयोत्तीर्णज्ञानस्य शशविषाणायमानत्वाच्च, तद्भेद- मिथ्यात्वप्रतिपादनं शशविषाणभेदमिथ्यात्वप्रतिपादनतुल्यमिति न शास्त्रस्य सविषयत्वसिद्धिः, सम्प्रतिपन्नज्ञानानामेव मिथो भेदस्य मिथ्यात्वं शास्त्रविरोधात् प्रत्यक्षविरोधाच्च पश्वालम्भनाधर्मत्ववत् यूपादित्यैक्यवच्च न शास्त्रं प्रतिपादयितुं शक्नोति ; अतः शास्त्रस्य विषयाभावादनारम्भणीयत्वम् । तथा प्रयोजनञ्च न घटते, तथा हि ; प्रयोजनं द्विविधं शास्त्रस्य उपायभूतमवान्तरप्रयोजनं तत्साध्यं प्रयोजनं चेति । तत्र बन्धनिवर्त्तकज्ञानसिद्धिरवान्तरप्रयोजनम्, मोक्षस्तु परम- प्रयोजनम्, तत्रेदानीमुपजायमानं वाक्यजन्यज्ञानमनिवर्त्तकमित्यविगीतम्, वसिष्ठ- पराशरकृष्णद्वैपायनादीनामप्यनुत्पन्नं ज्ञानमन्येषामुत्पत्स्यत इत्यत्यन्तासम्भावितम्, तेषामुत्पन्नश्चेद्भेदप्रतिभासो न स्यात्, स निर्वर्तिष्यत इति चेत्तत एव तदभिन्नाना-

* भावप्रकाशिका *

ऽभ्युपगम्यमान इति उत्तरग्रन्थानुसारादिति द्रष्टव्यम् । (यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीति) 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति । अथास्मिन् प्राण एव एकधा भवति। तदेनं वाक् सर्वैर्नामभिस्सहाप्येति। चक्षुस्सर्वैः रूपैस्सहाप्येति। श्रोत्रं सर्वै रूपै- स्सहाप्येति । मनस्सर्वैर्ध्यानैस्सहाप्येति। स यदा प्रबुध्यते ; यथाग्नेर्विस्फुलिङ्गा विप्र- तिष्ठेरन्। एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते।"प्राणेभ्यो देवा देवेभ्यो लोकाः" इति कौषीतकी श्रुतिः। (त्रितयोत्तीर्णज्ञानस्येति) ज्ञातृज्ञेयतदवच्छिन्नज्ञा- नातिरिक्तस्येत्यर्थः। (प्रयोजनं द्विविधमिति) शास्त्रस्य प्रयोजनं द्विविधमित्यन्वयः। ननु शास्त्रानारम्भो जीवैक्यपक्षे आपाद्यते ? उत तन्नानात्वपक्षे ?। नाद्यः, तत्पक्षे इतःपूर्वं कस्यापि ज्ञानानुत्पत्तेश्शास्त्रमारब्धव्यमेव. नच वसिष्ठादीना- मसम्भावितमितःपरं कथमन्वयः स्यादिति शङ्क्यम्. सिद्धान्तेप्यतीतेष्व- प्यनन्तेषु जन्मसु असम्भावितं मोक्षसाधनमितःपरं कथं स्यादिति शङ्कायास्त-

* श्रुतप्रकाशिका *

मन्येषामपि निर्वक्ष्यत इति न शास्त्रमारम्भणीयं स्यात्। प्रपञ्चस्य सत्यत्वादेव ज्ञाननिवर्त्यत्वाभावादनिवर्त्तकं ज्ञानं नावान्तरफलमिति न तदर्थं शास्त्रमारम्भणीयम्, परमप्रयोजनं च न सिध्यति, ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्तेरसम्भावितत्वात्। किञ्च शास्त्रश्रवणाधिकारो ज्ञप्तिमात्रस्य वा, ज्ञातुर्वा ?। न प्रथमः, ज्ञप्तिमात्रस्य श्रोतृत्वायोगात्। न द्वितीयः, ज्ञातुः स्वनाशस्यापुरुषार्थत्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः। यत्सम्बन्धिसुखं दुःखनिवृत्तिश्च पुरुषार्थः, स खल्वहमर्थः, अहं निर्दुःखः सुखी स्यामिति हि प्रतीतिः, तस्य पुरुषार्थवतो नाशः कथं पुरुषार्थः ? पुरुषार्थान्तरं वा कथमर्थयितुस्तस्याभावे पुरुषार्थो भवेत्। अथोच्येत, भवत्पक्षे बद्धस्य वा मुक्तस्य वा शास्त्राधिकारः ?। प्रथमे स्वनाशस्यापुरुषार्थत्वादप्रवृत्तिः, उपाधिविशिष्टस्य बद्धस्य तद्रूपनाशो हि स्वनाशः। द्वितीये तु मुक्तस्य शास्त्रानपेक्षत्वादनधिकारः। औपाधिकाकारविनाशो नापुरुषार्थः, दुःखविनिर्मुक्तस्यागाविकरूपावस्थानादिति चेत्. तर्हि ज्ञातृत्वस्यौपाधिकत्वात्तन्निवृत्तौ स्वरूपं तिष्ठतीति नापुरुषार्थ इति। नैवम्; संविदि वास्तवज्ञातृत्वानभ्युपगमात्। तदारोपे त्वन्यत्र तत्सिद्धेरवश्यम्भावात्. अन्यस्य च ज्ञातुर्ज्ञप्तिधर्मत्वाभावात्। यदि ज्ञप्तिः स्वरूपम्, ज्ञाता तद्धर्मः, तदानीमियं प्रतिबन्दी स्यात्, अहं सुखी दुःखीति सुखदुःखवत् अहं जानामीति ज्ञानस्याहमर्थधर्मताप्रतीतेरहमर्थस्य धर्मितया प्रतीतेश्चाविगीतत्वात्. सुखदुःखनिवृत्त्योराश्रयस्य तस्य नाशोऽपुरुषार्थ एव, धर्मिणि नष्टे कस्य दुःखनिवृत्तिः पुमर्थस्स्यात्. अचेतनप्रकृतिबद्धत्वमौपाधिकदुःखावहमिति मलिनोऽहमितिप्रत्ययवतः पुरुषस्य मालिन्यनिवृत्तिवत्तन्निवृत्तिर्नापुरुषार्थः, अत्यन्ताशिमतस्य धर्मिस्वरूपस्य स्थितत्वादनिष्टबन्धनिवृत्तेरिष्टत्वाच्च। ननु लौकिकप्रतीत्या निरूपकप्रतीत्या वाऽहमर्थस्य स्वरूपत्वम् ?। प्रथमे स्थूलोऽहं कृशोऽहमिति लोकदृष्ट्या प्रतिपन्नत्वात् स्थूलत्वादिविशिष्टदेहनिवृत्तिरप्यपुरुषार्थस्स्यात्। द्वितीये स्थौल्यादिवदध्यस्तोऽहमर्थो ज्ञाताऽपि न

* भावप्रकाशिका *

त्रापि सम्भवात्। न द्वितीयः, अन्यस्य ज्ञानान्मुक्तत्वेपि इतरस्य मुक्त्यर्थं शास्त्रारम्भोपपत्तेरित्यस्वरसादाह (प्रपञ्चस्य सत्यत्वादेवेति) ननु 'नित्यं' 'विज्ञानमानन्द' मित्यादिवाक्यैरापाततो नित्यपुरुषार्थप्रतिपादनावगमे तद्विचारप्रवृत्ति-

